गमनमनिष्टमित्युक्तम् । परकृतिश्च पुराकल्पश्च अनयोः समाहारः परकृतिपुराकल्पम् । तत्र कथितं धर्मजातं तेन शब्देनोक्तम् । तथा च परकृतिपुराकल्पस्थो धर्मः माषभक्षणादिः मनुष्यधर्मः यागकर्तुः मनुष्यस्य धर्मः स्यात् । हि यस्मात् धर्मस्य अनुकीर्तनं कथनं अर्थाय प्रयोजनायैव । तस्मात् उपवसथादौ माषभक्षणं बर्कोर्वार्ष्णैः अन्यैरपि मनुष्यैः कर्तव्यं इति माषपाकस्य विधिरयम्, नार्थवादः इति प्रथमः पूर्वपक्षः ।

**तद्युक्ते च प्रतिषेधात् । २७ ॥**

परकृतिपुराकल्पोक्तधर्मे उपवसथे माषभक्षणादौ तद्युक्ते विहितमनुष्यधर्मत्वयुक्ते सत्येव प्रतिषेधात् 'तत्तथा न कुर्यात्' इत्यादिप्रतिषेधस्य सफलत्वात् माषभक्षणादेर्मनुष्यधर्मत्वेन विधिरेव स्यात् इति पूर्वपक्षे हेत्वन्तरमाह सूत्रम् । हेत्वन्तरसमुच्चयार्थश्चकारः । कुतूहले तु इदं सूत्रं 'विधौ तु वेदसंयोगात्०' इति सूत्रोत्तरं एकोनत्रिंशत्त्वेन पठितम् । व्याख्या च इत्थम्— वाजपेयप्रकरणे वाजसनेयशाखायां द्विविधः पशुकल्पः श्रुतः । पशुकाले आग्नेयमैन्द्राग्नमैन्द्रमिति त्रीन् क्रतुपशून् उपाकृत्य मारुतीं वशामुपाकरोति सारस्वतीं च मेषीं सारस्वतं च मेषमुपाकृत्य सप्तदश प्राजापत्यान् पशून् उपाकरोति । पर्यग्निकरणान्ते सारस्वत्यन्तान् पूर्वानालभन्ते, सारस्वतप्रभृतीन् उत्तरान् धारयन्ति । माध्यंदिनस्य सवनस्य मध्यमे उक्थ्यपर्याये ब्रह्मसाम्नि उपाकृते सारस्वतप्रभृतीनुत्तरान् आलभन्ते । 'तेषामनभिघारिताभिर्वपाभिः प्रचरति । सारस्वतस्य वपया प्रचर्य समवदाय प्राजापत्यवपाभिः चरति । हारियोजनेन प्रचर्य सारस्वतप्रभृतीनां हृदयादिदैवतैः प्रचरति । तत्रेष्टा अनूयाजा भवन्ति, अव्यूढे स्रुचौ अथैषां हविर्भिः प्रचरन्ति । तदु तथा न कुर्यात् । ह्वलति (चलति) वा एष यज्ञो यदेवं कुर्वन्ति । तस्मात् यत्रैव पूर्वेषां वपाभिश्चरेयुः तदितरेषां वपाभिश्चरेयुः, यत्रैव पूर्वेषां हविर्भिः तत्रैव तेषां हविर्भिश्चरेयुः' इति । अत्र यच्छब्दयुक्ते वाक्ये श्रुतस्य पशुकल्पस्य प्रतिषेधो भवति । स च प्रसक्तस्यैव भवति । तस्मादपि एवंजातीयो विधिरेव स्यात्— इति । उक्तकुतूहलोक्तो विषयः कियांश्चित् शतपथे ५।१।३।१–१४ इत्यत्र दृश्यते, न तु सर्व एव । वाक्याक्षरपरिपाटी प्रायः सर्वा अन्यैव च दृश्यते ।

**निर्देशाद्वा तद्धर्मः स्यात् पञ्चावत्तवत् । २८ ॥**

परकृतिपुराकल्पोक्तः उपवसथे माषभोजनादिर्धर्मः वृष्णिकुलोत्पन्नबर्कुवत् सर्वमनुष्याणां धर्मः विधिः स्यादिति प्रथमपूर्वपक्षं सूत्रद्वयेन प्राप्तं वाशब्देन निरस्यन् अन्यं पूर्वपक्षमाह । वार्ष्णिशब्देन निर्देशात् वृष्णिकुलोत्पन्नानामेव तद्धर्मः, स चासौ धर्मश्च तद्धर्मः माषभक्षणरूपो धर्मः स्यात्, न तु वृष्णिभिन्नमनुष्याणाम् । पञ्चावत्तवत् । 'पञ्चावत्तं जमदग्नीनाम्' इति यथा जमदग्निगोत्राणामेव पञ्चावत्तं भवति, नान्येषां तद्वत् । अथवा निर्देशात् वृष्णिगोत्रनिर्देशात् तद्धर्मः तेषां वृष्णीनां वृष्णिगोत्रोत्पन्नानामेव धर्मः स्यात् इति शब्दार्थः ।

**विधौ तु वेदसंयोगादुपदेशः स्यात् । २९ ॥**

'माषानेव मह्यं पचत' इत्यर्थवादे वार्ष्णिसंयोगात् विधौ तदनुमितविधौ वृष्णिसंबन्धस्तुत्या सर्वेषामेव मनुष्याणामुपदेशः स्यात् माषपाकस्य । परकृतिपुराकल्पमिति प्रथमसूत्रे केवलं विधिपक्ष उक्तः । न तु तत्र केषां मनुष्याणामित्युक्तम् । इति न पुनरुक्तिः ।

**अर्थवादो वा विधिशेषत्वात् तस्मान्नित्यानुवादः स्यात् । ३० ॥**

परकृतिपुराकल्पयोः 'इति ह स्माह बर्कुर्वार्ष्णिः माषान् मे पचत' इत्यादौ माषपाकविधिः, वृष्णिगोत्राणामेव विधिः, मनुष्यमात्राणां स विधिः इति पूर्वपक्षत्रयनिरासार्थः वाशब्दः । 'आरण्यमेवाश्नीयात्' इत्यस्य विधेः 'इति ह स्माह' इत्यादिः शेषः । विधिशेषत्वात् अर्थवादः स्यात् । 'गृहपतेरेवाग्निषु निर्मथ्य निर्वपेरन्' इत्यस्य विधेः 'उल्मुकैर्ह स्म पूर्वे समाजग्मुः, तान् ह असुरा रक्षांसि निजघ्नुः' इत्ययं शेषः, तस्मात् सोऽप्यर्थवादः । तस्मात् अर्थवादत्वात् सः नित्यानुवादः स्यात्, न विधिः । इति सिद्धान्तः । के.

* **परकृतिपुराकल्पा अर्थवादाः** । (तत्र एककर्तृकमुपाख्यानं परकृतिः । अनेककर्तृकमुपाख्यानं पुराकल्पः इति वदन्ति) । भा. ६।७।१२।२६–३०.

परकृतिपुराकल्पाधिकरणम् । माषपाकाधिकरणम् । परकृतिपुराकल्पाः अर्थवादाः ॥

**परकृतिपुराकल्पं च मनुष्यधर्मः स्यादर्थाय ह्यनुकीर्तनम् । ६।७।१२।२६॥**

**भाष्यम्—** इह परकृतयः, पुराकल्पाश्चोदाहरणम् । यथा 'इति ह स्माह बट्कुर्वार्ष्णिर्माषान्मे पचत, न वा एतेषां हविर्गृह्णन्ति' इति । पुराकल्पः, 'उल्मुकैर्ह स्म पूर्वे समाजग्मुस्तान् ह असुरा रक्षांसि निजघ्नुः' इत्येवमादयः । तेषु संदेहः किमेते मनुष्यधर्मा विधयः, उत तद्गोत्राणाम् । अथवा अर्थवादा इति । किं तावत् प्राप्तम् ? मनुष्यधर्मा विधयः इति । कुतः ? अर्थाय प्रयोजनाय अनुकीर्तनमेतद्भवति । कर्तृमनुष्यसंबन्धकीर्तनेन क्रिया प्रशस्ता भवति । प्रशस्तं च प्रतिपाद्यम् । स एष विधिरेव अनेन प्रकारेण । अतः परैरपि मनुष्यैः कर्तव्य इति गम्यते ।

**तद्युक्ते च प्रतिषेधात् । २७ ॥**

**भाष्यम्—** एवंजातीयकस्य विधेः प्रतिषेधो भवति, तत्तथा न कुर्यादिति । प्रसक्तस्य च प्रतिषेधो न्याय्यः । तस्मादपि विधय इति ।

**निर्देशाद्वा तद्धर्मः स्यात् पञ्चावत्तवत् । २८ ॥**

**भाष्यम्—** मनुष्यधर्मोऽयं विधिरेवंजातीयक इति गृह्यते । तत्र तु विशिष्टगोत्राणां निर्देशात्तेषामेव धर्म इति गम्यते । स्तुत्या ह्ययं कर्तव्य इति ज्ञायते । स च विशिष्टगोत्राणां श्रूयते । तस्मात् तद्गोत्राणामेव कर्तव्यः । पञ्चावत्तवत् । यथा 'पञ्चावत्तं जमदग्नीनाम्' इति तद्गोत्राणामेव भवति, एवमिहापीति ।

**विधौ तु वेदसंयोगादुपदेशः स्यात् । २९ ॥**

**भाष्यम्—** तुशब्दादेषोऽपि पक्षो व्यावर्त्यते । विधौ एतेषामुपदेशः स्यात् । विधौ वेदेन स्तुतिनिर्देशः कृतः । न विध्याश्रये पुरुषे । पुरुषग्रहणं विधिप्रशंसार्थम् । विधिरिति क्रियामाह । एतस्याः क्रियाया भावो यस्मादनेन पुरुषेण क्रियते तस्मात् साधुरिति । न त्वत्र पुरुषः क्रियासंबन्धेन निर्दिश्यते किन्तु स्तोतव्यत्वेन । कुतः एतत् ? स्तुतिपदस्यान्यस्याभावात् । अपि च क्रियानिर्देशे श्रुत्या विधानम्, क्रियापुरुषसंबन्धनिर्देशे वाक्येन । तच्च दुर्बलम् । तस्मात् पुरुषमात्रस्य विधानं प्राप्नोति, न तद्गोत्राणामिति ।

**अर्थवादो वा विधिशेषत्वात् तस्मान्नित्यानुवादः स्यात् । ३० ॥**

**भाष्यम्—** एषोऽपि पक्षो वाशब्दाद्विनिवृत्तः । नायं तद्गोत्राणां विधिः, न मनुष्यमात्रस्य वा विधिः, विधिरेव वेति । अर्थवादस्तु । कुतः ? विधिशेषत्वात् । अन्यं त्वत्र विधिमामनन्ति । परकृत्युदाहरणे तावत्, 'तस्मादारण्यमेवाश्नीयात्' इति । पुराकल्पोदाहरणे, 'गृहपतेरेवाग्निषु निर्मथ्य निर्वपेरन्' इति । न च द्वयोर्विध्योरेकवाक्यभावोऽस्ति । विधिना हि संबध्यमानयोः परकृतिपुराकल्पवचनयोरन्या वचनव्यक्तिः । अन्या तु स्तुत्यर्थप्रवृत्तयोः । न चोभयं यौगपद्येन संभवति । तस्मादर्थवाद इति ।

**शा—** कृत्वाचिन्तया अधिकारश्चिन्त्यते । अर्थवादो वेति कृत्वाचिन्तोद्घाटनम् ।

**सोम—** अपरिमितशब्दवत् इहापि नाविशेषः इति प्रत्यवस्थानात् संगतिः । **सूत्रार्थस्तु—** परकृतिः पुराकल्पः इदं द्वयमपि मनुष्यधर्मः मनुष्यधर्मत्वेन विधेयं स्यात् । तथा सति तत्कीर्तनं प्रयोजनाय भवतीति ।

**वि—** 'माषान् मे पचतेत्येतद् वार्ष्णिष्वेवाखिलेषु वा ।, उक्तेर्विधेश्च तौ पक्षौ, कृत्वाचिन्ताऽर्थवादतः ॥'

**भाट्ट—** दर्शपूर्णमासयोः 'इति ह स्माह बट्कुर्वार्ष्णिर्माषान्मे पचत' इति श्रुतम् । इदं चैककर्तृकोपाख्यानपरत्वात् परकृतिः । अयं चारण्याशनविधेः शेषः । बहुकर्तृकोपाख्यानपरं च वाक्यं पुराकल्पः सूत्रे 'उल्मुकैः सह पूर्वे समाजग्मुः, तानसुरा रक्षांसि निजघ्नुः' इति । अयं च 'गृहपतेरेवाग्निषु निर्मथ्य निर्वपेरन्' इति निर्मन्थ्याग्निसंसर्गस्तुत्यर्थः उल्मुकसंसर्गनिन्दकः सन् तद्विधेः शेषः । न तु स्वतन्त्रो विधिरित्यौदुम्बराधिकरणे निर्णीतमेव । परकृत्युदाहरणे तु यदा विधिस्तदा कृत्वाचिन्तया विचार्यते । वृष्णिगोत्रोत्पन्नाधिकारिकदर्शपूर्णमासोद्देशेन तत्कर्तृसंस्कारार्थतया वा माषपाकविधिरिति तद्वत एव माषपाकाधिकारो वैश्यनिमित्तकसात्सदश्यवत् । नह्यत्र प्राच्यत्ववत् वृष्णिगोत्रत्वं दुर्वचम्, येन तत्कल्प्यविधेः

सामान्यविषयत्वं स्यात् । इति प्राप्ते, स्तुत्युपायत्वेनोपात्तस्य वृष्णिगोत्रत्वस्य विधेयमाषपाकविशेषणत्वकल्पने प्रमाणाभावात् माषपाकमात्रविधानेन सर्वाधिकारः । ११.

**मण्डन**— ' माषपाकवचः स्तुतिः । '

शंकर— ' माषपाके विधिर्नास्ति । ' १४. ' सर्वेपुंसां विधौ तु सः । ' १५. पक्षान्तरमिदमिति टिप्पणी ।

* **परकृतिरूपार्थवादत्वं** एककर्तृकोपाख्यानम् । बाल. पृ. १२.

* **परकृतिरूपोपाख्यानार्थवादकल्प्यः** विधिः यथा ' ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत् ' इति । इन्द्रस्य उपाख्यानमिदम् । बाल. पृ. १२.

* **परतन्त्रोपजीवीन्येतानि** ( हविर्धाने औषधगुणकानि ऐष्टिकानि कर्माणि ) यथाऽवस्थितं परतन्त्रमुपजीवितुमर्हन्ति, यथा पाशुकान् प्रयाजान् अन्यकालानपि पशुपुरोडाशः उपजीवति, इति पूर्वपक्षः । भा. १२।१।७।१५.

* **परतस्त्वं** अप्रामाण्यस्य बाधकज्ञान–कारणदोषज्ञान-विसंवादज्ञानैर्ग्राह्यत्वम् । बाल. पृ. ६. * परतस्त्वं अप्रामाण्यस्य बाधकज्ञान–कारणदोष- विसंवादज्ञानाधीनत्वम् । अयाथार्थ्यरूपाप्रामाण्यस्य च परतस्त्वम् । कु. १।१।५।९.

* **परदाराभियोगः** अनाचारः । वा.१।३।३।७ पृ.२०३.

* **परनिमित्तकप्रायश्चित्तानुष्ठानम्** ( परं परस्माद्वर्तमानं निमित्तं यस्य प्रायश्चितस्य, तस्यानुष्ठानमित्यर्थः) अपच्छेदपौर्वापर्ये । भा. ६।५।१९।५४.

* **परपक्षसाम्यापत्तिरेव नोपपत्तिः** । तस्य च तव च उभयोरपि अन्येन पर्यनुयोगात् । वा. २।१।२।५ पृ. ४०४.

* **परप्रकरणे** अन्यधर्मविधेरन्याय्यत्वम् । वा. ३।३।८।१६ पृ. ८६४.

* **परप्रत्यायनार्थो** वाक्यप्रयोगो वक्तॄणाम् । वा. २।१।१४।४६ पृ. ४४४.

* **परप्राबल्यन्यायः**, पूर्वदौर्बल्यन्यायः, पौर्वापर्यन्यायः, पौर्वापर्यबलीयस्त्वन्यायः, अपच्छेदन्यायः इत्येकमेव । भा. ६।५।१९।५४. मीको. पृ. ४९५ ' अपच्छेदन्यायः ' इत्यत्र द्रष्टव्यम् ।

**' परमतमप्रतिषिद्धमनुमतं भवति ' इति** न्यायात् इहापि योगशास्त्रप्रसिद्धा मनसः पञ्च वृत्तयः परिगृह्यन्ते, ' प्रमाण–विपर्यय-विकल्प–निद्रा–स्मृतयः ' नाम । शांभा. २।४।१२ ब्रसू.

* **परशब्दः** परत्र प्रयुक्तः सन् तद्धर्मानतिदिशति इत्युक्तम् । भा. ७।४।२।८, * परशब्दः परत्र स्तोतुमपि न वर्तते । वा. १।४।१२।३१–१ पृ. ३५५. * परशब्दस्य परत्रवृत्तौ तद्वद्भावो गम्यते । स यत्र विज्ञातो भवति, तत्रानूद्यते, यथा ' सिंहो देवदत्तः ' इति । यत्र अविज्ञातः, तत्र विधीयते, ' यथा अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम् ' इति । भा. ७।३।१।१.

* **परशाखाविहितं** स्वशाखाविहितेन बाध्यते, अयं अप्राप्तबाधः ( यथा उदितहोमादि अनुदितहोमादिना ) । वा. ३।३।७।१४ पृ. ८६०.

* **परसिद्धेन** परो बोधनीयः इत्यस्मिन्नंशे विरोधाभावात् अप्रतिषिद्धत्वमुक्तम् ( मनसो वृत्तिपञ्चकस्य योगशास्त्रसिद्धस्य ) । न्यायनि. २।४।५।१२.

* **परस्वत्वापादनं** नाम दातृव्यापार एवासौ । वा. ३।४।१०।२८ पृ. ९६०, * **परस्वत्वापादनात्** प्राक् दानविधानं न पर्यवस्यति, इति प्रतिग्रहमाक्षिपति । ३।४।१०।२८ पृ. ९२९.

* **परकीयैः** पदार्थैरुत्कृष्यमाणैः न दाक्षिणाग्निकौ पिष्टलेपफलीकरणहोमौ उत्कृष्येते ज्योतिष्टोमे । टुपू. ५।१।१५।२८. * **परकीयस्य** दानं नावकल्पते । भा. ३।२।१५।३७ पृ. ७९६. * परकीयस्य द्रव्यस्य क्रतौ विनियुक्तस्य अन्यार्थे विनियोगानौचित्यम् । सु. पृ. ९२८.

* **परमाणुः** । अणोरनुपलम्भ इत्यचोद्यम् । यदेव भवदभिमतं त्र्यणुकमीक्षामहे तदेव परमाणुमाचक्ष्महे, तदवयवानुपलम्भात् तत्कल्पनाहेत्वनुपपत्तेश्च । दृश्यमानावयवस्य च स्थवीयसः तैरेव क्षोदीयोभिः ( त्र्यणुकैः )

आरम्भसंभवात्, अमहतोऽपि च गुणादेश्चाक्षुषत्वात् न महिमगुणशालिता तद्धेतुः। तदेकार्थसमवायस्य वा तद्धेतुत्वे त्र्यणुकस्य अग्रहणप्रसङ्गः स्यात्। तदभावात् परस्परापेक्षोभयकारणत्वे वा त्र्यणुकस्य च गुणादेश्च एकैककारणशालिनोः अचाक्षुषता स्यात्। परस्परानपेक्षकारणत्वे तु तृतीयस्यापि प्रकारस्य संभवो दुर्वारः। भवतु वा स्वभावविशेष एव चाक्षुषत्वे हेतुरेकः इति (चाक्षुषत्वे) न परिमाणतो नियमोपपत्तिः। **कणिका.** पृ. ११७. * **परमाणवः।** 'मीमांसकैश्च नावश्यमिष्यन्ते परमाणवः। यद्बलेनोपलब्धस्य मिथ्यात्वं कल्पयेद्भवान्॥ समूहरूपं प्रत्यक्षमदृश्यैः परमाणुभिः। योऽपह्नुते शशस्यापि सोऽभावं शृङ्गतो वदेत्॥ समूहपरमार्थत्वे स्थिते तत्सिद्धिहेतुका। यदि नामावगम्येत परमाण्वस्तिता पुनः॥' **श्लोवा.** अनुमानपरिच्छेदे १८३-१८५. * **परमाणुषु** व्याप्यवृत्तिः संयोगः अङ्गीक्रियते। तत्तद्देशस्य अवच्छेदकत्वसंभवेन अव्याप्यवृत्तिसंयोगस्यापि नानुपपत्तिः इति तार्किकाः। **मणि.** पृ. ४६.

* **परमाणुसमर्थनम्।** संप्रति परमाणुसद्भावः साध्यते। अल्पपरिमाणतारतम्यं क्वचिदवधिमत् परिमाणतारतम्यत्वात्, महत्परिमाणतारतम्यवत्। नित्यश्चासौ अवधिर्युक्तः, अनित्यत्वे तस्यापि कारणवत्त्वेनानवधित्वप्रसङ्गात्। यश्चासौ अवधिः स परमाणुरिति। तथा त्र्यणुकं प्रत्यक्षस्वपरिमाणादल्पतरपरिमाणकार्यद्रव्यारब्धं कार्यद्रव्यत्वात्, घटादिवत्। तथा द्व्यणुकं स्वावयवारब्धं सावयवत्वात्, घटादिवत् इति। **ननु** द्व्यणुकमपि कार्यद्रव्यारब्धं स्यात्, कार्यद्रव्यत्वात्, घटादिवत्, अतो न नित्यरूपपरमाणुसिद्धिः। **नैवम्,** महतः कार्यद्रव्यस्य कार्यद्रव्यारब्धत्वम्। तर्हि तदेव द्रव्यं कारणवत् दृष्टमिति न द्व्यणुकस्य कारणवत्त्वमपि सिध्यति। तथापि यदि कार्यत्वादेव कारणवत्त्वमनुमीयेत, तर्हि कार्यत्वादेव कार्यद्रव्यारब्धत्वमप्यनुमीयताम्, कः पक्षपातहेतुः? नैवम्, द्व्यणुकस्यापि कार्यद्रव्यारब्धत्वे, तस्यापि कार्यद्रव्यारब्धत्वप्रसङ्गेन अनवस्था प्रसज्येत। अथ क्वचित् कार्यद्रव्यारब्धत्वं नाश्रीयेत, तर्हि प्रथमस्य तथाभावे कः प्रद्वेषः? इति स एव परमाणुः। अनवस्थायामपि को दोष इति चेत्, अयमेव दोषः, सर्वेषामवयविनां स्वावयवपरंपरायाः क्वचिदपरिनिष्ठितत्वादनन्तावयवप्रसङ्गः। भवत्विति चेत् तर्हि सर्षपमहीधरयोरपि तुल्यपरिमाणत्वप्रसङ्गः, अवयवाल्पत्वावयवमहत्त्वाभ्यां हि सर्वत्रावयविनां परिमाणाल्पत्वमहत्त्वव्यवस्था, अनन्तावयववत्त्वे तु सर्षपोऽप्यनन्तावयवः पर्वतोऽपि तथैवेति तुल्यपरिमाणत्वमपरिहार्यमेव, अतोऽनवस्थादिदोषप्रसङ्गेन द्व्यणुकस्य न कार्यद्रव्यारभ्यत्वं शक्यानुमानम्। **ननु** कार्यस्य कारणद्रव्यानुमानमप्यनवस्थाप्रसङ्गेनैव न घटते। **नैवम्,** अन्यतरव्याप्तिपरित्यागे प्रसक्ते कार्यद्रव्यारब्धत्वमेव परित्याज्यम्, न तु कारणवत्त्वमात्रव्याप्तिः, तस्या अवश्यम्भावित्वात्। तथाहि, कार्यं कारणवदिति सामान्यव्याप्तिमङ्गीकृत्य तत्कारणमपि कार्यरूपमेवेति द्वितीयानुमानेन साध्यते, अतः सामान्यानुमानविरोधे तदुपजीवकविशेषानुमानं ते परित्याज्यं स्यात्, न तूभयोरपि परित्यागः। **भवतु,** द्व्यणुकं परमाणुकं चोभयमपि नाश्रीयताम्, आद्यमेव प्रत्यक्षं महिमगुणशाल्येवावधिर्भविष्यति, परमाणुसाधकानुमानमपि सिद्धसाधनं भवतु। **नैवम्,** विकल्पासहत्वात्। तत् किं आद्यप्रत्यक्षं सावयवमनित्यम्, उत निरवयवं नित्यम्? यदि सावयवमनित्यम्, तदा तस्यावयववत्त्वेन कारणवत्त्वेन च द्रव्यान्तरानुमानप्रसङ्गीकृतः परमाणुः। निरवयवं नित्यमित्याश्रीयमाणे उत्तरोत्तरसावयवानित्यकार्यद्रव्यस्य कारणत्वं न स्यात्। यद्यत् घटादिकार्यद्रव्यकारणं पिण्डादि तत्तत् सावयवमनित्यं च दृष्टम्, निरवयवस्य चाकाशादेर्द्रव्यारम्भकत्वमपि न दृष्टं अतो निरवयवनित्येनाद्यप्रत्यक्षेणोत्तरोत्तरकार्यारम्भो न सिध्यति। **अथ** सत्यपि तथा दर्शने उत्तरोत्तरकार्यदर्शनबलान्निरवयवं नित्यमाद्यप्रत्यक्षं कारणमिति कल्प्येत, **तर्हि** परमाणुरपि नित्यो निरवयव एव कारणं भवतु, द्व्यणुकमपि नित्यद्रव्यकार्यं भवत्विति तुल्यचर्चम्। **ननु** अस्माकं दृष्टविरुद्धनित्यनिरवयवस्य कार्यद्रव्यसमवायिकारणत्वे कल्प्यमानेऽपि उभयसंप्रतिपन्ने आद्यप्रत्यक्षे धर्ममात्रमेव कल्पनीयम्, तव तु द्व्यणुकपरमाणुरूपधर्मिकल्पनं कृत्वा तत्र निरवयवनित्यकारणत्वधर्मकल्पनमपीति न तुल्यत्वम्। **सत्यम्,** दृष्टस्वरूपे

आद्यप्रत्यक्षे न विरुद्धधर्मकल्पनमुचितम्, क्लृप्तहानिप्रसङ्गात्। अदृष्टस्वरूपं परमाण्वादिकमेव कल्प्यते, अतः क्लृप्तहानिपरिहारेणाक्लृप्तकल्पनमेव न्याय्यम्, इतरथा पर्वतधूमस्य कारणत्वेनाग्निकल्पने लाघवमस्तीत्यन्यनुमानोच्छेदप्रसङ्गः। अथ धूमजातीयस्याग्निसंबन्धस्यावगतत्वात् क्लृप्तहानिप्रसङ्ग इति चेत्, तर्ह्यत्रापि द्रव्यस्य सावयवानित्यत्वस्वभावस्य क्लृप्तत्वात् तत्परित्यागे क्लृप्तहानिः समैव। एवं क्रियाशक्तीन्द्रियादिष्वपि लाघवादनुमानं न स्यात्। अत एवोक्तम् 'प्रमाणबलकल्प्यानि सुबहूनि' इति। अतः कार्यद्रव्यं समवायिकारणवत् इत्येतावदेवानुमातव्यम्, न महत्कार्यद्रव्यं कारणवत्, नापि कार्यद्रव्यारब्धमिति। किञ्च कार्यद्रव्यं कारणवदिति सामान्यव्याप्त्युपजीवनेन 'महत्कार्यद्रव्यं कारणवत्', 'कारणमपि कार्यद्रव्यमेव दृष्टम्' इत्यादि निक्षेप्तव्यम्, तथा च सति महत्त्वादेर्व्यतिरेकाभावात् प्रयोजकत्वं न संभवति। तथाहि, इतरसामग्रीसंभवेऽपि यस्य व्यतिरेकात् कार्यानुत्पादो दृष्टः, तस्यैव धर्मस्य प्रयोजकत्वम्, अत्र तु कार्यत्वे सत्यपि महत्त्वादिधर्माभावात् कारणवत्त्वाभावः क्वचिदपि न दृष्टः, अतः कारणवदित्येतदेव प्रयोजकम्। किञ्च कार्यद्रव्यं कार्यद्रव्यारब्धमितीयं व्याप्तिरुभयोरपि वादिनोर्व्यभिचारिणी, तव तु आद्यप्रत्यक्षे उत्तरकार्यारम्भके व्यभिचारः, मम तु परममहतः कार्यात् त्र्यणुकात् द्व्यणुकसिद्धिः, द्व्यणुककार्यात् परमाणुसिद्धिः। ननु परमाणवस्त्र्यणुकमेवारभन्ताम्, किमन्तर्गडुना द्व्यणुकारम्भेण? नैवम्, महतः कार्यद्रव्यस्य अल्पपरिमाणकार्यद्रव्यान्तरारभ्यत्वं दृष्टमिति तदनुसारेण त्र्यणुकस्य कार्यद्रव्यमेव कारणमनुमेयम्, विशेषव्याप्तेः परित्यागायोगात्, परमाणवश्च नित्या इति न तैस्त्र्यणुकारम्भः। ननु अनित्याः परमाणवः मूर्तत्वात्, घटादिवत्, तथा सावयवाः परमाणवः मूर्तत्वात् घटादिवत्, तथा अनित्याः सावयवाः परमाणवः सर्वदिक्संबन्धत्वात्, घटादिवत् इत्येभिर्निराकृताः परमाणवः कथं सिध्यन्ति? सिध्यन्त्येव तैरेव हेतुभिः। एतेषां हेतूनां पक्षधर्मत्वं विना हि न हेतुत्वमिति एतेषां पक्षवृत्तिताऽऽदिसाधकप्रमाणैरेव परमाणवोऽपि सिद्धा भवन्ति, अन्यथैतेषां हेतुत्वमेव न स्यादिति भावः। तथाहि, तत्र पक्षीकृताः परमाणवः सिद्धा असिद्धा वा? यदि सिद्धाः, तदा धर्मिग्राहकप्रमाणबाधात् बाधितविषया हेतवः। अथासिद्धाः तर्हि आश्रयासिद्धत्वादेव न साध्यसाधकाः। अथ प्रसङ्गापादनमुखेन हेतवः साध्यं साधयन्ति, तर्हि पक्षभूतपरमाण्वङ्गीकारेण चेत् प्रसङ्गः, तथापि धर्मिग्राहकबाध एव। अनङ्गीकारेणेति चेत् तदाऽपि पूर्वोक्ताश्रयासिद्धिस्तदवस्थैव। प्रसङ्गापादनमपि नानुमानविलक्षणं प्रमाणम्, किन्तु अनुमानस्यैव प्रयोगभेदमात्रम्, साधनदूषणलक्षणान्यपि तान्येवेति न विधाऽन्तरं प्रसङ्गापादनमिति सर्वमुपपन्नम्। अयं तु नित्यकारणवादः ब्रह्मकारणत्वपक्षे प्रकृतिकारणत्वपक्षे च तुल्यः। अतः परमाणुकारणवादे ये दोषास्ते सर्वेषामपि समाना इत्युपरम्यते। प्रवि. पृ. ४३-४६.

* **परमात्मा** 'तत्सवितुर्वरेण्यम्' इति सवित्रधिष्ठानतच्छब्दवाच्यब्रह्माख्यपरमात्माभिधायिन्या गायत्र्या उत्क्षिप्यमाणेन वारिणा इज्यते। सु. पृ. १०१०. * परमात्मा स्वेच्छया परमार्थत एव व्योमादि जनयति। 'इन्द्रो मायाभिः' इत्यादिश्रुतिस्तु प्रपञ्चस्य अनित्यत्वं बोधयति, न मिथ्यात्वादि इति केचित्। मणि. पृ. ५०. * 'तथा व्योमशरीरोऽपि **परमात्मा** श्रुतौ श्रुतः। इज्यते वारिणा नित्यं यः खं ब्रह्मेति चोदितः॥'। वा. ३।१।७।१३ पृ. ७०२, * 'शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते। तदप्यधिष्ठितं सर्वमेकेन **परमात्मना**॥' ३।१।७।१३ पृ. ७०३. * **परमात्मनः** एव वेदान् स्वार्थप्रतिपादने नियन्तुं वेदाख्यक्षेत्राधिष्ठातृत्वेन क्षेत्रज्ञव्यपदेश्यत्वात् नित्यज्ञानत्वोपपत्तिः। सु. पृ. १०११, * परमात्मनः कर्मजन्यफलोपभोगार्थं देहानधिष्ठानेऽपि कार्यकारणप्रतिनियमसिद्ध्यै सर्वस्य जगतः चेतनाधिष्ठानकरणात्, परमात्मनोऽपि 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।' इति देहाख्यक्षेत्रे ज्ञातृत्वाख्यक्षेत्रज्ञत्वस्मृतेः वेदेषु अधिष्ठातृत्वोपपत्तिः। पृ. १००८, * परमात्मनः महाभूताधिष्ठितस्यैव ज्ञानेच्छादिमत्त्वम् 'पञ्चधातून् स्वयं षष्ठ आदत्ते युगपत् प्रभुः।' इत्यादिस्मृत्यालोचनेन अवगम्यते। पृ. १००९.

* **परमात्मप्राप्त्यवस्था** । अपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्थाफलवचनम् 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न स पुनरावर्तते' इति, न तस्यार्थवादत्वम् । वा. १।३।८।२७ पृ. २८८ .

* **परमापूर्वं** अङ्गापूर्वं प्रधानापूर्वं समुदायापूर्वं इति अपूर्वावान्तरभेदाः । वि. २।१।२ , * परमापूर्वं साक्षात् स्वर्गादिफलजनकम् । इदमेव फलापूर्वमित्युच्यते । २।१।२.

* **परमापूर्वप्रयुक्तं** न भवति अग्नीषोमीयप्राग्भागवर्तिपदार्थधर्मस्य उपांशुत्वम् , किन्तु तत्तत्पदार्थजन्यावान्तरापूर्वप्रयुक्तम् । भा. ९।१।६।२०–२५.

* **परमेश्वरः** । अचिन्त्यशक्तिकपरमेश्वरतत्कर्तृकसृष्टिप्रलयादिकमप्यस्ति इति वार्तिककारैः वैदिकशिरोमणिभिः प्रपञ्चितम् । अनीश्वरवादिनस्तु प्राभाकरादयो वैदिकैरनादृत्याः । कु. १।२।१।१८.

* **परमेष्ठि साम** अनृकम् । बाल. पृ. ७२.

* **परम्परातिदेशात्** लिङ्गातिदेशः प्रबलः । लिङ्गातिदेशादपि नामातिदेशः प्रबलः, शीघ्रबुद्धिहेतुत्वात् । तेन कौण्डपायिनामयनगताग्निहोत्रश्रपणं प्राजहिते एव न शालामुखीये । वि. १२।१।६.

* **परस्तादनुषङ्गेण** विधिर्यथा 'अथैष ज्योतिः' 'अथैष विश्वज्योतिः' 'अथैष सर्वज्योतिः' 'एतेन सहस्रदक्षिणेन यजेत' इति । अत्र 'एतेन' इत्यादि पूर्ववाक्ययोरपि अनुषज्यते । बाल. पृ. २८.

* **परस्तादनुषङ्गमन्त्रः** 'चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः ।' इति । बाल. पृ. ६०.

* **परस्परैकवाक्यतासामर्थ्यात्मकात्** लिङ्गात् अर्थाभिधानशक्तिरूपं लिङ्गं बलीयः लिङ्गयोर्विरोधे । 'स्योनं ते सदनं कृणोमि' इत्यत्र । वा. ३।३।७।१४ पृ. ८४०.

⌛ **'परस्परविरोधे हि न प्रकारान्तरस्थितिः । नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ॥' इति न्यायः** । न च क्रमाक्रमाभ्यामन्यः प्रकारः समस्ति, परस्परविरोधे हीति न्यायेन व्याघातस्योद्भटत्वादिति तत्रैव ( सर्वदर्शनसंग्रहे ) बौद्धे । **साहस्री**. ६९५.

* **परस्मैपदं** विनियोक्त्री श्रुतिर्यथा 'यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुयात्' अत्र परस्मैपदश्रुत्या अध्वर्युव्यापारः परार्थः श्रूयते, तया श्रुत्या तत्सामानाधिकरण्यं कामयतेर्बाध्यते । बाल. पृ. ४१.

* **परस्वत्** । 'ईशानाय परस्वत आलभेत' इत्यत्र परस्वच्छब्देन आरण्याः पशुविशेषा उच्यन्ते । वि. ९।४।१३.

* **परस्वद्यागे** पर्यग्निकरणान्ताङ्गरीतिविधानेन तदुत्तराङ्गप्रतिषेधः ( अश्वमेधे ) । भा. ९।४।१३।५१–५५.

* '**पराक्** बहिष्पवमानेन स्तुवन्ति' अत्र पराक्शब्देन पाठक्रमो बोध्यते, तेनाभ्यासप्रतिषेधः । वि. १०।५।७, * **पराचीभिः** अनुक्रमेणाम्नाताभिः ऋग्भिः । १।४।३.

* **पराक्शब्दः** अनभ्यासे 'पराचीः सामिधेनीरन्वाह' । अनभ्यस्ताः सामिधेनीरन्वाहेति । ( पूर्वपक्षे इदमुक्तम् ) । भा. १०।५।१०।४५। दिग्देशकालवचनो हि पराक्शब्दो भवति । यथा 'पराञ्चमग्न्याधेयात् पुनरादधाति' इति कालसंयोगे पञ्चमी, नापादाने । १०।५।१०।४७.

* **पराजयते**: ग्लानिजनकक्रिया अर्थः । **मणि**. पृ. १४०.

* **परामर्शः** यदि पक्षविशेष्यकः तदा तद्विशेष्यिकैव अनुमितिः । हेतुविशेष्यके तु साध्यविशेष्यिका इति **मणिकृत्** ( गङ्गेशः ) । उभयविधेनापि पक्षविशेष्यिकैव इति **नव्याः** । अत्र धूमलिङ्गकपर्वतपक्षकवह्निविधेयकानुमितिं प्रति धूमपरामर्शस्य हेतुत्वम् । धूमलिङ्गकत्वं स्वाव्यवहितोत्तरत्वसंबन्धेन धूमज्ञानवत्त्वम् । अव्यवहितोत्तरत्वं च धूमज्ञानाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणत्वरूपम् । तेन अपेक्षाबुद्ध्यात्मकपरामर्शसंग्रहः । एवं तत्तत्परामर्शानां कारणतेति । ननु सर्वेषु परामर्शेषु अनुमितिकारणताऽवच्छेदकतया परामर्शत्वं जातिः किमिति नाभ्युपेयते । चाक्षुषत्वादिना

संकर इति चेत्, तर्हि तस्यां जातौ मानसत्वव्याप्यता अङ्गीकार्या। चाक्षुषपरामर्शानन्तरं जायमानायामनुमितौ व्यभिचारवारणस्य मध्ये मानसपरामर्शकल्पनेन संभवात्। न च चाक्षुषसामग्र्याः मानसप्रतिबन्धकत्वेन तदानीं मानसोत्पादासंभव इति वाच्यम्। फलबलेन चक्षुर्योगाभावेन चाक्षुषसामग्र्यभावस्य सत्त्वात्।

ननु परामर्शत्वं स्मृतित्वव्याप्यम्। चाक्षुषादिपरामर्शोत्तरोत्पद्यमानानुमितिस्थले भवतः इव स्मरणरूपपरामर्शकल्पनान्न क्षतिः। एवं च स्मरणस्य संशयात्मकत्वाभावेन संशयानन्तरं अनुमित्युत्पादनासंभवात्। विशेषतः परामर्शकारणतायां निश्चयत्वस्य अप्रवेशेन अतिलाघवं इति चेत्। चाक्षुषादिपरामर्शोत्तरं उत्पद्यमानानुमितिस्थले स्मरणात्मकपरामर्शकल्पने तज्जनकसंस्कारकल्पने च अतिगौरवापत्तेः। अनुमितिजनकताऽवच्छेदकजातेः संशयात्मकमानसव्यावृत्तत्वकल्पनेन संशयात्मकपरामर्शादनुमित्यापादनासंभवेन विशेषहेतुतायां निश्चयत्वाप्रवेशस्य तुल्यत्वात्। समूहालम्बनात्मकपरामर्शोत्तरं एकानुमितौ तद्व्याप्यवत्तापरामर्शान्तरकल्पनेन समूहालम्बनात्मकपरामर्शे अनुमितिजनकताऽवच्छेदकजातिर्न कल्प्यते। अतो न तत्र द्वितीयाऽनुमितिः। तस्मात् परामर्शत्वं जातिः **इति चेत्।**

**अत्र केचित्**, उक्तनयेन इष्टहेतुताज्ञानादौ प्रवृत्तिजनकतावच्छेदकवैजात्यस्यापि मानसत्वव्याप्यत्वेन सिद्धया इष्टसाधनत्वादिपरामर्शविशेषे प्रवृत्तिजनकतावच्छेदकवैजात्येन संकरप्रसङ्गात्। न च प्रवृत्तिजनकताऽवच्छेदकवैजात्यं चाक्षुषत्वव्याप्यत्वं इति वाच्यम्। परामर्शत्वस्य चाक्षुषत्वादिव्याप्यत्वेन विनिगमनाविरहात्। अतो न परामर्शत्वं जातिरित्याहुः। अत्र **गौतमीयाः**, वह्न्याद्यनुमितौ वह्निव्याप्यालोकवान् पर्वतः इत्यादिविशिष्टपरामर्शस्यैव हेतुत्वम्, न तु आलोको वह्निव्याप्यः, आलोकवान् पर्वतः इति ज्ञानद्वयस्य गौरवात्। यत्र च ज्ञानद्वयादनुमितिः, तत्र विशिष्टज्ञानकल्पनात् न व्यभिचार इत्याहुः। **मीमांसकास्तु**, वह्निव्याप्यधूमवान् पर्वतः इति विशिष्टपरामर्शस्य हेतुत्ववादिनये व्याप्त्यंशे निश्चयत्वं निवेश्य धूमांशेऽपि निश्चयत्वं निवेशनीयम्, तथा च निश्चयत्वस्य तदभावाप्रकारकत्वरूपबहुतरपदार्थघटितत्वेन तेषां परस्परविशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावबाहुल्यम्। **ज्ञानद्वयवादिनये** तु ज्ञानस्य भिन्नतया निश्चयत्वप्रवेशेऽपि न मिथो विनिगमनाविरहः। तत्र लाघवं इत्याहुः। **न च परामर्शवादिनये** व्याप्त्यवच्छिन्ना या हेतुनिष्ठप्रकारता तन्निरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन हेतुत्वकल्पनेन व्याप्त्यंशे निश्चयत्वानिवेशेन नोपदर्शितं गौरवं इति **वाच्यम्।** वह्निव्याप्त्यंशे निश्चयत्वानिवेशे वह्निव्याप्यो धूम इति विशेषणताऽवच्छेदकप्रकारकनिर्णयकाले 'व्याप्त्यभावप्रकारकं ज्ञानं जायताम्' इतीच्छासत्त्वे व्याप्त्यंशे संशयात्मकतथाविधविशिष्टवैशिष्ट्यबोधोत्पत्तौ बाधकाभावः। तथा च तादृशज्ञाने व्याप्त्यंशे निश्चयत्वनिवेशेन गौरवतादवस्थ्यात्। **न च** तादृशज्ञानस्य आहार्यत्वेन न तस्मादनुमित्यापत्तिः। आहार्यपरामर्शात् अनुमित्यापत्तिवारणार्थं अनाहार्यत्वनिवेशस्य आवश्यकत्वात् इति **वाच्यम्।** अनुमितिजनकताऽवच्छेदककोटौ अनाहार्यत्वस्य अनुगतस्य अशक्यनिर्वचनत्वेन तद्व्यक्तिविश्रान्ततया तथाविधतद्व्यक्तित्वावच्छिन्नभेदकूटस्य अनुमितिजनकताऽवच्छेदककोटौ निवेशमपेक्ष्य व्याप्त्यंशे निश्चयत्वस्यैव तर्कसहत्वात्। तथा च गौरवं तदवस्थं इति दिक्। **मणि. पृ. ३७–३९.**

* **परार्थमनुमानं** प्रतिज्ञाद्यवयवप्रयोगेण परस्य साध्यज्ञानजनकम्। **मणि. पृ. ३९.** * परार्थमनुमानं सामान्यतोदृष्टं विशेषतोदृष्टं चेति द्विविधम्। **बाल. पृ. ८.**

**परार्थान्येको यजमानगणे।** (१२।४।११।३२) इति **न्यायेन** औदुम्बरीसंमाननवत् यस्यकस्य चित् अग्निषु कृतमपि कर्म सर्वेषां फलिष्यति। पूर्वपक्षः। (परार्थेष्वेको इति क्वचित् पाठः।)। **सोम. ६।६।२.**

**परार्थान्येको यजमानगणे। १२।४।११।३२॥**

सत्रे अहीने वा यजमानानां गणे सति यानि परार्थानि कर्माणि क्रत्वर्थानि शुक्रान्वारम्भणं औदुम्बरीसंमाननं

इत्यादीनि, तानि एक एव यजमानः कुर्यात्, न सर्वे कुर्युः । इति सिद्धान्तः । के.

**‘परार्थान्येकेन क्रियेरन्।’** ( सत्या. श्रौ. ११।१।४२ ) । गार्हपत्योपस्थानं आरादुपकारकं कर्मापि प्रतिपत्ति आवर्तते । ‘परार्थान्येकेन क्रियेरन्’ इति न प्रवर्तते । तस्य न्यायस्य परार्थकर्मविषयत्वात् । वैजयन्ती. १।७।१८. * **‘परार्थान्येकेन क्रियेरन्।’** ‘पत्नी यदि नान्वास्ते सर्वे पृथिव्याम्’ । ( सत्या. श्रौ. ३।७।१०२ ) । सर्वग्रहणं प्रतिपत्ति आवृत्ति-निरासार्थम् । ‘परार्थान्येकेन क्रियेरन्’ इति न्यायस्य परार्थे एकसंस्कारे प्रवृत्तिः इति मा भूत् । अपि तर्हि ( किन्तु ) स्वार्थे यत्र भवति एवंरूपे चादृष्टार्थेऽपि कर्मणि । तथा च एकयैव पत्न्या सिध्यति निनयनम् । **वैजयन्ती.**

* **‘परार्थे** त्वर्थ(र्था)सामान्यम्’ (९।२।१४।४३) इति ( उपक्रम्य ‘क्रियेरन् वा’ इति ) वक्ष्यति, विनाऽपि तादर्थ्येन अभ्युदितेष्ट्यां दधिपयसोः तदुपकारमात्र-दर्शनात् प्रणीताधर्मप्राप्तिर्भवतीति । वा. ३।७।१।४.

**परार्थे त्वर्थासामान्यं संस्कारस्य तदर्थत्वात्। ९।२।१४।४३॥**

‘वि वा एनं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति । स त्रेधा तण्डुलान् विभजेत्, ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्, ये क्षोदिष्ठास्तान् विष्णवे शिपि-विष्टाय शृते चरुम्’ इति प्रजापशुफला अभ्युदयेष्टिरा-म्नाता । तत्र शृते दधनि च प्रणीताधर्माः कर्तव्या न वेति विचारे पूर्वपक्षमाह । तुशब्दः कर्तव्यत्वाभावसूचकः । परार्थे चरुणा सह प्रदानार्थे, शृते दधनि च प्रणीताधर्मा न कर्तव्याः । दधिशृतयोः प्रणीताभिः सह अर्थासामान्यं अर्थसामान्याभावो यतः । संस्कारस्य उत्पवनादेः तदर्थ-त्वात् श्रपणार्थत्वात् । प्रणीताधर्माः श्रपणार्थाः । दधिशृते तु न श्रपणार्थे किन्तु प्रदानार्थे, तस्मात् तयोः प्रणीता-धर्मा उत्पवनादयो न कर्तव्या इति पूर्वः पक्षः । अत्र क्वचित् ‘परार्थेन त्वर्थ’ इति तृतीयान्तः पाठः । क्वचित् ‘परार्थे न त्वर्थ’ इति सप्तम्यन्तः, यथा आनन्दाश्रमीये सूत्रपाठे । आनन्दाश्रमीये एव तु ३।७।१।४ सूत्रीये वार्तिके “ ‘परार्थे त्वर्थसामान्यम्’ इति वक्ष्यति” इति मुद्रितम् । तत्र नञ् नास्ति । चौखम्बान्यायसुधायामेतदेव वार्तिकम् “ ‘परार्थे त्वर्थासामान्यम्’ इति पूर्वपक्षमुपक्रम्य वक्ष्यति इति उपक्रमार्थेतिकरणाभ्युपगमेन व्याख्येयम्” इति ग्रन्थेन विवृतम् । सूत्रे तुशब्दस्य विद्यमानत्वात् न-शब्दस्य पृथगपेक्षा नास्त्येव । अथ ‘अर्थासामान्यम्’ इति सुधास्थः पाठ एव स्वीकार्यः तथा च तत् पदं भाष्ये ‘नहि प्रणीतानां दध्नश्च अर्थसामान्यं किञ्चिदस्ति’ इति विवृतम् । सोऽयं भाष्यानुसारी सुधास्थः पाठः स्वीकृतो-ऽस्माभिरत्र । अस्मदीयमीमांसादर्शने स्वीकृतः पाठस्तु परिवर्तनीयः ।

**क्रियेरन् वाऽर्थनिर्वृत्तेः । ४४ ॥**

पूर्वपक्षं वाशब्दो व्यावर्तयति । दधिशृतयोः प्रणीता-धर्मा उत्पवनादयः क्रियेरन् कर्तव्याः । अर्थनिर्वृत्तेः अर्थस्य चरुश्रपणस्य निर्वृत्तेः निष्पन्नत्वात् श्रपणनिष्पत्त्य-वगमात् । ‘शृते चरुं दधन् चरुम्’ इत्युक्त्या ज्ञायते एतत् शृते दधनि च चरोः श्रपणमिति । चरौ समवेतत्वात्तु तयोः प्रदानं स्यान्नाम । न तु तयोर्विधानं प्रदानार्थं किन्तु श्रपणार्थमेव । तस्मात् श्रपणार्थासु प्रणीतासु ये धर्मा उत्पवनादयस्ते दधिशृतयोः कर्तव्याः एवेति सिद्धान्तः । के.

* **परार्थानुमाने** न पञ्चावयवाः किन्तु त्रय एव । ‘उदाहरणपर्यन्तं यद्वोदाहरणादिकम्’ । बाल. पृ. ८.

* **परार्थत्वं** शेषलक्षणम् । ‘यस्तु अत्यन्तं परार्थः, तं वयं शेष इति ब्रूमः’ । भा. ३।१।२।२ पृ. ६५९. * **परार्थत्वाद्गुणानाम्** । ( १।४।१०।१६ ) पूर्वेण एकसूत्रत्वमपि संभवति ( तथा च ‘मिथश्चानर्थसंबन्धः परार्थत्वाद्गुणानाम्’ इत्येकसूत्रत्वेन व्याख्येयम् ) । वा. १।४।११।१६.

* **परावपनं** उलूखलात् शूर्पे अवहतस्य हविषः प्रक्षेपः । सोम. ११।३।७.

* परिः समन्तार्थः । 'औदुम्बरी परिवेष्टयितव्या' इत्यत्र परिः समन्तार्थः सर्वतो देशवेष्टनं ब्रूते । सु. पृ. १६०.

**'परिकल्पितोऽपि मरणाय भवेदुरगो यथा न तु नभो मलिनम्'** । जीवकल्पितत्वपक्षेऽपि तादृक् ( जीवप्रेरकत्वादि )धर्मविशिष्टतयैव कल्पनेन तस्य ( ईश्वरस्य ) भ्रमयितृत्वाद्युपपत्तिः, 'परिकल्पितोऽपि०' इति न्यायात् । अद्वैत. प्रतिकूलतर्कनिराकरणे पृ. ५०४.

* **परिक्रयः** अन्यकृते कर्मणि स्वयंकर्तृत्वापादनसामर्थ्यात्मकः । सु. ३।८।१ पृ. ५३. * परिक्रयः अन्वाहार्यः इह ( सोमे ) चोदकेन प्राप्तः सन् न कर्तव्यः । भृतास्ते ऋत्विजः सोमार्थेन परिक्रयेण । तस्मात् ( सोमाङ्गदीक्षणीयाऽऽदिषु ) अन्वाहार्यो निवर्तते । भा. १२।१।१६।३३. * परिक्रयः ऋत्विजां याजमानं कर्म । वि. ३।८।१. * परिक्रयः ऋत्विजां सत्रेषु नास्ति । भा. १०।२।११।३६–३९. * परिक्रयः ऋत्विजां स्वामिकर्म । ३।८।१. मीको. पृ. १२५२ 'ऋत्विजां परिक्रयः०' इत्यत्र द्रष्टव्यम् । * परिक्रयः ऋत्विक्कर्मापि, यत्र वचनं तत्र, यथा 'य एतामिष्टकां उपदध्यात् स त्रीन् वरान् दद्यात्' इति ( स्वयमातृण्णाविषयकमिदम् ) । भा. ३।८।१।२.

**परिक्रयश्च तादर्थ्यात् । १०।२।११।३६ ॥**

चशब्दो वरणदृष्टान्तार्थः । सत्रे वरणवत् परिक्रयोऽपि न कर्तव्यः, दक्षिणा न देया । तादर्थ्यात् सर्वेषामेव स्वार्थत्वात् । सत्रे हि सर्वे यजमानाः, तत्र कः कस्मै किमर्थं दक्षिणां दास्यति । तस्मात् सत्रे न परिक्रय इति सिद्धान्तः ।

**प्रतिषेधश्च कर्मवत् । ३७ ॥**

सत्रे गवादयः प्रतिषिध्यन्ते 'नह्यत्र गौर्दीयते, न वासो न हिरण्यम्' इति । प्रतिषेधश्च प्राप्तौ सत्यामुपपद्यते । कर्मवत् इति मतुबयं न वतिः । तथा च सत्रे यस्मात् केषां चित् दक्षिणात्वेन प्रतिषेधः, तस्मात् कर्मवत् प्रतिषिद्धेतरदक्षिणादानरूपकर्मविशिष्टं सत्रं भवति इति प्रतीमः । अतश्च सत्रे परिक्रयः कर्तव्य इति पूर्वः पक्षः ।

**स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात् । ३८ ॥**

वाशब्दः पूर्वपक्षनिरासार्थः । सत्रप्रकरणे योऽयं गवादिदानस्य प्रतिषेधः, स प्रासर्पिकस्य स्यात् । प्रासर्पिकेभ्योऽपि शास्त्रीयदानस्य प्रतिषेधोऽयम् । प्रासर्पिकदानस्य तु धर्ममात्रत्वात् । धर्मार्थं तत् । तस्मात् तत्प्रतिषेधबलेन सत्रे परिक्रयसिद्धिर्न भवितुमर्हति । प्रसर्पकाः नाम प्रसर्पन्ति यज्ञमण्डपेषु तत्रतत्र । यज्ञे अर्थसंशये निर्णायकाः । यज्ञार्थशालोपविष्टाः विद्वांसः शिष्टा ब्राह्मणाः त्रिप्रभृतयः । प्रसर्पकेभ्यो दीयते इति प्रासर्पिकम् । ( ज्योत्स्ना १०।१।१० ) । सिद्धान्त्येकदेशिना इदमुक्तम् । मुख्यसिद्धान्ती तु उत्तरसूत्रे वक्ष्यति ।

**न दक्षिणाशब्दात् तस्मान्नित्यानुवादः स्यात् । ३९ ॥**

'नह्यत्र गौर्दीयते, न वासः, न हिरण्यम्' इति प्रतिषेधः न प्रासर्पिकस्य दानस्य । दक्षिणाशब्दात् । 'अदक्षिणानि सत्राणीत्याहुः, न ह्यत्र गौर्दीयते, न वासो न हिरण्यम्' इति । दक्षिणाशब्दश्च परिक्रयार्थो भवति । प्रसर्पकेभ्यो दानं तु न दक्षिणा नाम । तस्मात् परिक्रयार्थस्यैव दानस्य प्रतिषेधोऽयं न प्रासर्पिकस्य । तस्मात् नित्यप्राप्तस्यैव अनुवादोऽसौ 'न सत्रेषु दक्षिणा' इति । तस्मात् सत्रे नास्ति परिक्रयः इति सिद्धान्तः । के.

* **परिक्रयश्च तादर्थ्यात्** । यदि च अदृष्टमृत्विक्त्वं वरणभरणाभ्यां जन्येत, ततः सत्रेऽपि यजमानेषु तत् आधातव्यं तद्विशेषाश्च अध्वर्य्वादयो दीक्षावाक्येऽनूद्यन्ते इति वरणभरणे कर्तव्ये स्याताम्, तत्र 'वरणमृत्विजां०' 'परिक्रयश्च०' इति च विरुध्यते । वा. ३।७।१६।३३ पृ. १०९८. * परिक्रयो ज्योतिष्टोमे द्वादशशतम् ( ११२ ), दर्शपूर्णमासयोः अन्वाहार्यः । स च परिक्रयः स्वामिकर्म । वचनात्तु ऋत्विक्कर्मापि यथा 'य एतामिष्टकामुपदध्यात्, स त्रीन् वरान् ( चतुर्वर्षाः गाः ) दद्यात्' इति । भा. ३।८।१।१–२. * परिक्रयः नियते काले भृतिदानेन भृतकदानेन वा मनुष्यस्य शकटादेर्वा पदार्थस्य स्वीकारः । के. * चिकीर्षितं कुर्वाणस्य सहायान् उपाददानस्य अयं

विशेष उच्यते परिक्रयः । भा. १०।६।१७।६७, * नहि असति दाने परिक्रयः । १०।२।१७।४८, * पुरुषानतिप्रकारेषु बहुषु प्राप्तेषु परिक्रयो नियतः । तस्मात् परिक्रयेण आनतैः सर्वे पदार्थाः कर्तव्याः । ३।७।८।२०. * **परिक्रयेण** वरदानस्य ऋत्विक्कर्मत्वं यदि तावत् शास्त्रीयेण लभ्यते, ततोऽस्त्येव यजमानस्य कर्तृत्वम्। अथ न लभ्यते, ततो लौकिक उपाय इति । वा. ३।८।१।२, * **परिक्रयस्य** एतद्रूपं (यत्) ऋत्विजामुत्साहकारित्वम् । ३।४।१७।४९.

* **परिक्रयार्थं** ऋत्विजामुदवसानीये दक्षिणादानम्, तस्य सत्रानङ्गत्वात् । भा. १०।२।१२।४०-४१, * परिक्रयार्थे च भर्त्रा भृत्येन सह पणितव्यम्। यथा लोके काष्ठवाहप्रभृतिभ्यो यद्दीयते, तत्र काष्ठवाहाः स्वामिना सह पणन्ते । तेभ्यः स्वामी विभज्य निर्दिशति इदं तुभ्यमिदं तुभ्यमिति । १०।३।१२।५१, * परिक्रयार्थं दानं (यज्ञे), न धर्ममात्रम् । १०।३।१२।५१. * परिक्रयार्थं वा कर्मसंयोगात् । (१०।२।८।२३) इति दशमे अन्वाहार्यद्वादशशतादिदानं कर्मसंयुक्तेभ्योऽभिधानात् इति वक्ष्यति । वा. ३।७।८।२०, * **परिक्रयार्था** दक्षिणा अध्वर्य्वादीनां कर्मसंयोगात् । ३।१।६।१२ पृ. ६९७.

* **परिक्रयात्मकस्य** वरदानस्य स्वयमातृण्णोपधाने आर्त्विजत्वं दृष्टम् । सु. ३।८।१ पृ. ५४.

* **परिक्रयादिना** कारयन् न कर्तृत्वात् प्रच्यवते । वा. ३।७।८।१९.

* **परिक्रयणं** नियतकालं भृत्या स्वीकरणम् । रहस्य. पृ. १०९.

* दीक्षितमदीक्षिता दक्षिणा**परिक्रीता** ऋत्विजो याजयन्ति । भा. १०।२।८।२७, * **परिक्रीतानां** ऋत्विजां संख्याविशेषनियमः कर्तव्यकर्मानुसारेण । ३।७।९।२१-२४.

* **परिगृहीतद्रव्यापचारे** प्रतिनिधित्वेन तत्सदृशस्यैवोपादानम्, न तु वैकल्पिकद्रव्यान्तरस्य । वृ. ६।३।१२।२८-३०. * परिगृहीतद्रव्यापचारे वैकल्पिकद्रव्यान्तरस्य न प्रतिनिधित्वं यथा व्रीह्यपचारे यवानाम् । ६।३।१२. 'वैकल्पिकन्यायः' इत्यत्र द्रष्टव्यम् ।

* **परिधत्ते** । ननु कौपीनप्रच्छादने परिधत्ते इति भवति । नैतदेवम् । उपरि वाससोऽपि कार्ये परिधत्ते इति भवति । तद्यथा कम्बलं परिधत्ते, रौरवं परिधत्ते इति । भा. १०।४।७।१४.

⌛ **परिपूर्णं पदं पदान्तरेणान्वेति इति न्यायेन** प्रथमावगतयागादिव्युत्पत्तिवेलायां भावनाविशेष्यत्वस्योपस्थितत्वात् तत्रैव विशेषणज्ञानरूपसामग्रीसत्त्वेन स्वर्गादिपदार्थान्तराणामपि प्रकारतया अन्वयव्युत्पत्तिकल्पना, न तु अन्यत्र, अन्यगतमुख्यविशेष्यत्वस्य अनुपस्थितत्वेन विशेषणज्ञानाभावात् । कौ. २।१।२।५ पृ. ३९, * परिपूर्णं पदं० इति न्यायेन प्राजापत्यं इत्येकवचनान्तर्गतस्य सर्वनाम्नः दध्यादिपदान्वयव्यतिरेकेण एकदेशत्वाप्रतीतेः, तदन्वयस्य च 'परिपूर्णं०' इति न्यायेन तद्धितस्यैव पश्चादेकशेषकरणात् यागभेदोपपत्तिः । १।४।३।३ पृ. १७८, * परिपूर्णं० इति न्यायेन सोमादिपदानां भावनापदान्वये तस्य परिपूर्णत्वापेक्षणात् । ततः पूर्वमेव यागादेः अङ्गत्वावगतेः तदुत्तरभाविनः सोमाद्यङ्गत्वस्य दौर्बल्यम् । २।१।२।५ पृ. १०. * प्राथमिकभावनाऽन्वये विद्यमाना पदश्रुतिः फलान्वये निर्णायिका लाक्षणिकत्वेऽपि, यागकरणत्वस्य सोमकरणत्वान्वयात् प्राक् भावनायामन्वितत्वेन तदन्वयस्य प्राथम्यात् । अन्यथा तिङन्तपदस्य परिपूर्णत्वाभावेन तदुपस्थापितभावनायां सोमस्यापि अन्वयानुपपत्तेः **परिपूर्णं० इति न्यायात्** । भाट्ट. २।१।२ पृ. ८५. * न च एवं भावनायां साध्यसाधनेतिकर्तव्यतान्वयेऽपि समानप्रत्ययोपादानश्रुत्या शुद्धायामेव तस्यां विध्यन्वयात् उत्तरकालीनस्य तदंशत्रयस्य विधिसंस्पर्शाभावेन ग्रहैकत्ववत् अविवक्षाऽऽपत्तिः । अंशत्रयान्वयोत्तरं तद्विशिष्टायां भावनायां विध्यन्वयाभ्युपगमे तु **परिपूर्णं पदं० इति न्यायभङ्गापत्तिः** इति वाच्यम् । शुद्धस्य यत्नस्य विधिविषयत्वानुपपत्तेः । कौ. २।१।२।५ पृ. ४४.

* **परिसमाप्तिः** प्रत्यृचं तृचे गेयस्य साम्नः । भा. ९।२।३।१४-२०.

**परिहृत्यापवादविषयं तत उत्सर्गोऽभिनिविशते इति न्यायः।** प्रतिलक्ष्यं भिन्नानां सर्वेषां लक्षणानां तन्त्रेणोच्चारणम् 'इको यणचि' इति, ततश्च इकामपि तात्पर्यतो निमित्तत्वप्रतिपादनम्। न चैवं श्रीशः इत्यादौ यण्प्रसङ्गः, व्यक्तिपक्षे 'विप्रतिषेधे परमेव' इति नियमबलेन तद्व्यक्तिविषयकशास्त्रस्यैव विरहकल्पनात्। एवमपवादविषयेऽपि सुश्रियौ इत्यादौ बोध्यम्। परिहृत्यापवादविषयं० इति न्यायात्। शब्दकौस्तुभः हयवरट्.

* **परिकरबन्धः।** निवीतं केचित् परिकरबन्धं स्मरन्ति। स च सर्वकर्मसु अव्यग्रताकरत्वात् प्राप्तः। इति पूर्वपक्षे। वा. ३।४।१।२.

* **'परिग्रहपरित्यागाविच्छानिच्छाफले स्थिते।'** पौरुषेयेषु वाक्येषु परिग्रहापरिग्रहौ फलत्वेन प्रज्ञातौ। वा. ३।१।७।१३ पृ. ७००.

* **परिग्राहः** वेदेः दर्शादौ 'स्फ्येन वेदिं परिलिखन् परिगृह्णाति' इति विहितः। वि.१०।१।१.

* **परिचक्षा** निन्दा। सोम. ७।३।१०.

* **परिचराः** नाम ग्रन्थविशेषाः। 'अरुणपराशरा नाम शाखिनः, तेषां परिचरेषु स्मृतिरूपं ब्राह्मणं भवति।'। भा. ७।१।१।८.

* **परिचोदना** शङ्का। सा च परिचोदना या स्वपक्षं वा स्थापयति परपक्षं वा दूषयति। टुप्. ११।१।२।६. * **परिचोदनानां** बह्वीनां मध्ये परिचोदनापरिहारकालेऽपि पूर्वपरिचोदनापरिहारः भवत्येव। वा.३।३।७।१४ पृ. ८२७.

* **परिणयः।** केषु चित् दक्षिणदेशेषु मातुलस्य दुहितरं शिष्टाः परिणयन्ति। सोऽयमाचारः प्रमाणम्, शिष्टाचारत्वात् होलाकाद्याचारवत् इति चेन्न, स्मृतिविरुद्धत्वेन कालात्ययापदिष्टत्वात्। तस्मात् ईदृशस्य आचारस्य अप्रामाण्यम्। वि. १।३।५ वर्णकं ३.

* **परिदानाधिकरणम्।** भा. ३।४।६।१७. मीको. पृ. ६७७ 'अवगोरणन्यायः' इत्यत्र द्रष्टव्यम्।

* **परिदृंहणं** यूपधर्मः, 'ब्रह्म दृंह क्षत्रं दृंहेति मैत्रावरुणदण्डेन समभूमि परिदृंहणम् (दृढीकरणम्) कृत्वा' इत्युक्तत्वात्। वि. १०।२।३३.

* **परिदेवनमन्त्रः** 'अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्॥' इति। बाल. पृ. ५९.

* **परिदेवनरूपः** अर्थवादः 'ये मामधुक्षन्त, ते मां प्रत्यमुञ्चन्त' इति। बाल. पृ. ५०.

* **परिदेवनसरूपः** अर्थवादः 'आहिताग्निर्वा एष सन् नाग्निहोत्रं जुहोति, न दर्शपूर्णमासौ यजते, या आहुतिभाजो देवतास्ता अनुध्यायिनीः करोति'। इदं यावज्जीवाधिकरणे वार्तिके। बाल. पृ. ५०.

* **परिधानीयं** कर्म अन्तिमं अन्त्येष्टिरूपं कर्म। सोम. ११।३।१३.

* **परिधिः** अग्निना संबध्यते, अग्निर्हविषा। भा. १२।२।११।२७. * **परिधिः** अङ्गुलीवत् अणीयान् भवति। उत्तरवेद्यां तु स्थविष्ठो भवति पाशुकेषु चातुर्मास्येषु। वि. १०।३।३. * **परिधिः** इति अग्निपरिधानार्थं द्रव्यमुच्यते। वा. २।१।४।१२ पृ. ४१४. * **परिधिः** त्रित्वसंख्याप्रयुक्तो न भवति ('त्रीन् परिधीन्०' इति मन्त्रे) दर्शपूर्णमासयोः, किन्तु अपूर्वप्रयुक्तः। भा. ९।१।५।११-१९.

**परिधिर्द्व्यर्थत्वादुभयधर्मा स्यात्। १२।२।१०।२६॥**

पशुमत्सु चातुर्मास्येषु 'परिधौ पशुं नियुञ्जीत' इति श्रुतम्। स परिधिः उभयधर्मा परिधेः धर्मैः यूपस्य धर्मैश्च विशिष्टः स्यात्। स हि द्व्यर्थः द्वयोरर्थं करोति अग्नेः परिधानम्, पशोश्च प्रतिबन्धम्। तस्मात् अविरुद्धा उभये धर्माः कर्तव्याः। इध्मसंनहनं संमार्जनं जुह्वा अञ्जनं अभ्याश्रावणं इति परिधिधर्माः, यवमतीभिरद्भिः प्रोक्षणं अञ्जनं परिव्याणं इति यूपधर्माः। इति सिद्धान्तः। के.

* **परिधिः।** परिधीयते अग्निः तदायतनं वा यैः इति, परिधीयन्ते इति वा, परिधिशब्दो यौगिकः। दर्शादौ अश्वत्थस्य सार्धारत्निपरिमिताः दीर्घाः अङ्गुष्ठमात्रस्थूलाः

समिधयः परिधयः । **के.** * परिधिः, पशुन्यायेन विवक्षितैकसंख्यत्वात् एक एव संमार्ष्टव्यः पूर्वपक्षे, सिद्धान्ते तु सर्वे । यत्र च परिधिविवृद्धिः ( वरुणप्रघासेषु विहारद्वये ) तत्र विशेषः । **वा.** २।१।२।१२ पृ. ४१५. * परिधिर्यूपकार्ये सौमिकेषु चातुर्मास्येषु 'परिधौ पशुं नियुञ्जीत' इति वचनात् । तत्र मध्यमपरिधिरेव यूपकार्यकारी । स च उत्तरवेद्यां स्थविष्ठः । **के.** १०।३।३. * परिधिः सत्वकः उपशयश्च । **भा.** १२।२।११।२८. * परिधिः 'स्थविष्ठो मध्यमः, अणीयान् द्राघीयान् दक्षिणार्ध्यः, अणिष्ठो ह्रसिष्ठ उत्तरार्ध्यः' इति सत्या. श्रौ. २८।४।६२ । विस्तरे तु 'मध्यमः स्थविष्ठः, दक्षिणतः अणीयान् द्राघीयान्, उत्तरतः अणिष्ठो ह्रसिष्ठः, मध्यतः' वि. १०।५।२६ इत्युक्तम् । अत्र अन्ते मध्यतः शब्दः अयुक्तो भाति । **के.** * **परिधयः** । 'गायत्रो मध्यमः परिधिः, त्रैष्टुभो दक्षिणः, जागत उत्तरः' इति । **भा.** १०।५।२६।८८, * परिधयः पश्वङ्गम्, हारियोजनं अन्यदेव प्रधानम्, न तयोः परस्परेण संबन्धः । तस्मात् 'प्रहृत्य परिधीन् जुहोति हारियोजनम्' इति कालार्थः संयोगः । ४।३।१४।३६. * परिधयः बाणवन्तः यत्र, तत्र बाणवन्त एव संमार्ष्टव्याः सिद्धान्ते, पालाशा उत्पादयितव्याः पूर्वपक्षे । **के.** * परिधयो यत्र बाणवन्तः, तत्र बाणवन्त एव संमार्ष्टव्याः । २।१।४. 'संमार्गाधिकरणम्' इत्यत्र द्रष्टव्यम् । * '**परिधीन् संमार्ष्टि**' इति संमार्जनं गुणकर्म, न प्रधानकर्म । **भा.** २।१।४।९-१२, * **परिधिना** प्राकृतपशुनियोजनानुवादेन विहितेन प्राकृतयूपस्य बाधः सौमिकचातुर्मास्येषु । १०।३।३।१८-२२. **मीको.** पृ. १६९४ 'चातुर्मास्येषु सौमिकेषु०' इत्यत्र द्रष्टव्यम् । * **परिधेः** यूपकार्ये नियोजने वचनेन विनियोगात् यूपधर्मकरणम् । **सोम.** ९।२।१४. * परिधेर्यूपत्वे अविरोधिनो यूपधर्मा एव कर्तव्याः यवमतीभिरद्भिः प्रोक्षणं अञ्जनं परिव्याणमिति । विरोधिनश्च तक्षणं उच्छ्रयणं निखननमिति न कर्तव्याः । पशुमत्सु चातुर्मास्येषु । **भा.** १२।२।१०-११।२६-२९, * **परिधौ** पशुं नियुञ्जन्ति पशुमत्सु चातुर्मास्येषु । तत्र अवस्थाप्य परिधित्वं नियोजनमुच्यते । तत् परिधित्वानुपमर्देन विज्ञायते । यथा 'खलेवाली यूपो भवति' इति । १२।२।११।२८. * परिधौ पशुनियोजनं गुणविधिः सौमिकेषु चातुर्मास्येषु । पश्वनपगमः दृष्टं प्रयोजनम् । अतः महान् परिधिः कर्तव्यः । (भा. १०।३।३।१८-२२) । **के.** * परिधौ यूपधर्मानुष्ठानम् । वि. ९।२।१३.

**§ परिधौ यूपधर्मानुष्ठानाक्षेपस्य समाधानम् ।**
पाशुकेषु चातुर्मास्येषु स्थविष्ठे मध्यमे परिधौ अविरुद्धा यूपधर्माः कर्तव्याः, यूपाञ्जनप्रैषे च ऊहो न कर्तव्यः ॥

**तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात् स्यात् । ९।२। १३।४१ ॥**

**भाष्यम्—** चातुर्मास्येष्वाम्नायते मध्यमे पर्वणि 'परिधौ पशुं नियुञ्जीत' इति । तत्रोक्तम्, यूपधर्माः परिधौ कर्तव्याः इति, तत् विपरिवर्तते ( वर्त्यते ) । ते न कर्तव्याः । तदुत्पत्तेः परिधेः आहवनीयपरिधानार्थोत्पत्तेः यूपधर्मा निवर्तेरन् । तत्कृता हि ते अपूर्वप्रयुक्तपशुबन्धनद्वारेण अपूर्वं गच्छन्ति । तत्र यत् बन्धनस्याङ्गभूतमिति श्रुतम्, तत् बन्धनार्थमेव द्रव्यमुत्पन्नम् । यच्च आहवनीयपरिधानार्थमुत्पन्नम्, तस्मिन् पराङ्गभूते बन्धनं कृतं भवति । न तद्धर्माणां द्वारं भवितुमर्हति । नहि तत्र क्रियमाणाः पशोः कृता भवन्ति, न पाशुकस्य । अपिच सत्वकः परिधिः अनुच्छ्रयश्च, यूपधर्मैः परिधित्वात् हीयेत । 'यूपायाज्यमानाय' इति च शब्दः ऊह्येत, तत्रायं बाधितः स्यात् । तस्मात् परिधौ यूपधर्मा न स्युरिति ।

**आवेश्येरन् वाऽर्थवत्त्वात् संस्कारस्य तदर्थत्वात् । ४२ ॥**

**भाष्यम्—** आवेश्येरन् वा यूपधर्माः परिधौ । बन्धनोपकारसाधने हि विधीयन्ते । यश्च परार्थो बन्धनं नयति निष्पादयति, करोत्यसौ बन्धनोपकारम् । अयं च संस्कारो बन्धनं निष्पादयति, तदर्थोत्पत्तिं अतदर्थोत्पत्तिं वा नापेक्षते । तस्मात् परिधौ यूपधर्माः कर्तव्या इति । यदुक्तं अनुच्छ्रयश्च सत्वकश्च परिधिरिति, अत्रोच्यते । ये परिधित्वाविरोधिनो यूपधर्माः, ते करिष्यन्ते, न विरुद्धा इति ।

**आख्या चैवं तदावेशाद्विकृतौ स्यादपूर्वत्वात् । ४३ ॥**

**भाष्यम्**— अथ यदुक्तम् 'यूपायाज्यमानाय' इति शब्द ऊहितव्यः स्यादिति, अत्रोच्यते । नोहितव्यो भविष्यति । धर्मावेशात् आख्याऽपि 'यूपः' इति भविष्यति । धर्मनिबद्धा हि सा यथैव यूपे, तथा परिधावपि भवितुमर्हति । तस्मात् नोहिष्यते यूपशब्द इति ।

**सोम**— आक्षेपिकी संगतिः । सूत्रार्थस्तु— तदुत्पत्तेः परिधेः आहवनीयपरिधानार्थतया उत्पत्तेः यूपधर्मनिवृत्तिः स्यात्, यूपधर्माणां नियोजनाङ्गत्वकृतत्वात् ।

**वि**— 'न यूपधर्माः परिधौ सन्ति वा, ऽन्यार्थजत्वतः । ना,विरोधादञ्जनाद्याः स्युर्नियोजनसाधने ॥'

**भाट्ट**— परिधौ पुनराक्षिप्य समाधीयते । न परिधेर्यूपस्थानापन्नत्वम् 'परिधौ पशुं नियुञ्जीत' इत्यत्र परिधेर्नियोजनानुवादेन विधौ अतिप्रसङ्गापत्तेः, पशुनियोजनानुवादेन विधौ विशिष्टोद्देशापत्तेः, नियोजनान्तरस्यैवाप्राकृतस्य विधेयत्वात् । अस्तु वा स्थानापत्तिः तथापि न परिधौ यूपधर्माः, सत्यपि परिधेः पशुनियोजनं प्रति सप्तम्या अङ्गत्वे पुरोडाशकपालन्यायेन अग्निपरिधानप्रयुक्तस्यैव परिधेः पशुनियोजनशेषत्वेन तत्प्रयुक्तत्वाभावात्, धर्माणां चापूर्वीयपशुनियोजनप्रयुक्ताधिकरणार्थत्वेन तदप्रयुक्ताधिकरणे परिधौ असंभवात् । न च गौरवेण प्रयुक्तत्वस्य नोद्देश्यतावच्छेदककोटिप्रवेशः, शेषत्वसाधनत्वसंबन्धित्वापेक्षया प्रयुक्तत्वस्यापि तदघटितत्वेन लघुत्वात् । किञ्च अदृष्टघटिते यूपस्वरूपे वैयर्थ्याभावात् धर्माणां छेदनादीनां यूपोत्पत्त्यर्थत्वमेव न स्वपूर्वीयसाधनविशेषार्थत्वमाधानवत् । न च परिधौ यूपत्वमस्ति । तद्धि दृष्टादृष्टसंस्कारसमुदायो वा स्यात् तावत्संस्कारजन्यादृष्टान्तरं वा, तद्विशिष्टं काष्ठं वा, सर्वथा न परिधौ तत्संभवः । परिधानप्रयुक्तधर्माणामपि सत्वक्त्वादीनां तत्रावश्यकत्वस्य वक्ष्यमाणत्वेन जोषणादीनां यूपधर्माणां बाधावश्यम्भावेन तावत्संस्कारसमुदायासंभवात् । नहि यूपशब्दः प्रत्येकमेकैकसंस्कारवाची, अनेकशक्तिकल्पनापत्तेः, कतिपयसंस्कारयुक्ते यूपशब्दप्रयोगाभावाच्च । 'यूपं छिनत्ति' इत्यादेस्तत्तत्संस्कारेण यूपं संपादयेत् इत्यर्थाङ्गीकारेण समुदायादिवाचित्वेऽप्युपपत्तेः । अन्यथा एकैकसंस्कारस्यापि यूपत्वे तज्जनकच्छेदनादीनां विकल्पापत्तेः । अतो यूपत्वोत्पादकानां धर्माणामर्थलोपादेव परिधौ असंभवः । इति प्राप्ते, न तावत् स्थानापत्त्यसंभवः, सत्यपि नियोजनान्तरविधौ प्राकाशाध्वर्युदानवत् प्राकृतनियोजनकार्ये एव तद्विधानेन तदुपपत्तेः । वस्तुतस्तु, यावदतिदेशेन प्राप्यते तावत् पूर्वमेव परिधिविशिष्टप्राकृतनियोजनस्यैव परिधिप्राप्तिफलकतया पशूद्देशेन विधानोपपत्तेः स्थानापत्त्यविरोधः । न च धर्मासंभवः, उद्देश्यस्वरूपे आनर्थक्यप्रसक्तौ शास्त्रस्य महाविषयत्वसिद्ध्यर्थमपूर्वसंबन्धित्वस्यैव उद्देश्यताघटकत्वात् । संबन्धित्वं संबद्धाविति प्रतीतिसाक्षिकः सकलतत्तत्संबन्धत्वव्यापकः अखण्डोपाधिरूपो धर्मः, तेन तत्तत्संबन्धान्यतरत्वरूपतया संबन्धत्वस्य न गुरुभूतत्वाशङ्का । वक्ष्यते चैतत् 'अगन्म' इत्यादिमन्त्रस्यापूर्वार्थत्वसिद्ध्यर्थमुत्तराधिकरणे । यत्तु छेदनादीनां यूपत्वोत्पादकतया नायूपे परिधौ धर्मप्राप्तिरिति, तत्र **पार्थसारथिः** 'त्वदुक्तरीत्यैव यूपशब्दस्य दृष्टादृष्टसंस्कारसमुदाये शक्तिः । न तु तावत्संस्कारजन्यादृष्टान्तरे, प्रमाणाभावात् । तावत्संस्काराणामेव च नियोजनाङ्गत्वम् । अतश्च परिधित्वलेवाल्यादौ कतिपयधर्मबाधेऽपि धर्मान्तरकरणं नानुपपन्नम्' इति । **तन्न** । समुदायस्यातिरिक्तत्वे तस्यैव नियोजनाङ्गत्वापत्तेः, संस्काराणां समुदायोत्पादकत्वापत्तौ परिध्यादौ तदभावेन धर्मप्राप्त्यनापत्तेः । अनतिरिक्तत्वे शक्यताऽवच्छेदकभेदेन अनेकशक्तितादवस्थ्यात्, इतरथा लक्षणोच्छेदापत्तेः । अतो लाघवादाहवनीयादिपदवदेव अदृष्टान्तरे तद्विशिष्टकाष्ठे एव वा यूपपदस्य शक्तिः । तच्चादृष्टं नोच्छ्रयणाञ्जनादिसकलसंस्कारजन्यम्, अपितु यूपाहुत्याद्यङ्गकच्छेदनजोषणाष्टाश्रीकरणजन्यमेव । अत एव याज्ञिकानां दीक्षाकाले तावतामेवापकर्षः । युक्तं चैतत् । दीक्षासु 'यूपं छिनत्ति' इत्यत्र यूपोत्पत्त्यनुवादेनैव दीक्षाकालविधानात् । इतरथा यूपच्छेदनोद्देशेन तद्विधाने वाक्यभेदात् । उच्छ्रयणादीनां तु अग्निसंमार्गन्यायेनोत्पन्नयूपसंस्कारकत्वात् अपूर्वसाधनीभूतपशुनियोजनाधारत्व-

लक्षणावश्यम्भावेन अयूपे परिध्यादावपि प्राप्त्युपपत्तिः। उच्छ्रयणमात्रं परं अर्थलोपादिना निवर्तते। न चैवं 'यूपायाज्यमानाय' इति मन्त्रे ऊहापत्तिः, भवन्मतेऽपि समानत्वात्। 'परिधये अज्यमानाय' इत्याद्यूहस्येष्टापत्त्यैव सुपरिहरत्वाच्च। सूत्रस्योहपरत्वेनापि व्याख्यानसंभवात्। १२.

**मण्डन**—'परिधिर्यूपधर्मभाक्।' २०.

**शंकर**—'परिधौ यूपधर्माः स्युः।' २४.

* **परिधौ** यूपपरिध्युभयधर्माणामविरुद्धानां चातुर्मास्येषु पाशुकेषु अनुष्ठानम्। १२।२।१०. **मीको.** पृ. १६९२. 'चातुर्मास्येषु पाशुकेषु॰' इत्यत्र द्रष्टव्यम्। * परिधौ स्वधर्मविरोधे यूपधर्मा नानुष्ठेयाः पाशुकेषु चातुर्मास्येषु। १२।२।११।२७–२९. **मीको.** पृ. १६९२ 'चातुर्मास्येषु पाशुकेषु' इत्यत्र द्रष्टव्यम्।

* **परिध्यधिकरणम्**। चातुर्मास्यप्रघट्टके **मीको.** पृ. १६९२ इत्यत्र द्रष्टव्यम्।

* **परिधिधर्माः** इध्मसंनहनम्, संमार्जनम्, जुह्वा अञ्जनं 'वसुरसि' इत्येवमादिभिः (मन्त्रैः), अभ्याश्रावणम्, सत्वकत्वम्, उपशयत्वं च। **भा.** १२।२।१०।२६.

* **परिधिप्रहरणं** परिधीनां आहवनीयाग्नौ प्रक्षेपः। 'अनूच्यमाने शंयुवाके, आहवनीये परिधीन् प्रहरति।' **वि.** १०।७।१२.

* **परिधिमन्त्रगतच्छन्दसामेव** व्यतिक्रमो व्यूढे द्वादशाहे, न तु परिधीनां साक्षात् व्यतिक्रमः। **भा.** १०।५।२६।८८.

* **परिधिरूपगुणस्य** पशुनियोजने विधानं सौमिकेषु चातुर्मास्येषु। **भा.** १०।३।३।१८–२२.

* परिधीयते अग्निः तदायतनं वा यैः इति, परि समन्तात् धीयन्ते इति वा **परिधिशब्दो** यौगिको द्रव्यवाची। **बाल.** पृ. १६६.

* **परिधिसंमार्जने** मन्त्रः सकृत्पठनीयः अपूर्वप्रयुक्तत्वात्। न मन्त्रः परिधिप्रयुक्तः (९।१।५। ११–१९)। **के॰**

* **परिप्लुपात्रेण** सोमेन धिष्ण्यन्याघारणं ज्योतिष्टोमे। **संकर्ष.** ३।२।१९. **मीको.** पृ. १८३१ 'ज्योतिष्टोमे सोमेन॰' इत्यत्र द्रष्टव्यम्।

* **परिभाषाः** काश्चित् संगृह्यन्ते। व्याकरणे यथा साक्षात् महाभाष्ये एव भूयस्यः परिभाषा उक्ताः, न तथा मीमांसायां भाष्यादिषु प्राचीनेषु भाट्टदीपिकादिषु वाऽर्वाचीनेषु ग्रन्थेषु परिभाषा नाम का चिदप्युक्ता। न्यायास्तु नानाविधा उक्ताः। तथापि भाष्यादौ दृष्टानि कानि चिद्वाक्यानि परिभाषावत् ज्ञायमानानि उपलभ्य परिभाषात्वेन अस्माभिरेव प्रकल्प्य अत्र निवेश्यन्ते। न च भूयसाऽत्र परिभाषात्वं परीक्षितम्। संग्रहश्च वर्णक्रमेण।

* अकर्तव्यानामितिकर्तव्यतया नास्ति संबन्धः। **भा.** ९।१।१।१, * अङ्गाङ्गमपि 'तस्य' इति शक्यते वक्तुम्, यथा 'वाजपेयस्य यूपः' इति। ८।१।३।१०, * अङ्गगुणविरोधे प्रधानगुणो बलवान्। १२।२।९।२५, * अनुवादरूपत्वं सति संभवे न बाधितव्यम्। १२।४। ३।७, * अनुष्ठेया क्रिया प्रतीता सती कारकाणि प्रत्याययति। ३।४।४।१३ पृ. ९१३–१४, * अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीयः। १२।२।११।२७, * अन्यायश्चानेकार्थत्वम्। (एकस्य शब्दस्य अनेके अर्थाः इति न युक्तं इत्यर्थः)। १।३।९।३०. * अन्यायश्चानेकशब्दत्वम्। (एकस्यार्थस्य वाचका अनेके शब्दाः इति न युक्तमित्यर्थः)। **सूत्रं** १।३।८।२६. * अर्थद्रव्यविरोधे अर्थं प्रत्यादर्तव्यम्। (अर्थः प्रयोजनम्। द्रव्यं प्रयोजनसाधनम्। तयोर्विरोधे प्राप्ते अर्थः स्वीकार्यः। खदिरः पशुबन्धने असमर्थश्चेत् स न ग्राह्यः, तत्समर्थः कदरः प्रतिनिधिर्ग्राह्यः अर्थानुसारात् इति)। **भा.** ६।३। १९।३९. * असाधारणगुणवचने अधिष्ठानमन्तरेणैव गुणः संपादितो भवति। **टुप्.** १०।२।२९।६८. * आख्याते अनुयोगिवृत्तिसंख्यावचनमेव, न तु प्रतियोगिवृत्तिसंख्यावचनम्। **रहस्य.** पृ. ९५. * 'आश्रये प्रवर्तमाने तदाश्रितमपि प्रवर्तते।' यथा पटे आकृष्यमाणे तदाश्रितं चित्रमप्याकृष्यते। यथा च चमसः प्रवर्तते। यथा च 'खादिरं वीर्यकामाय यूपं कुर्यात्' इति। **भा.** ८।१।१४।२३. * कृदभिहितो भावो द्रव्यवद्

भवति। वा. ३।१।६।१२ पृ. ६७६, * 'गुणे स्वरूपतो धर्मः प्रधानद्वारतोऽपरः। यत्र स्यात् तत्र विज्ञेयं गुणधर्मस्य बाधनम् ॥' ३।३।२।९, * 'गुणवचनानां आश्रयतो लिङ्गवचनानि भवन्ति'। गुणवचनं इति न गुणाभिधानमात्रेणोच्यते। किं तर्हि? गुणमुक्त्वा यो द्रव्ये वर्तते। ३।१।६।१२ पृ. ६८२. * चोदनागतं लिङ्गं प्रापकम्, मन्त्रगतं प्राप्तस्य द्योतकम्। भा. ८।१।१६।३१. * 'तुल्यकार्यं तुल्यजातीयं तुल्यस्य बाधकं भवति'। तद्यदि राजसूयचोदनातो राजन्यत्वं प्राप्तं प्रकृतितश्चैकत्वम्, तत्र दशत्वं विधीयमानं सामान्यात् आतिदेशिकत्वाच्च एकत्वं बाधते, न जातिम्, भिन्नकार्यत्वात्। पूर्वपक्षे। वा. ३।५।२०।५२. * देवतासामान्यं देशसामान्यात् बलवत्, अन्तरङ्गत्वात्। तेन हविर्गणविशेषस्याग्नावैष्णवे प्राकृतिकाग्नीषोमीयविध्यन्त एव। भा. ८।३।१।२. * द्रव्यसंस्कारविरोधे द्रव्यम्। (अनयोर्विरोधे द्रव्यमादर्तव्यम्। खदिरः तक्षणादिसंस्कारासमर्थोऽपि पशुबन्धनसमर्थश्चेत् स एव ग्राह्यः, न संस्कारादिसमर्थोऽपि कदरः)। सूत्रं ६।३।१८।३८. * न अन्यस्योक्तोऽर्थः अन्यस्य भवति। नहि यद्देवदत्तस्य ग्रामाच्छादनादिकम्, तद्यज्ञदत्तस्य भवति। भा. ७।१।१।१, * न अविहितमङ्गं भवति। ३।४।४।१३ पृ. ९४१. * नासिद्धो दृष्टान्तो भवति। वा. ९।१।७।२३ पृ. १६६६. * 'नास्ति दृष्टेऽनुपपन्नं नाम'। दृष्टा बाला वृद्धेभ्यः (शब्दार्थम्) प्रतिपद्यमानाः। भा. १।१।५।५ पृ. ५८, * न आनुमानिकं प्रत्यक्षं बाधते। ७।४।२।१०. * न गुणः आकृष्यमाणो गुणिनमाकर्षति अतादर्थ्यात्। वा. ८।१।१३।२०, * 'न चोभयाश्रयं दोषमेकश्चोद्यो विचारयन्'। ३।४।४।१३ पृ. ९१८. * न द्वयोर्नाम्नोः संबन्धोऽस्ति। टुप्. ११।१।२।१०। क्रियागर्भत्वात् संबन्धानाम्। रत्न. * न द्वयोर्विधीयमानयोः परस्परसंबन्धो भवति। भा. ११।१।१।३. * न युगपत् श्रुतिलक्षणावृत्त्युपयोगित्वमवकल्पते। वा. ३।४।४।१२ पृ. ९०७. * न विध्यनुवादौ युगपत् संभवतः। भा. ११।१।२।९. * न शक्तयः पर्यनुयुज्यन्ते। वा.३।४।४।१३ पृ. ९१५. * न सामर्थ्यमात्रेण वाक्यादृते (वचनादृते) विनियोगा भवन्ति। भा. ९।१।१४। ४०. * न सामवायिकत्वे (संनिपत्योपकारकत्वे) संभवति आरादुपकारकल्पना युक्ता। वा.३।४।४।१२ पृ. ९०२, * नहि अङ्गधर्माः प्रधानानि संक्रामन्ति। ३।३।२।९ पृ. ८११. * नहि एकस्य शब्दस्यानेकार्थता सत्यां गतौ न्याय्या। (अन्याय्यं चानेकार्थत्वम्)। भा. ८।३।६।२२. * नहि कर्मणि उपक्रान्ते तदसमाप्य कर्मान्तरमारब्धुं युक्तम्। संकर्ष. ३।१।७. * नहि द्वयोर्विधीयमानयोः संबन्धोऽस्ति। भा. ११।१।१।३। अयुक्तमिदं दूषणम्। अरुणादीनामप्ययं दूषणप्रकारः स्यात्। बलीयांश्चायमेव न्यायः यत् भावनया सर्वेषां संबन्ध इति, इतरेतरसंबन्धस्तु आर्थः। टुप्. * नहि यत्सिद्ध्यर्थे यत् कल्प्यते तेनैव तद्बाधा उचिता, कल्पकाभावेन आत्मोपमर्दकत्वप्रसङ्गात्। (उपजीव्यविरोधस्य अयुक्तत्वम्, संनिपातपरिभाषा च एतादृशी एव)। सु. पृ. ३१. * नहि विधीयमानस्य विशेषणं भवति। यत् कारणं विशेषणमपि अविधीयमानं न भवति। न च द्वयोर्विधीयमानयोः परस्परसंबन्धो भवति। भा. ११।१।१।३, * नहि सविशेषणानां वृत्तिर्भवति, न खल्वपि वृत्तस्य विशेषणं प्रयुज्यते। १०।४।१५।३१, * नैमित्तिकी चिकीर्षा नित्यां चिकीर्षां बाधते। १२।२।१३।३३, * 'पक्षान्तरैरपि परिहारा भवन्ति'। अन्यथा कृत्वा दोष उक्तः, अन्यथा परिहारः। दार्शपौर्णमासिको यावज्जीवकालः इतिकृत्वा दोष उक्तः, नैमित्तिक इति परिहारः। पक्षान्तरैरपि परिहारा भवन्ति। १२।२।६।२०, * 'पूर्वावसायिनश्च बलीयांसो जघन्यावसायिभ्यः'। तस्मात् प्रकृतिः पूर्वं प्रयुज्यते (इदं पूर्वपक्षे)। १२।२।१३।३३. * प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येन। सु. पृ. १३७१. * प्रधानसंनिधौ गुणः शिष्यमाणः प्रतिप्रधानमुपदिष्टो भवति। वा.३।८।४।१२. * भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते। भा. ९।१।४।९. * यच्च विधीयते तस्य स्तुतिः, यस्य स्तुतिर्न तस्य विधानम्। विधिनैव स्तुत्यपेक्षायाः कृतत्वात्। वा. ३।४।११।३० पृ. ९६४. * 'यत्प्रसक्त्या यो विचारः तत्समाप्तौ

स एव बुद्धिस्थो भवति ' इति बुद्धिस्थचमसाधिकरण-प्रसङ्गेन चतुर्धाकरणाधिकरणस्य संगतिः। सु. पृ. १०७२. * ' यस्य यो धर्मः प्रायेण दृष्टः, स तस्यादृश्यमानोऽपि अनुमीयते '। यथा यः परार्थान् प्रायेण करोति, अन्यस्मिन्नपि परार्थकरणे स एव संभाव्यते। भा. ८।४।५।१८, * लिङ्गे अविधित्सितेऽपि लिङ्गविशेषनिर्देशोऽनुवादभूतो भवत्येव। यथा शुक्लः पुमान्, शुक्ला स्त्री, शुक्लं नपुंसकम्। शुक्ल एकः, शुक्लौ द्वौ, शुक्ला बहव इति। शुक्लां शाटीमानय इति। यद्यपि शाट्याद्यानयनं न विधीयते शुक्लमात्रसंबन्धमात्रविधित्सा भवति। न तत्र लिङ्गेन विशेषणं क्रियते। तथाप्यनुवादभूतस्त्रीलिङ्गनिर्देशो भवत्येव शुक्लामानयेति। ९।१।९।३३. * ' विप्रतिपत्तौ हविषा नियम्येत '। हविर्देवतयोर्विप्रतिपत्तौ हविषा विध्यन्तो नियम्येत। सूत्रं ८।१।१७। ३२. * विशेष्यं बुद्धौ संनिहितं भवति, न विशेषणम्। तत् विशेष्यं विशेष्य निवर्तते। ' राजपुरुषः पूज्यः ' इत्युक्ते पुरुषः पूज्यो गम्यते न राजा। एवम् 'ऐन्द्रं पयः' इत्युक्ते हविर्बुद्धौ संनिधीयते न देवता। भा. ८।१।१७। ३४, * शब्दार्थाधिगमे अभियुक्तोपदेशः प्रमाणम्। ८।२।५।२४, * शब्दलक्षणे कर्मणि यथाशब्दार्थं प्रवृत्तिः। ११।१।४।२६, * श्रुत्यर्थे संभवति न वाक्यार्थो ग्राह्यः, श्रुत्यर्थस्य मुख्यत्वात्। ११।१।१।३, * संयोगिनोरन्यतरो दृश्यमानः इतरमदृश्यमानमपि अनुमानात् बुद्धौ संनिधापयति। यथा अग्निहोत्रं इत्यभिधानं कौण्डपायिनामयने श्रूयमाणं नैयमिकाग्निहोत्रधर्मान् बुद्धौ संनिधापयति। ८।१।२।२, * ' सकृत् क्रियया कृतः शब्दार्थः ' इति न स्यादभ्यासः अग्निचयने सर्वौषधावघातस्य। ११।१।६।२८. * सामान्यशास्त्राणि विशेषविधिविषयं परिहृत्य प्रवर्तन्ते। वा. ३।२।८।२१ पृ. ७७४. * हविर्गुणसामान्यात् हविःसामान्यं बलवत्। शतकृष्णले हविर्गतं वैशद्यं चरुशब्दश्च बलवान्, गुणभूतमाज्यं दुर्बलम्। भा. ८।१।१८।३९.

* परिभोजनीयं नाम बर्हिः। ततः पवित्रे विधृती च कर्तव्ये, न तु वेदिस्तरणार्थात् बर्हिषः। दर्शपूर्णमासयोः। भा. ३।८।१७।३३. * परिभोजनीयाः शास्त्रीयलवनादिसंस्काररहिताः ( यागे उपयोज्यमानाः ) दर्भाः। ( तादृशदर्भाणां मुष्टिरपि ' परिभोजनीया ' इत्युच्यते )। दर्शपूर्णमासयोः पवित्रं परिभोजनीयदर्भैः संपादनीयम्। वि. ३।८।१८.

* ' **परिमाणमपि त्वार्थमविस्मरणसिद्धये। स्वयमालोच्यते प्राज्ञैः स्मार्तैः सह तदिष्यते॥** ' न केन चित् प्रमाणेन पदार्थेयत्ता परिच्छिद्यते। तत्र यदि तेन विना अन्ये समस्तपदार्थस्मृतिहेतवो न स्युः, तत एतदप्येकं कारणमिति परिमाणमपि स्थाप्येत। तस्यामपि तु अवस्थायां यथा श्रौतमात्रपरिमाणमसमाप्य समाख्यापर्यन्तप्रापितपदार्थगतपरिमाणावधारणं आश्रीयते, तथा स्मृत्याचारपर्यन्तावगतपरिमाणमाश्रयिष्यते इति निर्दोषम्। वा. १।३।३।७ पृ. २००. * परिमाणं नाम प्रयोज्यपदार्थेयत्तारूपं तत्पदार्थविधिसंघातावगतम्। तच्च किं कश्चित् पदार्थो विस्मृतः किं वा सर्वमनुष्ठितमिति संशयनिराकरणाय प्रयोगविधिरपेक्षमाणः स्वीकरोति, अतस्तदपि प्रयोगविधिगम्यम्। कु. १।३।४।५. * परिमाणं यूपस्य पञ्चारत्नित्वादि उपरं वर्जयित्वा ज्ञेयम्। संकर्ष. १।४।८. ' यूपादौ पञ्चारत्नित्वादि ' इत्यत्र द्रष्टव्यम्। * ' शास्त्रेण हि पदार्थानां **परिमाणं** त्रिधा गतम्। क्रमेयत्ताऽऽशुनिर्माणरूपं ...... ॥ ' वा. १।३।३।६ पृ. १९७, * क्रमकालपरिमाणानि समस्तपदार्थधर्मत्वेन निश्चितानि। १।३।३।५. * **परिमाणस्य** द्वावन्तौ पारिमाण्डल्यं परममहत्त्वं च। तत्र अत्यन्ताल्पत्वे वर्तमानः परमाणुः अत्यन्तमहत्त्वे च वर्तमानं व्योमादिकं अन्त्यं इत्युच्यते। **रत्नाकरः**, अनुमानपरिच्छेदः श्लो. १७७.

* **परिलेखः** वेदेः दर्शपूर्णमासयोः। ' स्फ्येन वेदिं परिलिखन् परिगृह्णाति '। अयं परिलेखः राजसूये मैत्राबार्हस्पत्ये नास्ति। तत्र हि ' स्वयंकृता वेदिर्भवति '। वि. १०।१।१.

**परिवप्यहोमयोः ' अभितः पुरोडाशौ ' इति पूर्वोत्तरकालवादः॥**

' स्वाहा देवेभ्यो देवेभ्यः स्वाहेत्यभितो वपां जुहोति ', ' पुनरूर्जा सहरय्येत्यभितः पुरोडाशमाहुती

जुहोति ' इत्यादौ अभितो वृक्षं निषेहीत्यादाविव देशवादः, अभित इत्यस्य प्रतिसंबन्धिनि पदे द्वितीया-विधानात् यथा वपा पुरोडाशश्च मध्यतो भवति तथा जुहुयादित्यर्थः । इति प्राप्ते, कर्मण एव पूर्वं प्रक्रान्ततया वपापदस्य तद्द्रव्यकयागपरत्वात् तत्पूर्वापरकालवादोऽयम् । न च लक्षणा दोषः, ' अभिरभागे ' इति स्मृत्यैव तदनुमतेः । किञ्च अभितःपदस्य उभयतः इत्यर्थकस्य देशवादे कतरयोर्दिशोर्ग्रहणम् ? अनियमे विकल्पापत्तिः । कालवादे तु पूर्वापरयोर्द्वयोरेवोपस्थितेर्न क्षतिः । अत एव ' देवेभ्यः स्वाहेत्युपरिष्टात् ' इति श्रुत्यन्तरे व्यक्तः कालवादः । संकर्ष. १।१।१०.

* **परिवर्तिनी** नाम त्रिवृत्स्तोमस्य विष्टुतिः । सा च एवं आम्नायते । ' तिसृभ्यो हिंकरोति स पराचीभिः, तिसृभ्यो हिंकरोति स पराचीभिः, तिसृभ्यो हिंकरोति स पराचीभिः, परिवर्तिनी त्रिवृतो विष्टुतिः ' इति । पराचीभिः अनुक्रमेण आम्नाताभिः । तिसृभ्य इति तृतीयार्थे पञ्चमी । हिंकरोति गायति । वि. १।४।३.

* **परिवासनं** शाखायाः अग्रार्थमेव, न मूलार्थं दर्शपूर्णमासयोः । परिवासनं छेदनम् । के. ( भा. ४।२।३।८–९ ) । * **परिवासनस्य** ( शाखायाः ) वत्सापाकरणादि प्रयोजकम्, न कपालोपधानं दर्शपूर्णमासयोः । के. ( भा. ४।२।३।८–९ ).

* **परिवीय** वेष्टयित्वा । व्येञ् संवरणे भ्वादिः । के.

* ' **परिवीरसि** ' इति यूपपरिव्याणकरणमन्त्रं होता पठेत्, कौण्डपायिनामयनेऽग्नीषोमीये पशौ । के. ( वि. ३।८।११ ).

* **परिव्याणमग्निष्ठे** द्वाभ्यां द्वाभ्यामेव रशनाभ्यां क्रमेण । संकर्ष. १।४।१३. मीको. पृ. ७८ ' अग्निष्ठे द्वाभ्यां द्वाभ्याम् ' इत्यत्र द्रष्टव्यम् । * परिव्याणं ' आश्विनं ग्रहं गृहीत्वा० ' इत्यादिवाक्ये पुनः श्रुतं यूपसंस्कारार्थम्, न पशुसंस्कारार्थम् । के. (भाट्ट. ४।४।९) । * परिव्याणं द्वितीयम् ' त्रिवृता यूपं परिवीय ' इति सवनीये पशौ विदधाति । बाल. पृ. ६४. * परिव्याणं यूपस्य रशनया वेष्टनम् । के. * परिव्याणं रशनाद्वयेन युगपत् यूपैकादशिन्यामपि । संकर्ष. १।४।१४. ' यूपैकादशिन्यामपि रशनाद्वयेन ' इत्यत्र द्रष्टव्यम् ।

* **परिव्याणान्ते** अञ्जनादि परिव्याणान्तं काण्डम्, यूपस्य घृतेनाञ्जनं समुच्छ्रयणं अवटसमूहनं मूलपरिदृंहणं रशनापरिव्याणं इति । तावानेकः पदार्थः, तेन अनुसमयः यूपैकादशिनीपक्षे । वि. ५।२।५.

* **परिव्याणकरणक्रियमाणानुवादिनोः** ' परिवीरसि ' ' युवा सुवासाः ' इति मन्त्रयोः क्रमात् अग्नीषोमीयपरिव्याणाङ्गत्वे प्राप्ते लिङ्गात् सवनीयार्थद्वितीयपरिव्याणाङ्गत्वमपि । लिङ्गं क्रमात् बलवत् । वा. ३।३।७।१४ पृ. ८३७.

* **परिव्याणकरणक्रियमाणानुवादिपरिवीरसि-**परिवीतपदव्यतिरिक्तपदानाम् 'युवा सुवासाः० आगात् स उ श्रेयान् ॥ ' इत्येवमादीनां लिङ्गविनियुक्त(परिवीरसि)-परिवीतपदैकवाक्यत्वात् सवनीयपरिव्याणे विनियोगः । वाक्यं क्रमात् बलीयः । वा. ३।३।७।१४ पृ. ८३७.

**परिव्याणन्यायः** । इतरमन्यस्तेषां इति न्यायः । कुण्डपायिनामयने होत्रा अध्वर्युकर्म परिवीरसीति मन्त्रः पठनीयः ॥

**विप्रतिषेधे करणः समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् । ३।८।१०।२१ ॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । तस्य यूपस्य परिव्याणे मन्त्रौ एकः अध्वर्योः ' परिवीरसि ' इति करणः, अपरो होतुः ' युवा सुवासाः ' इति क्रियमाणानुवादी । तयोश्चोदकपरंपरया कुण्डपायिनामयनं प्राप्तयोः भवति संदेहः । कः पुनरसौ ? तत्र ऋत्विक्समास आम्नातः ' यो होता सोऽध्वर्युः ' इति । किं करणं आध्वर्यवं होता कुर्यात्, किं हौत्रं क्रियमाणानुवादिनं इति । किं प्राप्तम् ? अनियम इति । इति प्राप्ते, उच्यते । विप्रतिषेधे करणः स्यात् आध्वर्यवः ' परिवीरसि ' इति । न क्रियमाणानुवादी होतुः ' युवा सुवासाः ' इति । कुतः ? समवायविशेषात् द्वौ तत्र समवायौ, होतुश्चोदकेन हौत्रेषु, प्रत्यक्षश्रवणेन आध्वर्यवेषु ' यो होता सोऽध्वर्युः ' इति । एवं प्रत्यक्षमध्वर्योः कार्ये चोद्यते । प्रत्यक्षं चानुमानात् बलीयः । तस्मा-

दाध्वर्यवं करणं परिवीरसि इति होता कुर्यात्, अथ हौत्रं विरुद्धं कः कुर्यात्? 'इतरमन्यस्तेषां यतो विशेषः स्यात्' अन्यो होतृपुरुष एव स्यात्, यस्याव्यापृतता, प्राधान्यविशेषो वा।

**वा**—'परिवीरसि' 'युवा सुवासाः' इत्येतयोः करणक्रियमाणानुवादिनोः अध्वर्युणा होत्रा च युगपत् प्रकृतौ प्रयुक्तयोः कुण्डपायिनामयने हौत्राध्वर्यवयोः एककर्तृकत्वादशक्तेः अवश्यावहेये अन्यतरस्मिन्, कतरः प्रतिगृह्यतां इति संदेहः। तत्रानियमः प्राप्नोति। यद्वा होतुः सिद्धस्वरूपस्य आध्वर्यवविधानात् अजहत्स्वधर्मतया हौत्रः एव युक्तः (मन्त्रः)। **इति प्राप्ते, अभिधीयते**। एतस्मिन् विप्रतिषेधे करणः प्रयोक्तव्यः। कुतः? समवायविशेषात्। **केचिदाहुः** प्रधानप्रत्यासत्तिः समवायविशेष इति। बहिरङ्गो हि आरादुपकारकरूपत्वात् क्रियमाणानुवादी, करणस्तु अन्तरङ्ग इति। **तदकारणम्**। यदि हि प्रधानद्वारेण अङ्गेषु कर्ता अवतरेत्, ततः संनिकर्षविप्रकर्षौ उपयुज्येयाताम्। स तु समाख्यया चोदकेन च प्रधानेषु अङ्गेषु च अविशेषेण लक्ष्यते। न च कश्चित् अङ्गगुणविरोधन्यायः, उभयोरङ्गत्वाविशेषात्। न च संनिपातित्वेन क्रियाऽन्तरगतमारादुपकारित्वं दुर्बलीक्रियते। न चायमतीव आरादुपकारकः। क्रियमाणपरिव्याणस्मृत्यविच्छेदेन दृष्टसंस्कारजननात्। तस्मात् आनुमानिकात् हौत्रसंबन्धात् प्रत्यक्षत्वेनैव आध्वर्यवस्य समवायस्य विशेषो भवति। कथम्? एषा ह्यत्र वचनव्यक्तिः, यदुत होत्रादयः श्रुतिवृत्ताः अध्वर्य्वादिशब्दलक्षितेषु कर्मसु विधीयन्ते। तत्र हौत्रसंबन्धो होतुरानुमानिकः आध्वर्यवसंबन्धस्तु प्रत्यक्षः। यत्तु अजहत्स्वधर्म एव होता आध्वर्यवेण संबध्यते इति, संबध्येत यदि तत्प्रयोगमात्रकृतमेव अस्य होतृत्वं भवेत्, यदि वा हौत्रं प्रति अध्वर्युर्विधीयेत, होतारं वोद्दिश्य अध्वर्युकर्मविधिर्भवेत्, न तु तत् सर्वमस्ति। होता तावत् योग्यतामात्रेणावधारितः सत्यपि च कर्मनिमित्तत्वे अन्यानि सहस्राणि तदुपलक्षणं करिष्यन्ति। न च हौत्रं प्रति अध्वर्युविधिरिह, होत्रध्वर्युशब्दयोः अत्यन्तविभिन्नपुरुषवचनयोः मुख्यसामानाधिकरण्याभावात् अन्यतरस्य अवश्यकल्पनीये लक्षणावृत्तत्वे विरोधनिमित्तत्वाल्लक्षणाकल्पनायाः प्रथमोच्चारिते होतृशब्दे किञ्चिदपि कल्पनाबीजं न पश्यामः। तेन 'मुख्यं वा पूर्वचोदनात्' इति तं स्वार्थवृत्तमेव गृहीत्वा अध्वर्युशब्दः कर्मलक्षणार्थः अध्यवसीयते। तत्रापि तदुद्दिश्य होता विधीयते। तद्धि क्रत्वर्थत्वेन प्रयोजनवत्, न तथा कर्ता। प्रधानं च एवंजातीयकेषु उद्दिश्यते। ततश्च गुणभूतो होता उपादीयमानः, यः प्रधानाविरोधी धर्मः, तन्मात्रयुक्त एव संबध्यते। यदि तु होतुः आध्वर्यवं विधीयेत, ततस्तस्य कर्माविरुद्धं तत् प्रवर्तते, इति न किञ्चिदपि हौत्रं हापयेत्। अप्राकृतकर्तृसंस्कारत्वप्रसङ्गाच्च आध्वर्यवस्य, नैवं संबन्धः, इति पक्षान्तरमवलम्बितम्। तस्मादाध्वर्यवसंबन्ध एव प्रत्यक्षः प्रधानं च इति सिद्धम्।

**अत्र चोदयन्ति**। नैवात्र अन्यतरस्यापि मन्त्रस्य होतृसंबन्धो बाधितव्यः। कुतः? '**एककालप्रयोगे हि विरोधो मन्त्रयोर्भवेत्। करणः प्राक् क्रियातस्तु, परतश्चेतरः स्थितः॥**' करणस्य हि 'मन्त्रान्तेन कर्मादिसंनिपातः' (१२।३।१०।२०) इत्यनेन न्यायेन प्राक् परिव्याणात् प्रयोगः। क्रियमाणानुवादिनस्तु तस्मिन् क्रियमाणे। तेन द्वावपि प्रयोक्तुं समर्थो होतेति। **नैतदस्ति**। क्रियमाणता नाम संकल्पादेः कारकप्रचलनात् प्रभृति आ समाप्तेः। अतश्च पूर्वपदार्थसमाप्त्यैव पर्युपस्थापितं चेत् परिव्याणं वर्तते, स एव दीर्घः समस्तः क्रियमाणानुवादिनः कालः। एवमपि करणस्य तादृशादेव प्राक् प्रयोगात् अविरोधः इति यद्युच्येत, तन्न। न हि 'परिवीरसि' इत्ययम्, संकल्पं रशनाऽऽदानं संनिहितं वा यूपं अवयवक्रियामात्रप्रवृत्तं वा परिव्याणं शक्नोति प्रकाशयितुम्। तस्मात् प्रधानक्रियाऽऽरम्भे एव यूपसमीपस्थेन प्रयोक्तव्यः। ननु एवमपि दीर्घकाले कर्मणि एकदेशे करणं एकदेशे च क्रियमाणानुवादिनं प्रयुञ्जानो न विरोत्स्यते। कथं न विरुध्यते। यदा 'यूपाय परिवीयमाणायानुब्रूहि' इत्यनेन पाठक्रमात् करणः, प्रैषसामर्थ्याच्च इतरो युगपदेव प्राप्यते, न च क्रियैकदेशे क्रियमाणानुवादिनः प्रयोगः इत्यस्ति प्रमाणम्। स हि रशनाऽऽदानानन्तरं प्रयुक्तेन प्रैषेण प्रयोजितः दीर्घत्वात् आ परि-

व्याणसमाप्तेः कालमवरुणद्धि । तदन्तराले च आध्वर्यवः आपन्नो न कथं चित् अविरोधेनावतिष्ठते । ननु च युगपत्कालता बाध्यतां एककर्तृत्वं वा, इति वरं पदार्थप्राप्तेर्जघन्यत्वात् काल एव बाधितुम्, नान्तरङ्गः कर्तृसंबन्ध इति। **भवेदेतदेवम्**, यदि प्राकृतकालं बाधमानौ मन्त्रौ स्वकार्यान्न प्रच्यवेयाताम् । तयोस्तु य एव कालान्तरे प्रयुक्तः स एव स्वसामर्थ्यप्रतिपाद्यात् अर्थात् प्रच्यवते । सोऽयं लिङ्गविरोध आपद्यते । ननु च 'यो होता सोऽध्वर्युः' इत्यनया श्रुत्या लिङ्गं बाध्येत । बाध्येत यदि श्रुतिः स्यात् । वाक्यं त्विदं तदपि लक्षणया । न हि अत्र कस्य चिच्छब्दस्य श्रवणादिदं गम्यते हौत्राध्वर्यवे समानकर्तृके इति । किं तर्हि ? होत्रध्वर्युशब्दसामानाधिकरण्यात् । सर्वत्र चैष संबन्धो वाक्यलक्षण इत्युक्तम् ( ३।१।६ ) । तत्रापि च अध्वर्युशब्दस्य कर्मलक्षणार्थत्वात् विप्रकृष्टता । ननु लिङ्गमप्येतत् चोदकापेक्षित्वात् विप्रकृष्टतरं भवेत् । वाक्यं हि अर्थविप्रकर्षात् लिङ्गेन बाध्येत । स चेह विपरीतोऽर्थविप्रकर्षः । न हि चोदकेन अप्राप्तयोर्मन्त्रयोः एककालप्रयोज्यत्वं गम्यते । तस्मादेककर्तृत्वमेव बलीयः इति । **उच्यते** । सत्यमिह चोदकाङ्गीकरणम्, तत्तु मन्त्रस्वरूपे, न लिङ्गे । द्वयोरपि च तदविशिष्टम् । प्राप्ते तु मन्त्रद्वये, लिङ्गं औपदेशिकेनाविशिष्टम् । **स्यादेतदेवं** यदि चोदकः प्रापयेत् । स तु प्रत्यक्षवाक्यशिष्टसमानकर्तृत्वविरोधिमन्त्रद्वयं प्रापयितुमेव न शक्ष्यति । यद्यपि हि वाक्यं लिङ्गस्य नेष्टे, चोदकस्य तु स्वरूपप्रापणे पश्चात् भाविनमपि विरोधमालोच्य शक्तं निरोधं कर्तुम् । ततः छिन्नमूलत्वात् लिङ्गस्य दुर्बलता इति । **उच्यते** । सर्वं हि विरोधवेलायां बाध्यते । न च अनवगतो विरोधो बाधकारणं भवितुमर्हति । तदिह चोदकप्राप्तिवेलायां न कश्चिदपि विरोधो लक्ष्यते । यस्तु प्राप्ते विरोधः, तत्र लिङ्गं बलवत्तरं इत्युक्तमेव । यदि चात्र द्वयोरपि समानकर्तृत्वं वाक्येन विधीयेत, ततोऽपि एतस्य बलीयस्त्वमुद्भाव्येत । इह तु आध्वर्यवस्य होत्रा सह संबन्धो विधीयते, न हौत्रस्यापि । स हि चोदकेन प्राप्नोति । तेन यदि प्रत्यक्षत्वादेतस्य बाधकत्वम्, ततः समाख्याकृतमेव क्रियमाणानुवादिनो होतृसंबन्धबाधनम् । एवं च सति लिङ्गवाक्ययोरविरोधात् न किञ्चिदपि बाधिष्यते, आध्वर्यवप्रयोगश्च सेत्स्यति । यथा तु लिङ्गबलीयस्त्वमाश्रितमासीत्, तथा अन्यदेव अनिष्टमापद्येत । यो हि अस्य वाक्यस्य विषयः स बाध्येत । न चास्य होतृहौत्रसंबन्धो विषयः । कस्तर्हि ? होत्राऽऽध्वर्यवसंबन्धः । ततश्च यथाप्रकृत्येव प्रयोगः स्यात् । तस्मात् समाख्याक्लृप्तमेव आतिदेशिकं संबन्धं बाधित्वा समवायविशेषात् करणः प्रयोक्तव्य इति सिद्धम् ।

**शा**— एवं प्राप्ते, ब्रूमः— '**प्रत्यक्षवचनात् प्राप्तिर्होतुराध्वर्यवेषु हि । हौत्रेषु चोदकाद्, वाक्यं चोदकाद्बलवत्तरम् ॥**' ( प्राभाकरमतमनूद्य निराचष्टे ) यस्तु 'सत्रेषु होत्रादयो न सन्ति, तदभावान्न हौत्रादिषु चोदकतः प्राप्तिः' इत्याह, तस्य 'हौत्रेण होतुश्चोदकात् समवायः' [ 'द्वौ तत्र समवायौ, होतुश्चोदकेन हौत्रेषु' इति तु भाष्यपङ्क्तिः ] इति भाष्यविरोधः । सत्रं हि कुण्डपायिनामयनम् । वक्ष्यति हि ( सूत्रकारः ) 'सत्रे वोपायिचोदनात्' इति । किञ्चैवम् 'यो होता सोऽध्वर्युः' इति वचनेन किं विधीयते ? नहि होताऽस्ति, योऽध्वर्युकार्ये विधीयेत । अथ हौत्रमाध्वर्यवं च एकः कर्ता कुर्यात् इत्येतावत् विधीयते, तदा उभयोरपि प्रत्यक्षवचनादिष्टत्वेन तुल्यत्वात् आध्वर्यवस्य बलीयस्त्वं न स्यात्, इत्यधिकरणविरोधः । 'प्रत्यक्षविधानादिष्टम्' इति च निबन्धनग्रन्थतो विरुध्यते । इत्यास्तां तावत् ।

**सोम— सूत्रार्थस्तु**— विरोधे होता करणमन्त्रं ब्रूयात् प्रत्यक्षवचनकृततत्समवाये आनुमानिकापेक्षया विशेषसद्भावात् । न चैतावता क्रियमाणानुवादिनः परित्यागः, किन्तु तमन्यो ब्रूयात् सोऽपि न सर्वः, किन्तु तेषामृत्विजां मध्ये यस्य मैत्रावरुणादेः प्राधान्यविशेषो होतृप्रत्यासत्तिलक्षणोऽस्ति स ब्रूयात् इति ।

**वि**— 'यो होताऽध्वर्युरेष स्यादित्याध्वर्यवमाचरन् । हौत्रं कुर्यान्न वा, त्यागहेत्वभावात् करोति तत् ॥, होतैको युगपत् कर्मद्वयं कर्तुं नहि प्रभुः । त्यजेच्चोदकतः प्राप्तं हौत्रं वाचनिकार्थकृत् ॥'

**भाट्ट**— दैक्षे पशौ यूपपरिव्याणे आध्वर्यवः करणमन्त्रः 'परिवीरसि' इत्ययं श्रुतः । तथा 'युवा

सुवासाः ' इत्ययं क्रियमाणानुवादी हौत्रोऽपि । तौ च द्वावपि ' यूपाय परिवीयमाणायानुब्रूहि ' इति प्रैषवशात् एतदुत्तरपाठाच्च प्रैषाव्यवहितोत्तरक्षणे एककालीनौ । साङ्गपरिव्याणभावनाकरणसमानकालीनत्वाच्च क्रियमाणानुवादित्वाविरोधः । सोमविकृतौ च कुण्डपायिनामयने तथैव प्राप्तौ । तत्र च ' यो होता सोऽध्वर्युः ' इति श्रुतम् । तस्य च सत्रत्वात् सत्रे च आनतिप्रयुक्तवरणजन्यहोतृत्वाध्वर्युत्वादेरानत्यभावेन अभावात् ' यो होता ' इत्यत्र होत्रध्वर्युपदाभ्यां तत्कार्यलक्षणया कार्यद्वयेऽपि एककर्तृकत्वं विधीयते । अतश्च औपदेशिकैककर्तृकत्वबलेन प्राकृतैककालकत्वबाधात् प्रथमतः करणमन्त्रः पश्चादपरः इत्याद्यः पक्षः । होतृत्वादेः अध्यवसायमात्रनिमित्तकत्वस्य स्थापितत्वात् सत्रेऽपि तत्संभवेन पदद्वये कर्मलक्षणायां प्रमाणाभावात् जघन्ये एवाध्वर्युपदे तल्लक्षणामङ्गीकृत्य आध्वर्यवपदार्थानां होतृसंस्कारकत्वेन विधानम् । अप्राकृतकार्यकारित्वापत्तेः होतृपदे कर्मत्वलक्षणापत्तेश्च होतैव वा तत्कर्तृत्वेन विधीयते । तथापि तु ' परिधौ पशुं नियुञ्जीत ' इत्यत्र परिधित्वाविरोधेनेव होतृत्वाविरोधेनैव कर्तृत्वविधानात् हौत्रः क्रियमाणानुवाद्येव तेन प्रयोक्तव्यः, अपरस्तु तेन कालान्तरे अन्येन वा तत्पुरुषेण तस्मिन्नेव काले प्रयोक्तव्यः । इति प्राप्ते, पुरोडाशकपालवत् अग्निपरिधानार्थस्यैव परिधेः पशुनियोजने विनियोगात् युक्तं परिधिधर्माणां सत्वक्त्वादीनां प्राबल्यम् । प्रकृते तु अध्यवसायनिमित्तहोतृत्वेनैव आध्वर्यवे विनियोगात् होतृकार्यस्य प्रयोजकत्वकल्पने प्रमाणाभावात् आध्वर्यवस्य करणस्यैव प्रत्यक्षवाक्यावगतशेषित्वेन प्राबल्यात् नातिदेशिकसमाख्याप्रमाणकक्रियमाणानुवादिनः प्राथम्यम् । न वा कालान्तरे तस्य होत्रा पाठः, ' स उ श्रेयान् भवति ' इति लिङ्गावगतक्रियमाणानुवादित्वबाधापत्तेः । नापि करणमन्त्राव्यवहितोत्तरक्षणे होत्रा तस्य पाठः, ' यूपाय ' इत्यादिप्रैषे होतुः कर्तृत्वेन प्रैषार्थे तदसंभवात् । अतः तस्मिन् तत्काले एव होतृपुरुषोऽन्यः कश्चित् अन्तरङ्गः अर्ध्यादिः कर्ता । तस्य कार्यान्तरव्यापृतौ तु बहिरङ्गोऽपि ।

सु— क्रियमाणानुवादिनं कः कुर्यात् इत्याशङ्कोत्तरत्वेन ऋत्विजां मध्ये यस्य मुख्यप्रत्यासत्त्याख्यः, प्रत्यासन्नस्य स्वकर्मणि व्यापृतत्वे यस्य अव्यापृतत्वाख्यो वा विशेषः स प्रयुञ्जीयात् इत्येवम् ' इतरमन्यः ' इति सूत्रोत्तरार्धव्याख्यार्थं अथेत्यादि भाष्यम्, कुण्डपायिनामयने अच्छावाकीयाख्याया होत्रायाः उद्गातृकार्यत्वात् ग्रावस्तोत्रीयायाश्च प्रस्तोतृकार्यत्वात् अच्छावाकग्रावस्तुदभावेन मैत्रावरुणव्यतिरिक्तहोतृपुरुषाभावात् प्रकृतोपयोगानुपपत्तेः इत्याशयप्रदर्शनमात्रार्थत्वात् उपेक्षितम् ।

**मण्डन**— ' अध्वर्युमन्त्रः करणो विरोधे । '

**शंकर**— ' विरोधे करणं होता । '

* **परिव्राट्** ब्राह्मणः वानप्रस्थः इति धर्मभेदात् संज्ञाव्यवस्था । **भा.** ८।२।५।२५.

**परिशेषन्यायः** । उक्तादन्यः परिशेषः, तस्य न्यायः रीतिः । **संग्रहः** .

* **परिषद्** । यज्ञे दक्षिणायाः यस्य यावान् भागः आभजति, स्वयमेव यजमानेन विभज्य तस्य तावान् कल्पयितव्यः ( भागः ) उत परिषदैव विभज्यते इति संदेहः । यजमानेनैवेति सिद्धान्तः । यदि च परिषदं प्रति उच्येत, परिषच्च विभजेत, न स्वामिना सह अपणिष्यत । तत्र परिक्रय एव नाभविष्यत् । **भा.** १०।३।१२।५१.

* **परिसंख्या** इति परेर्वर्जनार्थत्वात् तद्विषया बुद्धिरभिधीयते ( वर्जनकरी बुद्धिः परिसंख्या ) । साऽपि गर्दभरशनाया आदाने वा स्यात् मन्त्रे वा । उभयथा त्रिदोषी । विधिपरः सन् न गृह्यते इति स्वार्थं जह्यात् । परस्य च वाक्यस्य ' गर्दभरशनां न ' इत्यस्यार्थे कल्पेत । प्राप्तं च रूपादर्थाद्वा मन्त्रमादानं वा बाधेत । इति पूर्वपक्षे । **वा.** १।२।४।३१–१. * परिसंख्या ' इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते ' एतादृशेषु उदाहरणेषु निर्दोषा प्रवर्तते । प्रपञ्चितं चैतत् वार्तिककारैः ' सामान्यप्रापणाशङ्का वाक्याद् यत्रानुमानिकात् । श्रुत्या प्राप्तिर्विशेषे च परिसंख्या तदाश्रया ॥ निर्दोषत्वं हि तत्रास्या विधाने सति लभ्यते ॥ ' ( वा. ३।१।७।१४ पृ. ७१० ) ' रूपप्रकरणद्वारा श्रुतिर्यावत्तु कल्प्यते । तावत् प्रत्यक्षया श्रुत्या विधिः शीघ्रं समाप्यते ॥ अप्राप्त-

विधिरेवायमतो मन्त्रस्य निश्चितः । परिसंख्या फलेनोक्ता न विशेषः पुनःश्रुतेः ॥ ' ( विशेषपुनःश्रुतेः इति मूले । वा. पृ. ७११ ) । ' अश्वश्रुत्यैव शीघ्रत्वान्मन्त्रे प्राग्विहिते सति । निराकाङ्क्षीकृताम्नाये तथा प्रकरणिन्यपि ॥ लिङ्गप्रकरणद्वारा श्रुतिर्नैवाभिधीयते ( नैवानुमीयते इति मूलपाठः ) । तस्यामप्रमितायां च ( तस्यामप्रापितायां च इति मूलपाठः ) मन्त्रप्राप्तिर्न गर्दभे ॥ सोऽयमाभाणको लोके यदश्वेन हृतं पुरा । तत् पश्चाद् गर्दभः प्राप्तुं केनोपायेन शक्नुयात् ॥ ( वा. पृ. ७११–१२ ) प्रयोजनं विधेः किं स्यादस्येति तु निरूपणे । न गर्दभाभिधानीतः फलमन्यन्निवर्तनात् ॥ ( वा. पृ. ७११ ) । यद्यश्वरशनाप्राप्तिं केवलामानुमानिकीम् । प्रत्यक्षश्रुतिवत् कुर्यात् ततः सा स्यादनर्थिका ॥ लिङ्गानुमितया श्रुत्या प्राप्नुयाद्रशनाद्वये । स मा प्रापत् तयेत्येवं प्रत्यक्षा त्वरते ( त्वरिता इति मूलपाठः ) श्रुतिः ॥ ' (वा. पृ. ७१२) इति । प्राप्तपरिसंख्यायां त्रिदोषत्वनियमश्च वार्तिककारैः अत्रैवोदाहरणे स्थित्वा व्यतिरेकमुखेन प्रदर्शितः ' यद्यस्य विनियुक्तस्य प्रत्यक्षा स्यात् पुनःश्रुतिः । ततश्च परिसंख्यानात् प्रसज्येत त्रिदोषता ॥ यदि ( यदा इति मूले पाठः ) तु प्रतिबद्धत्वात् सामान्यविनियोगकृत् । नैवास्ति श्रुतिरत्रेति ( नैव चेच्छ्रुतिरस्तीह इति मूले पाठः ) न प्राप्नोति त्रिदोषता ॥ ' ( वा. पृ. ७१२) इति । ( अत्र मूलापेक्षया श्लोकानां पाठभेदः क्रमभेदश्च कृतः । स तु विवक्षितार्थस्य स्पष्टीभावाय स्यादिति भाति **के.** ) । **रसायनम्**. पृ. १६८–१६९.

* परिसंख्या । उभयप्राप्तौ एकविधेः परिसंख्याशब्दवाच्यत्वम् । **सु.** पृ. ९६ . * परिसंख्या । 'तत्र चान्यत्र च प्राप्ते परिसंख्येति कीर्त्यते' । यः पुनः प्राङ्नियोगात् तत्र चान्यत्र च प्राप्नुयात् इति संभाव्यते, यत्र वा यच्च अन्यच्च, सा परिसंख्या । यथा अत्रैव उदाहृते ( इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते इति ) यथा च गृहमेधीये पञ्चमे पक्षे । अत्रापि च न प्राप्ते सति एषा प्रवर्तते, प्रापकस्य शास्त्रस्य अननुमितत्वात् । कथं तर्हि? यदि एतद्वाक्यं नाभविष्यत्, तत एनं प्राप्स्यदिति । सर्वस्य प्रत्यक्षस्य वाक्यस्य नानुमानिकवाक्यप्रतिबन्धमात्रं फलमिष्यते । किं हि तेन पठितेन यस्य अन्यतोऽपि अर्थः सिध्यति, तदर्थं गर्दभरशनानिवृत्तिः फलं कल्प्यते । तेन एवं कल्प्यते, कृत्वाचिन्तान्यायेन यदि नाम एवं वाक्यं न भवेत् , ततः कीदृशमनुष्ठानं स्यात् । तत्र मन्त्रप्राप्तिस्तावत् एकान्तेन सिध्येत् अश्वाभिधान्याम् । तद्वदेव तु गर्दभरशनायामपि प्रसज्येत । यदा तु अनेन वाक्येन प्रत्यक्षेण नैराकाङ्क्ष्यात् अविशेषविनियोगसमर्थवाक्यानुमानं निषिद्धम्, तदा केवलाश्वाभिधानीविषयत्वसिद्धिः इति अपौनरुक्त्यात् अर्थवद्वाक्यम् । **वा.** १।२।४।३४.

* परिसंख्या दोषत्रयदुष्टा । स्वार्थत्यागः, अन्यार्थस्वीकारः, प्राप्तबाधश्चेति दोषत्रयम् । **के.** * परिसंख्या दोषत्रयवती अपि क्वचित् स्वीक्रियते । सति हि गत्यन्तरे तेषां दोषत्वम् । **वि.** १०।७।२. * परिसंख्या द्विविधा श्रौती लाक्षणिकी चेति, ' अत्र ह्येवावपन्ति ' इत्यत्र श्रौती, एवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात् । ' पञ्च पञ्चनखा भक्ष्याः ' इत्यत्र तु लाक्षणिकी, इतरनिवृत्तिवाचकपदाभावात् । **मीन्या.** * परिसंख्या न भवति याजमानमन्त्राणां ज्योतिष्टोमे । **संकर्ष.** २।२।४. **मीको.** पृ. १८२६ ' ज्योतिष्टोमे यजमानमन्त्राणाम् ' इत्यत्र द्रष्टव्यम् । * परिसंख्या पशौ हृदयादीनामेव अवदानसंबन्धितया श्रूयमाणानां हविष्ट्वेन तदितरावयवानां हविष्ट्वस्य । १०।७।२. ' हृदयादिन्यायः ' इत्यत्र द्रष्टव्यम् । * परिसंख्या मुख्या अन्यनिवृत्तिफलकविधिरूपा । अन्यनिवृत्त्याख्यफलिका तु गौणी । **सु.** ३।७।१६ पृ. ३२. * परिसंख्या । ' यत्र सामान्यतः प्राप्स्यन् विशेषे श्रूयते पुनः । परिसंख्येष्यते तत्र ... ॥ ' तच्च नानावाक्यत्वे सत्येव भवति । **वा.** ३।१।७।१४ पृ. ७०९. * परिसंख्या, यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोजयन्तामित्युक्त्वा ' पञ्चम्यां विष्णुमित्रो भोजयितव्यः ' इति । तत्र न भोजनं विधीयते, प्राप्तत्वात् । अन्येषां तु ( पञ्चम्याम् ) निवृत्तिः विधीयते । **टुप्.** १०।७।९।२८. * एकादशभिरङ्गैः इतरेषामङ्गानां **परिसंख्या** अग्नीषोमीये पशौ । **भा.** १०।७।२।३–९. * न च परिसंख्या, सामान्य-

विशेषभेदानुपादानात् । यदि हि सामान्येन इदं लक्षणम् ( 'अर्थैकत्वादेकं वाक्यम्०' इत्यादि एकवाक्यता-लक्षणम् ) क्वचिदभिप्राय पुनः केवलपौरुषेयसंबद्धमुच्येत, ततः परिसंख्यावशेन वैदिकानामिदं तावत् न भवति इत्येतावन्मात्रं गम्येत ( इदं पूर्वपक्षे ) । **वा.** २।१।१४।४६ पृ. ४४४, * 'नियमः परिसंख्या वा न व्यावर्त्याद्विनेष्यते' । १।३।८।२७ पृ. २८२, * 'सामान्यप्रापणाशङ्का वाक्याद्यत्रानुमानिकात् । श्रुतात् प्राप्तिर्विशेषे च परिसंख्या तदाश्रया ॥ निर्दोषत्वं हि तत्रास्या विधाने सति लभ्यते । कल्प्यत्वेन हि तस्यैषा क्लृप्तादाश्रीयते फलात् ॥' समानवाक्यपदपूर्वभागावस्थितप्रातिपदिकप्रापित – सर्वग्रहसंमार्गज्ञानप्रत्याख्यानेन तदधीनात्मलाभप्रत्ययप्रतिपाद्यायाः परिसंख्यायाः त्रिदोषत्वमपरिहार्यम् । ३।१।७।१४ पृ. ७१०. * हृदयादीनामेव अवदानसंबन्धितया श्रूयमाणानां हविष्ट्वेन तदितरावयवानां हविष्ट्वस्य परिसंख्या अग्नीषोमीये पशौ । हृदयादिन्यायः द्रष्टव्यः । **भा.** १०।७।२।३–९, * **परिसंख्यया** प्रतिषेधः स्यात् । यथा 'पञ्च पञ्चनखा भक्ष्याः' इति शशादीनां पञ्चानां कीर्तनात् अन्येषां भक्षणं प्रतिषिध्यते इत्ययमर्थो वाक्येन गम्यते । १०।७।९।२८. * **परिसंख्यायाः** तत्र हि तत् ( दोषत्रयम् ) परिहर्तुं शक्यते, यत्र परिसंख्यायमानप्राप्तिशास्त्रमक्लृप्तमुत्प्रेक्षामुखं वर्तते । **वा.** ३।४।१४।४१ पृ. ९७९, * **परिसंख्यायां** त्रिदोषत्वमदोषः । 'सर्वत्र हि द्वयोः संबन्धे कृते तत्स्वरूपं संसर्गश्च प्रतीयते अन्यनिवृत्तिश्च । क्वचिच्च किंचित् प्रयोजनवशेन विवक्ष्यते । स्वरूपसंसर्गासंभवे च बलादेव विधिः इतरनिवृत्तिप्रयोजनो भवति । अतश्च त्रिदोषत्वं अदोषः स्वार्थस्य प्राप्तत्वेनैव हेयत्वात् प्रतीतस्य च परार्थस्यापरिग्रहे विध्यानर्थक्यात्' । ३।७।१६।३३ पृ. १०९५. * परिसंख्यायां स्वार्थहानिः परार्थकल्पना प्राप्तबाधश्च । **भा.** ६।१।३।८.

* **परिसंख्यार्थमिदं** श्रवणं अङ्गिरसां द्विरात्रे 'वैखानसं पूर्वेद्युर्भवति षोडश्युत्तरे' इति, यदेतत् द्विरात्रस्य उत्तरे गृह्यते, एतत् अङ्गिरसां द्विरात्रस्य गृह्यते नान्यत्रेति । इदं वृत्तिकारमतम् । **भा.** १०।५।१३। ५३–५४.

* **परिसंख्याविधिः** उभयस्य युगपत्प्राप्तौ इतरव्यावृत्तिपरो विधिः । यथा 'पञ्च पञ्चनखा भक्ष्याः' । इदं अपञ्चनखभक्षणनिवृत्तिपरम् । **मीन्या.** * परिसंख्याविधिः चतुर्विधः— जातिविधिः द्रव्यविधिः गुणविधिः क्रियाविधिश्च । पुनरपि द्विविधः शेषिपरिसंख्या शेषपरिसंख्या चेति । पुनर्द्वेधा शाब्दी आर्थी चेति । तत्र आर्थी द्विविधा प्राप्तपरिसंख्या अप्राप्तपरिसंख्या चेति । पुनर्द्विविधा क्रत्वर्था पुरुषार्था चेति । पुनर्द्विविधा दृष्टार्था अदृष्टार्था च । तत्र इतरनिवृत्त्यंशः सर्वत्र अदृष्टार्थ एव । विधेयांशस्तु क्वचित् दृष्टार्थः क्वचिददृष्टार्थः । पुनर्द्विविधा नियमेन तत्र चान्यत्र च प्राप्तौ, अनियमेन तत्र चान्यत्र च प्राप्तौ इति । **बाल.** पृ. २४–२६, * परिसंख्याविधिः नियमविधिना बाध्यते । पृ. १४३. * परिसंख्याविधिः प्रायेण विनियोगविषय एव । **मणि.** पृ. ९९.

* **परिसंख्याविधिविवेचनं** मणिकृतम् 'विधिः त्रिविधः' इति बिन्दौ मणिग्रन्थे द्रष्टव्यम् । **के.**

* **परिसंख्याव्यावर्तितविषयः** अभ्यनुज्ञाविधिर्यथा 'पञ्च पञ्चनखा भक्ष्याः' इत्यनेन व्यावर्तितानां मार्जारादीनां अभ्यनुज्ञाविधिः 'प्राणात्यये' इत्यादिः ( सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् । ३।४।२८ ब्रसू. ) । **बाल.** पृ. १७, * परिसंख्याव्यावर्तितविषयः प्रतिप्रसवविधिः भट्टसोमेश्वरमतेन पशुसोमाधिकरणे 'एकादश वै पशोरवदानानि' इति परिसंख्या । तया अङ्गान्तराणि व्यावर्तितानि इति स्विष्टकृत्यपि शेषकार्ये व्यावर्तितान्येव । तत्र 'त्र्यङ्गैः स्विष्टकृतं यजति' इति अङ्गान्तरेषु त्रयाणां प्रतिप्रसवः । पृ. १६.

* **परिसंख्याशब्दवाच्यायाः** बुद्धेरपि प्रवर्तनफलायाः विधित्वाभ्युपगमः । **सु.** पृ. ९७ .

* **परिसंख्यासूत्रे** 'कण्वरथंतरे प्रकृतावान्तरापूर्वेष्वेव कण्वरथंतरयोर्निजन्यगुणाभिधानानां विधानोपपत्तेः हिरण्यगर्भमन्त्रवत् अपूर्वान्तराकल्पनात् तत्साधनीभूते बृहद्रथंतरधर्मप्राप्त्यविरोधः' इत्युक्तम् । **कौ.** १।४।३।३ पृ. १९५.

* **परिसामानि** परितः सामानि । अवभृथसामानि अनुबन्ध्यादिसामानि च । सु. पृ. ११८३.

* **परिहरणं** युगपत् ब्रह्मभक्षाणां शतकृष्णलचरौ । भा.१०।२।४।१७.

* **परिहारः** ( समर्पणम् ) ब्रह्मणे सर्वभक्षाणां पुरुषान्तरेभ्योऽपनीय शतकृष्णलचरौ । भा.१०।२।५। १८–१९.

* लोकानवगतं विवेकं कुर्वन्ति **परीक्षकाः** । सु. पृ. ५६२. * नहि यथावगताभ्युपगमात् अन्यत्किञ्चित् साधीयः **परीक्षकाणाम्** । वा. १।२।१।१ पृ. १०६–१०७.

**परुषिदिताधिकरणम्** । दिग्विभागाधिकरणम् । परुषिदितादीनामनुवादः ॥

**परुषिदितपूर्णघृतविदग्धं च तद्वत् । ३।४।३। ११ ॥**

भाष्यम्— दर्शपूर्णमासयोराम्नातम् ' यत्परुषि दितं तद्देवानाम्, यदन्तरा तन्मनुष्याणाम्, यत्समूलं तत्पितॄणाम् ' इति । तथा ' यो विदग्धः स नैर्ऋतः, योऽशृतः स रौद्रः, यः शृतः स देवत्यः । तस्मादविदहता श्रपयितव्यं सदेवत्वाय ' इति । ज्योतिष्टोमे श्रूयते– ' यत्पूर्णं तन्मनुष्याणामुपर्यर्धो देवानामर्धः पितॄणाम् ' इति । तथा ' घृतं देवानां मस्तु पितॄणां निष्पक्वं मनुष्याणाम् ' इति । तत्र मनुष्यसंबद्धेषु रौद्रे च संदेहः किं मनुष्याणां धर्मा विधयः, उत कर्मधर्मा अनुवादाः । अथ यत्प्रकरणे मनुष्यप्रधानं रौद्रं च तत्र विशेरन्, उताऽऽतिथ्ये, उतार्थवाद इति । किं तावत् प्राप्तम् ? एतान्यपि तद्वत् । यो निवीते पूर्वः पक्षः, स एतेषां पूर्वः पक्षः । यो मध्यमः, स मध्यमः । यः सिद्धान्तः, स एव सिद्धान्तः । अर्थवत्त्वात् मनुष्यसंबन्धाच्च विधयो मनुष्यधर्माश्च इति पूर्वः पक्षः । उपरि मूले च अनियमात् लाघवम् । अशृतं रोगदत्वात् रौद्रम् । पूर्णेऽपि श्लक्ष्णत्वात् लाघवम् । एवं आयुतं शिरसि निहितं मनुष्याणां सुखकरमेव । अर्थप्राप्तवात् अनुवादः इत्युत्तरः पक्षः । विधिः कर्मधर्मप्रायात् समाख्यानाच्च कर्मधर्मः इति पक्षः । अन्वाहार्ये दक्षिणासु च इति वाक्यप्रकरणानुग्रहात् पक्षः । आतिथ्ये इति वाक्यभेदप्रसङ्गात् । अर्थवादः इति प्रकरणात् विधिना एकवाक्यत्वादिति । ' पर्व प्रति लुनाति ' ' उपरि बिलात् गृह्णाति ' ' नवनीतेनाभ्यङ्क्ते ' ' अविदहता श्रपयितव्यम् ' इत्येभिः सह एषामेकवाक्यभावः । तस्मात् एते न विधयः ( किन्तु ) अर्थवादाः इति ।

वा— दिग्विभागपरुषिदितघृतादीनां निवीताधिकरणवत् सर्वे प्रकारा अवगमयितव्याः । का पुनरत्र अतुल्या शङ्कां व्यावर्तयितुमतिदेशः क्रियते ? किमर्थं वा अधिकरणद्वयमारभ्यते ? तदुच्यते । 'पुराकल्पस्वरूपेण भजत्यर्थानुषङ्गिणा । दिग्विभागस्य संबन्धान्निवीतातुल्यतामतिः ॥ इतरेषां तु षष्ठ्यन्तसंबन्धेऽपि फलोदयः । पुरुषं प्रति विस्पष्टस्तत्क्रियाऽन्तर्गतात्मनाम् ॥ ' स्वाभाविकं दिगादीनां सर्वक्रियाऽङ्गत्वं न निवीतवदपूर्वं विधातव्यम् । तत्र मनुष्यसंबन्धेऽपि नियमफलमात्रकल्पनमेव, न क्रियाफलकल्पना । तदपि च लौकिकीनामेव क्रियाणां अविघ्नसमापनं अपेक्षावशात् कल्प्यते, नान्यत् स्वर्गादि । तेन एवमाभाति – ' यावत् किञ्चित् मनुष्याः स्वार्थं कर्म अनुतिष्ठन्ति, तत्र प्रतीची उदीची च अङ्गं भवति । यावच्च दर्भलवनम्, तत् अन्तरा कर्तव्यम् । यावत् मीयते, तत् पूर्णेन मातव्यम् । यावच्च स्नेहकार्यम्, तत् सर्वं विलीनेन नवनीतेन निष्पक्व-आयुतशब्दवाच्येन कर्तव्यम् । नैर्ऋतरौद्रयोश्च विदग्धत्व–अशृतत्वे कर्तव्ये ' इति । तेन अत्रापि पूर्वतुल्यत्वं साधयितव्यं इत्यारम्भः ।

तत्र मनुष्यधर्मः ' शब्दस्य तत्प्रधानत्वात् ' ( ३।४। १।१ ) इति विनाऽपि षष्ठीनिर्देशात् ' अभजन्त ' इति मनुष्यसंबन्धात् तादर्थ्यम् । इतरेषु षष्ठी एव । तथा ' अपदेशो वा ' ( ३।४।१।२ ) इति सौकर्यात् प्राप्तिरभिधीयते । पूर्वाह्णे हि पृष्ठतः आदित्यं कृत्वा मुखं व्याप्रियन्ते इति प्रतीचीप्राप्तिः । तथा अन्तरालवन–पूर्णयोः अप्रयत्नसाध्यत्वात् प्राप्तिः । तथा विदग्धे कृष्णत्वात् एकवर्णनिर्ऋत्याख्यपृथिवीसंबन्धप्राप्तिः । अशृते च रोगदत्वात् रौद्रता । नियोगतस्तु अप्राप्तेः सर्वत्र नियमविधिः । प्रकरणसमाख्याभ्यां च कर्मधर्मः । सर्वप्रमाणानुग्रहार्थं प्रकरणे मनुष्यप्रधाने निवेशः । वाक्येन प्रकरणसमाख्ययोः

बाधात् फलकल्पनाभयाच्च आतिथ्यादौ निवेशः । तेनापि सह संबन्धप्रमाणाभावात् प्रकरणे संभविनश्च अनुत्कर्षात् (१।२।२।२४) प्राचीनविधिशेषत्वाच्च अर्थवादः इति सिद्धान्तः । सम्यक्श्रुतयथाविदितविषय–अन्यविषय–स्तुतिविवेकसिद्धिः । ( "सम्यक् श्रुतः यथाविदितः अनुवाद्यश्च विषयो यस्याः सा सम्यक्श्रुतयथाविदितविषया स्तुतिः । अन्यः उक्तविपरीतः विषयो यस्याः सा स्तुतिः अन्यविषया । सम्यक्श्रुतयथाविदितविषया चासौ अन्यविषया चासौ इति विशेषणोभयपदः कर्मधारयः । सा चासौ स्तुतिश्च । विवेकेन सिद्धिः विवेकसिद्धिः । तादृशस्तुतेः विवेकसिद्धिः इति विग्रहः । तत्र सम्यक्श्रुतत्वं स्वसंबन्धिसंबन्धित्वेन श्रुतत्वम् । यथा 'यथा प्रतीची उदीची मनुष्याणामुचिता, तथा प्राची देवानाम्' इत्यत्र । विवेकश्च– 'निवीतोदाहरणे यदि औचित्येन स्तुतिः, ततोऽत्रापि औचित्येन । यदि तत्र विपर्ययेण स्तुतिः अत्रापि विपर्ययेण' इति । इति **सुधासंक्षेपः** । अग्रे अक्षरशः **सुधा** यथा " विदग्धोदाहरणे वा 'विदग्धाशृतत्वयोः काष्ण्यरोगदत्वापादकत्वेन अप्राशस्त्यात् अविदहनश्रपणमेव प्रशस्तम्' इत्येवंरूपत्वेन औचित्यविपर्ययरूपत्वाभावात् विदग्धोदाहरणात् विवेकेन उदाहरणान्तरेषु ईदृश्याः स्तुतेः सिद्धिः । " इति । )

**सोम**–– ( दिग्विभागपरुषिदिताधिकरणयोः ) अतिदेशाविशेषेऽपि दिग्विभागस्य 'अभजन्त' इत्याख्यातेन विधित्वस्य झटिति प्रतीतेः विधिप्रतीतितारतम्यात् अधिकरणद्वयस्य **पौर्वापर्यं** बोध्यम् । सूत्रे परुषिदितं इति वाक्यानुकरणत्वात् अलुक्, विदग्धशब्दः अशृतोपलक्षणार्थश्च ।

**वि**–– 'परुषिच्छिन्नमित्युक्त्या बर्हिषस्तु समूलताम् । घृतं दैवं मस्तु पित्र्यमित्युक्त्या नवनीतकम् ॥ यो विदग्धः स इत्युक्त्या पुरोडाशस्य पक्वताम् । स्तौति पूर्वोत्तरौ पक्षौ योजनीयौ निवीतवत् ॥'

**भाट्ट**— दर्शपूर्णमासयोः 'पर्व प्रति लुनाति' इत्यादिविधेः 'यत् परुषि दि(तं)नं तद्देवानाम्, यदन्तरा तन्मनुष्याणाम्, यत् समूलं तत्पितॄणाम्' इति शेषः । तथा सोमे 'यत् पूर्णं तन्मनुष्याणां यदुपर्यर्धस्तद्देवानाम्' इति 'उपरि बिलादुद्गृह्णाति' इत्यस्य विधेः । तथा तत्रैव 'नवनीतेनाभ्यङ्क्ते' इत्यस्य 'घृतं देवानां मस्तु पितॄणां निष्पक्वं मनुष्याणाम्' इति । तथा दर्शपूर्णमासयोः 'अविदहता (श्रपयितव्यः) शृतंकृत्यः' इति विधेः 'यो विदग्धः स नैर्ऋतः' इति । तत्र मनुष्यसंयुक्ते क्रियाविशेषस्य लवनादेरुपादानात्, तत्र च लवनत्वाद्यवच्छेदेन अन्तरात्वादिगुणानां नित्यप्राप्त्यभावात् विध्यन्तरकल्पनया तत्र तद्विधानम् । न च फलकल्पना, 'तद्यथैवादो मनुष्यराज आगते' इत्यादौ, 'नयनं दक्षिणं दीक्षितः पूर्वमाङ्क्ते' इत्यादौ च शतशस्तस्या अङ्गीकारात् । अन्यथा तत्तत्स्मृतीनां तत्तदर्थवादोन्नीतविधिमूलकत्वानुपपत्तेः । 'यो विदग्धः' इत्यत्र तु विदग्धनिर्ऋतिदेवतोभयसंबन्धस्य अप्राप्तत्वात् विध्यन्तरकल्पनायां नैव किञ्चिद्बाधकम् । इति **प्राप्ते**, 'परुषि दि(तं)नम्' इत्यत्र दितपदस्य वैदिकलवनपरस्य 'अन्तरा' इत्यत्रानुषङ्गेण तदर्थपरत्वे विकल्पप्रसङ्गात्, अर्थान्तरपरत्वे वैरूप्यापत्तेः अनुषङ्गायोगेन अध्याहारावश्यम्भावात्, 'यदन्तरा' इति यच्छब्दयोगेन च लोकप्राप्तयादृच्छिकान्तरालवनव्यक्तिमुद्दिश्यैव मनुष्यसंबन्धस्य स्तुत्यर्थमुपदेशप्रतीतेः लौकिकलवनत्वावच्छिन्ने अन्तरात्वस्याप्रतीतेः, तस्य च तद्व्यक्तौ नित्यप्राप्त्या न विध्यन्तरकल्पनम् । 'नयनं दक्षिणं दीक्षितः पूर्वमाङ्क्ते सव्यं हि मनुष्या आञ्जते' इत्यत्र तु मनुष्यनेत्राञ्जनत्वावच्छेदेनैव सव्यपूर्वकत्वस्य स्तुत्यर्थमुपादानात्, तादृशस्य च नित्यप्राप्त्यभावेन विधिकल्पकत्वमिति विशेषः । यादृशस्य हि स्तुत्यर्थमुपादानम्, तादृशस्य नित्यवदप्राप्तौ विधिकल्पनं नान्यत्र । अत एव 'यो विदग्धः' इत्यादौ विदग्धत्वनिन्दार्थे तस्य कर्मानर्हत्वफलकनिर्ऋतिसंबन्धमात्रस्य उत्प्रेक्षाविषया संकीर्तनात् निर्ऋतिसंबन्धस्य 'तं यज्ञं निर्ऋतिर्गृह्णाति' इत्यादौ कर्मानर्हत्वप्रयोजनकत्वावगतेः, उत्प्रेक्षायां च उत्प्रेक्षितार्थस्य प्राप्त्यभावेऽपि क्षतिविरहात्, निर्ऋतेः रक्षोधिपतित्वेन देवानर्हभक्षकत्वस्य प्रमाणान्तरप्राप्तत्वाच्च न विधिकल्पकत्वम् । न हि अयं देवतातद्धितः, येन

तस्या अप्राप्तत्वाद्विधिः कल्प्येत । निन्दायै संबन्धसामान्ये-नापि तदुपपत्तेः । अतो नैते विध्यन्तरकल्पकाः ।

मण्डन— ' पूर्णादितन्त्रं विहितं स्तवाय । ' ३.

शंकर— ' पूर्णतादि च तद्वत् स्यात् । ' ९. ( तद्वत् निवीतवत् । ) ।

परुषिदितपूर्णघृतविदग्धं च तद्वत् । ३।४।३।११॥

दर्शपूर्णमासयोः ' यत् परुषि दितं तद्देवानाम्, यदन्तरा तन्मनुष्याणाम्, यत् समूलं तत् पितृणाम् ' इति श्रूयते । तथा ' यो विदग्धः स नैर्ऋतः, योऽशृतः स रौद्रः, यः शृतः स देवत्यः । तस्मादविदहता श्रपयितव्यं सदेवत्वाय ' इति च । ज्योतिष्टोमे च श्रूयते— ' यत् पूर्णं तन्मनुष्याणाम्, उपर्यर्धो देवानाम्, अधः पितृणाम् ' इति, तथा ' घृतं देवानाम्, मस्तु पितृणाम्, निष्पक्वं मनुष्याणाम् ' इति । तत्र मनुष्यसंबद्धेषु रौद्रे च विचारः । तत्र विधयः इति पूर्वः पक्षः । परुषि पर्वणि दितं छिन्नं बर्हिः, पूर्णः सोमरसेन ग्रहश्चमसो वा, घृतं क्षरत् श्च्योतत् आज्यम्, विदग्धः अग्नेरूष्मणा शृतश्चरुः, एतेषां समाहारः । परुषिदितपूर्णघृतविदग्धं च द्रव्यम्, तद्बोधकं वाक्यजातम्, तद्वत् दिग्विभागवाक्यवत् न विधिः किन्तु अर्थवादः । ' पर्व प्रति लुनाति ' ' उपरि बिलात् गृह्णाति ' ' नवनीतेनाभ्यङ्क्ते ' ' अविदहता श्रपयितव्यम् ' इत्येतैः विधिवाक्यैः एकवाक्यत्वात् प्रकरणाच्च । तस्मादेते न विधयः, किन्तु अर्थवादाः इति सिद्धान्तः । ' परुषि ' इति पदं सर्वैरेव पृथङ्मुद्रितम् । तदयुक्तम् । तत्र सोमनाथी—सूत्रार्थग्रन्थे ' परुषिदिनमिति वाक्यानुकरणत्वात् अलुक् ' इति । श्रौतशब्दार्थस्तु— परुषि पर्वणि दितं खण्डितम् । अन्तरा मूलपर्वणोर्मध्ये ( इति सोम. ) । विदग्धः अग्नेः ऊष्माधिक्येन क्षामः । अशृतः अपक्वः । के.

* परोक्षात् प्रत्यक्षं बलीयः । ' सामान्येन यत् प्राप्नोति, तत् परोक्षं लक्षणया । यत्तु विशेषेण तत् प्रत्यक्षं श्रुत्या । श्रुतिश्च लक्षणाया बलीयसी, प्रत्यक्षं च परोक्षात् ' । भा. ३।६।३।१०.

* परोक्षत्वं साक्षात्करोमि इत्येतादृशविषयताशालिज्ञानाविषयत्वम् । मणि. पृ. ११६.

* यथा च अर्थादाक्षिप्यमाणं श्रौतेन निवर्त्यते, तथा परोक्षवृत्त्याऽपि । वा. २।२।१३।२९ पृ. ५६६.

* परोपकाराय प्रपास्तडागानि च, न धर्माय इत्येवावगम्यते । तथा च दर्शनम् ' धन्वन्निव प्रपा असि ' इति ( यथा धन्वनि निरुदके कृताः प्रपाः परेषामुपकुर्वन्ति, एवं त्वम् । ) । भा. १।३।१।२ पृ. १६६.

परोपकाराय सतां विभूतयः इति न्यायः । यत्र परोपकारविवक्षा, तत्रास्य प्रवृत्तिरिति । उक्तं च ' परिनिर्मथ्य वाग्जालमिदमेव सुनिश्चितम् । नोपकारात् परं पुण्यं नापकारादघं परम् ॥ ' । साहस्री. १००१.

* परोपकारश्रुतेः सर्वसाधारण्यम् । सु. पृ. १२७.

पर्जन्यन्यायः । यथा पर्जन्यो जलेऽपि वर्षति स्थलेऽपि वर्षति । एवं विवक्षायां प्रवर्ततेऽयं न्यायः । अयम् ' इको झल् ' पा. १।२।९३ इति सूत्रमहाभाष्येऽभिहितः । तद्यथा— कृतकारि खल्वपि शास्त्रं पर्जन्यवत् । तद्यथा पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति इति । किञ्चायं भ. गी. अ. ९ श्लो. ९ टीकायां नीलकण्ठयां व्यवहृतः । तथाहि- ' उदासीनवदासीनम् ' इति । यथा पर्जन्यो बीजविशेषेषु रागं केषु चित् द्वेषं चाकृत्वा उदासीनः सन् वर्षति, एवमीश्वरोऽपि पुण्यवत्सु रागं पापिषु द्वेषं चाकुर्वन् जगत्सृजतीति प्रोक्तमिति । साहस्री. ६१६.

* पर्णता जुहूपस्थितक्रत्वपूर्वार्था, न तु जुहूस्वरूपार्था । सोम. ११।३।२.

* पर्णतादीनामनारभ्याधीतानां प्रकृतौ निवेशः, विकृतौ तु अतिदेशेन प्राप्तिः । बिन्दु. ३।६।१.

* पर्णतान्यायः । ( ३।६।१ ) । अत्र प्रकृत्यर्थता उक्ता । अधिकरणं तु मीको. पृ. ३७३ ' अनारभ्याधिकरणम् ' इत्यत्र द्रष्टव्यम् । के. * पर्णतान्यायः । ( ४।३।१ ) । अत्र फलश्रुतिरर्थवाद इत्युक्तम् । के. ' पर्णमयीन्यायः ' इत्यत्रापि द्रष्टव्यम् । * अशनायाद्यतीतासंसार्यात्मज्ञानं च क्रतुप्रवृत्तिविरोध्यपि, अतः

कथं तस्य क्रत्वङ्गता **पर्णतान्यायेन** भवेत्। **आभरणं.** ३।४।१।२-३.

* न च गुणकामानां विकृतौ अप्रवृत्तिः, वषट्कारस्य 'एष वै सप्तदशः प्रजापतिः यज्ञे अन्वायत्तः' इत्यनारभ्याधीतवचने साक्षाद्यज्ञोद्देशेन विधानात् **पर्णतान्यायाभावेन** प्रकृतिविकृतिसाधारण्येन उपदिष्टतया विकृतावपि ईदृशगुणकामप्राप्त्युपपत्तेः। **भाट्ट.** १०। २।२१.

* **पर्णतावाक्ये** अव्यभिचरितलिङ्गोपस्थापितक्रतुलक्षणां विधौ अङ्गीकृत्य वाक्यशेषस्य प्राशस्त्यलक्षणाऽपि अङ्गीकर्तव्या। **परिमल.** ३।३।२७।४२ ब्रसू.

* '**पर्णन्यायोऽ**तिदिष्टे स्यात्'। पर्णवाक्यात् पर्णतायाः यावत्क्रतुप्रवेशो जुहूद्वारम्। सा च जुहूः प्रकृतावेव विहिता विकृतिषु सर्वत्रातिदिश्यते। **वि.** ३।७।२०.

* **पर्णमयी** जुहूः (पर्णमयी पलाशकाष्ठजन्या)। **भा.** ३।६।१।१.

* रात्रिसत्रस्थले (४।३।८।१७-१९) प्रकारान्तरेण फलाकाङ्क्षाया अशान्तेः, अगत्या स्तुतिसमर्पकस्यैवार्थवादस्य फलसमर्पकत्वम्, उदुम्बरतापर्णतादीनां तु क्रतूपकारेण फलाकाङ्क्षाशान्तेः नागतिकत्वं इति प्रतिपादनार्थं **पर्णमय्यधिकरणम्। के.** * **पर्णमय्यधिकरणे** अपापश्लोकश्रवणादीनां प्रशंसार्थत्वेन उपात्तानां फलत्वाभावः वक्ष्यते। **सु.** १।२।१।७ पृ. ३५, * पर्णमय्यधिकरणे तीर्थस्नाने (तीर्थे एव समानानां भवति इति) फलश्रुतेः फलसमर्थकत्वपूर्वपक्षः निराकरिष्यते। पृ. १४६५. * पर्णमय्यधिकरणे साध्यांशविचारः। औदुम्बरे तु साधनांशद्वारा। **के.** (शा. १।२।२)। * अपापश्लोकश्रवणादीनां फलत्वेन प्रतिपादनं न संभवति 'स्वर्गकामः' इत्यादिवत् कामशब्दसंयोगाभावात् इति **पर्णमय्यधिकरणे** वक्ष्यते। **सोम.** १।२।२. * औदुम्बरत्वादेः यूपार्थत्वेनैव नैराकाङ्क्ष्यं रात्रिसत्रवत् फलानपेक्षत्वात् इति पर्णमय्यधिकरणे वक्ष्यामः। **कौ.** १।२।२। २२. * कमिपदनिरपेक्षसमभिव्याहारमात्रप्रमाणकस्य च साध्यत्वस्य पर्णमय्यधिकरणे निराकरिष्यमाणत्वात् फलत्वाभावेन पूतत्वादीनां कर्तृप्रवृत्तिकारणत्वं नास्ति। **सु.** पृ. ४९०. * न चैवंविधेन कामशब्दरहितेन शक्यते फलं प्रतिपादयितुं इति पर्णमय्यधिकरणे वक्ष्यामः (४।३।१।१)। **शा.** १।२।२. * प्रसङ्गात् यज्ञपतिप्रथनं पुरोडाशप्रथनस्य फलत्वेन कीर्त्यते स्तुत्यर्थं वेति जिज्ञासितुं व्याचष्टे। एवं तु मान्त्रवर्णिकफलकल्पनसंभवेन यज्ञपतिप्रथनस्य फलत्वानपायात्, पर्णमय्यधिकरणे निराकृतत्वेन च जिज्ञासाऽनुपपत्तेः अपरितोषात् मन्त्राभिप्रायेण व्याचष्टे। **सु.** १।२।४।३५ पृ. १०७, * मान्त्रवर्णिकफलकल्पनसंभवेन यज्ञपतिप्रथनस्य फलत्वानपायात् पर्णमय्यधिकरणे निराकृतत्वेन च जिज्ञासाऽनुपपत्तिः। पृ. १०७. * वेदाध्ययनमात्रस्य यत् फलाम्नानमिव दृश्यते 'यंयं क्रतुमधीते तेनतेनास्येष्टं भवति' (तैआ. २।१५) इति तस्यापि चतुर्थतृतीयाद्ये पर्णमय्यधिकरणे अर्थवादतां वक्ष्यति। **वैद्यनाथी.** १।१।१।१.

* **पर्णमय्यधिकरणन्यायः** अर्थवादकल्प्यफलविषयः। **सु.** पृ. ८७३. * **पर्णमय्यधिकरणन्यायेन** पूर्णाहुतेराधानाङ्गभूतकर्मरूपत्वात् प्रयाजादिवत् प्रयोजनानपेक्षत्वम्। **कौ.** १।२।१।४. * 'यः सत्राय दीक्षितानां म्रियेत अपि तस्य फलम्' इति फलरूपोऽयमर्थवादः **पर्णमय्यधिकरणन्यायात्। रत्न.** ६।३।९।२५.

* **पर्णमय्यधिकरणसिद्धः** अग्निचयनस्य फलवदफलत्वविचारः। **सु.** पृ. ९४९.

* **पर्णमय्यधिकरणसूत्रे** एव 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्येवमाद्यायां फलप्रधानायां श्रुतौ फलमुच्यते इति वदता सूत्रकृता कामपदयुक्तायां श्रुतौ फलार्थत्वं वक्ष्यते। **सु.** पृ. १४६८.

* अनारभ्याधीतत्वात् उपास्तीनां वाक्यात् क्रतुसंबन्ध एव सिध्यति, न फलसंबन्ध इति वक्तुं **पर्णमयीतामुदाहरति** ......। एतत् पूर्वपक्षे। **कल्पतरु.** ३।३।२७।४२ ब्रसू.

* **पर्णमयीत्वं** क्रत्वर्थम्, न पुरुषार्थमपि, अपापश्लोकश्रवणं तु अर्थवादः। **भा.** ४।३।१।१-३. * **पर्णमयीत्वस्य** क्रतुसंबन्धो वाक्येन। **वि.** ४।३।१, * पर्णमयीत्वस्य फलश्रवणमर्थवादः। ४।३।१.

* सा च फलश्रुतिः ( ' यस्य पर्णमयी० न स पापं श्लोकं शृणोति ' ) न फलपरा फलवत्क्रत्वर्थत्वात् पर्णतादेः फलशेषत्वायोगात् । अतः सा अर्थवाद एवेति पर्णमयीत्वाधिकरणे ( ४।३।१।१ ) समर्थितम् । तथा आत्मज्ञानेऽपि फलश्रुतिरर्थवाद एव स्यात् इत्याह ( पूर्वपक्षी ) । न्यायनि. ३।४।१।२ ब्रसू.

**पर्णमयीन्यायः ।** पर्णतान्यायः । ( फलश्रुतिः अर्थवादः ) ॥

**द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात् । ४।३।१।१ ॥**

**भाष्यम्**— ' यस्य खादिरः स्रुवो भवति स छन्दसामेव रसेनावद्यति सरसा अस्याऽऽहुतयो भवन्ति ' । ' यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति ' इति । ' यस्याऽऽश्वत्थ्युपभृद्भवति ब्रह्मणैवास्यान्नमवरुन्धे ' । ' यस्य वैकङ्कती ध्रुवा भवति प्रत्येवास्याऽऽहुतयस्तिष्ठन्ति अथो प्रैव जायते ' ' यस्यैवंरूपाः स्रुचो भवन्ति सर्वाण्येवैनं रूपाणि पशूनामुपतिष्ठन्ते, नास्यापरूपमात्मञ्जायते ' इति । तथा ज्योतिष्टोमे संस्कारे फलश्रुतिः ' यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते ' । तथा ' केशश्मश्रु वपते, दतो धावते, नखानि निकृन्तते, स्नाति, मृता वा एषा त्वगमेध्यं वाऽस्यैतदात्मनि शमलं तदेवोपहते मेध्य एव मेधमेवमुपैति ' । कर्मणि फलं श्रूयते ' अभीषू वा एतौ यज्ञस्य यदाघारौ ' ' चक्षुषी वा एतौ यज्ञस्य यदाज्यभागौ ' ' यत्प्रयाजानुयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्यस्याभिभूत्यै ' इति । अत्र संदेहः । किमिमे फलविधय उतार्थवादा इति । किं प्राप्तम् ? फलविधयः, प्रवृत्तिविशेषकरत्वात् फलविधेः । ' यथा खादिरं वीर्यकामस्य यूपं कुर्यात्, पालाशं ब्रह्मवर्चसकामस्य, बैल्वमन्नाद्यकामस्य ' इति । यथैते फलविधय एवमिहापि द्रष्टव्यम् । एवं प्राप्ते, ब्रूमः । फलार्थवादा इति । कुतः ? परार्थत्वात् । क्रत्वर्थान्येतानि । जुहूः प्रदाने गुणभूता, उपभृदुपधारणे, ध्रुवा आज्यधारणे, अञ्जनवपनादि च यजमाने, आघाराज्यभागौ प्रयाजानुयाजाश्च आग्नेयादिषु । यदि फलेऽपि गुणभावः स्यात्, अन्यत्रोपदिष्टानामन्यत्र पुनर्गुणभाव उपदिष्ट इति प्रतिज्ञायेत । न चैतन्न्याय्यम् । परार्थता हि गुणभावः । क्रत्वर्थता चैषां शब्देन, जुह्वा जुहोति– जुह्वा होममभिनिर्वर्तयतीति । एवं सर्वत्र । तस्मान्नैते पुरुषार्थाः ।

**टुप्**— अपापश्लोकश्रवणार्थिन उपायमन्विच्छतः पर्णमयीत्वमुपायत्वेन विधीयते । जुह्वाश्च जात्याकाङ्क्षायां पर्णमयीत्वं परिच्छेदकत्वेन विधीयते । तत् ( पर्णमयीत्वम् ) उभे अपि निराकाङ्क्षीकर्तुं शक्नोतीत्युभाभ्यां संभन्त्स्यते । ' एकस्य तूभयत्वे संयोगपृथक्त्वम् ' इत्यनारभ्याधीताः ( पर्णमयीत्वादि )जातिविशेषाः क्रत्वर्थाः पुरुषार्थाश्च, यथा खादिरतादयः । अथवा ' जुह्वा जुहोति ' इति प्रकरणे जुहूर्विहिता ' न स पापं श्लोकं शृणोति ' इत्यनेन पुरुषार्थतया विधीयते । सा च साध्यसाधनत्वादृते नोपपद्यत इति वर्तमानापदेशस्यापि विधायिका शक्तिः कल्प्यते । भवतिश्च भावयतिलक्षणार्थ इति । ' यदाङ्क्ते ' इत्येवमादिष्वप्येवं योज्यम् ।

एवं प्राप्ते, ब्रूमः । जुह्वां क्रत्वर्थतया विधीयमानायां यदिदं तत्फलमेषोऽर्थवादः स्तावकत्वेन । विश्वजिद्वत्फलमशक्यं कल्पयितुम् । यथा प्रणयनं अभूत् तथाविधां जुहूमाश्रित्य जातितो गुणकामनाऽपि नास्ति, आश्रयस्याविपरिवर्तमानत्वात् । जुहूराश्रय इति चेन्न, द्रव्यत्वात् । औदासीन्यव्यावर्तको ह्याश्रयः । क्रिया च तथा, न द्रव्यम् । दीयमानोऽपि ( आश्रयः ) वाक्येन दीयते । तत्र वाक्यभेदः । स चाऽऽश्रयान्तरमपेक्षते । न चाऽऽश्रयो विपरिवर्तते । तस्मादवगतक्रत्वर्थायां जुह्वां जातिमपेक्षमाणायां ( तदङ्गत्वेन ) जातिर्विधीयते । तस्यां विधीयमानायां फलश्रुतिरर्थवादः, परार्थत्वात् ।

**उत्पत्तेश्चातत्प्रधानत्वात् । २ ॥**

**भाष्यम्**— अथोच्येत । पुरुषमपि प्रति गुणभाव उपदिष्टः ' यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति ' इत्येवमादिभिर्वाक्यैरिति । तच्च न । कस्मात् ? उत्पत्तेरतत्प्रधानत्वात् । न तत्र पर्णमय्या जुह्वा अपापश्लोकश्रवणं क्रियत इति कश्चिच्छब्द आह । एतावत् श्रूयते, यस्यासौ भवति न स पापं श्लोकं शृणोतीति । एतावदत्र शब्देन गम्यते, यस्यैवंलक्षणा जुहूस्तस्या-

पापश्लोकश्रवणमिति । तत्र जुह्वा तत् क्रियते. जुहूर्वा तद्दधाति नैतच्छब्द आह । ननु अनुमानादेतद्गम्यते । ध्रुवं पालाश्या जुह्वा तत्क्रियते, यतस्तस्यां सत्यां तद्भवतीति । अत्रोच्यते । नैवंजातीयकं कार्यकारणत्वेऽनुमानं भवति । कार्यकारणसंबन्धो नाम स भवति, यस्मिन्सति यद्भवति यस्मिंश्चासति यन्न भवति तत्रैव कार्यकारणसंबन्धः । इह तु तद्भावे भावो ज्ञातः, नाभावेऽभावः । यस्य पालाशी न भवति तस्यापापश्लोकश्रवणं नास्तीति नैवंजातीयकः शब्दोऽस्ति । तेन न नियोगतोऽवगम्यते, तेनेदं क्रियते इति । लक्षणमेतत्पुरुषस्य गम्यते । तस्मान्नानुमानम् ।

अपि च, यस्यापि जुहूः पालाशी भवति तस्यापि पापश्लोकश्रवणं भवति । कथमवगम्यते ? प्रत्यक्षतः । ननु एवं सत्यग्निहोत्रेणापि फलं न साध्येत । न हुतमात्रेण फलं दृश्यत इति । नैष दोषः । न हि तत्रोच्यते तावतैव फलं भवतीति । इह तु वर्तमानायां जुहूसत्तायां वर्तमानस्य पापश्लोकश्रवणस्य प्रतिषेधः । तस्मान्न तत्रानुमानम्, इदं कार्यमिदं कारणमिति । अग्निहोत्रादिषु तु शब्देनैव कार्यकारणसंबन्ध उच्यते । तस्मात्तत्र तत्कालेऽदृश्यमानेऽपि फले कालान्तरे फलं भविष्यतीति गम्यते, न त्वेवंजातीयकेषु । तस्मान्नैवंजातीयकेभ्यः फलमस्तीति । ननु 'यस्य पालाशी जुहूर्भवति न स पापं श्लोकं शृणोति' इत्येवमुक्ते तत एव तत्फलं भवतीति गम्यते । तस्मादिहापि कालान्तरे फलं भविष्यतीति । उच्यते । सत्यं गम्यते । प्रमाणं तत्र किमिति विचारयामः । न तावत् प्रत्यक्षम्, नानुमानम्, नेतरद् दृष्टविषयमुपमानादि । नो खल्वपि शब्द इत्येतदुक्तम् । वाक्यार्थोऽपि पदार्थोपजनितो भवति नान्यथा । तदुक्तम् 'तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्' इति । तस्मादप्रमाणमूलत्वात् मिथ्याविज्ञानमेतत् । लौकिकेषु तु वाक्येष्वेवं गम्यते । तानि हि विज्ञातेऽर्थे प्रयुज्यमानान्यध्याहार्य पदानि गौणानि विपरिणतव्यवहितार्थानि च प्रयुज्यन्ते । तस्मात्तत्सादृश्यात् वचनावगम्येष्वप्यर्थेषु भवति तत्त्वरूपो मिथ्याप्रत्ययः, यथा मृगतृष्णादिषु । अपि च वर्तमानापदेशोऽयम् । न चायमर्थो वर्तमानः । तस्मान्न खादिरस्रुवादिसद्भावे तत्फलं भवेत् । तदेवमापतति । खादिरादौ सति भवति तत्फलं नापि भवति । असत्यपि भवति वा न वेति । नैवं विज्ञायते कुतस्तत्फलमिति । तस्मादेवंजातीयकेषूच्चरितेषु न कचित् प्रवृत्तिर्न कुतश्चिन्निवृत्तिरिति आनर्थक्यमक्रियार्थत्वात् । अर्थवादे तु सति भवति प्रयोजनं खदिरादेः स्रुवादिषु कर्मार्थेषु प्रयोजनवत्सु । यद्येषां क्रतुं प्रति प्रयोजनवत्ता न स्यात्तत एतदेव फलं कयाचित् शब्दवृत्त्या भवेद्वा न वेति विचार्येत । सति तु पारार्थ्ये नैव काचिच्छब्दप्रवृत्तिराश्रयितुं शक्यते । कैमर्थ्ये हि सा कल्प्येत । तस्मादेवंजातीयका अर्थवादाः । अर्थवादत्वे चावर्तमाने लक्षणया वर्तमानः शब्दः प्रशंसार्थ उपपत्स्यते ।

टुप्— उत्पत्तेश्चातत्प्रधानत्वात् इत्यनेन साध्यसाधनसंबन्धं निराकरोति । न जातिर्नापि जुहूर्विधीयते साधनतया । कुतः ? शब्दाभावात् । अर्थवादो विधायक इति चेदेवं साध्याभावः । उभयपरत्वे वाक्यभेदापत्तेः । तदुक्तम् 'विधौ च वाक्यभेदः स्यात्' इति । रात्रिसत्रवदिति चेत् । उच्यते । तत्रार्थान्तराभावाद्युक्तम् । इह त्वर्थान्तरमस्ति क्रतूपकारः । जुह्वा अपापश्लोकश्रवणं क्रियते इति शब्दात्तावत् संबन्धो नास्ति । यस्य पर्णमयी जुहूस्तस्यापापश्लोकश्रवणमिति, न चैतत् प्रत्यक्षेण गम्यते । व्यभिचरितत्वान्नानुमानम् । तस्मात् क्रतुसंबन्धात् न पुरुषार्थता ।

**फलं तु तत्प्रधानायाम् । ३ ॥**

**भाष्यम्**— अथ यदुक्तम् 'यथा खादिरं वीर्यकामस्य यूपं कुर्यात्, बैल्वमन्नाद्यकामस्य, पालाशं ब्रह्मवर्चसकामस्य' इति । युक्तं तेषु । विधिविभक्तिः कुर्यादिति वीर्यखादिरसंबन्धस्य विधात्री । न च वर्तमानापदेशिनी । तस्मात् तत्राविरोध इति । एवं हि पदवाक्यार्थन्यायविदः श्लोकं आमनन्ति— 'कुर्यात् क्रियेत कर्तव्यं भवेत् स्यादिति पञ्चमम् । एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणम् ॥' इति । विधिविभक्तिं हि विधायिकां लिङ्गं मन्यमानास्त एवं समामनन्ति । अस्ति चात्र विधिविभक्तिः । तस्मादनुपवर्णनमेतदिति ।

टुप्— ( साध्यसाधनत्वप्रतिपादनप्रधानायां श्रुतौ युक्तं फलमिति तत् व्याचष्टे– ) खादिरादीनां तूभयसंयोगात् युक्ता उभयार्थता ।

सोम— 'क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' इति सूत्रे प्रथमोपात्तक्रत्वर्थपदसूचिता क्रतुप्रयुक्तिः पादद्वयेन विचारिता । इदानीं चरमोपात्तपुरुषार्थपदसूचितफलप्रयुक्तिर्विचार्यते इति पादान्तरत्वं आनन्तर्यं च बोध्यम् । सूत्रार्थस्तु– यस्य पर्णमयीति द्रव्ये यदाङ्क्ते इति संस्कारे यत्प्रयाजा इज्यन्ते इत्यर्थकर्मणि च फलश्रुतिः अर्थवादः तेषां क्रत्वर्थात् इति ।

वि— 'जुह्वाः पर्णमयीत्वेन न पापश्रुतिरञ्जनात् । वैरिदृग्वृञ्जनं, वर्म प्रयाजैः, पुरुषाय किम् ॥ क्रतवे वाऽग्रिमो भानात् फलस्य न हि साध्यता । विभाति क्रतवे तस्मादर्थवादः फलं भवेत् ॥'

भाट्ट— अनारभ्य 'यस्य पर्णमयी जुहूर्भवति, न पापं श्लोकं शृणोति' इति श्रुतं द्रव्यम्, सोमे 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति श्रुतः संस्कारः, 'यत्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै' इति श्रुतं कर्म च नापापश्लोकश्रवणादिरूपफलार्थं कामशब्दाद्यभावेन वर्तमानापदेशस्य फलपरत्वानुपपत्त्या अर्थवादत्वस्यौदुम्बराधिकरणे साधितत्वात् । न च स्तुतिपरस्याप्यस्य लक्षणया फलपरत्वम्, एकस्यार्थद्वयपरत्वे वाक्यभेदात् । न च रात्रिसत्रवदुपस्थितत्वेन कामपदयुक्तपदान्तरकल्पनया फलपरत्वम्, तद्वदिह वाक्यादिप्रमाणेन जुह्वाद्यर्थत्वस्यावगततया फलाकाङ्क्षाविरहात् । न च कर्मोदाहरणे प्रकरणगम्यक्रत्वर्थत्वापेक्षया स्ववाक्योपस्थितफलपदकल्पनायामेव वैमृधवल्लाघवमिति वाच्यम्, विजातीयफलकल्पनातः क्लृप्तक्रतूपकारस्यैव फलत्वौचित्यात् । इष्यत एव हि प्रबलप्रमाणोपस्थितसाकाङ्क्षावश्यकवैकृताङ्गत्यागेनैव दुर्बलनिराकाङ्क्षप्राकृताङ्गग्रहणं विकृतौ क्लृप्तत्वमात्रेण । अतो नैते फलप्रयुक्ता उभयप्रयुक्ता वा । अपि तु क्रतुप्रयुक्ता एवेति फलकामनायामसत्यामप्यनुष्ठेयाः । औदुम्बराधिकरणसिद्धस्याप्यस्यार्थस्य प्रयुक्तत्वरूपप्रयोजनसूचनार्थं पुनरुक्तिः ।

मण्डन— 'द्रव्यादिफलवाक् स्तुत्यै ।'

शंकर— 'द्रव्यादौ न फलार्थता ।'

* **पर्णमयीन्यायेन** 'शोभतेऽस्य मुखं य एवं वेद' इत्यस्य फलपरत्वासंभवेन अर्थवादत्वं सिद्धान्त्यते । कौ. १।२।१।३. * उपासनासु फलश्रुतेः **पर्णमयीन्यायेन** अर्थवादतयोपासनानां क्रत्वर्थत्वेन समुच्चयनियमः इति आशङ्का । भामती. ३।३।३६।६१ ब्रसू.

* वेदान्तप्रतिपाद्यस्यात्मनः पारार्थ्यक्रत्वव्यभिचारयोरभावात् इह **पर्णमयीन्यायानुन्मेषेण** तदुज्जीवनार्थं अग्रिमश्रुतिलिङ्गादिवर्णनमित्येव व्याख्यातुं युक्तम् । परिमल. ३।४।१।३ ब्रसू.

* 'एतदुपोद्बलनार्थम्' इति टीकाग्रन्थः स्वयमस्वतन्त्रस्याचारादेः **पर्णमयीन्यायप्रापकमपेक्ष्य** उन्मेषपरत्वेन व्याख्यातुं न युक्तः, किन्तु देहातिरिक्तस्य वेदान्तप्रतिपाद्यस्यात्मनः परार्थत्वाभावात् अव्यभिचारक्रतुसंबन्धाभावाच्च इह पर्णमयीन्यायस्य अनुन्मेषप्राप्तौ आचारादिकमपेक्ष्य तदुन्मेषपरत्वेन व्याख्यातुं युक्तः । इति आशङ्का । परिमल. ३।४।१।३ ब्रसू.

* न तावदार्थवादिकं फलं ( सोमे दधिग्रहस्य ) **पर्णमयीन्यायविरोधात्** । भाट्ट. ४।४।५.

* **पर्यग्निकरणं** गुणकर्म, न प्रधानकर्म । भा. २।१।४।९–१२. * पर्यग्निकरणं दर्भज्वालया त्रिः प्रदक्षिणीकरणम् । वि. ३।६।७. * पर्यग्निकरणं पुरोडाशधर्मः । तदपि पशौ दृश्यते, 'आहवनीयादुल्मुकेन पशुं पर्यग्नि करोति' इति । भा. ८।२।२।१२.

* **पर्यग्निकरणान्ताङ्गरीतिः** उपाकरणमारभ्य पर्यग्निकरणान्तानि यानि पशोरङ्गानि तेषामेकः समुदायः इति । 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' अत्र सा रीतिः । वि. २।३।८.

* **पर्यग्निकरणान्ताङ्गरीतिविधानेन** तदुत्तराङ्गप्रतिषेधः अश्वमेधे परस्वयागे । भा. ९।४।१३।५१–५५.

* **पर्यग्निकरणगुणकत्वं** त्वाष्ट्रपात्नीवतस्य 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति । पर्यग्निकरणोत्तरभावीनि अङ्गानि तु नानुष्ठेयानि । वि. २।३।८.

* 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इत्यत्र पर्यग्निकरणान्तत्वस्य गुणस्य विधिः। वि. २।३।१८.

**पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत्। ९।४।१३।५१॥**

अश्वमेधे 'ईशानाय परस्वत आलभेत' इति प्रकृत्य 'पर्यग्निकृतानारण्यानुत्सृजन्ति' इति श्रूयते। अयं आरण्यानामालम्भः उत्सर्गार्थ एव, उत पर्यग्निकरणान्तैः संस्कारैः संस्कृत्य उत्स्रष्टव्याः इति कर्मशेषप्रतिषेधः इति विचारे पूर्वपक्षमाह। पर्यग्निकृतानां आरण्यानां उत्सर्गे श्रुते आलम्भस्य तादर्थ्ये तदर्थत्वं बहिर्निःसारणरूपोत्सर्गार्थत्वं प्रत्येतव्यम्। उपधानवत्। यथा अग्निचयने 'एतत् खलु साक्षादन्नं य एष चरुर्य एनमुपदधाति' इति उपधानार्थ एव चरुः उपादीयते। एवमत्रापि उत्सर्गार्थ एव आलम्भः कर्तव्य इति।

**शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत्। ५२॥**

कर्मशेषप्रतिषेधोऽयम्। उत्सर्गार्थ आलम्भो विधीयते इति पूर्वपक्षव्यावृत्त्यर्थो वाशब्दः। कर्मशेषप्रतिषेधः अर्थाभावात्। उत्सर्गार्थे आलम्भे अर्थाभावः आलम्भवाक्यस्य निष्प्रयोजनत्वं स्यात्। 'ईशानाय परस्वत आलभेत' इति वाक्यमनर्थकं भवेत्। तस्मात् आलम्भवचनेन दानमेव विधीयते। पर्यग्निकृतानिति वचनं अङ्गान्तरप्रतिषेधार्थम्। इडान्तवत्। 'इडान्ता आतिथ्या संतिष्ठते' इति इडोत्तराणामङ्गानां प्रतिषेधस्तद्वत्। तस्मादीशानवाक्यं यागविधिः उत्सर्गवचनं शेषकर्मप्रतिषेधार्थम्।

**पूर्ववत्त्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते। ५३॥**

यथा अश्वमेधे 'ईशानाय परस्वत आलभेत' इति प्रकृत्य 'पर्यग्निकृतानारण्यानुत्सृजन्ति' इति श्रुतम्, तथा ऐकादशिन्यां 'त्वाष्ट्रं पात्नीवतमालभते' इति प्रकृत्य 'पर्यग्निकृतं पात्नीवतमुत्सृजति आज्येन शेषं संस्थापयति' इति श्रूयते। इदं यागद्वयं सदृशम्। तत्र आज्यद्रव्यकपात्नीवतयागः पात्नीवतपशुयागतुल्यः, देवतासाम्यात्। तत्र अप्रवृत्ते अप्रस्तुते यागे 'शेषं संस्थापयति' इत्यत्र 'संस्थापयति' इति, 'शेषम्' इति च शब्दः नोपपद्येत। शब्दस्य पूर्ववत्त्वात् प्रवृत्तिपूर्वकत्वात् यागप्रवृत्तिपूर्ववत्त्वात्। प्रकृते ईशानवाक्यं यदि यागविधिः पर्यग्निवाक्यं च पर्यग्निकरणादुत्तराङ्गप्रतिषेधकं स्यात् तदैव तुल्यश्रुतित्वात् पात्नीवतवाक्यं तदुत्तरपर्यग्निवाक्यं पात्नीवतयागस्य पर्यग्निकरणोत्तराङ्गाभावात् 'आज्येन शेषं संस्थापयति' इति कर्मान्तरविधानं च उपपद्यते। एवं च ईशानवाक्यं यागविधिः पर्यग्निकरणवाक्यं च कर्मशेषप्रतिषेधार्थं इति सिद्धम्।

**प्रवृत्तेर्यज्ञहेतुत्वात् प्रतिषेधे संस्काराणामकर्म स्यात् तत्कारितत्वाद् यथा प्रयाजप्रतिषेधेऽग्रहणमाज्यस्य। ५४॥**

आलम्भ उत्सर्गार्थ एवेति पूर्वपक्षे दोषमाह सिद्धान्ती। यदि पशुद्रव्यस्य उत्सर्ग एव विधीयेत ततः संस्काराणां उपाकरणादीनामपि अकर्म स्यात् प्रवृत्तेः संस्कारप्रवृत्तेर्यज्ञहेतुत्वात्। यागप्रतिषेधे यागाभावे किमिति संस्काराः क्रियेरन्, तेषां तत्कारित्वात् यज्ञकारित्वात्। प्रतिषेधे संस्काराणां प्रवृत्तेर्यज्ञहेतुत्वात् तत्कारित्वात् संस्काराणामकर्म स्यात्। यथा उपसत्सु 'अप्रयाजास्ता अननुयाजाः' इति प्रयाजप्रतिषेधे प्रयाजार्थस्य आज्यस्य अग्रहणं ग्रहणं न क्रियते, तथा यागाभावे यागार्थाः संस्कारा अपि न क्रियेरन्। न चेदं युक्तम्। तस्मात् ईशानवाक्ये यागविधिरेव स्वीकर्तव्यः, संस्काराश्च कर्तव्याः। शेषकर्मप्रतिषेधस्तु उत्सर्गविधानात्।

**क्रिया वा स्यादवच्छेदादकर्म सर्वहानं स्यात्। ५५॥**

'पर्यग्निकृतानारण्यानुत्सृजति' इत्यत्र यदि यागस्य अकर्म स्यात्, तदा सर्वहानं सर्वस्य संस्कारादिक्रियामात्रस्यैव हानं त्यागः स्यात्। तच्चायुक्तम्। तस्मात् अवच्छेदात् पर्यग्निकरणोत्तराङ्गमात्रस्य व्यवच्छेदात् विहितदेवतोद्देशेन द्रव्यत्यागरूपस्य यागस्य पर्यग्निकरणान्तस्य च संस्कारकाण्डस्य क्रिया अनुष्ठानं स्यात्। तस्मात् ईशानवाक्येन यागविधिः उत्सर्गवाक्येन च

कर्मशेषानुष्ठानप्रतिषेधः इति सिद्धान्तः । वाशब्दः पक्षान्तरमाह । के.

* 'पर्यग्निकृतानामुत्सर्गे०' (९।४।१३।५१) इत्यत्र पर्यग्निकृतानुवादेन उत्सर्गविधिः उत्सर्गानुवादेन वा पर्यग्निकृतविधिः इति चिन्तयिष्यते । सु. पृ.९३७.

**पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः, श्रुतिसामान्यादारण्यवत्, तस्माद् ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् । ११।२।१२।५१ ॥**

वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते– 'तान् पर्यग्निकृतानुत्सृजन्ति, ब्रह्मसाम्नि आलभन्ते' इति । अत्र पर्यग्निकृतानां प्राजापत्यानां प्रजापतिदेवताकानां पशूनां उत्सर्गे श्रूयमाणे कर्मोत्सर्गः कर्मण एव उत्सर्गः प्रत्येतव्यः । आरण्यवत् श्रुतिसामान्यात्, अश्वमेधे यथा 'पर्यग्निकृतानारण्यानुत्सृजन्ति' इति श्रुतिः तत्समानैव प्रकृता वाजपेयगता श्रुतिः । एवं श्रुतिसामान्यात् आरण्यवत् प्राजापत्यानामपि कर्मोत्सर्गः । यस्मात् पूर्वं कर्मोत्सर्गः तस्मात् ब्रह्मसाम्नि ब्राह्मणाच्छंसिसामकाले चोदनापृथक्त्वं कर्मान्तरस्य चोदना स्यात् । पूर्वं सप्तदश पशवः उत्स्रष्टव्याः ब्राह्मणाच्छंसिसामकाले च अपरे सप्तदश पशवः आलब्धव्याः । इति पूर्वः पक्षः ।

**संस्कारप्रतिषेधो वा, वाक्यैकत्वे क्रतुसामान्यात् । ५२ ॥**

सिद्धान्ती आह । नायं कर्मशेषप्रतिषेधः किन्तु संस्कारप्रतिषेधः प्राप्तावसराणां संस्काराणां तदानीं प्रतिषेधः वाक्यशेषेण च ब्रह्मसामकाले प्रतिप्रसवः । क्रतुसामान्यात् क्रतोरेकत्वेन 'पर्यग्निकृतानुत्सृजन्ति' इत्यस्य 'ब्रह्मसाम्न्यालभन्ते' इत्यस्य च वाक्यैकत्वे सति संस्कारप्रतिषेधः प्रत्येतव्यः । येषामेव पूर्वमुत्सर्गस्तेषामेव परस्तात् आलम्भः । तस्मात् आलम्भोत्कर्षः ।

**वपानां चानभिघारणस्य दर्शनात् । ५३ ॥**

संस्कारप्रतिषेधे हेत्वन्तरमाह सिद्धान्ती । वपानां अनभिघारणस्य अभिघारणाभावस्य दर्शनात् संस्काराणां प्रतिषेधो ज्ञायते । 'रुव्या वा एतर्हि वपा यदनभिघृता, ब्रह्म वै ब्रह्मसाम, यद् ब्रह्मसाम्न्यालभते तेनारुव्याः, तेनाभिघृताः' इति । रुव्या रूक्षा । यदि संस्कारप्रतिषेधः ततो जुह्वाः सवनीयप्रचारेण रेचितत्वात् प्रयाजशेषो नास्ति, तदभावात् अनभिघृतत्वं युज्यते । यदि तु कर्मप्रतिषेधः स्यात् ततो ब्रह्मसाम्नि आलम्भः कर्मान्तरे तत्र प्रयाजाः पुनरिज्येरन्, तेषां शेषः स्यात्, तेनाभिघारणं स्यात् इति अनभिघारणं नोपपद्येत । ततश्च संस्कारप्रतिषेधः, तस्मात् प्राजापत्यानां पशूनां ब्रह्मसामकाले आलम्भोत्कर्षमात्रविधानमिति सिद्धान्तः । के.

* **पर्यनुयोगो** नाम स भवति, यः स्वपक्षं साधयति विपक्षस्य च प्रतीपमाचरति । भा.३।१।६।१३ पृ. ६९४.

* **पर्यायः** । नहि यो यत्पर्यायः स तेनैव सह प्रयुज्यते । वा. १।२।१।१२ पृ. ३२७. * दर्शपूर्णमासादीनां सर्वकामार्थता **पर्यायेणेति** निर्णयः । एकः प्रयोगः एकस्मै फलाय, अपरः अपरस्मै । भा. ४।३।११।२५–२६. * **पर्यायाणां** सहाप्रयोज्यत्वस्य आनर्थक्यापत्तिप्रयुक्तत्वात् पर्यायत्वस्वरूपस्य अप्रयोजकत्वम् । सु. पृ. ५६०.

* '**पर्यास** इति चान्ताख्या' (५।३।४।८) अन्तिमस्तृचः पर्यासः । ज्योतिष्टोमे बहिष्पवमाने 'पवमानस्य ते कवे०' इति तृचः पर्यासः । वि. ५।३।४.

* **पर्यासोत्तरकालता** बहिष्पवमाने आगन्तूनां स्तोमानाम् । माध्यंदिनार्भवपवमानयोस्तु गायत्र्यादिष्वेव निवेशः साम्नाम् । भा. ५।३।४–५।७–१४.

* **पर्यासशब्दश्चान्तवचनो** लोके दृश्यते, यथा क्षेत्रपर्यासः नदीपर्यासः इति । भा. ५।३।४।८.

* **पर्युदस्तप्रतिप्रसवविधिः** (भट्टसोमेश्वरमते) 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इत्यस्य पर्युदासत्वात् तत्प्रतिप्रसवः 'अग्निष्टोमे प्रवृणक्ति' इति । बाल. पृ. १६.

* **पर्युदासः** अकर्तव्यत्वोक्त्यर्थत्वाभावः इति 'विधीनामेकदेशः स्यात्' इति सूत्रेण अविकल्पाय दशमे (१०।८।१।४) सिद्धान्तितम् । बाल. पृ. ९९. * पर्युदासः अनुयाजमहापितृयज्ञयोः येयजामहस्य होतृवरणस्य च । भा. १०।८।१।१–४. * पर्युदासोऽयं न निषेधः 'नेक्षेतोद्यन्तमादित्यम्' इति । प्रजापतिव्रतेषु । के. ४।१।३।३–६. * पर्युदासः कर्तव्यत्वाकर्तव्यत्वयोः

उदासीनः । बाल. पृ. ९९. * पर्युदासः ज्योतिष्टोमे पुरुषार्थदानपाकहोमानां दीक्षितकर्तृकत्वेन । भा. १०।८।७।१२–१५. * पर्युदासः तदन्यमात्रसंकोचनार्थः । सु. १।२।२ पृ. ८. * पर्युदासः दीक्षितस्य दानहोमपाकप्रतिषेधः । भा. १०।८।७।१२–१५. * पर्युदासः नानुयाजेषु इत्यादौ । प्रतिषेधे सति शास्त्रस्य भ्रान्तिः कल्पनीया, विकल्पापत्तेः । द्विरदृष्टकल्पना च । प्रतिषेधादक्रियायां कोऽप्युपकारो भवतीति, विधौ क्रियायाम् । तस्मात् पर्युदासः । तत्र लक्षणा केवला, नादृष्टकल्पना । अदृष्टकल्पनायाश्च लक्षणा ज्यायसी । टुप्.१०।८।१।४, * पर्युदासः नानुयाजेषु इत्यादौ । 'समर्थः पदविधिः' इति समर्थयोः समासः । सामर्थ्यं च यदि लिङ्गसंख्यादिकं नापेक्षते राजशब्दः ततः स्यात् । ततः पुरुषेण समस्यते । तस्माल्लिङ्गसंख्यावियुक्तः श्रूयमाणः समासे अवयवार्थो गम्यते, प्रतीतेः तुल्यत्वात् । एवं सत्येकः अर्थः । तस्मादुभयोरनुगमः कर्तव्यः । उभयोश्चानुगमाद्वाक्ये पर्युदासः सिद्धः । १०।८।१।४. * पर्युदासः 'नार्षेयं वृणीते' इति महापितृयज्ञे । भा. १०।८।१।१–४, * पर्युदासः 'न होतारं वृणीते' इति महापितृयज्ञे । १०।८।१।१–४. * पर्युदासः नञर्थः अन्योन्याभावः । तद्भिन्नत्वे सति तत्सदृशत्वं पर्युदासः । के. पर्युदासो नानाविधः मीमांसाबालप्रकाशे सूक्ष्मतया विवेचितः । तच्च सर्वं 'पर्युदासविधिः' इति बिन्दौ द्रष्टव्यम् । के. * पर्युदासः पुरुषार्थदानपाकहोमेषु दीक्षितकर्तृकत्वस्य । १०।८।७. मीको. पृ. २३०३ 'नदीक्षिताधिकरणम्' इत्यत्र द्रष्टव्यम् । * पर्युदासः भावनाऽतिरिक्ते नञः संबन्धात्, 'नेक्षेतोद्यन्तमादित्यम्' इत्यत्र । भाट्ट. ४।१।३. * 'न कलञ्जं भक्षयितव्यम्' इति मम तु पर्युदास एव । उपश्लेषलक्षणया श्रुत्या भक्षयतेः कर्तव्यतां तव्यो विदधाति । नकारश्च कर्मव्यवहितत्वात् न कर्तव्यतावचनेन संबध्यते । तस्मात् प्रच्युतः अन्येन संबध्यमानः पर्युदासो भवति । तत्र नायं कलञ्जेन संबध्यते । किं कारणम् ? असमस्तत्वात् । सुबन्तयोः समासे सति पर्युदासो भवति, नासमासे । अतस्तस्मात् पर्युदस्तो धातुना संबध्यते । तत्र सुबन्तत्वाभावाभावात् समासो नास्ति । तस्मात् अभक्षणं कलञ्जादिविशिष्टं फलार्थिना कर्तव्यम् । टुप्. ६।२।५।१९. * 'न केसरिणो ददाति' इति नायं प्रतिषेधः किन्तु पर्युदासः । तत्प्रकारश्च दशमे ( १०।८।१ ) 'येमजामहे' इति मन्त्रोदाहरणेन व्युत्पादयिष्यते । ततस्तेन ( पर्युदास– )न्यायेन अश्वपर्युदासे सति अश्वव्यतिरिक्तं सर्वस्वं देयमिति विधिनिषेधयोः एकवाक्यतालाभात् नास्ति अश्वस्य पाक्षिकमपि दानम् । वि. ६।७।३. * नञ्पदसमभिव्याहृतधातोः स्वविरुद्धार्थे लक्षणा यत्र वाक्ये, स पर्युदासः । वृ. ६।२।५।२१. * पर्युदासेन प्राकृतं बाध्यते । बाल. पृ. १३१. * पर्युदासे तदन्यमात्रसंकोचः । मीन्या.

* पर्युदासाधिकरणे ( १०।८।१ ) नञर्थस्य लाक्षणिकत्वमुक्तम् । वाक्यार्थ. पृ. २०. * श्रुत्यन्तरस्थो विशेषः श्रुत्यन्तरे अनाश्रितश्चेत् विकल्पः सर्वत्र स्यात्, स चायुक्तः सत्यां गतौ इति पर्युदासाधिकरणे व्युत्पादितम् । न्यायनि. ३।३।१६।२७ ब्रसू.

* ननु 'मृडमृद०' (पा. १।२।७) इत्यादेः यथा 'न क्त्वा सेट्' (पा. १।२।१८) इति निषेधनिषेधकत्वं तद्वत् सगुणवाक्यानामपि निर्गुणवाक्यबाधकत्वं किं न स्यादिति चेन्न । दृष्टान्ते पर्युदासाधिकरणन्यायेन मृडमृदेत्यादिउत्तरविहितसेट्क्त्वाप्रत्ययकित्त्वनिषेधपरत्वेन एकवाक्यतायां वाक्यभेदेन निषेधनिषेधकत्वाकल्पनात् । अद्वैत. २।४।१५९–१६१.

* 'दीक्षितो न जुहोति' इत्यत्र चोदकप्राप्तक्रत्वर्थहोमप्रतिषेधे पर्युदासाधिकरणपूर्वपक्षन्यायेन अनिवार्यो विकल्पः । परिमल. ३।३।१५।२६ ब्रसू.

**पर्युदासन्यायः** । येयजामहन्यायः । अनुयाजमहापितृयज्ञयोः येयजामहहोतृवरणयोः पर्युदासः ॥

**प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् । १०।८।१।१ ॥**

भाष्यम्— प्रतिषेधः श्रूयते चोदकेन प्रदिष्टे धर्मे, क्वचिदनारभ्यवादेन प्राप्ते । चोदकेन प्रदिष्टे महापितृयज्ञे, 'न होतारं वृणीते नाऽऽर्षेयम्' इति । तथा अनारभ्यवादेन प्राप्ते 'आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति

पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः, एष वै प्रजापतिः सप्तदशो यज्ञेष्वन्वायत्तः' इति। ततः 'नानुयाजेषु येयजामहं करोति' इति। तत्रायमर्थः सांशयिकः किं प्रदेशानारभ्यवादयोः प्रतिषेधः, स च विकल्पः उत पर्युदास इति। किं प्राप्तम्? विकल्प इति, प्राप्तिप्रतिषेधयोः प्रमाणवत्त्वात्। उभौ हि प्राप्तिप्रतिषेधौ प्रमाणवन्तौ। प्राप्तिस्तावत् प्रमाणवती महापितृयज्ञेन यजेत प्रकृतिवदिति। तथा, 'एष वै प्रजापतिः सप्तदशो यज्ञेष्वन्वायत्तः' इति भवति वाक्यं प्राप्तेः प्रतिषेधमनपेक्ष्यमाणं प्रमाणभूतम्। तथा प्रतिषेधः प्रमाणवान् 'न होतारं वृणीते, नाऽऽर्षेयम्, मृत्योरेवैनानुत्सृजति' इति। तथा, 'नानुयाजेषु येयजामहं करोति' इति। सर्वेषु यजिषु येयजामहक्रिया प्राप्ता, न करोत्यनुयाजेष्विति प्रतिषिध्यते। 'येयजामहः कर्तव्यः' इति वचनात् सयेयजामहकः प्रयोगः फलवानिति गम्यते। 'न कर्तव्यो येयजामहः' इति वचनादयेयजामहकः प्रयोगः फलवानिति गम्यते। उभयोः प्रामाण्यादुभयथाऽपि फलमिति गम्यते। तस्मात् विकल्पः। एवं होत्रार्षेयवरणेऽपि। तस्मात् प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात्।

टुप् — 'न होतारं वृणीते' 'नानुयाजेषु येयजामहं करोति' इत्यत्र पूर्वः पक्षः। अयं नञ् श्रुत्या कर्तव्यतां प्रतिषेधति। ये धातुनामनी, ते अपि तामेव विशेषयतः। एवं सर्वाणि पदानि स्वार्थवृत्तानि भवन्ति प्रतिषेधे। पर्युदासे तु लक्षणावृत्तानि भवन्ति, यथा 'अब्राह्मणमानय' इति अत्र नञ् ब्राह्मणपदं च अन्यस्य (क्षत्रियादेः) लक्षणार्थमुच्चार्येते (न स्वार्थम्)। एवमिहापि नञ्शब्दः अनुयाजशब्दश्च अन्यस्य यजतेर्लक्षणार्थौ उच्चार्येयाताम्। तस्मात् पर्युदासो न ग्रहीतव्यः। ननु प्रतिषेधेऽपि पर्युदासफलं (अविकल्परूपं) भवत्येव, यथा 'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इति। अत्र ब्राह्मणजातिर्वर्णैरुपात्ता, तदुपलक्षिता व्यक्तिः (न वर्णोपात्ता)। कौण्डिन्ये तु उपात्ता (व्यक्तिः)। तत्र यत् दधिदानं अवर्णं (ब्राह्मणपदवाच्यजातिलक्षितव्यक्त्युद्देशेन विधीयमानं लाक्षणिकं) कौण्डिन्ये प्राप्नोति, तत् वर्णेन (कौण्डिन्यपदोपात्तव्यक्तिविशेषोद्देशेन विधीयमानेन श्रौतेन) तक्रदानेन (विरोधात्) बाध्यते। एवमत्रापि यज्ञसामान्यं ('यजतिषु येयजामहं करोति' इति) वर्णोपात्तम्, विशेषो लक्षणया। 'नानुयाजेषु' इति वर्णोपात्त एव (यज्ञ-)विशेषः। तत्र (विशेषे) श्रूयमाणः प्रतिषेधः (शाब्दत्वेन) सामान्यं (लक्षणावशात् प्रवर्तमानं) बाधते। चोदकस्तु अश्रूयमाणः (एव) कल्पनीयः। कल्पितोऽपि (असौ) अङ्गानि सामान्येन ब्रवीति। (तेन) 'न होतारं वृणीते' इति (एतत्) विशेषेण श्रूयमाणं उपमितकल्पितसामान्यप्राप्तिं बाधते। (इति दूरोत्सारितो विकल्पः)। उच्यते। नकारः (अयं) निवृत्तिं ब्रवीति। सा च (निवृत्तिः) प्रवृत्तिमन्तरेण न संभवति। (सा तु) सामान्यशास्त्रेण वा भवेत् विशेषशास्त्रेण वा। (ततः किं? इत्यत आह—) यदि अनुयाजेषु येयजामहः (विहितः) न स्यात्, प्रवृत्तिरेव (अत्र) न स्यात्। (नह्यत्र विना शास्त्रेण रागतः प्रवृत्तिः संभवति)। एवं च प्रतिषेधस्य आनर्थक्यमेव स्यात्। (पुनश्चोदयति—) यथा तर्हि 'ब्राह्मणो न हन्तव्यः' इति (प्रवृत्त्यधीनोऽपि प्रतिषेधः, तामेकान्तेन बाधते) एवं (अत्रापि प्रतिषेधेन प्रवृत्तेर्बाधो) भविष्यति। (परिहरति—) नहि। (कुतः? तत्र हि) अर्थात् हननं प्राप्तं (यथेच्छं) कुर्या न वेति। (तत्र) यदा करोति, तदा प्रतिषिध्यते (न हन्तव्यः इति। किंच—) तत्र अर्थात् प्राप्तस्य शास्त्रेण नित्यबाधः (युक्तः)। इह (तु) द्वे (अपि) शास्त्रे। तेन द्वे अपि ग्रहीतव्ये। तयोः (च) विरोधात् विकल्पः। चोदकोऽप्येवमेव। अपि चैकस्य (शास्त्रस्य) कर्तव्यता प्रमेया, अपरस्य (तु) निवृत्तिः। तस्मात् (भिन्नविषयत्वात्) न बाध्यबाधकभावः (घटपटबुद्धिवत्)। तस्मात् विकल्पः। न चेदं (प्रतिषेधपक्षे विकल्पाभिधानं) पूर्वपक्षोक्तिमात्रं (किन्तु पारमार्थिकमेव)। तथा च सूत्रभाष्यकारौ आहतुः 'सर्वप्रतिषेधो वाऽसंयोगात् पदेन स्यात्' (९।४। २।२१) इति। तत्र (हि प्रत्यक्ष—) वचनेन प्रतिषिध्यते। ('न चतुस्त्रिंशदिति ब्रूयात्' इति।) आनुमानिकी प्राप्तिः प्रकरणाम्नानात्। (तथापि)

तत्र विकल्पः ( एव सिद्धान्तत्वेन ) अभ्युपगतः ( दुर्बलाऽपि प्राप्तिः तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलेति । ननु तत्र आनर्थक्यात् पाठस्य युक्तो मन्त्राङ्गीकारः । इह तु सामान्यचोदकयोः विषयान्तरेऽप्यवकाशसंभवात् नानर्थक्यम् । अत आह– ) नानर्थक्येन ( प्रमाणेन तत्र ऋचः अङ्गीकारः । कुतः ? ) आनर्थक्यं हि परित्यागे कारणं नोपादाने । तस्मात् युक्तो विकल्पः ।

**अर्थप्राप्तवदिति चेत् । २ ॥**

**भाष्यम्**— इति चेदवगम्यते विकल्पः स्यादिति । तन्न । अर्थप्राप्तवत्स्यात् । तद्यथा लोकेऽर्थप्राप्ते यत्र प्रतिषेधो भवति ' न विषं भक्षयितव्यम् , न सर्पायाङ्गुलिर्देया, न कण्टकः पादेनाधिष्ठेयः ' इति, अक्रियैव तस्यार्थस्य भवति, न विकल्पः ! तेन मन्यामहे विधिप्रतिषेधयोः प्रतिषेधो बलीयानिति । प्राप्ते हि विधौ प्रतिषेधो भवति । येन च नाम प्राप्ते यदुच्यते तत्तस्य बाधकं भवति । तस्मादक्रियैवानुयाजेषु येयजामहस्य, महापितृयज्ञे च होत्रार्षेयवरणस्येति ।

**न तुल्यहेतुत्वादुभयं शब्दलक्षणम् । ३ ॥**

**भाष्यम्**— नैतदेवम् । तुल्यो हि हेतुरिह प्राप्तेः प्रतिषेधस्य च । उभयं शब्दलक्षणम् , प्राप्तिरपि प्रतिषेधोऽपि । प्राप्तिरपि प्रतिषेधे प्राप्ते, प्रतिषेधोऽपि प्राप्तौ प्राप्तायाम् । लोके पुनरुभयमर्थलक्षणं प्रत्यक्षतो गम्यमानं गुणदोषकरम् । तत्र विधिप्रतिषेधयोर्यतरो गुणवान् सोऽनुष्ठीयते । न तु शब्दलक्षणे गुणदोषौ शक्येते अवगन्तुम् । तस्मात् यद्यद्वाक्येन प्राप्तं तत्तदुभयमवधार्येत । उभौ च प्राप्तिप्रतिषेधौ प्राप्नुतः । तस्माद्विकल्पस्तत्रतत्रेति ।

**अपितु वाक्यशेषः स्यादन्याय्यत्वाद् विकल्पस्य विधीनामेकदेशः स्यात् । ४ ॥**

**भाष्यम्**— अपित्विति पक्षव्यावृत्तिः । वाक्यशेषः स्यात् प्रतिषेधः प्रदेशानारभ्यविधानयोः । नैवमभिसंबन्धः, अनुयाजेषु येयजामहो न कर्तव्य इति । कथं तर्हि ? नानुयाजेष्विति नशब्दोऽनुयाजशब्देन सह संबध्यते, न करोतिना । किमतो यद्येवम् ? नानुयाजेष्वित्येतावदपरिपूर्णं वाक्यम् , तत् साकाङ्क्षं पूर्ववाक्यैकदेशेन संभन्त्स्यते । यदेतत् ' येयजामहं करोति ' इत्युक्तम् , तन्नानुयाजेषु । यावदुक्तं स्यात् अनुयाजवर्जितेषु यजतिषु येयजामहं करोतीति । तस्माद्विधिरेव पर्युदस्तानुयाजकः, नास्ति प्रतिषेध इति न विकल्पो भविष्यति । महापितृयज्ञेऽपि प्रकृतिवदितिवचनात् होत्रार्षेयवरणमिह कर्तव्यं प्राप्तम् । तदुच्यते प्रकृतिवत् कर्तव्यं वरणं वर्जयित्वेति । नशब्दोऽत्र वृणीतेरर्थेन संबध्यते । प्रत्ययार्थस्तु अनुवादः । यदत्र प्रकृतिवत् कर्तव्यं तत् वरणं वर्जयित्वेति । किमर्थं पुनरनुयाजैर्वृञ्धात्वर्थेन च नशब्दः संबध्यते इति ? उच्यते । अन्याय्यत्वाद्विकल्पस्य । अन्याय्यो हि विकल्पः । कथम् ? इह यजतिषु येयजामहं करोतीत्युच्यते । यद्येवमवगम्यते , न शक्यः स विना येयजामहेन यजतिरभिनिर्वर्तयितुम् । तत्र प्रतिषेधवचनमनर्थकम् । प्रतिषेधेऽपि विज्ञाते विधिवचनमनर्थकम् । तस्मादन्याय्यो विकल्पः । नन्वन्यतरस्य विधेरानर्थक्यप्रसङ्गाद्विकल्प आश्रयणीयो भवति । उच्यते । यत्रान्यतरदानर्थक्यमापद्यते, कल्पेतापि तत्र विकल्पः, यत्र न केन चिदपि प्रकारेणार्थवत्ता संभवति । इह त्वनुयाजसंबन्धपर्युदासेनार्थवत्ता । तस्मान्न विकल्पः । आह । नन्वनुयाजसंबन्धे नशब्दस्य समासः प्राप्नोति । नित्यो ह्यस्य नशब्दस्य सुबन्तसंबन्धेन समास इति वार्तिककारो भगवान् **कात्यायनो** मन्यते स्म । ' वावचनानर्थक्यं च स्वभावसिद्धत्वात् ' इति । नेति भगवान् **पाणिनिः** । स हि, ' विभाषा ' इति प्रकृत्य ईदृशं समासमुक्तवान् । सद्वादित्वाच्च पाणिनेर्वचनं प्रमाणम् । असद्वादित्वान्न कात्यायनस्य । असद्वादी हि विद्यमानमप्यनुपलभ्य ब्रूयात् । तस्मात् पर्युदास इति ।

**टुप्**— प्रतिषेधे ( सति ) शास्त्रस्य भ्रान्तिः कल्पनीया, विकल्पापत्तेः । द्विरदृष्टकल्पना च । प्रतिषेधादक्रियायां कोऽप्युपकारो भवतीति , विधौ क्रियायाम् । तस्मात् पर्युदासः । तत्र लक्षणा केवला ( नादृष्टकल्पना ) । अदृष्टकल्पनायाश्च लक्षणा ज्यायसी । ननु ' अर्थैकत्वात् ' ( २।१।१४।४६ ) इत्ययं न्यायोऽत्र नास्ति, येनैकवाक्यता स्यात् । उच्यते । सत्यमयं न्यायो नास्ति । किन्तु ( यथा ) ' दध्ना जुहोति ' इति होमः पूर्वेण

वाक्येन प्राप्तो विपरिवर्तते। तत्र दधि विधीयते, भवति चैकवाक्यत्वम्। एवमिहापि, येयजामहं विपरिवर्तमानमनूद्य पर्युदासार्थो विधीयते। पर्युदासस्थले पृथगाख्यातश्रवणात् पदैकवाक्यत्वासंभवेऽपि वाक्यैकवाक्यत्वं संभवत्येव। (तथा) चोदकेऽपि यत् प्रकृतिवत्पितृयज्ञेन यजेत तद्वरणवर्जमिति। अथवा येयजामहः सामान्येन प्राप्यमाण एवानुयाजवाक्येन विशेष्यते (अनुयाजवर्जे येयजामहं करोतीति)। पितृयज्ञेष्वेवमेव। अत्र ग्रन्थः 'नन्वनुयाजसंबन्धे नशब्दस्य समासः प्राप्नोति' इति। पर्युदासपक्षे समासः स्यात्। न चात्र समासः (येन पर्युदासः स्यात्)। तस्माद्विकल्प एवाऽऽश्रीयते। उच्यते। 'विभाषा' इति (अनेन) समासो वाक्यं वा भवति। यदि समासलक्षणमेवाऽऽश्रीयेत, राज्ञः पुरुषः इति अपप्रयोगः स्यात्। तस्मात् राज्ञः पुरुष इत्यपि साधु, राजपुरुष इत्यपि, उभयोरप्यनुगमात्। यत्रानुगमो नास्ति तत्रासाधुः प्रयोगः, यथा गावीति। तेनासत्यपि समासे स एवार्थः, समासेऽपि। तेनासमासत्वमदोषः। 'नित्यो ह्यस्य नञः सुबन्तसंबन्धे समासः' इति। कोऽभिप्रायः? भिन्नार्थावेतौ वाक्यसमासौ। वाक्येन पुंलिङ्गैकत्वविशिष्टस्य पुरुषः प्रतीयते। समासे तु न ज्ञायते किं द्वयोः पुंसोरुत बहूनामुत स्त्रिया उत नपुंसकस्येति। तस्मात् (वाक्यसमासौ) नैकार्थौ। गोशब्दे त्वेकोऽर्थः प्रतीयते। तत्र यस्यानुगमः स साधुरितरेऽपभ्रंशाः। (यथको गोणीशब्द आवपने साधुर्न सास्नादिमति)। अत्र राजपुरुष इति लिङ्गसंख्यावियुक्ते वाक्ये नित्यं समास एव साधुः। तद्युक्ते राज्ञः पुरुष इति वाक्यमेव। अत आह 'वावचनानर्थक्यं च स्वभावसिद्धत्वात्' इति। तेन पर्युदासो नास्ति, समासाभावात्। अत्रोच्यते। 'समर्थः पदविधिः' इति समर्थयोः समासः। सामर्थ्यं च यदि लिङ्गसंख्यादिकं नापेक्षते, राजशब्दस्ततः स्यात्। ततः पुरुषेण समस्यते। तस्माल्लिङ्गसंख्यावियुक्तः (श्रूयमाणः) समासे अवयवार्थो गम्यते, प्रतीतेस्तुल्यत्वात्। एवं सत्येकोऽर्थः। तस्मादुभयोरनुगमः कर्तव्यः। उभयोश्चानुगमाद्वाक्ये पर्युदासः सिद्धः।

**शा**— '**तत्र श्रुत्यर्थलाभाय प्रतिषेधोऽन्यथा पुनः। पदद्वयमपि ह्यन्यपरत्वाल्लक्षणा भवेत्॥**' इति प्राप्ते ब्रूमः। '**यत एव विकल्पोऽयं प्रतिषेधे प्रसज्यते। अतस्तत्परिहाराय पर्युदासाश्रयो वरम्॥**'

**सोम**— एवमस्पष्टयोः अर्थलोपप्रत्याम्नाननिबन्धनबाधयोः निरूपणानन्तरं अतिस्पष्टस्य प्रतिषेधनिबन्धनबाधस्य अस्मिन् पादे प्राधान्येन निरूपणमिति **पादान्तरत्वमानन्तर्यं च। सूत्रार्थस्तु**— प्रदेशे चोदकेन आर्षेयवरणातिदेशे येयजामहस्य अनारभ्यविधाने च सति 'नार्षेयम्' 'नानुयाजेषु' इति नञ् प्रतिषेधार्थकः। ततश्च विहितप्रतिषिद्धत्वात् विकल्पः इति।

**वि**— 'नार्षेयं न च होतारं नानुयाजेष्वितीदृशे। विकल्पः पर्युदासो वा, स्यादाद्यो वचनद्वयात्॥, अन्याय्यत्वाद् विकल्पस्य विध्यंशः सा निषेधगीः। तेनानुयाजवाक्यस्थस्तदर्थे पर्युदस्यति॥'

**भाट्ट**— तदेवमर्थलोपात् प्रत्याम्नानाच्च बाधो निरूपितः, प्रतिषेधादिदानीं निरूप्यते। महापितृयज्ञेऽतिदेशप्राप्तस्य होतृवरणस्य प्रतिषेधः श्रुतः 'न होतारं वृणीते' इति। तथा अनारभ्याधीतस्य 'आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः, एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः' इति यज्ञमात्रोद्देशेन विहितस्य येयजामहस्य 'नानुयाजेषु येयजामहं करोति' इति प्रतिषेधः श्रुतः। तयोः किं नित्यं होतृवरणादिबाधकत्वं उत विकल्पेनेति चिन्तायाम्, न तावदयं 'होतृवरणव्यतिरिक्तं प्रकृतिवत् कुर्यात्' 'अनूयाजव्यतिरिक्तेषु च यज्ञेषु येयजामहः कर्तव्यः' इत्येवंविधः पर्युदासः, अत्यन्ताभाववाचिनो नञः प्रधानभूतभावनान्वयसंभवे अन्योन्याभाववाचित्वमङ्गीकृत्य गुणभूतधात्वर्थान्वयाङ्गीकारे प्रमाणाभावात्। अन्योन्याभाववाचकस्य नञस्तद्वति पदार्थान्तरे लक्षणापत्तेश्च। अतः प्रतिषेध एवायम्। तस्य च प्राप्तिसापेक्षत्वात्, प्राप्तेश्च प्रकृते शास्त्रीयत्वात्, शास्त्रप्राप्तस्य चात्यन्तं बाधायोगात् अगत्या ग्रहणाग्रहणवद्विकल्पः। ननु प्रतिषेधस्य प्राप्तिसापेक्षत्वे

किं बीजम् ? न तावदभावज्ञानस्य प्रतियोगिज्ञानाधीनत्वात् प्रतियोगिप्राप्त्यर्थं तत्, येयजामहादिरूपस्य प्रतियोगिनो अनूयाजादिषु प्रसिद्ध्यभावेऽपि यागान्तरेषु प्रसिद्धत्वात्। नह्यनुयोगिनि प्रतियोगिप्रसिद्धिरभावबोधे कारणम्, ह्रदे वह्निप्रसिद्ध्यभावेऽपि ह्रदे वह्निर्नास्तीति बोधस्यानुभविकत्वात्। अत एवोद्देश्यप्रसिद्ध्यर्थमेव प्राप्तिसापेक्षत्वमित्यप्यपास्तम्, निषेधाधिकारे प्रतियोगिनमुद्दिश्यानुयोगिवृत्तिनञर्थस्यैव विधेयत्वात्। न च तथापि प्रसक्तपुरुषनिवृत्तिप्रयोजनकत्वात् निषेधस्य प्रसक्त्यभावे वैयर्थ्यापत्तेः तत्परिहारार्थं प्राप्त्यपेक्षत्वमिति वाच्यम्। निषेधाभावे सामान्यशास्त्रेण भ्रान्त्या आहवनीयशास्त्रेणेव पदहोमे आहवनीयस्य अनूयाजादिषु येयजामहादीनां प्रसक्तत्वात्। अतश्च यथैव पदशास्त्रं सामान्यशास्त्रस्य तात्पर्यग्राहकं सत् तस्य तद्व्यतिरिक्तविषयतां कल्पयति, एवं निषेधशास्त्रमपि सामान्यशास्त्रस्य तद्व्यतिरिक्तविषयत्वे तात्पर्यग्राहकत्वादेव सार्थकम्। न च सामान्यशास्त्रानालोचनेऽपि पदशास्त्रस्य पदविधायकत्ववत् निषेधशास्त्रस्य प्रसक्त्यभावेन शाब्दबोधाजनकत्वम्, पदशाब्दबोधवदेव प्रतियोगिप्रसिद्धिमात्रेणानुयोगिवृत्त्यभावविषयकशाब्दबोधोपपत्तेः। अतश्च भ्रान्तिप्राप्तस्यापि निषेधोपपत्तेः न प्राप्तेः शास्त्रीयत्वेन विकल्पः। इति चेन्न। सकलकारकान्वितभावनारूपाख्यातार्थे एव प्रतियोगितासंसर्गेण नञर्थाभावस्योत्सर्गेणान्वयात् अनूयाजाधिकरणकयेयजामहानुकूलकृतेरेव प्रतियोगितया तत्प्रसिद्धिं विना शाब्दबोधाजनकत्वेनैवास्य तत्प्राप्तिसापेक्षत्वात्। नहि यत्नमात्रस्य प्रतियोगिता संभवति। अतश्च कारकविशिष्टायास्तत्त्वावश्यम्भावे विनिगमनाविरहात् सर्वविशिष्टाया एव तत्। अत एव न येयजामहमात्रस्यैव प्रतियोगित्वं नञः प्रधानभूताख्यातार्थान्वयसंभवे गुणभूततदन्वयस्यान्याय्यत्वात्। अत एव यत्र 'ह्रदे वह्निर्नास्ति' 'नान्तरिक्षे न दिवि' इत्यादौ तद्बाधः तत्रागत्या वह्न्यादेरेव प्रतियोगित्वमङ्गीकृत्य तदुद्देशेनैवानुयोगिवृत्त्यभावविधानम्। यत्र तु न बाधः तत्र निरुक्तकृतेरेव प्रतियोगित्वात् तदुद्देशेनैवाभावमात्रविधिः। अत एव प्रतियोगिप्रसिद्ध्यर्थमिवोद्देश्यप्रसिद्ध्यर्थमपि प्राप्तिसापेक्षता, निषेधस्य तद्व्यतिरेकेण शाब्दबोधस्यैवाजननात्। सा च प्राप्तिः क्वचिद्रागतः, क्वचित् शास्त्रतः। आद्या 'न कलञ्जं भक्षयेत्' इत्यादौ। अन्त्या प्रकृते। सा च प्रमारूपैवेति युक्तो विकल्पः। नहि भ्रमात्मकप्रसिद्धिमादाय तत्संभवः। निषेधशास्त्रानालोचने सामान्यशास्त्रमात्रालोचनेन भ्रमसंभवेऽपि निषेधशास्त्रस्यैव प्रथमालोचने विशेषदर्शनसत्त्वेन सामान्यशास्त्रतो भ्रमानुपपत्तेः, वस्तुतस्तादृशप्रतियोगिनोऽप्रसिद्ध्या तदुद्देश्यकतदभावप्रमानुपपत्तेश्च। न च यस्य सामान्यशास्त्रमात्रालोचनेन भ्रमात्मकेष्टसाधनताज्ञानादनूयाजेषु येयजामहकृतिरुत्पन्ना, तत्पुरुषीयकृतेरेव प्रसिद्धायाः अनूयाजाधिकरणकयेयजामहकृतित्वेन प्रतियोगित्वात् तदभावविषयकप्रमोपपत्तिरिति वाच्यम्। एतदात्मनि तत्पुरुषीयकृत्यभावस्य स्वतःसिद्धत्वेन तदंशे विधिवैयर्थ्यात्, पुरुषान्तरीयकृत्यभावस्य एतत्पुरुषीयनिवारणाप्रयोज्यत्वानुपपत्तेश्च। अभावे तत्प्रयोज्यत्वं हि निवारणानुमेयानिष्टसाधनताज्ञानस्य अभावप्रतियोगिभूतकृतिसामग्रीविघटकत्वम्। न चान्यदीयकृतिसामग्री बलवदनिष्टानुबन्धित्वज्ञानाभावरूपा अन्यदीयानिष्टसाधनत्वज्ञानात् विघट्यते। अतश्च एतदात्मनिष्ठकृतिसामग्र्यैव एतदात्मनिष्ठानिष्टानुबन्धित्वज्ञानात् निवर्तनीया। सा च निषेधस्य प्रथमालोचने विशेषदर्शनवत्त्वात् भ्रमात्मिका न संभवति। तज्जन्यकृतिस्तु प्रतियोगिभूता अप्रसिद्धैव। अतोऽवश्यं निषेधशास्त्रस्य प्रथमालोचनेऽपि तदपेक्षितप्रतियोगिप्रसिद्ध्यर्थं सामान्यशास्त्रमालोच्यैव अनूयाजाधिकरणकयेयजामहानुकूलकृतित्वावच्छिन्नकृतेरेव सामान्यशास्त्रप्रमितायाः प्रतियोगितामङ्गीकृत्य निषेधशास्त्रार्थावधारणं इत्यङ्गीकर्तव्यम्, अतश्च सामान्यशास्त्रप्रमितस्याप्यत्यन्तं बाधायोगात् विकल्पो युक्त एव। तदा हि सामान्यशास्त्रेण येयजामहस्य फलभूमार्थिने अनूयाजसादूगुण्यजनकत्वानुमानात्, निषेधेन च फलभूमार्थित्वाभावे येयजामहाभावेऽपि इतराङ्गैः सादूगुण्यजनकत्वस्यानुमानात् उभयोर्ग्रहणाग्रहणवत् अविरोधः। रागप्राप्तनिषेधे तु रागेण कलञ्जभक्षणादौ इष्टसाधनत्वावगमेन प्रसक्तायाः कलञ्जभक्षणानुकूलकृतेरभावे निषेधशास्त्रेण

निवारणाविषयत्वेनावगते अर्थात्तद्विषयस्य कलञ्जभक्षणादेरनिष्टसाधनत्वाक्षेपात् नित्यं तद्भक्षणे अनिष्टोत्पत्तिर्नित्यं च अनिष्टद्वेषात् तन्निवृत्तिरिति वैषम्यम् । अतो होतृवरणयेयजामहादीनां महापितृयज्ञादिषु न नित्यं बाधः । इति प्राप्ते, यत एव प्रतिषेधपक्षे विकल्पोऽष्टदोषदुष्टः, अत एव पर्युदासाङ्गीकरणम् । पर्युदासत्वं चाख्यातार्थव्यतिरिक्तप्रतियोगिताकाभावबोधकवाक्यत्वम्, न तु नञः आख्यातातिरिक्तान्वयित्वम् 'न होतारं वृणीते' इत्यत्र होतृवरणव्यतिरिक्तत्वरूपस्य नञर्थस्य आख्यातार्थे एव अन्वयात् । न च तत्रापि 'न होतारं वृणीते' इत्यत्र नञर्थस्यात्यन्ताभावस्यैव होतृवरणे प्रकारत्वेनान्वयः । नञः अन्यान्वयस्य व्युत्पन्नत्वेऽपि अभावप्रतियोगिभूतस्य वरणस्य कृतिसाध्यत्वाभावेन भावनान्वयानुपपत्तेः । अत एव न तस्य विशेषत्वमपि, धात्वर्थस्य नञर्थे अन्वयाव्युत्पत्तेश्च । अतो नञोऽन्योन्याभाववाचकत्वस्यापि सत्त्वात् तत्परत्वमेवाङ्गीकर्तव्यम् । तत्रापि नञ्धातुभ्यां लक्षणया वरणव्यतिरिक्तपदार्थजातस्यैव बोधनात्तस्यैवाख्यातार्थान्वयः । यद्यपि च 'तदन्यतद्विरुद्धतदभावेषु नञ्' इति प्रसिद्धेरन्योन्याभाववत्यपि शक्तिः । तथापि धात्वर्थस्य तत्रान्वयाव्युत्पत्तेर्लक्षणा आवश्यक्येव । सा च विकल्पापेक्षया न दोषः । एवं नानूयाजेष्वित्यत्रापि ।

तत्र च यद्यपि नञ्येयजामहपदाभ्यां येयजामहव्यतिरिक्ताङ्गजातस्य लक्षणामङ्गीकृत्य अनूयाजोद्देशेन तद्विधिरूपः पर्युदासोऽपि संभाव्यते । तथापि येयजामहव्यतिरिक्तत्वस्य विशेष्यापेक्षायां विशेष्यभूतानामङ्गानामनारभ्यविधौ अनुपस्थितत्वात् नासौ अङ्गीक्रियते । अपि तु नञनूयाजपदाभ्यामेवानूयाजव्यतिरिक्तं लक्षयित्वा तस्य सप्तम्या उद्देश्यत्वाङ्गीकारात् तदुद्देशेन येयजामहविधिरूपः एव, अव्यवहितत्वात्, तद्विशेष्यस्य यागान्तरस्य सामान्यविधिनोपस्थितत्वात् । अत एवोभयत्रापि पर्युदासे होतृवरणव्यतिरिक्तत्वेनानूयाजभिन्नत्वेनैव च यथाक्रमं विधेयता उद्देश्यता च, न तु प्रयाजत्वादिना, तद्रूपप्रवेशे गौरवात्, तस्य सामान्यशास्त्रैकवाक्यतयैव लाभाच्च । अत एव नात्र पदैकवाक्यता । अपि तु 'पुरोडाशं चतुर्धा करोति' इत्यादिवत् वाक्यैकवाक्यतैव । अत एव तन्मात्रसंकोचार्थादुपसंहारात् तदन्यसंकोचार्थस्य पर्युदासस्य भेदः इति **न्यायसुधाकारः** । न चैवं पर्युदासेऽपि पर्युदसनीयप्राप्तिसापेक्षत्वात् विकल्पापत्तिः, तस्याः पदादाविव तार्किकभ्रान्तिमादायाप्युपपत्तेः । नहि तद्व्यतिरेकेण पर्युदासविधेः प्रतिषेधविधिवत् शाब्दबोधानुपपत्तिः। भेदप्रतियोगिभूतहोतृवरणानूयाजप्रसिद्धिमात्रेण तदुपपत्तेः । न च 'न होतारं वृणीते' इत्यत्र पर्युदासोपपत्तावपि 'नानूयाजेषु' इत्यत्र पर्युदासाङ्गीकारे सुबन्तसंबन्धादनन्याजेष्विति नञो नित्यसमासापत्तिः । सुबन्तसंबन्धे वाक्यस्याप्युपपत्तौ नित्यसमासे प्रमाणाभावात् । यदाऽपि हि वैयाकरणरीत्या समासस्य विशिष्टार्थे शक्तिः, वाक्यस्य च प्रत्येकं विशेषणविशेष्यरूपावयवार्थेषु, तदा भिन्नार्थकत्वेनैव समासविधिना वाक्यस्य साधुत्वानिवारणात् 'नानूयाजेषु' इति वाक्ये न किञ्चिद्बाधकम् । अत एव समासवाक्ययोः विकल्पविधायकविभाषासूत्रप्रत्याख्यानार्थे 'वावचनमनर्थकं स्वभावसिद्धत्वात्' इति **कात्यायनवचनमपि** संगच्छते । स्वभावसिद्धत्वात् भिन्नार्थकत्वरूपन्यायसिद्धत्वादित्यर्थः । वस्तुतस्तु उभयोरपि समासवाक्ययोः विशिष्टार्थगमकत्वस्य तुल्यत्वात् समासविधिना वाक्यस्यासाधुत्वप्रसक्तौ विकल्पविधायकं विभाषासूत्रं पाणिनेः सार्थकमेवेति कात्यायनवचनमेव न्यायविरोधादप्रमाणम् । अत एव विभाषासूत्रात् प्राचीनानां कुम्भकाराद्युपपदादिसमासानां न विकल्पः । अतो नानूयाजेष्विति वाक्यस्यापि साधुत्वात् युक्तस्तत्रापि पर्युदासः ।

**मण्डन**— 'आर्षेये न विकल्पः स्यात् ।'

**शंकर**— 'नार्षेये पर्युदासता ।'

* **पर्युदासन्यायस्य** येयजामहन्यायापरपर्यायस्य **स्वरूपम्**— 'दुर्बलोऽपि विधिः तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवति' इति । बाल. पृ. ९८.

* **पर्युदासविधिः** क्रत्वर्थः 'यजतिषु ये यजामहं करोति, नानुयाजेषु' इति । बाल. पृ. २०,

* पर्युदासविधिः दृष्टार्थो यथा 'यजतिषु येयजामहं करोति नानुयाजेषु' अत्र विधेययेयजामहांशे यागप्रकाशकत्वम् । पृ. २१, * पर्युदासविधिः पुरुषार्थः 'नेक्षेतोद्यन्तमादित्यम्' इत्यादिः । पृ. २०,

* पर्युदासविधिः षोडशविधः— १ प्रकृतिगताराद्उपकारिपर्युदासः २ विकृतिगतोपदिष्टाराद्उपकारिपर्युदासः ३ विकृतिगतातिदिष्टाराद्उपकारिपर्युदासः ४ अपूर्वकर्मगताराद्उपकारिपर्युदासः ५ प्रकृतिगतसंनिपात्यदृष्टार्थपर्युदासः ६ प्रकृतिगतप्रतिपत्तिव्यतिरिक्तदृष्टार्थसंनिपातिपर्युदासः ७ प्रकृतिगतदृष्टार्थसंनिपातिप्रतिपत्तिपर्युदासः ८ अपूर्वकर्मगतसंनिपात्यदृष्टार्थपर्युदासः ९ अपूर्वकर्मगतप्रतिपत्तिव्यतिरिक्तदृष्टार्थसंनिपातिपर्युदासः १० अपूर्वकर्मगतदृष्टार्थप्रतिपत्तिसंनिपातिपर्युदासः ११ विकृतिगतोपदिष्टादृष्टार्थसंनिपातिपर्युदासः १२ विकृतिगतोपदिष्टदृष्टार्थप्रतिपत्तिव्यतिरिक्तसंनिपातिपर्युदासः १३ विकृतिगतोपदिष्टदृष्टार्थप्रतिपत्तिसंनिपातिपर्युदासः १४ विकृतिगतातिदिष्टादृष्टार्थसंनिपातिपर्युदासः १५ विकृतिगतातिदिष्टदृष्टार्थप्रतिपत्तिव्यतिरिक्तसंनिपातिपर्युदासः १६ विकृतिगतातिदिष्टदृष्टार्थप्रतिपत्तिसंनिपातिपर्युदासः । उदाहरणानि तु मृग्याणि । ( अत्रैव पर्युदासशब्दस्थाने क्रियानिषेधशब्दं संनिवेश्य निषेधः षोडशविधो ज्ञेयः । ) । पृ. २०. * पर्युदासविधौ न सर्वत्र पदैकवाक्यता, तथात्वे आख्यातद्वयानन्वयापत्तेः । अपि तु आख्यातद्वयसत्त्वे वाक्यैकवाक्यताऽपि । भाट्ट. १०।८।२.

* पर्युदासस्थले नञः समासनियमः कात्यायनमतेन । 'अब्राह्मणं आकारयति', 'अधर्मं करोति' इत्यादौ । के. ( वि. १०।८।२ ).

* पर्यूहणं यूपधर्मः । 'ब्रह्मवनिं त्वा क्षत्रवनिम्० इति प्रदक्षिणं पांसुभिः पर्यूह्य' ( कल्पसूत्रम् ) । अवटे यूपमुच्छ्रित्य मूले पांसुपूरणं परितः ऊहनम् । वि. १०।२।३३, * पर्यूहणं यूपसंस्कारः पशुभेदेऽपि यूपकाले एव तन्त्रेणानुष्ठेयः । ११।३।४.

* पर्यूहणादिसंस्काराणां ( साद्यस्के ) खलेवाल्यां अनुष्ठानम् । भा.१०।२।३३।७३. मीको. पृ. १५३६ 'खलेवाल्यां पर्यूहणादि०' इत्यत्र द्रष्टव्यम् ।

* पर्वणि नाध्येयम्, अध्ययनधर्मोऽयं न प्रयोगधर्मः, तेन पर्वणि अनध्यायेऽपि कर्मणि मन्त्राः पठनीया एव । भा.१२।३।७।१८–१९. * पर्वणि प्रातरग्निहोत्रे हुते पश्चात् दर्शपूर्णमासार्थं अग्निमुद्धृत्यान्वाधानं क्रियते । अत्रोद्धरणे 'वाचा त्वा होत्रा०' इत्यादिः अग्निहोत्रोद्धरणमन्त्रो नास्ति । वि. ९।४।९.

* पर्वकालकर्तव्ययोः दीक्षासुत्ययोर्मध्ये सुत्या पर्वण्येव, दीक्षा अपर्वण्यपि । ज्योतिष्टोमे । भा. १२।२।९।२५ .

* पर्वशब्दः आग्नेयादित्रिकसंघपरः, प्रकरणवशात् । भावव्युत्पत्त्या क्रियापरः, प्रियते दीयते अस्मिन् इत्यधिकरणव्युत्पत्त्या तु कालमाचष्टे । वि. ९।२।१८, * पर्वशब्दः 'स्रुवेण पार्वणौ जुहोति' इत्यत्र आग्नेयादित्रिकसंघपरः । ९।२।१८. * पृणातेः पर्वशब्दः । पृणातिश्च दाने प्रसिद्धः । दानानि च ( दर्शपूर्णमासयोः ) समुदायाः । भा. ९।२।१८।५३.

## ⌛ पर्वसंधिः तन्त्रमध्ये ग्रहीतव्यः ॥

संधिकालस्याल्पत्वेन साङ्गप्रयोगभावनापर्याप्तत्वाभावेन तत्पर्याप्तये समं स्यादिति न्यायेन तत्पूर्वपरभागयोः समयोराक्षेपात् । 'संधिमभितो यजेत' इति श्रुतेश्च यदैव संधिरपराह्णे रात्रौ वा पतति ततः पूर्वं घटिकाद्वयमारभ्य तत्पश्चाद् घटिकाद्वये इष्टिं समापयेत् । इति प्राप्ते, द्वाविज्याकालौ वचनाद् व्यवतिष्ठेते । 'पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्देवता यजते' इति वचनेन प्रयोगस्य द्व्यहकालत्वावगमात् । 'पूर्वां पौर्णमासीमुपवसेदिति पैङ्ग्यमुत्तरामुपवसेदिति कौषीतकं यां पर्यस्तमयमुत्सर्पेत्' इति कौषीतकिब्राह्मणे ( ३।१ ) सूर्यास्तमयं परितः इत्यनेनावर्तनात्परतो रात्रौ वा यदि संधिः सोपवासार्होत्तरा पौर्णमासी तस्यामन्वाधानमित्युक्त्वा ततः परेद्युर्यागः इत्युक्तं भवति । आवर्तने ततः पूर्वं वा यदि संधिः सोत्तराऽपि नोपवासार्हा, किन्तु पूर्वैवेत्युक्त्या संधिदिन एव इत्यपि व्यवतिष्ठते । तेन संधिमभितः इत्यस्य विद्युद्वृष्टिमध्ये यथा संधिः पतति तथा तन्त्रं प्रक्रामेदित्यर्थः । आवर्तने यदा संधिः पर्वप्रतिपदोर्भवेदित्यादीनि प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते इत्यादीनि च गोभिलगार्ग्यादिवचनानि एतमेवार्थं विवृण्वन्ति । संकर्ष. ३।१।२.

⌛ **पर्वताधित्यकान्यायः** । यथा 'अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम्' इति रघुवंशे । **साहस्री.** २११.

⌛ **पर्वतोपत्यकान्यायः** । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इति कोशात् । **साहस्री**.२१२.

* **पलाशशाखाऽऽहरणम्** 'यत् प्राचीमाहरेत् देवलोकमभिजयेत्' (तैब्रा. ३।२।१) इत्यादिनोक्तम् । तत्र प्राचीशब्देन वृक्षस्य प्राचीदिक्स्था शाखा लक्षणीया, न तु दिगेव वाच्या । वि. ४।२।२, * पलाशशाखाऽऽहरणं वत्सापाकरणाङ्गम् । ३।६।८.

* **पलाशशाखाछेदनं दोहधर्मः** । स च सायंप्रातरुभयदोहार्थः । वि. ३।६।८, * पलाशशाखाछेदनं विध्यादिविहितम्, न तु विध्यन्तविहितम् । ३।१।२, * **पलाशशाखाछेदने** 'इषे त्वा' इति मन्त्रः । अत्र छिनद्मि इत्यध्याहारः, 'इषे त्वेति छिनत्ति' इति छेदने विनियोगात् । इष्यमाणाय अन्नाय भोः पलाशशाखे त्वा छिनद्मि इति मन्त्रार्थः । २।१।१५.

* **पलाशशाखामार्जने** 'ऊर्जे त्वा' इति मन्त्रः 'ऊर्जे त्वेत्यनुमार्ष्टि' इति विनियोगात् । ऊर्जे रसाय बलाय वा त्वामनुमार्ज्मि इति मन्त्रार्थः । अनुमार्जनं पत्रलग्नधूल्यादिनिःसारणम् । वि. २।१।१५.

⌛ **पवनताडनन्यायः** । असंभवद्वस्तुनि व्यर्थप्रयत्नकरणे अयं प्रवर्तते । नहि यष्ट्यादिना पवनस्य ताडनं सफलं भवति । **साहस्री.** ६६७.

* **पवमानाः** द्वात्रिंशाः ( द्वात्रिंशस्तोमकाः ) अभिषेचनीयस्य । भा. १०।४।१०।२०, * **पवमाने** एव माध्यंदिने आर्भवे च विवृद्धाविवृद्धस्तोमकक्रतूनां सामावापोद्वापौ । १०।४।११।२१–२२, * पवमाने रथंतरं करोति, आर्भवे बृहत् । विश्वजिति सर्वपृष्ठे । १०।६। ५।१४.

⌛ **पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् । १०।४।११।२१॥**

विवृद्धाविवृद्धस्तोमकेषु क्रतुषु साम्नां आवापोद्वापौ यत्रकापि वा स्तोत्रे पवमानेष्वेव वा इति विचारे सिद्धान्तमाह । आवापोद्वापौ आर्भवे माध्यंदिने च पवमाने स्याताम् । तस्मिन् पवमाने आवापोद्वापयोः दर्शनात् । 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्, अत्र ह्येवावपन्ति, अत एवोद्वपन्ति' इति श्रुतौ ।

**वचनानि त्वपूर्वत्वात् । २२ ॥**

विवृद्धाविवृद्धस्तोमकेषु क्रतुषु साम्नामावापोद्वापौ पवमाने स्तोत्रे एवेत्यत्र पूर्वं लिङ्गमुक्तम् । वचनमुच्यताम्, इति चेदुच्यते । तुः शङ्कां निरस्यति । लिङ्गरूपाणि यानि उक्तानि, तानि वचनान्येवोक्तानि । तदर्थस्य अपूर्वत्वात् अन्यतः अप्राप्तत्वात् । ततश्च पृथक् वचनापेक्षा नास्ति । तानि च 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् । अत्र ह्येवावपन्ति, अत एवोद्वपन्ति' इति । **के.**

* **पवमानयोरुत्तरयोः** आगम्यमानानां साम्नां गायत्रीबृहत्यनुष्टुप्सु निवेशः, न तु अन्ते विवृद्धस्तोमकत्वे । भा. ५।३।५।१३–१४, * पवमानयोरुत्तरयोः विवृद्धस्तोमकत्वे साम्नामागमः इति वक्ष्यते ( १०।५। ५।१६ ) । ५।३।५।१३.

* **पवमानाज्यपृष्ठादिस्तोत्रेषु** रथंतर-बृहत्-वैरूपादि साम एकस्यामेव ऋचि न गातव्यम्, किन्तु 'एकं साम तृचे क्रियते स्तोत्रीयम्' इति वचनात् तृचे एव साम गातव्यम् । वि.१०।६।१.

* **पवमानेष्टयः** । 'अग्नये पवमानाय अष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये' इति आधाने । भा. ३।६।४।११. * पवमानेष्टयः अग्न्यङ्गं आधानसिद्धेष्वेवाग्निषु स्वोत्तरभाविक्रतूपयोगितया संस्कारविशेषाधायकाः संमार्गवत्, भाष्यमते । पवमानेष्टयः आधानाङ्गं बृहस्पतिसववत्, अग्नीनां स्थापिका इति वार्तिकमतम् । के. ( भाट्ट. ५।३।९ ) । * पवमानेष्टयः अग्निसंस्कारार्था इत्युक्तम् ( ३।६।४ ) । भा. ३।६। ६।१७. * पवमानेष्टयः आधानाव्यवहितसोमानुष्ठानेऽपि सोमात् प्रागेव कर्तव्याः, अग्निसंस्कारकत्वात् आधानाङ्गत्वादेव वा । के. (टुप्. ५।४।३।५–९) । * पवमानेष्टयः आधानमात्रसंस्कृतेषु अग्निषु कर्तव्याः, न पवमानेष्टिसंस्कृतेषु । वि. ३।६।६. * पवमानेष्टयः इष्टिसंस्कारवर्जितां प्रकृतिमपेक्षन्ते, अविहितत्वात् तस्यामवस्थायां

पवमानेष्टीनाम् । भा. ३।६।६।१७. * पवमानेष्टयः केवलाधानसंस्कृतेऽग्नौ । ३।६।६. मीको. पृ. ९२४ 'आधाने पवमानेष्टयः' इत्यत्र द्रष्टव्यम् । * पवमानेष्टयः दर्शपूर्णमासविकृतिः । वि. ३।६।४. * **पवमानेष्टीः** कृत्वा अग्निहोत्रादीनि कर्माणि प्रतिपत्तव्यानि, न तु आहितमात्रेषु अग्निषु । 'न क्लिन्नं दारु अभ्यादध्यात्' इत्यादीनि व्रतानि तु आहितमात्रेष्वेव कर्तव्यानि । भा. ५।३।९।२१-२५, * पवमानेष्टीः कृत्वा संस्कृतेष्वग्निषु अग्निहोत्रादीनि नियतानि, ऐन्द्राग्नादीनि च अनियतानि कर्माणि कर्तव्यानि । ५।३।९।२१-२५. * **पवमानेष्टिभिः** समुच्चित्यैवाधानमग्न्युत्पादकम् । वि. ५।३।९.

* **'पवमानेष्टेः प्राक् यजुषा होमो न सर्वसंमतः' इति न्यायः** । आधानाङ्गभूताग्निहोत्रार्थवादस्थमीमांसारूपस्य न्यायस्य विप्रतिषेधात् । अत्र 'पवमानेष्टेः०' इति न्यायविप्रतिषेधो ज्ञेयः । बृ. ५।३।९।२१-२५. * **पवमानेष्टीनां** द्वेधा प्रयोगः काम्यो नित्यश्चेति । तत्र काम्यत्वे प्रथमेष्टिः एका, उत्तरयोस्तन्त्रम् । नित्यत्वे तु तिसृणामपि तन्त्रम् । के. ( वि. ११।४।४ ) । * पवमानेष्टीनां सद्य एव करणं सोमाधानपक्षे । सोमेनायक्ष्यमाणस्य तु संवत्सरादिकालः । भाट्ट. ५।४।३. * **पवमानेष्टिषु** अग्निहोत्रहवणी निर्वापेण बाध्यते । बाल. पृ. १३२. * पवमानेष्टिष्वग्निहोत्रहवण्यभावेऽपि निर्वापोऽनुष्ठेयः । १०।२।२७. मीको. पृ. १५९२ 'गुणलोपन्यायः' इत्यत्र द्रष्टव्यम् । * पवमानेष्टिषु आज्यभागयोः गुणवाचकपदरहितस्यैव देवतापदस्याभिधानं कर्तव्यम् । १०।४।१५।३०-३१. मीको. पृ. ९२६ 'आधाने पवमानेष्टिषु०' इत्यत्र द्रष्टव्यम् । * पवमानेष्टिषु आज्यभागदेवौ न सगुणौ । 'वृधन्वान् ( बुधन्वान् ) आग्नेयः कार्यः, पावकवान् सौम्यः' इति तु मन्त्रपरम् । ( अत्र कल्पसूत्रम्- "अग्निं स्तोमेन बोधय' इत्याग्नेयस्याज्यभागस्य पुरोऽनुवाक्या भवति, 'अग्न आयूंषि पवसे' इति सौम्यस्य" इति । ) । वि. १०।४।१७. * पवमानेष्टिषु केवलस्यैव निर्वापस्य शास्त्रार्थत्वम्, न तु अग्निहोत्रहवणीरूपगुणसहितस्य । सोम. १०।२।२७.

* **पवमानेष्ट्यधिकरणम्** । **न चैवं** आरम्भणीयायां अन्या आरम्भणीया इत्यनवस्था स्यादिति वाच्यम् । 'यावतीः शक्नुयात् कर्तुं यस्मिन्नहनि तावतीः कुर्वतो नानवस्था स्यात्' इति पवमानेष्ट्यधिकरणपूर्वपक्षोक्तप्रकारेण अनवस्थाऽभावात् । सोम. १०।१।४.

* **पवमानेष्ट्यादिषु** देवतानिष्ठगुणवाचिपदस्यापि त्यागादौ प्रयोगः । १०।४।१४।२६-२९. 'पावकाग्निन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **पवमानेष्ट्याधानादीनां** ( आधानगतपवमानेष्ट्यादीनां ) श्येनाङ्गानामपि न दृतिनवनीताज्यता । के. ( भाट्ट. ३।८।२१ ).

**पवमानेष्टिन्यायः** । आधानं अग्न्यर्थम् ॥

**इष्ट्यर्थमग्न्याधेयं प्रकरणात् । ३।६।४।११ ॥**

**भाष्यम्**-- सन्ति पवमानेष्टयः 'अग्नये पवमानायाष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये' इति । तासां प्रकरणे समाम्नातम् 'ब्राह्मणो वसन्तेऽग्निमादधीत' इति । तत्र संदेहः, किमग्न्याधेयं पवमानेष्ट्यर्थम्, उत नेति । किं प्राप्तम् ? इष्ट्यर्थमिति । कुतः ? प्रकरणात् । तासां प्रकरणे श्रूयते, अतस्तदर्थम् ।

**वा**-- अनारभ्यवादप्रस्तावेन अग्न्याधेयस्य प्रथमं तावत् अनारभ्यवादत्वमेव प्रतिपाद्यते । प्रकरणेन तावत् पवमानेष्ट्यर्थत्वं प्राप्नोति । श्रुत्या तु शुद्धाग्न्यर्थत्वम् । अतः 'प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत्' ( ३।४।५।१५ ) इति इष्ट्यर्थाग्निसंस्कारत्वात् श्रुतिवाक्यप्रकरणैः अविरुद्धैः इष्ट्यर्थाग्न्यर्थत्वं अवधार्यते । शुद्धाग्न्यर्थत्वे च निष्प्रयोजनत्वात् तद्द्वारेणैव अग्न्याधानग्रहणसामर्थ्यम् । तस्मात् इष्ट्यर्थे सामान्याभिधानम् । अपि च प्रकरणादेव पवमानेष्टिविषयं द्रष्टव्यम् ।

**न वा तासां तदर्थत्वात् । १२ ॥**

**भाष्यम्**-- पवमानेष्टयो हि अग्न्यर्थाः । यदि अग्निः इष्ट्यर्थः स्यात् ततस्तदर्थं अग्न्याधेयमिष्टीनामुपकुर्यात् । निष्फलास्तु इष्टयः । तदर्थं अग्न्याधेयमपि निष्फलं स्यात् । कथं पुनरग्न्यर्थता पवमानेष्टीनाम्, निष्प्रयोजनत्वादेव । प्रयोजनवत्त्वाच्च अग्नीनाम् । भाव-

यितव्या अपीष्टयः भूतानामग्नीनामर्थेन क्रियेरन् । तस्मात् अग्न्याधेयं न पवमानेष्ट्यर्थम् ।

**वा**— यदि आरादुपकारकमाधानं भवेत्, ततः प्रकरणात् इष्ट्यर्थमिति गम्येत । वाक्यसंयोगात्तु द्वितीयानिर्दिष्टाग्निसंस्कारार्थमेतत् । एवं च सति यदि अग्नयः पवमानेष्ट्यर्था भवेयुः ततः तद्द्वारेण आधानमपि तदर्थं भवेत् । तास्तु निष्फलत्वात् अग्न्यर्था इत्युक्तम् । अतश्च 'गुणानां च परार्थत्वात्' (३।१।१२।२२) इत्यनेनैव परस्परानङ्गत्वम् । नहि द्वितीयाश्रुतिः प्रकरणेन बाध्यते ।

**लिङ्गदर्शनाच्च । १३ ॥**

**भाष्यम्**— लिङ्गं च दर्शयति यथा अग्न्यर्थाः पवमानेष्टयः इति । किं लिङ्गम् ? 'जीर्यति वा एष आहितः पशुर्यदग्निः, तदेतान्येवाग्न्याधेयस्य हवींषि संवत्सरे निर्वपेत्, तेन वा एष न जीर्यति, तेनैनं पुनर्नवं करोति, तन्न सूक्ष्यम्' इति ।

**वा**— 'तेनैनं पुनर्नवं करोति' इति च अग्निसंस्कारार्थतां दर्शयति ।

**सोम**— **प्रयोजनं पूर्वपक्षे** आधानस्य स्वर्गार्थपवमानेष्ट्यर्थत्वेन अग्निहोत्रदर्शपूर्णमासादिषु आधानकृतस्य कस्य चिदुपकारस्याभावात् विनाऽपि आधानेन अग्निहोत्रादयः कर्तव्याः । **सिद्धान्ते** तु आधानस्य अग्न्यर्थत्वात् अग्निभिर्विना अग्निहोत्रानुष्ठानासंभवात् आधानानन्तरमेव अग्निहोत्रादयः कर्तव्या इति ।

**वि**— 'आधानं पवमानादेरिष्टेरङ्गं न वा भवेत् ।, अग्नीनामिष्टिशेषत्वात् तद्द्वाराऽस्य तदङ्गता ॥, अनारभ्य विधानात्तु नाङ्गं कस्य चिदाहितिः । अग्न्यर्थत्वात् तत्समेष्टिरग्नयस्त्वग्निहोत्रगाः ॥'

**भाट्ट**— अग्नीनामतिदेशेन पवमानेष्ट्यङ्गत्वावगमात् तत्संस्कारकत्वेन विहितस्य आधानस्यापि प्रकरणसहकृतवाक्यात् पवमानेष्टिसाधनीभूताग्निसंस्कारकत्वेन विनियुक्तस्य पवमानेष्ट्यङ्गत्वम्, पवमानेष्टीनां विश्वजिन्न्यायेन (४।३।५) फलकल्पना । **इति प्राप्ते,** आधानस्य किं अग्न्युत्पादकत्वं उत संमार्गादिवत् अग्निनिष्ठातिशयमात्रजनकत्वम्, उभयथाऽपि त्वन्मते अग्निहोत्रादिषु आहवनीयाद्युत्पादकाभावात् अतिदेशस्यैवासंभवः । अतः अग्निहोत्राद्यङ्गभूताहवनीयाद्युत्पादकमेव आधानम् । पवमानेष्टयोऽपि अग्न्यङ्गभूताः फलवदाधानाङ्गभूता एव वा प्रकरणात् । ततश्च पवमानेष्टिषु असिद्धत्वात् अग्नेरतिदेशस्यैवाभावः । **प्रयोजनम्**— पवमानेष्टिषु **पूर्वपक्षे** अन्वारम्भणीया, **सिद्धान्ते** प्रधानारम्भत्वात् न इत्यादि ।

**मण्डन**— 'नाधानमङ्गं खलु पावमान्याः ।'

**शंकर**— 'आधानं नेष्ट्यर्थमिष्यते ।'

* अन्वारम्भणीयायां तु तृतीयोक्त**पवमानेष्टिन्यायेनापि** न अन्वारम्भणीया । **भाट्ट.** १०।१।४.

* **पवमानेष्टिसंस्कारः** अग्निप्रयुक्तः, न दर्शपूर्णमासप्रयुक्तः । **भा.** ३।६।६।१७.

* **पवमानत्रयविषयेषु** अन्वारोहमन्त्रेषु व्यूढद्वादशाहगतेषु छन्दोव्यतिक्रमः श्रुतः । स न छन्दःपदार्थेषु, किन्तु मन्त्रगतशब्देष्वेव कार्यः । प्राकृतस्य 'गायत्रच्छन्दाः' इत्यस्य स्थाने 'जगतीछन्दाः' इति वक्तव्यम्, 'त्रिष्टुप्छन्दाः' इत्यस्य स्थाने 'गायत्रच्छन्दाः' इति, 'जगतीछन्दाः' इत्यस्य स्थाने 'त्रिष्टुप्छन्दाः' इति वक्तव्यमित्यर्थः । **वि.** १०।५।२६.

* **पवमानमन्त्राः** 'श्येनोऽसि गायत्रच्छन्दाः, सुपर्णोऽसि त्रिष्टुप्छन्दाः, सघाऽसि जगतीछन्दाः । अनु त्वाऽऽरभे स्वस्ति मा सं पारय ॥' इति । अन्वारोहमन्त्रा एते । **भा.** १०।५।२६।८८.

* **पवमानस्तोत्रं** त्रेधा, प्रातःसवने बहिष्पवमानम्, माध्यंदिनसवने माध्यंदिनपवमानम्, तृतीयसवने च आर्भवपवमानम् । **वि.**९।२।६ वर्णकं २.

* **पवमानहवींषि** अग्न्याधेयप्रकरणाम्नातान्यपि वाक्येन प्रकरणं बाधित्वा अग्नेरेव गुणभूतानि भवन्ति । **भा.** ३।१।१२।२२. * पवमानहवींष्यपि प्राकरणिकेन 'यदाहवनीये जुहति' इति वाक्येन अग्न्यर्थतयैव विनियुज्यन्ते, आधानं अग्न्यर्थतया निरपेक्षेण वाक्येन यद्यपि विहितं तथापि- इत्युक्तं तृतीये । **रत्न.** ५।३।९।२१-२५. * पवमानहवींषि नाधानाङ्गं इति भाष्यमतम् । आधानाङ्गं इति वार्तिकमतम् । **के.** * पवमानहवींषि

'यः सोमेनायक्ष्यमाणः अग्निमादधीत, स पुरा संवत्सरात् हवींषि निर्वपेत्' इति कालो निर्दिश्यते। न खलु कश्चिदयक्ष्यमाणः। तस्मात् अनन्तरमयक्ष्यमाणः इति गम्यते। **भा.** ५।४।३।८. * **पवमानहविर्भ्यः** प्राक् अग्निहोत्रं न संभवति। पूर्णाहुत्यन्ते यदग्निहोत्रं सोऽपूर्व एव होमः। **टुप्.** १०।२।२७।६४. * **पवमानहविषां** काम्यप्रयोगे प्रथमस्य तन्त्रभेदः उत्तरयोस्तन्त्रम्, ब्रह्मवर्चसकामत्वे नित्यप्रयोगे च त्रयाणामपि तन्त्रम्। ११। ४।४।१३-१६. **मीको.** पृ.९२३ 'आधाने पवमानहविषाम्' इत्यत्र द्रष्टव्यम्। * पवमानहविषां त्रयाणामेकतन्त्रत्वाभावः (आधाने)। किं तर्हि? तन्त्रभेदः। स च भवन् एवं स्यात्, प्रथमाया भेदः, उत्तरयोस्तन्त्रम्, वचनात्। वचनमिदं भवति– 'अथ यः कामयेत वर्षीयान् श्रेयान् स्यामिति तस्याग्नये पवमानाय निरुप्य, अथ पावकाय शुचये चोत्तरे हविषी समानबर्हिषी निर्वपेत्' इति। **भा.** ११।४।४।१३-१६, * **पवमानहविःषु** 'अग्नये पवमानाय' इत्यादौ सगुणेनैव देवतानिर्देशः कर्तव्यो निगमेषु, न निर्गुणेन। १०।४।१४।२६-२९.

**⌛ पवमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात्। ११।४।४।१३॥**

आधानगतेषु पवमानहविःषु ऐकतन्त्र्यं तन्त्रेण अनुष्ठानं स्यात्। प्रयोगवचनैकत्वात्, 'अह्नो निरुप्याणि' इति प्रयोगवचनस्य एकत्वात् वचनेन सह प्रयोगावगमात्। तस्मात् तन्त्रं इति पूर्वः पक्षः।

**लिङ्गदर्शनाच्च। १४॥**

'समानबर्हींषि भवन्ति' इत्यनुवादरूपलिङ्गदर्शनात् पवमानेष्टीनां सह प्रयोगो विज्ञायते। इति पूर्वपक्षी आह।

**वचनात्तु तन्त्रभेदः स्यात्। १५॥**

सिद्धान्तमाह। नैकतन्त्रता किन्तु तन्त्रभेदः स्यात्। तत्रापि प्रथमाया भेदः, उत्तरयोस्तन्त्रम्। 'यः कामयेत वर्षीयान् श्रेयान् स्यामिति तस्याग्नये पवमानाय निरुप्य अथ पावकाय शुचये चोत्तरे हविषी समानबर्हिषी निर्वपेत्' इति वचनात्।

**सहत्वे नित्यानुवादः स्यात्। १६॥**

सिद्धान्ती आह। यत्तु सहत्वे 'समानबर्हींषि भवन्ति' इति वचनम्, तत् नित्यानुवादः स्यात्। 'यो ब्रह्मवर्चसकामः स्यात् तस्य सर्वाणि हवींषि निरुप्याणि' इति यः सहप्रयोग उक्तः तस्यायमनुवादः। तस्मात् ब्रह्मवर्चसकामत्वे तिसृणां तन्त्रम्, तदभावे तु द्वेधा भेदः पूर्वोक्तः। इति सिद्धान्तः। **के.**

* **पवमानहविःप्रकरणे** एकं अपरमनारभ्यवादे। इति द्वे ह्येते वाक्ये तुल्यरूपे 'यदाहवनीये जुह्वति' इति। तत्र प्राकरणिकेन निष्पाद्यमानत्वात् संस्कारापेक्षिणः आहवनीयस्य अफलानां पवमानहविःप्रभृतीनां संस्कारत्वेन विधानम्। अनारभ्यवादेन तु निष्पन्नस्य सतः सर्वकर्माण्युद्दिश्य अधिकरणत्वेन विधानम्। **वा.** ३।१।१२।२२.

* **पवित्रे**। 'समौ अप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति' दर्शपूर्णमासयोः। ते च परिभोजनीयान्नाम बर्हिषः, न तु वेदिस्तरणाद् बर्हिषः। **भा.** ३।८। १७।३२.

* **पशुः** अग्नीषोमीयश्छाग एव। **भा.** ६।८।१०। ३०-४३. * पशुरग्नीषोमीयः 'स एष उपवसथीयेऽहनि द्विदेवत्यः पशुरालभ्यते'। **रत्न.** ५।४।८।२५.

**⌛ पशुः पुरोडाशविकारः स्याद् देवतासामान्यात्। ८।२।२।१०॥**

ज्योतिष्टोमे अग्नीषोमीयः पशुः किं पुरोडाशविकारः, उत सांनाय्यविकार इति विचारे पूर्वपक्षमाह। पशुः अग्नीषोमीयः पुरोडाशस्य विकारः स्यात् इति अग्नीषोमीयपुरोडाशस्य विध्यन्तः पशौ। देवतासामान्यात्। पौर्णमास्यां अग्नीषोमीयः पुरोडाशः, अयं पशुरपि अग्नीषोमीयः। इति समानदेवतत्वं सामान्यम्। अग्नीषोमीयः पशुः इष्टिविकारः इति प्रथमपादे (८।१।५। १२) निर्णीतमेव। अत्र तु विशेष उच्यते।

**प्रोक्षणाच्च। ११॥**

पूर्वपक्षे हेत्वन्तरमाह। 'अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामि इति पशुं प्रोक्षति' इति पशोः प्रोक्षणमुक्तम्। प्रोक्षणं च पुरोडाशधर्मः। इति पुरोडाशविध्यन्तः स्यात्।

**पर्यग्निकरणाच्च । १२ ॥**

पूर्वपक्षे तृतीयं हेतुमाह । 'आहवनीयादुल्मुकं गृहीत्वा तेन पशुं पर्यग्नि करोति' इति पशोः पर्यग्निकरणं श्रुतम् । तच्च पुरोडाशधर्मः । तस्मात् पशुः पुरोडाशविकारः ।

**सांनाय्यं वा तत्प्रभवत्वात् । १३ ॥**

पूर्वपक्षं सूत्रत्रयेण प्राप्तं वाशब्देन निरस्तं सूचयन् सिद्धान्तमाह । सांनाय्यं पशोः प्रकृतिः स्यात्, न पुरोडाशः । सांनाय्यविकारः पशुः । तत्प्रभवत्वात् । प्रभवति अस्मादिति प्रभवः । तच्छब्देन पशुर्निर्दिश्यते । सः प्रभवः यस्य तत् तत्प्रभवं तादृशत्वात् । पशुरपि पशोर्जायते, सांनाय्यमपि पशोर्जायते । इति उभयोः पशुप्रभवत्वं सामान्यम् । हविःसामान्यं च देवतासामान्यात् बलवत् इत्युक्तम् ( ८।१।१७।३२-३४ ) । तस्मात् तत्प्रभवत्वं निर्णायको हेतुः ।

**तस्य च पात्रदर्शनात् । १४ ॥**

सिद्धान्ते हेत्वन्तरमाह । तस्य सांनाय्यस्य यत् पात्रं उखा नाम, तस्यैव पात्रस्य पशौ दर्शनात् सांनाय्यविकारः पशुः । 'यदि पशुरुखायां पचेत्' इति च पात्रदर्शनम् । तस्मात् अग्नीषोमीयः पशुः सांनाय्यविकार इति सिद्धान्तः । **के.**

* पशुर्मुख्यः । स हि यजिं निर्वर्तयति । **भा.** १२।२।११।२७.

**⌛ पशुः सद्यस्कालः, न द्व्यहकालः ॥**

निरूढपश्वादिषु उत्तरवेदेः कालो द्व्यहरूपस्त्र्यहरूपो वा स्यात् चोदकानुग्रहात् । **इति प्राप्ते,** 'स्नात्वा उप्त्वा केशश्मश्रूणि अरणी समारोप्य निर्मथ्य उदवसाय' इत्यादिना सद्यस्कालत्वस्य वाचनिकत्वात् अतिदेशबाधः । अत एवोत्तरवेद्यां नाग्निहोत्रस्य करणप्रसक्तिः । दैवात् कर्मण उत्कर्षे तु सत्यां प्रसक्तौ, तत्रैव करणमिति कल्पः । **संकर्ष.** ३।२।२७.

* पशुः सांनाय्यविकारोऽपि सन् न दध्नो विकारः, किन्तु पयसो विकारः । सद्यस्कालत्वसामान्यात् पश्वानन्तर्याच्च । **भा.** ८।२।३।१५-१८. * पशुः स्वावयवद्वारा यागसाधनम् । **भाट्ट.** १०।७।१. * पशुः हृदयादीज्याप्रयुक्तः, न तु शकृत्संप्रव्याधलोहितनिरसनप्रयुक्तः । **भा.** ४।१।१२।२७. * **पशवः** इष्टयश्च अग्निष्टोमानुष्ठानात् प्राक् अनुष्ठातुं शक्यन्ते । **के.** (वि. ५।३।१४) । * पशवः औत्पत्तिकेन विभागेन संव्यवहारेषु संख्यायन्ते 'पञ्चभिरश्वैः क्रीतः', 'पञ्चभिर्गोभिः क्रीतः' इति । न व्रीह्यादीनामौत्पत्तिकेन विभागेन संव्यवहारेषु संख्या संकीर्त्यते । निगदाभिप्राया मानाभिप्राया वा भवति । नहि भवति पञ्चभिर्माषैः क्रीत इति । पञ्चभिर्माषाणामाढकैः द्रोणैर्वा कुडवैर्वा खारीभिर्वा इति भवति । **भा.** १०।३।११।४५. * पशवस्त्रय आम्नाता ज्योतिष्टोमे अग्निष्टोमसंस्थे अग्नीषोमीयः सवनीयः अनुबन्ध्यश्चेति । **वा.** ३।६।७।१८. * पशवो निरूढादयः सोमात् प्रागपि कर्तुं शक्यन्ते । **रत्न.** ५।४।८।२५. * पशवः प्राजापत्याः सप्तदश वाजपेये । तेषां चोदकप्राप्ताग्नेयादिक्रतुपशुभिः समुच्चयः । **वि.** १०।४।४, * पशवः साद्यस्क्रे 'सह पशूनालभते' इति सह विहिताः । तत्र पशुषु वेदि-उत्तरवेदि-यूपाः शास्त्रीयसंस्कारनिरपेक्षा गृह्यन्ते 'साद्यस्क्रेषूर्वरा वेदिः ( खल उत्तरवेदिः ) खलेवाली यूपः' इत्याश्वलायनः ( ९।७। १३-१४ ) । ते च पशवः अग्नीषोमीयपशोः विकृतिः । १०।१।५. * **पशुमग्नीषोमीयं** प्रोक्षति 'अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामि' इति ज्योतिष्टोमे । **भा** ८।२। २।११. * 'पशुमालभेत' इति एकत्वं विवक्षितम् । पश्वेकत्वाधिकरणम् । **वि.** ४।१।५, * 'पशुमालभेत' इति वाक्यं कर्मणो विधायकम्, न तु अनुवादकम् । पशुसोमाधिकरणम् । २।२।६. * 'पशुं संज्ञपयति' अयं प्रतिप्रसवविधिः दृष्टार्थः । **बाल.** पृ. २१. * **पशून्** । 'वसन्ते ललामांस्त्रीन् वृषभानालभते' । **भा.** ८।१।८।१५. * **'पशुना'** इयं सुबन्तैकपदरूपा विनियोक्त्री श्रुतिः । **बाल.** पृ. ४१-४२. * 'पशुना यजेत' अत्रोपादेयपश्वादिगता संख्या विवक्षिता । **के.** (भाट्ट. ४।१।५) । * 'पशुना यजेत' इत्यत्र विभक्त्युपात्तसंख्यायाः प्रातिपदिकार्थं प्रति पदश्रुत्या योग्यतारूपलिङ्गेन च विशेषणत्वमवगम्यते । **भाट्ट.** ४।१।५. * **पशोरग्नीषोमीयस्य** पर्यग्निकरणं ज्योतिष्टोमे 'आहव-

**मन्त्रस्य चार्थवत्त्वात् । १२ ॥**

सिद्धान्ते हेत्वन्तरार्थं सूत्रम् । चकारः समुच्चये । मन्त्रस्य 'त्वं ह्यग्ने प्रथमो मनोता' इति मनोतासूक्तरूपस्य तन्त्रेणानुवचनेन लाघवरूपफलवत्त्वात् । अन्यथा हि प्रतिपशु पुनःपुनः पाठः प्रसज्येत । तस्मात् पदार्थानुसमयोऽत्रेति सिद्धान्तः । **के.**

* पशुगणे भिन्नदेवताके वसाहोमानां तन्त्रभेदः । ११। २।६।२६. **मीको.** पृ. १३०८ 'ऐकादशिनपशुवसा॰' इत्यत्र द्रष्टव्यम् । * पशुगणे विभिन्नदेवताके यत्र चोदकाविरोधः, तत्र अवदानत्रयं ( दैवत-सौविष्टकृत-ऐडेति ) होमं च एकस्य कृत्वा परस्यापि अवदानपूर्वकप्रदानान्तरं कार्यम् । स्विष्टकृदिडाभक्षणे तु तन्त्रेणैव । वस्तुतस्तु दैवतावदानस्यापि प्रदानावयवत्वोपपत्तेः विभिन्नदेवताकस्थलेऽपि दैवतावदानादिप्रदानान्तेन अनुसमयः । **भाट्ट.** ५।२।६. * पशुगणे ( एकयूपके–भाट्ट ) स्वरोः यावत् सर्वपश्वञ्जनं धारणम्, सर्वपशूनां चाञ्जनम्। **सोम.** ४।४।१०. * **पशुगणेषु** ऐकादशिनादिषु पत्नीसंयाजेषु जाघनीनां विकल्पः । १२।४।६. **मीको.** पृ. १३०९ 'ऐकादशिनादिपशुगणेषु॰' इत्यत्र द्रष्टव्यम् । * पशुगणेषु ऐकादशिनपशुधर्माणामतिदेशः । **भा.** ८।१। ८।१५. **मीको.** पृ. २१३ 'अतिदेशः पशुगणेषु॰' इत्यत्र द्रष्टव्यम् ।

* **पशुगणत्वं** पशुप्रकृतिलिङ्गम् । **बाल.** पृ. ११९.

* **पशुगते** निर्मन्थ्ये चयनगतनिर्मन्थ्यशब्दो धर्मान् नातिदिशति । निर्मन्थ्यन्यायः । **भा.** ७।३।७।१८.

* **पशुगतयूपाञ्जनाज्ये** दर्शपूर्णमासगताज्यनाम्ना धर्माणां नातिदेशः । **भा.** ७।३।७।१८.

* **पशुगतयूपावटबर्हिषि** दर्शपूर्णमासगतबर्हिर्धर्माणां नातिदेशः । **भा.** ७।३।७।१८.

**पशुचोदनायामनियमोऽविशेषात् । ६।८। १०।३० ॥**

ज्योतिष्टोमे 'अग्नीषोमीयं पशुमालभेत' इत्यत्र पशुचोदनायां पशुविधौ सति अजो वा अनड्वान् वा अश्वो वा अन्यो वा कश्चित् इति अनियमः स्यात् । अविशेषात् । पशुं इत्युक्तम्, पशुविशेषस्तु नोक्तः । तस्मादनियमः स्यात् इति पूर्वः पक्षः ।

**छागो वा मन्त्रवर्णात् । ३१ ॥**

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । अग्नीषोमीयः पशुः नियमेन छाग एव स्यान्नान्यः । 'छागस्य वपाया मेदसोऽनुब्रूहि' इति अनुवचनमन्त्रवर्णात् । तथा च मान्त्रवर्णिको द्रव्यनियमविधिः ।

**न, चोदनाविरोधात् । ३२ ॥**

अग्नीषोमीयः पशुः मन्त्रवर्णात् छागः इति न नियन्तुं शक्यते, चोदनाविरोधात् । 'अग्नीषोमीयं पशुमालभेत' इति चोदनागतपशुशब्दस्य पशुत्वमर्थः । अन्यो मन्त्रवर्णेन नियम्यते छागः । चोदना च मन्त्रवर्णात् बलवती । तस्मान्न छागनियमः इति पूर्वपक्षिणः शङ्का ।

**आर्षेयवदिति चेत् । ३३ ॥**

'अग्नीषोमीयं पशुमालभेत' इत्युक्तं पशुत्वम्, छागं प्रकल्पयितुं विवक्षितमिति सिद्धान्ती दृष्टान्तेन शङ्कते । 'आर्षेयं वृणीते त्रीन् वृणीते' इति सामान्याऽपि श्रुतिः त्रिष्वेवावतिष्ठते नान्यान् अपेक्षते । एवं आर्षेयमिव आर्षेयवत् पशुत्वमपि छागे एवावतिष्ठते, नान्यान् पशूनपेक्षते । इति चेत् ।

**न, तत्र ह्यचोदितत्वात् । ३४ ॥**

पूर्वपक्षी आह । न आर्षेयवत् पशुत्वस्य छागे पर्यवसानम् । तत्र छागे हि यस्मात् अचोदितत्वात् चोदितत्वाभावात् । पशुत्वं चोदितम्, छागो न चोदितः । तस्मादनियमः ।

**नियमो वैकार्थ्यं ह्यर्थभेदाद् भेदः, पृथक्त्वेनाभिधानात् । ३५ ॥**

पूर्वपक्षितं वाशब्देन निरस्यन् सिद्धान्ती आह । अग्नीषोमीयस्य पशोः छागत्वे नियम एव । हि यस्मात् ऐकार्थ्यं पशुच्छागशब्दयोः । चोदनायां पशुमित्युक्तम्, मन्त्रवर्णे च छाग इत्युक्तम् । पशुरिति सामान्यम्, छागादयो विशेषाः । सामान्यविशेषयोश्च 'पशुश्छागः, पशुरुष्ट्रः, पशुर्मेषः, पशुरुस्रः' इति सामानाधिकरण्यम् । एवं सति छागमन्त्रवर्णस्य पशुचोदनया न विरोधः । तस्मात् अग्नीषोमीयः पशुः छाग एव । यत्र तु पृथक्त्वेन परस्परविरोधेन अभिधानं स्यात्तत्र पृथक्त्वेन अभिधानात्

अर्थभेदः स्यात् । अर्थभेदाच्च मन्त्रलिङ्गविध्यर्थयोः भेदः स्यात् । यथा ऐन्द्या ऋचा गार्हपत्योपस्थाने । प्रकृते तु पृथक्त्वेनाभिधानाभावात् अर्थभेदाभावः । अर्थभेदाभावाच्च मन्त्रचोदनयोर्न भेदः । तस्मात् छाग एव पशुः ।

**अनियमो वाऽर्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदाभ्याम् । ३६ ॥**

पुनः पूर्वपक्षी आह । अनियमः अग्नीषोमीयः पशुः छाग एवेति न नियमः । वाशब्दः नियमव्यावृत्त्यर्थः । अर्थान्तरत्वात् पशुत्वात् छागत्वं पदार्थान्तरम् । तेन पशुश्छाग एवेति नियन्तुं न शक्यते । अन्यत्वं पदार्थान्तरत्वं च व्यतिरेकशब्दभेदाभ्याम् । व्यतिरेकात् शब्दभेदाच्च । यद्यपि छागः पशुरेव तथापि न सर्वः पशुः छाग एव, गवाश्वादेरपि छागभिन्नस्य पशुत्वात् । ततश्च पशुच्छागयोः व्यतिरेको भेदः । छागः, पशुः इति अपर्यायशब्दभेदश्च भवति । नहि एतौ पर्यायौ । तस्मात् अग्नीषोमीयः पशुः छागो वा अन्यो वा अनियमेन ग्राह्यः ।

**न वा, प्रयोगसमवायित्वात् । ३७ ॥**

सिद्धान्ती पुनराह । न अनियमः । कुतः ? प्रयोगसमवायित्वात् मन्त्रवर्णस्य प्रयोगे समवेतत्वात् । तथा च छागस्यैव नियमः स्वीकर्तव्यः । न च चोदनाविरोधः । पशुच्छागशब्दयोः सामानाधिकरण्येन एकार्थत्वस्योक्तत्वात् ।

**रूपाल्लिङ्गाच्च । ३८ ॥**

अग्नीषोमीयः पशुः मन्त्रवर्णात् छाग इत्युक्तं सिद्धान्तिना । पूर्वपक्षी तु ब्रूते, भवतु छागः । छागशब्देन तु अश्व एव ग्राह्यः । रूपात् आख्यारूपात् योगादित्यर्थः । छिदेः गमेश्च छागशब्दः प्रसिद्धः । यश्च छिन्नगमनः अश्वः स छागः स्यात् । लिङ्गाच्च । छागशब्दः पुंलिङ्गः अश्वशब्दश्च पुंलिङ्ग एव । एवं रूपलिङ्गाभ्यां छागः अश्वः स्यात् इति ।

**छागे न कर्माख्या रूपलिङ्गाभ्याम् । ३९ ॥**

सिद्धान्ती आह । रूपलिङ्गाभ्यां छागे कर्माख्या नावकल्पते । गमनच्छेदनकर्मणः आख्या कर्माख्या । छागपदे रूपलिङ्गाभ्यां गमनच्छेदनकर्मणः आख्या भवेत् इति पूर्वपक्षिणा उक्तम्, तन्न युक्तम् । नहि छागशब्दः छिन्नगमनवचनः । समुदायो ह्यसौ पृथगर्थान्तरे प्रसिद्धः । नासौ अवयवप्रसिद्धया बाधितव्यः योगाद् रूढेर्बलीयस्त्वात् । तस्मात् नाश्वश्छागः । सुबोधिनीवृत्तौ तु “ छागेन कर्म आख्यारूपलिङ्गाभ्यां ’ इति पदच्छेदं स्वीकृत्य ‘ छागेनैव कर्मयोगः । आख्यारूपं रूढिशक्तिः, लिङ्गं पुंलिङ्गं ताभ्याम् । रूढिर्योगमपहरति इति न्यायात् योगशक्तेरप्रवृत्तिः इति भावः ” इति व्याख्यातम् ।

**रूपान्यत्वान्न जातिशब्दः स्यात् । ४० ॥**

ननु छागः छागलः वत्सः एते शब्दा वयोवचनाः । तेन अश्वोऽपि वयोवचनो भविष्यति, इति छागः अश्व एव स्यात् इति चेत् । आह सिद्धान्ती । न अश्वः छागः । छागशब्दो यद्यपि वयोवचनः तथापि अजजातिगतं वयः वदितुं शक्नुयात्, नाश्वजातिगतं वयः । रूपान्यत्वात् छागस्य रूपं छागत्वं अश्वस्य अश्वत्वम् । रूपान्यत्वात् न छागशब्दः अश्ववचनः । किन्तु छागशब्दः जातिशब्दः स्यात् छागत्वजातिमदाश्रयं वयो वदेत् । अतः अग्नीषोमीयः पशुः छागो नाश्वः किन्तु अज एव ।

**विकारो नौत्पत्तिकत्वात् । ४१ ॥**

ननु अश्वशब्दस्य विकारः छागवाची अजशब्दः । अश्वशब्दस्य किञ्चिदत्रोच्चार्यते किञ्चिदन्यदेव । तस्मात् अश्वोऽपि अजः । अजश्च छागः । उच्यते । न विकारः अजशब्दः अश्वशब्दस्य । औत्पत्तिकत्वात् । औत्पत्तिको नित्य एव नामिनाम्नोः संबन्धः । नहि एकः शब्दः अन्यस्य शब्दस्य विकारः संभवति । तस्मात् अग्नीषोमीयः पशुः छागः अज एव नाश्वादिः ।

**स नैमित्तिकः, पशोर्गुणस्याचोदितत्वात् । ४२ ॥**

ननु छागशब्दः छिद्रनिमित्तः स्यात् । एवं श्रूयते— ‘ सुषिरो वा एतर्हि पशुः, यर्हि वपामुत्खिदति ’ इति । अत्राह सिद्धान्ती । पूर्वसूत्रात् न इति पदं अनुवर्तते । सः छागशब्दः न नैमित्तिकः न छिद्रनिमित्तकः । पशोः छिद्रत्वस्य गुणस्य अचोदितत्वात् । ‘ अव्यङ्गं पशुमालभेत ’ इति हि चोद्यते । तस्मादच्छिद्रः पशुः । न

च अवयवप्रसिद्धया समुदायशक्तिर्बाध्यते इत्युक्तम् । तस्मात् अग्नीषोमीयः पशुः अजश्छाग एव ।

**जातेर्वा तत्प्रायवचनार्थवत्त्वाभ्याम् । ४३ ॥**

वाशब्दः अवधारणायां इति भाष्यम् । छागशब्दः जातेरेव वाचकः । 'विश्वेषां देवानामुस्राणां छागानां मेषाणां वपानां मेदसोऽनुब्रूहि' इति जातिप्राये छागशब्दस्य वचनात्, समुदायस्य अर्थवत्त्वाच्च । तस्मात् अग्नीषोमीयः पशुः छाग एव नाश्वादिः इति सिद्धान्तः । के.

* **पशुचोदनायामनियमोऽविशेषात् ।** इति शाखाऽन्तरीयाणामधिकविधीनां उपसंहारस्यानित्यत्वादेव षष्ठान्त्याधिकरणमर्थवत् । अन्यथा 'अजोऽग्नीषोमीयः' इति शाखाऽन्तरीयविशेषवचने जाग्रति तदधिकरणानुन्मेषप्रसङ्गात् । कु. ३।१।१५।२७ पृ. २७७.

* **पशुजाघनीवाक्यन्यायः** ( ३।३।१० ) । अनेन न्यायेन इतरनिवृत्तिर्भवति । **संकर्ष.** १।४।१८. **मीको.** पृ. १७५५ 'जाघनीन्यायः' इत्यत्र द्रष्टव्यम् ।

**पशुतन्त्रविप्रकर्षन्यायः** । ( वा. पृ. ५०६ 'अन्यथा तु पशुतन्त्रविप्रकर्षन्यायेन सकृत् कृतैव उपकुर्यात्' ) ॥

**पशौ तु चोदनैकत्वात् तन्त्रस्य विप्रकर्षः स्यात् । ११।२।३।१९ ॥** ( इष्टिराजसूयाधिकरणस्थमिदम् ) ।

**भाष्यम्—** यदुक्तं पशुवत् इति ( यथा पशौ भिन्नकालेष्वपि एकदेशेषु 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इति नाङ्गानामावृत्तिर्भवति तद्वत् – इत्युक्तं पूर्वपक्षिणा ) । तत्र ब्रूमः । पशौ युक्ता सकृत् अङ्गानां क्रिया, तत्र हि एकमेव तन्त्रम् । केवलं प्रचारस्य वचनात् विप्रकर्षः । तदैक्यं तु चोदनैकत्वात् । एका तत्र चोदना 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति । कर्मचोदनायां हि अङ्गानां ग्रहणम्, न प्रचारचोदनायाम् । तदेव हि प्रधानं विप्रकृष्टकालेन प्रचारद्वयेन निर्वर्त्यते, तदर्थानि च कृतान्यङ्गानि । तेषां पुनः क्रियायां हेतुर्नास्ति । तस्मात् विषमः उपन्यासः । अत्र **सुधा**-- ( पृ. ७७९ ) पशुपुरोडाशाङ्गप्रचाराणां कालभेदेऽपि अङ्गानावृत्तिवत् इहापि अनावृत्तिः इत्याशङ्क्य एकस्य कर्मणः प्रक्रमात् प्रभृति आसमाप्तेः एककालत्वात् सवनीयपशोश्च ऐककर्म्यात् प्रयोगाख्यस्य तन्त्रस्य विप्रकृष्टकालत्वेऽपि अङ्गानावृत्तिर्युक्ता इति वैषम्यं वक्ष्यमाणं दृष्टान्तितम् ( ५०६ पृष्ठे वार्तिककारेण ) इति ।

* **पशुत्रयार्थः** स्वरुः तन्त्रं अग्निष्टोमे । ११।३। ५।१०-१४. **मीको.** पृ. ७२ 'अग्निष्टोमे पशुत्रयार्थः०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **पशुत्रयार्थयूपसंस्काराणां तन्त्रमग्निष्टोमे** । ११।३। ४।५-९. **मीको.** पृ. ७४ 'अग्निष्टोमे पशुत्रयार्थयूपसंस्काराणां०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **'पशुत्वान्वयेऽपि गवादौ छागत्वव्यतिरेकात् अर्थैक्ये च पशुः छागः इति शब्दभेदानर्थक्यापत्तेः'** इत्यनेन ( ६।८।१० ) वक्ष्यमाणेन न्यायेन... । ( स्पष्टार्थो न्यायः ) । सु. पृ. १४४३.

* **पशुद्वयवत्यां** विकृतौ पाशैकत्वपाशबहुत्वाभिधायिनौ मन्त्रौ द्विवचनान्तेन ऊहितव्यौ । ९।३।४। १०-१४. 'पाशन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **पशुधर्माः** उपाकरणम्, उपानयनम्, अक्ष्णया बन्धः, यूपे नियोजनम्, नयनम्, संज्ञपनम्, विशसनमित्येवमादयः । **भा.** ३।६।७।१८. * **पशुधर्माः** सौत्यादह्नः प्राचीने औपवसथ्येऽहनि धिष्ण्यनिर्माणादूर्ध्वमाम्नाताः । अग्नीषोमीयस्य च तदेव स्थानं इति संनिधिना पशुधर्मा अग्नीषोमीयपशुना संबध्यन्ते, सवनीयानुबन्ध्ययोस्तु चोदकात् । **वि.** ३।६।७. * **पशुधर्माणामग्नीषोमीयाङ्गत्वं** अनुष्ठानसादेश्यरूपात् क्रमात् । ३।३। ५।१२. **मीको.** पृ. १५०९ 'क्रमाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * **पशुधर्माणां** वाजपेये प्राजापत्यपशुषु पदार्थानुसमयः । ( पदार्थानुसमयन्यायः **मीको.** पृ. २४३७ ) । ५।२।१।१-३.

पशुधर्माधिकरणम् । अग्नीषोमीयपश्वर्थाः पशुधर्माः ॥

**तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् । ३।६।७।१८ ॥**

**भाष्यम्**— ज्योतिष्टोमे पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तथा सवनीयोऽनुबन्ध्यश्च । सन्ति च पशुधर्माः उपाकरणम्, उपानयनम्, अक्ष्णया बन्धः, यूपे नियोजनं नयनं संज्ञपनं विशसनं इत्येवमादयः । ते किं सर्वेषां अग्नीषोमीयसवनीयानुबन्ध्यानाम्, उत अग्नीषोमीयस्य सवनीयस्य च, उत अग्नीषोमीयस्यैवेति । किं प्राप्तम् ? अविशेषात् सर्वपशूनाम् । कथमविशेषः ? ज्योतिष्टोमप्रकरणे सर्वे पशवः समाम्नाताः । तत्प्रकरणापन्नत्वात् सर्वे पशुधर्मैः संबध्यन्ते । न चैषां तत्र कश्चिद्विशेषः । एवं प्राप्ते, **ब्रूमः** । सवनीयस्यैते धर्मा भवेयुः । तुल्यः सर्वेषां पशुविधिः स्यात्, यदि प्रकरणे विशेषो न भवेत् । भवति तु प्रकरणे विशेषः । सवनीयानां प्रकरणे पशुधर्माः समाम्नाताः । 'आग्नेयः पशुरग्निष्टोम आलभ्यः, आग्नेयो ह्यग्निष्टोमः' 'ऐन्द्राग्नः पशुरुक्थ्य आलभ्यः, ऐन्द्राग्नानि ह्युक्थ्यानि'। 'ऐन्द्रो वृष्णिः षोडशिन्यालभ्यः, ऐन्द्रो वै वृष्णिरैन्द्रः षोडशी'। 'सारस्वती मेष्यतिरात्र आलभ्या, वाग् वै सरस्वती' इति प्रकृत्य पशुधर्मा आम्नाताः । तस्मात् सवनीयस्य प्रकरणात् भवितुमर्हन्ति ।

**वा**— इदानीं स्थानस्य प्रकरणेन सह पूर्वैश्च विरोधाविरोधौ चिन्त्येते । ज्योतिष्टोमे अग्निष्टोमसंस्थे त्रयः पशव आम्नाताः अग्नीषोमीयः सवनीयः अनुबन्ध्यश्चेति । ते सर्वे कथम्भावैर्धर्मानपेक्षन्ते । तथा औपवसथ्ये अहनि अग्नीषोमप्रणयनोत्तरकालं उपाकरणादयः पशुधर्माः पठ्यन्ते । तेषु चतुर्धा संदेहः किं त्रयाणामपि पशूनामर्थेन आम्नायन्ते, अथ सवनीयार्थेनैव, अथ सवनीयाग्नीषोमीयार्थेन, अथ केवलाग्नीषोमीयार्थेनैवेति । किं प्राप्तम् ? तत्र 'स्थानाच्च पूर्वस्य' ( १९ ) इत्येवमादिसूत्रसंगत्यर्थं असूत्रं तावत् पूर्वपक्षं करोति सर्वार्थाः इति । यदि तु अयमेव पक्षः सूत्रेण परिगृह्येत, ततः उत्तरसूत्राणि असंगतान्येव भवेयुः । यदा पूर्वसूत्रेणैव सर्वार्थत्वं प्रतिज्ञायते तदा किमनेन 'स्थानाच्च पूर्वस्य' इति । प्रकरणाविभागादेव हि पूर्वस्यापि सिद्धिः । श्वस्त्वेकेषां ( २० ) इत्यपि प्रकरणाभावकथनेन अप्रतिज्ञातकेवलसवनीयार्थता व्यावर्त्यमाना कथं संबध्येत । एवं तदनुसारित्वात् उत्तरसूत्राणामप्यसंगतिः । अथवा सौत्रे एव पूर्वपक्षे केवलसवनीयार्थत्वं असूत्रितं द्वितीयं पक्षं कृत्वा 'श्वस्त्वेकेषाम्' इत्यादि संबन्धनीयम् । तत्तु भाष्यकारेण नाश्रितम् । सर्वाद्यः पक्षः सुखमसूत्रः क्रियते । सौत्रपक्षान्तराले तु तत्संगत्यर्थं असूत्रपक्षाश्रयणं सूत्रकारस्य शून्यहृदयतामापादयति । तस्मादाद्यः एव मुक्तकः पक्षः । तस्योपपत्तिः, पशुधर्मा हि ज्योतिष्टोमप्रकरणे केन चिदपि पशुविशेषेण असंयुक्ताः श्रूयन्ते । कथम् ? '**एतद्देशे ह्यनुष्ठानं वाक्यात् दैक्षस्य यद्यपि । तथाप्युत्पत्तिदेशेऽस्य प्रक्रिया क्रयसंनिधौ** ॥' दीक्षासु हि सोमक्रयसमीपे अग्नीषोमीयः समाम्नायते । तस्य च यद्यपि वचनसामर्थ्यात् पशुधर्मसमीपेऽनुष्ठानं भविष्यति, तथापि प्रकरणेन नैव व्यापृतम् । सर्व( प्र )करणानामुत्पत्तिदेशानतिरेकात् । सवनीयानामपि सुत्याकालमुत्पत्तिवाक्यम् । औपवसथ्ये तु गुणार्थैव श्रुतिः । न च तया प्रकरणं भवति । अनूबन्ध्या तु दूरस्थैव, सोमान्ते क्रियमाणत्वात् । तस्मादवान्तरप्रकरणवाक्यसंयोगाभ्यां अप्रतिबद्धेन ज्योतिष्टोमप्रकरणेन अग्नीषोमीयस्य स्थानं विप्रकृष्टार्थं बाधित्वा ज्योतिष्टोमार्थास्तावदेते इत्येतत्कल्प्यते । तस्य च सोमद्रव्यकत्वात् न पशुधर्मैः किञ्चित् प्रयोजनम्, इति 'आनर्थक्यात्तदङ्गेषु' (३।१।९।१८) इत्येवं अङ्गेष्वेवावतरन्तः अङ्गत्वाविशेषात् त्रिष्वपि ( पशुषु ) अवतरन्ति । सत्यपि तदङ्गत्वे योग्यत्वाभावात् न दीक्षणीयाऽऽदिषु अवतरणम् । सत्यपि च योग्यत्वे सामान्यसंबन्धाभावात् न तदनङ्गपशूनाम् । तस्मात् त्रयाणां समानं विधानम् । **इति प्राप्ते, अभिधीयते** । स्यादेतदेवम्, यदि ज्योतिष्टोमद्वारेण प्रकरणाविशेषः स्यात् । अस्ति तु विशेषः सवनीयानां औपवसथ्येऽहनि उत्पत्तेः । 'आग्नेयमजमग्निष्टोम आलभेत' 'ऐन्द्राग्नमुक्थ्ये द्वितीयम्' इत्यादिना हि पशुधर्मसमीपे सवनीया उत्पादिताः ।

तस्मात् केवलसवनीयार्था एव । ( इति द्वितीयः पूर्वपक्षः ) ।

**स्थानाच्च पूर्वस्य । १९ ॥**

**भाष्यम्**-- यदुक्तं प्रकरणात् सवनीयार्था इति, एतत् गृह्णीमः । क्रमाच्च अग्नीषोमीयस्य । तस्य हि क्रमे औपवसथ्येऽहनि समाम्नातम् । तस्मात् द्वयोरपीति ।

**वा**-- कथं पुनरिदं श्रुतिलिङ्गाधिकरण- ( ३।३।७ ) विपरीतमभिधीयते ? नहि तत्र एवमिष्टं प्रकरणात् विदेवनादयो राजसूयार्थाः स्थानाच्चाभिषेचनीयार्था इति । तथा श्रुत्या ऐन्द्री गार्हपत्यार्था, लिङ्गेन इन्द्रार्था इति । युक्तं तत्र प्रकरणाम्नानेन बलीयसा प्रमाणेन निराकाङ्क्षीकृते जघन्यप्रमाणानुत्थानात् समुच्चयानाश्रयणम् । नहि अत्र पुनः कल्पनया विना, शेषस्य न किञ्चित् सिध्यति । नापि शेषिणामिन्द्राग्न्यादीनाम्, उपायान्तरेणापि स्मृतिसिद्धेः । इह पुनः सत्यपि सवनीयसंबन्धात् धर्माणां नैराकाङ्क्ष्ये, अग्नीषोमीयस्य पशुधर्मैर्विना सिद्ध्यभावात् प्राप्त्यन्तरमवश्यं कल्पनीयम्, उभयोरविप्रतिपत्तेः । न चैतस्य तदा दर्शपूर्णमासप्रकृतित्वं भवेत् । यो हि प्रकृतिभूतः पशूनाम्, स दर्शपूर्णमासविकारो भवति । इतरे तु प्राणिद्रव्यकत्वसामान्यात् तद्विकाराः । तत्र किं सवनीयार्थाः, ततः सारूप्यद्वारप्रभवेण अतिदेशेन अग्नीषोमीयो गृह्णाति, अथ उपदेशगन्धेन केन चिदिति, उपदेशान्तर्गतत्वात् क्रमेण विनियोगो युक्तः । षड्विधोपदेशप्रत्यस्तमये हि अतिदेशः कल्प्यते । तस्मात् यथैव अन्यत्र उपदेशातिदेशाभ्यां प्रकृतिविकृत्यर्थत्वं यागगतस्य व्यापारस्य, तथैवेह स्थानप्रकरणाभ्यामुभयार्थत्वम् । अनुबन्ध्यायास्तु सर्वोपदेशाभावात् अतिदेशेनैव प्राप्तिर्भविष्यति । तस्मात् अनुपालम्भः सूत्रस्य ।

**श्वस्त्वेकेषां तत्र प्राक्श्रुतिर्गुणार्था । २० ॥**

**भाष्यम्**— एकेषां शाखिनां श्वः सवनीयानामाम्नानम् । तदपेक्ष्य इयमेषां गुणार्था पुनःश्रुतिः । कः पुनर्गुणो यदर्था एषा श्रुतिः ? उच्यते । पशून् संकीर्त्य 'यथा वै मत्स्योऽविदितो जनमवधूनुते, एवमेतेऽप्रज्ञायमाना जनमवधुन्वते' इत्यविज्ञाने दोषमभिधाय, एभिः कथं सवनानि पशुमन्ति इति प्रश्नरूपकेण वपाप्रचारो गुणो विधीयते । तदर्था एषा श्रुतिः वपाप्रचारेण एकवाक्यत्वात् । किमतो यद्येवम् ? न सवनीयानां प्रकरणेन पशुधर्माः, क्रमादग्नीषोमीयार्था एवेति । किं पुनः तत् श्व आम्नानम् ? 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति ।

**वा**-- यदुक्तं स्थानात् अग्नीषोमीयार्था इति एतद् गृह्णीमः । यत्तु प्रकरणात् सवनीयार्था इति, एतन्न मृष्यामहे । कुतः ? '**गुणार्थौपवसथ्येऽह्नि सवनीयपुनःश्रुतिः । उत्पत्तिः प्रक्रिया चैषामाश्विनग्रहणोत्तरा ॥**' 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति हि सवनीयानामुत्पत्तिः । 'श्वः' इति च औपवसथ्ये अहनि स्थितः सुत्यां ब्रवीति । 'कः पुनर्गुणः' इति स्ववाक्ये संयोगाभावात् पृच्छति ( भाष्ये ) । तद्दर्शयति । सर्वान् सवनीयान् अनुक्रम्य निन्दा श्रूयते 'यथा वै मत्स्यः' इति । यथा वै किल मत्स्यः जले विचरन् अनवधारितगतिः प्रेक्षकजनं अवधुनुते 'किमितो गतः किमगतः' इति । एवमेवैते पशवः क्व क्रियन्तां इत्येवमप्रज्ञायमानाः कर्तृजनं अवधून्वते । तेन पशुकीर्तनं तावत् एवमर्थम्, न विधानार्थमिति गम्यते । साऽपि निन्दा परतः प्रश्नशेषत्वेन नीता । तदेभिः पशुभिः सवनीयसमाख्यातैः कथं सवनानि पशुमन्ति कर्तव्यानि इति । सोऽपि प्रतिप्रश्नरूपविध्यन्तरशेषत्वं प्रतिपद्यते 'वपया प्रातःसवने चरन्ति' इति । तस्मात् एतद्गुणार्था इयं पुनः श्रुतिः । न च सा प्रकरणबुद्धिं करोतीति । किं पुनः तत् श्व आम्नानमिति । आश्विनग्रहणानन्तर्यगुणार्थत्वात् तदपि नोत्पत्तिसमर्थमिति मन्यते ( प्रष्टा ) । भाष्यकारेण केवलस्य आग्नेयस्य श्व आम्नानं दर्शितं नेतरेषाम् । तत्र **केचित्** आहुः, प्रदर्शनार्थत्वादस्य आग्नेयग्रहणं अविवक्षितत्वात् सर्वार्थमिति मन्यमानेन इति । वाक्यान्तराणि एवंरूपाणि द्रष्टव्यानि इति **अपरे** । सर्वथा तु केवलाग्नेयप्रदर्शनमेवोपयुज्यते । यद्यपि हि ऐन्द्राग्नादीनामौपवसथ्ये एवोत्पत्तिः तथापि तेषामनित्योत्तरसंस्थार्थत्वात् नैव शक्तिः नित्यवदाम्नातान् पशुधर्मान् ग्रहीतुम्, इति अग्नीषोमीयस्थानमेव बलीयः स्यात् । यस्तु नित्यत्वेन

ग्रहणसमर्थः तस्य प्रकरणाभावः उक्त एव । तस्मान्न सवनीयार्था इति ।

तेनोत्कृष्टस्य कालविधिरिति चेत् । २१ ॥

भाष्यम्— नैतदस्ति क्रमादग्नीषोमीयार्था एवेति । प्रकरणात् सवनीयार्थाः । पूर्वेद्युरेवाम्नानं विधानार्थम् । आश्विनवाक्यं कालगुणविधानार्थम् । कथम्, तेन वपाप्रचारेणोत्कृष्टस्य काल एष विधीयते । प्रातःसवने वपाप्रचारे चोदिते सति पश्वालम्भोऽपि तत्रैव प्राप्नोति । तत्र कालानियमे प्राप्ते 'आश्विनं ग्रहं गृहीत्वा' इति कालमात्रं विधीयते । 'त्रिवृता यूपं परिवीय उपाकरोति' इत्यनुवादः । इतरथा परिव्याणस्य कालो विधीयेत उपाकरणस्य च । तत्रानेकगुणविधानात् वाक्यं भिद्येत । तस्मात् सवनीयार्थाः पशुधर्माः इति ।

वा— इदानीं कतरत् सवनीयानामुत्पत्तिवाक्यं इत्येतत्परिज्ञानाधीनाधिकरणसिद्धिः । तत्र **पूर्वपक्षवादी** आह, इति चेत् सवनीयप्रकरणाभावं मन्यसे, तदयुक्तम् । कुतः ?

**'सवनीयान् पुरोत्पाद्य वपामुत्कृष्य वाक्यतः । तत्राप्यनियमे प्राप्ते तद्विशेषो विधीयते ॥'** 'वपया प्रातःसवने प्रचरन्ति' इत्यनेनैव वचनेन उत्कृष्टे प्रधाने, प्रधानदेशत्वादङ्गानां उपाकरणादिष्वपि उत्कृष्टेषु, कालनियमे प्राप्ते सति, आश्विनग्रहणानन्तर्यं विधीयते । तेन तदेव गुणार्थं श्रवणम् । इतरथा हि वाक्यं भिद्येत । परिव्याणोपाकरणयोः कालविधानात् द्रव्यदेवतायुक्तस्य च यागस्य विधेः । **ननु** च अतिदेशप्राप्तमेव परिव्याणम्, तस्मिन्नेव काले यागे विधीयमाने अनूद्येत । **सत्यमतिदेशेन** प्राप्तम्, न तु तदानीं क्रियते । यूपसाधारण्येन 'तत्कालास्तु' ( ११।३।४।६ ) इत्येवं अग्नीषोमीयकालकृतादेव उपकारसिद्धेः । एवं तर्हि साधारण्यादेव प्राप्तं विद्यमानमनूद्येत । न शक्यं तदनुवदितुम्, अप्रत्यभिज्ञानात् । तन्नाम अन्यतः प्राप्तमनूद्यते, यत् तद्रूप्येण प्राप्तं प्रत्यभिज्ञायते । न च पूर्वेद्युः कृतस्य आश्विनग्रहणोत्तरकालं वर्तमानत्वेन अनुवादो भवति । नहि तदाऽसौ परिव्ययति । न च पूर्वकृतस्य पर्यग्निकृतादिशब्दवत् ईदृशेन शब्देन अनुवादः । पूर्वोत्तरकालकर्मावधिद्वयपरिच्छिन्नत्वात् । एवं तर्हि अस्माद्वाक्यात् प्राप्तमनूद्यताम् 'स आश्विनं ग्रहं गृहीत्वा उपनिष्क्रम्य यूपं परिव्ययति' इति । तदपि नास्ति, प्रत्यभिज्ञानाभावादेव । यदेतत् अप्राकृतं सवनीयपरिव्याणम्, एतस्य शुद्धस्य श्रवणात् रशनायाश्च प्राकृतपरिव्याणनिबन्धनत्वात्, येनकेनचित् वासःप्रभृतिना करणे सति त्रिवृत्त्वानुवादो न प्राप्नोति । तत्र अनेकार्थविधानात् वाक्यभेदः । तदा च एवं भाष्यग्रन्थः । 'इतरथा हि परिव्याणस्य कालो विधीयेत' यत्संबन्धित्वेन उपात्तं त्रिवृत् द्रव्यम्, कालो विधीयेत । 'उपाकरणस्य च' इति उपाकरणकालो द्रव्यदेवताविशिष्टं च कर्म विधीयेत इत्यर्थः । तस्मात् अस्य गुणार्थत्वात् अस्ति पूर्वेद्युः सवनीयानां प्रकरणमिति ।

नैकदेशत्वात् । २२ ॥

भाष्यम्— नैतदेवम् । अग्नीषोमीयार्था एवैते क्रमात् । आश्विनकालं ह्याम्नानं विधानार्थम् । गुणार्थे एतस्मिन् वाक्यं भिद्येत, न विधानार्थे । नहि वपाप्रचारेण उत्कृष्टस्य कालविधिः संभवति । एकदेशो हि वपाद्रव्यम् । तेन संनिपातिनो वपासंस्कारान् उत्कर्षेत् नोपाकरणम् ।

वा— ( अत्रोच्यते, ) यदा हि पूर्वेद्युः साङ्गानां सवनीयानामाम्नानम्, तदा तत्रैव सर्वानुष्ठाने प्राप्ते, वचनात् वपाप्रचारादिमात्रं उत्कृष्येत नोपाकरणादीनि । 'तदादि वाऽभिसंबन्धात्' ( ५।१।१२।२४ ) इति ये वपाहोमोत्तरकालाः पदार्थाः, तत्संनिपातिनो वा तन्मात्रस्य उत्कर्षो भवेत्, न प्राग्भाविनामुपाकरणादीनाम् । यानि च अज्ञातकालानि अङ्गानि तेषां प्रधानकालत्वं वक्ष्यते ( ११।३।१।१ ) । पश्वङ्गानि तु अवधारितपूर्वेद्युःकालत्वात् न प्रधानकालं गच्छन्ति । तस्मात् वपाप्रचारेण अनुत्कृष्टस्य अनेनैव वाक्येन उत्कर्षः कर्तव्यः । ततश्च गुणवाक्ये सति अनेकार्थविधानात् वाक्यं भिद्येत । उत्पत्तिवाक्ये न दोषः । तस्मादेतत् उत्पत्त्यर्थमिति । न तु इह भाष्यकारेण विधेयानेकार्थत्वं दर्शितम् । एवमेव तु 'गुणार्थे एतस्मिन् वाक्यं भिद्येत' इत्यभिहितम् । शक्यस्तु इह पूर्वेद्युः प्राप्तोपाकरणोत्कर्षमात्रविधानात् वाक्यभेदः परिहर्तुम् ।

तत्र केचिदेवं समर्थयन्ते । "यथा किल 'आग्नेय्या आग्नीध्रम्' इति ज्योतिष्टोमसंबन्धे तद्विशेषे च विधीयमाने अनेकार्थत्वमुक्तम्, एवमिह वपाप्रचारेण अनुत्कृष्टस्य उपाकरणस्य उत्कर्षश्च कर्तव्यः तद्विशेषश्च इत्यनेकार्थत्वम्" इति । न तु इदमाग्नेयीवाक्यसदृशम् । तत्र हि संबन्धविशेषपरे विधौ सामान्यसंबन्धप्राप्तिमन्यतः अपेक्षमाणे कासु चिदाग्नेयीषु तत्सद्भावात् इतरविषय-सामान्यसंबन्धं प्रति अन्यथाऽनुपपत्तिः क्षीयते । अतस्तु वेदेन अनभ्युपेतं तद्विधिं कल्पयतो वाक्यभेदो भवति । न तु इह तादृक् प्रतिपक्षोऽस्ति । यतः सामान्येन उत्कर्ष-प्राप्तिं दृष्ट्वा विशेषपरस्य अर्थापत्तिकोपः कल्प्येत । तत्रापि चेत्तदर्थापत्तिबाधिनी प्रतिपक्षभूता सामान्यप्राप्तिः नाभविष्यत् नाग्नेयीमात्रप्रमाणं निराकरिष्यत । प्राप्तेऽपि कर्मणि एकपदोपात्तानेकार्थविधिः शोणाद्युदाहरणैः तत्रतत्र प्रतिपादितः । तेन यद्यपि 'आश्विनं ग्रहं गृहीत्वा' इत्य-नेन द्वयमपि प्रातःसवनं आश्विनग्रहोत्तरकालत्वं च विधी-येत, तथापि विधायकस्य एकपदानुसारात् 'तस्यतस्योप-दिश्येत' ( २।२।३।६ ) इत्येतदापत्तिर्नास्ति, किमुत अत्रैकविधाने अर्थादेव इतरसिद्धेः । अत एव भाष्यकारेण अनेकविधिदूषणे अभिहितम् 'न चानेकोऽर्थः परस्परा-संबन्धे सति शक्यो विधातुम्' इति । जानाति ह्यसौ यथा संबद्धानामर्थानां एकस्मिन् विहिते, अन्ये विनैवायासेन प्राप्नुवन्ति । तेन यदि एकस्मिन् विहिते अर्थात् अर्थसहस्रमपरमापद्यते न कश्चित् विरोधो विधेरायासो वा दृश्यते इत्याश्रीयते । तस्य तु अन्यथाऽप्युपपद्य-मानत्वमेव एको निराकरणोपायः । न चेहास्ति स पक्षो यत्रैष विधिः सुत्याप्रातःसवनसंबन्धौ अकृत्वा आश्विन-ग्रहणानन्तर्यं विदध्यात् । तस्माददोषः । न चैव तु एष दोषः, यस्य अनेकद्रव्यदेवताविशिष्टकर्मविधानम् ।

अपिच ज्योतिष्टोमसुत्याप्रातःसवनविशेषकालसंयोगः अपरः कल्पनीयः । सर्वेषु च उत्कर्षापकर्षेषु सामान्य-विशेषरूपः अनेकविधिदोषोऽस्ति इति प्राप्तकर्मगुणविध्य-संभवात् कर्मान्तरविधित्वप्रसङ्गः । तद्यथा 'माहेन्द्रस्य स्तोत्रं प्रति अभिषिच्यते' इत्यत्र अभिषेचनीयस्य माध्यं-दिनसवनमाहेन्द्रस्तोत्रकालविधेः अनेकार्थत्वम् । एवम् 'तिष्ठन्तं पशुं प्रयजन्ति' इत्यादिष्वपि योजनीयम् । अपिच एकस्मिन् पदार्थे अनुष्ठीयमाने विधीयमाने च अर्थान्तरं द्वेधा आपद्यते, किञ्चित् प्रयत्नान्तरसाध्यं किञ्चित् तदनुनिष्पाद्यम् । यथा भक्षविधौ ग्रहणादयः तृप्तिश्च । तत्र यत् प्रयत्नान्तरसाध्यं न च तस्मिन् अकृते विहितकरणं शक्यमित्यवधार्यते । तत्र अर्थापत्तिलभ्यं विधिशक्त्यन्तरं कल्प्यते । या च यावती च शास्त्रीया सा अवगतिर्भवति । यत्तु अनुनिष्पादि बह्वपि पुरुषस्य शास्त्रस्य च व्यापारान्तरमन्तरेणैव सिध्यति, न तेन कश्चित् आयासो भवति । न चेह आश्विनग्रहणानन्तर्ये विधीयमाने अनुष्ठीयमाने वा सुत्याप्रातःसवनादिसंबन्धे भेदेन व्यापारि-तव्यम् । तेन नात्र कश्चित् उत्कर्षसामान्यं विधत्ते । श्रुतमात्राश्विनग्रहणार्थमात्रे विहिते यदि तदन्तर्गतत्वात् सुत्या-प्रातःसवनाहर्भागविशेषमुहूर्तनाडिकाक्षणलवनिमेष-कालत्वद्रव्यसत्त्वादयः प्रसज्यन्ते, किं क्रियताम् ? । अपिच 'शिंशपामानय' इत्यत्रापि वृक्षत्वद्रव्यत्वसत्ताद्याक्षेपात् वाक्यभेदः स्यात् । अतः पूर्वेद्युः प्राप्तस्य उपाकरणस्य कालान्तरमात्रं आश्विनग्रहणानन्तर्यं विधीयते इत्यदोषः ।

अन्ये तु द्वयोः परिव्याणोपाकरणयोः उत्कर्षात् वाक्यभेदं समर्थयन्ते । तदपि तु सुपरिहरम् । केवलपरिव्याणोत्कर्षादेव 'तदादि वाऽभिसंबन्धात्' ( ५।१।१२।२४ ) इत्येवमुपाकरणोत्कर्षसिद्धेः । तत्र एतत् स्यात्, 'प्रकृतिप्राप्तो धर्मः उत्कृष्यमाणः तदाद्युत्कर्षं करोति नापूर्वः' इति । तदयुक्तम् । 'कृतदेशात्तु पूर्वेषाम्' ( ५।२।१०।२१ ) इत्यत्र अप्राकृतानामपि विदेवनादीनामपकर्षवर्णनेन 'तथा-ऽपूर्वम्' ( ५।१।१६।२९ ) इत्यस्य विशिष्टविषयत्व-व्याख्यानात् । अथवा 'स आश्विनं ग्रहम्' इत्ये-तद्वाक्यप्राप्तपरिव्याणान्तरानुवादात् अवाक्यभेद इति । अथोच्येत, अविशेषितसाधनकत्वात् तत्र त्रिवृत्त्वानुवादो न संभवतीति, तदयुक्तम् । एवं हि सिद्धान्तवाद्यपि पूर्वपक्षवादिना चोदितः स्वयं परिहारं वक्ष्यति ( रशना-साधारण्याधिकरणे ) सोऽस्यापि भविष्यतीति । ननु च तस्य अपूर्वकर्मविधानादनेकार्थविधिरुपपद्यते नास्येति । नैष विशेषः । यत्र हि एकक्रियाविशेषणमनेकमुपादीयते,

तत्र तद्द्वारेण तद्विधिः सुलभः इति विशिष्टविधानन्यायः । यत्र पुनः स्वविशेषणाविशिष्टा क्रिया विधीयते, वाक्यान्तरप्राप्तस्य क्रियान्तरस्य विशेषणम्, तत्र अवश्यावर्तनीयो विधिप्रत्ययः । देवतादिविशिष्टो हि यागो विधीयमानः स्वविशेषणमेव आक्षेप्तुं समर्थः, नाविधीयमानपरिव्याणविशेषणम् । तेन अपूर्वकर्मविधिष्वपि एतद्विवेक्तव्यम्, कतरत् तद्विशेषणम्, कतरत् अन्यविशेषणमिति । तस्मादयमुभयपक्षभाक्त्वात् नैकस्य चोदयितव्यः । तत्रावश्यं सिद्धान्तवादिना उभयोः परिव्याणयोः साधारणी रशना इति परिहारो वक्तव्यः । वक्ष्यति हि 'रशना च लिङ्गदर्शनात्' ( ३।६।१०।३१ ) इति । यद्यत् एतस्य यूपस्य परिव्याणम्, तस्यतस्य एषा वाक्येन विज्ञायते । तथा प्राप्तानुवादात् न वाक्यभेदः । अथवा यत् 'त्रिवृता यूपं परिवीय उपाकरोति' इति पूर्वेद्युः प्राप्तं उपाकरणस्य परिव्याणानन्तर्यमनूद्य आश्विनग्रहणानन्तर्यं विधीयते । वरं च वाक्यभेदात् व्यवहितकल्पनाश्रयणम् ।

तस्मात् एवं वर्ण्यते । अवश्यं तावत् सवनीयानामेकेनोत्पत्तिः, एकेन च गुणो विधातव्यः । तत्र पूर्वेद्युस्तनस्य तावत् न कश्चित् उत्पत्तिवाक्यत्वे हेतुरस्ति । ननु इतरस्यापि नास्ति । यद्यपि एवं तथापि विकल्पसमुच्चयासंभवात् केन चिद्विशेषेण अन्यतरस्मिन्नाश्रयितव्ये विशेषोऽभिधीयते । पुरस्तात् एतदेव स्थितम्, यथा 'उपादेयो गुणः तिरोहितकर्मानुवादेन शक्यो विधातुम्, नानुपादेयः' । स हि कुण्डपायिनामयने होमस्येव बलात् कर्मान्तरत्वमापादयति । तदिह वपाप्रचारः उपादेयः सुत्याकालस्थसवनीयानुवादेन शक्यो विधातुम्, किं पुनः प्रातःसवनश्रुत्या तद्देशसवनीयप्रत्यभिज्ञाने सति । श्वस्तने पुनराम्नाने निर्ज्ञातप्रयोजनत्वात् आश्विनग्रहणेन सह अङ्गाङ्गिसंबन्धाभावात् कालार्थे संयोगे तस्यानुपादेयत्वात् कर्मोद्देशेन विध्यनुपपत्तेः अवश्यं कालोद्देशेन कर्म विधेयम् । अथापि आश्विनं प्रति अङ्गत्वेन विधिः, तथापि अङ्गिनः अनुपादेयत्वात् एषैव वचनव्यक्तिः । अतश्च गुणविध्यनुपपत्तेः अवश्यं प्रकरणान्तरन्यायेन उत्पत्तिविधेः अन्येन अनन्तरेण अप्रतिबन्धात् उत्पत्तौ अवधार्यमाणायां कर्मान्तरं स्यात् । तेन अस्य तावत् कालापेक्षया उत्पादकत्वं सिद्धम् । अतश्च इतरस्य परिशेषसिद्धं गुणविधित्वम् । न हि तस्य किञ्चिद्भेदकारणम् । अत एव वपाप्रचारेण उत्कर्षोऽस्ति नास्ति इति विचारितम् । सति हि वपाप्रचारेण उत्कर्षे पूर्वस्यैव प्रातःसवने विपरिवृत्तेः कालं प्रति उपादानं प्रत्यभिज्ञानात् कल्प्येत । यथोक्तम् 'संनिधौ त्वविभागात्' ( २।३।१३।२६ ) इति । काले च कर्मणि विधीयमाने प्रत्ययस्य संनिकृष्टेऽर्थे व्यापारो भविष्यति । वपाप्रचारकालस्य पुनः सवनीयोत्पत्तिक्रियातः क्रियाऽन्तरविशेषणत्वात् दुष्प्रतिपादो विशिष्टविधिः इति वाक्यभेदः स्यात् । अस्मत्पक्षे पुनः यथा एकवाक्यत्वं भवति तथोक्तम् । एवं च परिव्याणस्यापि प्रकरणलभ्यः अङ्गभावः इहानुवदिष्यते । अन्यथा पुनः विप्रकृष्टतरेण क्रमेण प्राप्तिमपेक्ष्य अनूद्येत । तस्मादयमेव उत्पत्तिविधिः ।

कथं पुनरस्मिन् पक्षे भाष्यकारस्य वाक्यभेदोपन्यासः ? उच्यते । '**कर्मणो भेद एवायं वाक्यभेदोऽभिधीयते । संबन्धे त्वेकवाक्यत्वमर्थान्यत्वेऽपि गम्यते ॥**' 'वाक्यं भिद्येत' इति । न तेन एकवाक्यतामियात् यथा 'कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात्' ( ३।१।१०।१९ ) इत्यत्र असत्यपि लक्षणतो वाक्यभेदे परस्परासंबन्धाभिप्रायेणोक्तम् । 'साकाङ्क्षं त्वेकवाक्यम्' ( ३।१।१०।२० ) इत्यत्र च संबन्धमात्राभिप्रायम् । तथेह उत्पत्त्यर्थत्वे सति तदेकवाक्यतां याति, न गुणार्थे इत्युच्यते ।

**अर्थेनेति चेत् । २३ ॥**

**भाष्यम्**— आह । अर्थेन हि उत्कृष्टस्य कालो विधीयते । 'मुष्टिना पिधाय वपोद्धरणमासीत आवपाहोमात्' इति श्रूयते । पूर्वेद्युर्वपोद्धरणं मुष्टिना पिधाय न शक्नुयात् एतावन्तं कालमासीनेन अवस्थातुम्, अवश्यमाहारविहारादयः तेन कर्तव्याः इति ।

**न, श्रुत्यविप्रतिषेधात् । २४ ॥**

**भाष्यम्**— नैतदेवम् । श्रुतिविप्रतिषेधे भवेदेवम् । न च श्रुतिविप्रतिषेधः । तृणमुष्टिना पर्णमुष्टिना वा पिधायिष्यते । ननु आस्ते इत्युपवेशने भवति । नावश्यं उपवेशने एव, औदासीन्येऽपि दृश्यते । तद्यथा 'गृहाणि

परिगृह्य आस्ते, क्षेत्राणि परिगृह्य आस्ते ' इति अनुपवेशनेऽपि भवति व्यापारनिवृत्तौ । इहापि तृणमुष्टिना पर्णमुष्टिना वा पिधाय आवपाहोमात् उदासिष्यते । तस्मात् आश्विनकालमाम्नानं विधानार्थम्, न सवनीयानां प्रकरणे पशुधर्माः । तस्मान्न सवनीयार्थाः ।

**स्थानात्तु पूर्वस्य संस्कारस्य तदर्थत्वात् । २५ ॥**

**भाष्यम्**— नास्ति सवनीयानां प्रकरणम्, इत्येवं सति पूर्वेणैव हेतुना स्थानेन पूर्वस्य अग्नीषोमीयस्य भवितुमर्हन्ति । संस्कारोऽयं पशुयागप्रयुक्तः, न ज्योतिष्टोमप्रयुक्तः । ज्योतिष्टोमप्रयुक्तत्वे न विशेषः पशूनां स्यात् । पशुयागा अपि हि धर्मान् प्रयोक्तुमपूर्वत्वात् समर्थाः प्रकरणवन्तश्च । तस्मात् क्रमात् अग्नीषोमीयधर्मा इति ।

**वा**— सर्वं सवनीयप्रकरणं निराकृत्य पूर्वोक्तेनैव हेतुना सिद्धान्तं निगमयति । यद्वा अवान्तरप्रकरणेन अबाध्यमानं स्थानबाधेनैव महाप्रकरणं सर्वार्थत्वप्रतिपादनाय अवस्थितम्, तन्निवृत्त्यर्थस्तुशब्दः ( २५ सूत्रस्थः )। यद्यपि प्रकरणं स्थानात् बलवत्, तथापि उपांशुयाजानुमन्त्रणन्यायेन लिङ्गानुगृहीतक्रम एव अत्र बलीयान् विज्ञायते । योग्यतया हि पशुधर्माः पशुयागमपेक्षन्ते, न सोमयागम् । न च अनपेक्षिताः प्रकरणेन ग्रहीतुं शक्यन्ते । तदङ्गावतरणेन च अत्र विप्रकृष्टतरः श्रुतोऽर्थः । न च षष्ठीप्रतिपाद्यात् संबन्धात् विना, आनर्थक्यतदङ्गन्यायोऽस्ति इत्युक्तम् । ननु च अविहितधर्मान्तरः साकाङ्क्ष एव अग्नीषोमीयः प्रदेशान्तरात् इह आनीयमानः संनिहितान् धर्मान् प्रकरणेनैव गृह्णाति इति न वक्तव्यं स्थानाच्चेति । **नैष दोषः ।** यत्र हि प्राकृतैरङ्गैः पूर्यमाणायां विकृतौ तन्मध्येऽप्यपूर्वाणि कानि चित् प्रक्षिप्यन्ते तत्र विकृतौ प्रकरणग्रहणं भवति । अत्र प्रदेशान्तरे उत्पन्नः अग्नीषोमीयः प्राकृतैस्तावत् निष्प्रतिद्वन्द्वैः क्लृप्तोपकारैश्च निराकाङ्क्षीकृतः । ततः इहानीतः सन् अनन्यप्रयोजनान् धर्मान् साकाङ्क्षान् पश्यन् अनुमितकथम्भावः संबध्यते । स्थानस्य च एतदेव लक्षणम्, यदुत धर्माणां साकाङ्क्षत्वेन प्रधानस्य उत्पाद्य कथम्भावं संबन्धः । तस्मात् सूक्तं स्थानात्तु इति ।

**लिङ्गदर्शनाच्च । २६ ॥**

**भाष्यम्**— इतश्च पश्यामः अग्नीषोमीयार्थाः पशुधर्मा इति । कुतः ? लिङ्गदर्शनात् । लिङ्गमस्मिन्नर्थे भवति ' वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने सवने ' इति पशुपुरोडाशं दर्शयति । इतरथा समानविधानेषु सर्वेषु पशुषु अग्नीषोमयोर्देवतयोः संस्कारार्थः सन् पुरोडाशः सामर्थ्यात् अग्नीषोमीयस्य भवेत् न सवनीयस्य, तयोर्देवतयोः अभावात्, दर्शयति च । तस्मात् अग्नीषोमीयार्था इति ।

**वा**— सर्वेषां द्वयोर्वा समानविधानत्वे सवनीये पशुपुरोडाशदर्शनं नोपपद्यते । पुरोडाशस्य हि देवतासंस्कारार्थत्वं वक्ष्यति ( १०।१।९।२० )। स च लिङ्गात् अग्नीषोमावेव संस्कर्तुं शक्नोति, नाग्निम् । न च समानविधानत्वेन ऊहः सिद्धान्तवत् संभवति । तस्मात् पुरोडाशदर्शनात् आतिदेशिकाः सवनीयस्य धर्मा इति ।

**अचोदना गुणार्थेन । २७ ॥**

**भाष्यम्**— इदं पदोत्तरं सूत्रम् । आह, ननु छिद्रापिधानार्थः पशुपुरोडाशः । नेति ब्रूमः । अचोदना गुणार्थेन । तस्य छिद्रापिधानार्थेन न चोदना, अर्थवादः स इत्युक्तम् । तस्मात् देवतासंस्कारार्थः । तस्य अग्नीषोमीयार्थत्वे सवनीये पुरोडाशस्य दर्शनमुपपद्यते, न साधारण्ये । तस्मात् अग्नीषोमीयार्थाः पशुधर्मा इति ।

**वा**— सत्यं देवतासंस्कारार्थः सन् न प्राप्नोति, न तु अयं केवलस्तदर्थः । किं तर्हि ? ' सुषिरो वा एतर्हि पशुः ' इत्युपक्रम्य छिद्रापिधानार्थोऽपि । अतश्च विनाऽपि देवताम्, सवनीयस्य छिद्रं पिधातुं पुरोडाशः करिष्यते । तेन समानविधानत्वेऽपि अदोषः इत्युक्ते सूत्रेण उत्तरमाह । न छिद्रापिधानार्थेन अस्य चोदना । विधिवन्निगदानां हेतुवन्निगदानां च एवंजातीयानां अर्थवादत्वेन उक्तत्वात् ( १।२।२–३।१९–३० ) । नहि छिद्रापिधानं क्रतुना अपेक्षितम्, नापि पुरोडाशयागे कृते दृश्यते । तस्मात् नैतत् प्रयोजनं इति यथोक्तमेव लिङ्गदर्शनं सिद्धम् ।

**शा**— एवं प्रकरणस्य पूर्वैः सह विरोधाविरोधविचारं सप्रासङ्गिकं समाप्य ( ३।३।८–३।६।६ ), अधुना

स्थानस्य पूर्वैः सह विरोधाविरोधौ विचार्येते । पादाद्येन प्रकृतिविकृतीनां समानासमानविधानत्वं विचारितम् । अत्रापि तदेवानुवर्तते । तदिह विचार्यते किमेते धर्माः त्रयाणामपि पशूनां साधारण्येन विधीयन्ते, किंवा सवनीयस्यैव, अथ अग्नीषोमीयसवनीययोः, उत अग्नीषोमीयस्यैवेति । तदर्थं च किं अग्नीषोमीयस्य स्थानं ज्यौतिष्टोमिकेन प्रकरणेन सवनीयावान्तरप्रकरणेन वा विरुध्यते नेति । तत्सिद्ध्यर्थं च किं सवनीयानां औपवसथ्येऽह्नि प्रकरणमस्ति नास्तीति चिन्तनीयम् । ततोऽपि एतद्विवेक्तव्यम्, किं औपवसथ्येऽह्नि सवनीयोत्पत्तिः, उत सौत्येऽहनीति । ' **ननु प्रकरणात् स्थानं दुर्बलं तत् कथं ततः । अग्नीषोमीयशेषत्वं धर्माणां स्यात्, तदुच्यते ॥ अग्नीषोमीयशेषत्वं यदुक्तं सत्यमेव तत् । सवनीयार्थतां तेषामवजानीमहे, कुतः ॥ सवनीयस्य धर्मेषु नास्ति प्रकरणं यतः । न खल्वौपवसथ्येऽह्नि सवनीयो विधीयते ॥ यतः प्रकरणं तत्र सवनीयस्य लभ्यते । प्रचारविप्रकर्षाख्यगुणस्य तु विधित्सया ॥ कीर्त्यते सवनीयोऽत्र सौत्ये त्वेष विधीयते । कर्मणश्च विधिर्यत्र तत्र प्रकरणं भवेत् ॥ न तु यत्र गुणार्थेन श्रवणं तत्र विद्यते । तस्मान्न सवनीयस्य प्रक्रिया गुणसंनिधौ ॥ न सर्वेषाममी, नापि सवनीयस्य, नोभयोः । अग्नीषोमीय एवातो विधेर्धर्मा व्यवस्थिताः ॥ अन्यत्र त्वतिदेशेन गच्छन्ति, न विधानतः । विधिस्तु दैक्ष एवेति सूत्रे विधिरुदाहृतः ॥** '

**सोम**— प्रयोजनं पूर्वपक्षे सवनीयानुबन्ध्ययोः तत्तद्देवत्यपुरोडाशस्य अप्रवृत्तिः । सिद्धान्ते तु अग्नीषोमीयस्य प्रकृतित्वात् तत्र च पुरोडाशस्य दाशमिकन्यायेन संनिपातित्वात्, संनिपातिनां च विकृतिषु ऊहेन प्रवृत्तेः, सवनीयादौ तत्तद्देवताकपशुपुरोडाशप्रवृत्तिः अनुबन्ध्यायामपि अधिगुप्रैषस्य ऊहेन प्रवृत्तिः इति ।

**वि**— ' अग्नीषोमीयसवनीयानुबन्ध्यपशुष्वमी । उपाकरणमुख्यास्तु धर्माः साधारणा न वा ॥, ज्योतिष्टोमप्रकरणे पाठात् साधारणा अमी । पशुधर्माग्रहात् सोमयागे ते स्युर्निरर्थकाः ॥, अग्नीषोमीयधर्मत्वं तेषां स्थानात् प्रसिध्यति । द्वयोरितरयोः पश्वोः प्राप्यन्ते चोदकेन ते ॥ ' इति ।

**भाट्ट**— ज्योतिष्टोमे क्रयसंनिधौ अग्नीषोमीयः पशुराम्नातः, ' स एष औपवसथ्येऽहन्यालब्धव्यः ' इत्यस्माद्वचनात् चतुर्थेऽहनि अनुष्ठीयते । पशुधर्माश्च तत्रैव पशूपाकरणादयः समाम्नाताः । सवनीयश्च पशुः सौत्येऽहनि समाम्नातः ' आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति ' इति । अनुबन्ध्यश्च अन्ते समाम्नातः । तदिह किं पशुधर्माणां पशुत्रयसाधारण्यम्, उत सवनीयमात्रार्थत्वम्, उत सवनीयाग्नीषोमीयोभयार्थत्वम्, उत अग्नीषोमीयमात्रार्थत्वमेव इति चिन्तायां महाप्रकरणवशात् ज्योतिष्टोमसंबद्धानां धर्माणां पशुधर्मत्वेन साक्षात् संबन्धायोगात् आनर्थक्यतदङ्गन्यायेन ( ३।१।९ ) पशुयागद्वारा जनकत्वावगतेः, तेषां च मध्ये कस्य चित् विशिष्य प्रकरणबाधकबलवत्प्रमाणाभावेन अविशेषात् सर्वार्थत्वं इत्याद्यः ( पक्षः ) । द्वितीयस्तु सत्यपि ज्योतिष्टोमप्रकरणस्य पशुधर्मग्राहकत्वे सवनीयावान्तरप्रकरणेन तद्बाधः । तस्य हि औपवसथ्ये अहन्येव उत्पत्तिः । ' आग्नेयः पशुरग्निष्टोमे आलब्धव्यः, ऐन्द्राग्न उक्थ्ये द्वितीयः, ऐन्द्रो वृष्णिः षोडशिनि तृतीयः, सारस्वती मेष्यतिरात्रे चतुर्थी ' इत्येतैर्वचनैः क्रतुपशूनां विधानात् । तस्य क्लृप्तोपकारप्राकृताङ्गसंबन्धेऽपि अपेक्षितानां पशुधर्माणां संनिहितत्वेन प्राकृताङ्गसंदष्टत्वेन च अवान्तरप्रकरणोपपत्तिः । ऐन्द्राग्नादिपशूनां तु संस्थाधिकरणन्यायेन (३।६।१६) समानविधानत्वाभावादेव न पशुधर्मग्राहकत्वशङ्का । अस्तु वा तेषामपि अवान्तरप्रकरणात् धर्मग्राहकत्वम्, नैतावता सर्वार्थत्वम् । न सौत्येऽहनि तद्विधिः, सवनीयोद्देशेन तस्य आश्विनग्रहग्रहणोत्तरकालत्वमात्रविधायकत्वात् । यूपपरिव्याणस्य ' त्रिवृता यूपं परिव्ययति ' इति सामान्यविधिना ' आश्विनं ग्रहं गृहीत्वा उपनिष्क्रम्य यूपं परिव्ययति ' इति परिव्याणविधिना वा प्राप्तत्वेन अनुवादात् । परिव्याणान्तरे त्रिवृत्त्वस्यापि रशनासाधारण्याधिकरणे (३।६।१०) एव उपपादयिष्यमाणत्वाच्च । न च तथापि

दूरस्थकर्मानुवादेन कालविधिरशक्यः, औपवसथ्ये अहनि विहितानामपि क्रतुपशूनाम् 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इत्यनेन उत्कर्षविधानात् सौत्येऽहनि अनुष्ठीयमानतया उपस्थित्युपपत्तेः। तेन यथैव क्रयसंनिधौ आम्नातस्य अग्नीषोमीयस्य औपवसथ्ये अहनि अनुष्ठीयमानत्वेनैव धर्मग्राहकत्वं सिद्धान्ते, तद्वदिहापि इति न दोषः। न च एवमपि क्व सवनीयविधिः इत्यत्र विनिगमनाविरहः, धर्मबाहुल्यस्य नियामकत्वात्। अतश्च अवान्तरप्रकरणात् सवनीयार्थाः इति। **तृतीयस्तु** सत्यं सवनीयार्थाः, स्थानादग्नीषोमीयार्था अपि। तस्य हि क्रयसंनिधौ विधिदशायामेव क्लृप्तोपकारप्राकृताङ्गैः निराकाङ्क्षीकृतस्य औपवसथ्ये अहनि उत्कृष्टस्य आर्थोपस्थितिमात्रत्वेन स्थानम्। सवनीयवत् वाक्यसंनिध्यभावेन प्रकरणशङ्काऽनुपपत्तेः। अत एव इतिकर्तव्यतात्वेन अयोग्यसंबन्धयोर्वाक्यार्थयोः संनिधिः इति स्थानलक्षणम्। यद्यपि चात्र पशुधर्माणां श्रुत्यादिविनियुक्तत्वात् न प्रकरणस्य स्थानस्य वा विनियोजकत्वसंभावना, तथापि अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वे एव विनियोजकत्वव्यवहारो भाक्तः इति द्रष्टव्यम्। न चैवमपि प्रकरणेन स्थानबाधापत्तिः, अग्नीषोमीयस्य पशुधर्माकाङ्क्षायामेव अतिदेशकल्पनवत् औपदेशिकस्थानस्यैव विनियोजकत्वकल्पनौचित्यात्। अन्यथा प्रबलौपदेशिकप्रमाणेन प्रकृत्यर्थत्वात् धर्माणां क्वापि विकृत्यर्थत्वानापत्तेः। इन्द्रादेः उपायान्तरेणापि स्मृतिसंभवात् न लिङ्गादेः श्रुतिकल्पकत्वमिति विशेषः। अत उभयार्थत्वम्। **इति प्राप्ते,** न सवनीयस्य अवान्तरप्रकरणम्, सौत्ये अहनि उत्पत्तेः, अन्यथा दूरस्थकर्मानुवादेन कालरूपानुपादेयगुणविधानानुपपत्तेः। न च प्रातःसवने उत्कृष्टत्वादेव उपस्थितिः, आनुष्ठानिकोपस्थितेः अङ्गग्राहकत्वेऽपि प्रकरणान्तरप्रतिबन्धकत्वस्य क्वापि अदर्शनात्। अस्तु वा तत्, तथापि वपाभ्यासमात्रस्य प्रातःसवने उत्कृष्टत्वेऽपि उपाकरणोत्कर्षे प्रमाणाभावात् उपस्थित्यनुपपत्तेः। यद्यपि च उपाकरोतिना याग एव लक्ष्यते, तथापि शक्यार्थस्योपाकरणस्य आश्विनग्रहणोत्तरकालत्वस्य अप्राप्तेः अनुवादानुपपत्तिः। **यद्यपि** च वपाप्रचारोत्तरभाविपदार्थानां तदाद्युत्कर्षन्यायेन (५।१।१२) उत्कर्षः संभाव्यते, **तथापि** न तत्पूर्वभाविनामुपाकरणादीनामुत्कर्षे प्रमाणमस्ति। **वस्तुतस्तु** पूर्वेद्युर्वेदिकरणन्यायेन अपूर्वत्वात् तदुत्तरभाविनामपि नोत्कर्षः।

**वस्तुतस्तु** 'गङ्गायां घोषः' इत्यादौ शक्यार्थस्य घोषान्वयप्राप्त्यभावेऽपि लक्षणादर्शनात् तस्योत्तरकालत्वप्राप्त्यभावेऽपि उपाकरोतिना वपाभ्यासलक्षणोपपत्तेः पश्वनपक्रमोपयोगियूपदार्ढ्यसंपादकद्वितीययूपपरिव्याणस्य आश्विनग्रहणोत्तरकालविधित एव तदुत्तरभाविवपायागस्यापि आश्विनग्रहणोत्तरकालत्वसिद्धेः एतद्वाक्यवैयर्थ्यभियैव अभ्यासात् एतस्योत्पत्तिविधित्वम्। तत्रापि इतरस्य सर्वस्य द्वितीययूपपरिव्याणादेः वाक्यान्तरप्राप्तत्वात् कालविशिष्टं शुद्धमेव वा द्रव्यदेवताविशिष्टं कर्मैव विधीयते। ततश्च अनेनैव वाक्येन आग्नेयसवनीयस्य एतत्समानजातीयैश्च वाक्यान्तरैः ऐन्द्राग्नादीनां विधानात् औपवसथ्ये अहनि तेषां पुनः श्रवणमनुवादमात्रम्। तथापि 'यथा वै मत्स्योऽविदितो जनमवधूनुते, एवमेतेऽप्रज्ञायमाना जनमवधून्वते' इत्यर्थवादकृतसंततकरणनिमित्तकनिन्दोपपादकैतच्छब्दापेक्षितपशुसमर्पणार्थं निन्दोन्नीतदोषपरिहारार्थं च 'वपया प्रातःसवने चरन्ति' इत्यादिना वपाप्रचारोद्देशेन प्रातःसवनादिकालविधिः। खण्डशः कालभेदेनानुष्ठाने हि मध्ये स्मृत्यर्थं अवकाशलाभात् दोषपरिहारः। यद्यपि च अत्रापि कालविधानं दूरस्थकर्मानुवादेन अशक्यं तथापि अर्थवादत एव तदुपस्थितेः न कश्चिद्दोषः। यत्तु प्रचारविप्रकर्षस्य उपादेयस्य गुणस्य सत्त्वात् न दोष इति मूलोक्तं समाधानम्, तत् विप्रकर्षस्य अशाब्दस्य विधेयत्वाभावात् उपेक्षितम्। अतो न सवनीयस्य अवान्तरप्रकरणम्। स्थानात्तु अग्नीषोमीययागाङ्गं पशुधर्माः। न च ज्योतिष्टोमप्रकरणेन स्थानबाधः, पशुधर्माणां श्रुत्यादिभिः पशुसंस्कारकतया विनियुक्तानां अयोग्यतया ज्योतिष्टोमप्रकरणेन अग्रहणात्। अतो यत्रैव श्रुतः संबन्धः, यथा 'वाजपेयस्य' (३।१।९) इत्यादौ, तत्रैव आनर्थक्यतदङ्गन्यायः, न तु अत्र। एवं सत्यपि यदि तस्यापि पशोः विशिष्य प्रमाणान्तरं अपूर्वसाधन-

त्वोपस्थापकं न स्यात् ततो महाप्रकरणपरिगृहीतानामेषां आनर्थक्यतदङ्गन्यायेन (३।१।९) भवेत् सर्वपश्वर्थत्वम्, न तु एतदस्ति, स्थानेन अग्नीषोमीयार्थत्वात् । तेन सिद्धमग्नीषोमीये उपदेशः, अन्यत्र तु अतिदेश इति । सामानविध्यप्रयोजनं दशमादौ स्पष्टम् ।

**मण्डन**— 'धर्मास्तु दैक्षस्य पशोः समीपात् ।' समीपात् सामीप्यात् ।

**शंकर**— 'पशुसामान्यविध्यन्तः ।'

* **पशुधर्माधिकरणे** (३।६।७।१८–२७) क्रमस्य प्रकरणविरोधपरिहारेण पशुधर्माणां दैक्षार्थत्वे वक्ष्यमाणः अनुष्ठानदेशलक्षणोऽपि क्रमः विनियोगहेतुत्वेन सुज्ञेयो भविष्यति । के.

* **पशुधर्मता** सप्तदशारत्नितायाः यूपद्वारा वाजपेये । ३।१।९।१८.

* **पशुनियोजनं** परिधौ गुणविधिः । पश्वनपगमः दृष्टं प्रयोजनम् । महान् परिधिः कर्तव्यः । सौमिकेषु चातुर्मास्येषु । भा. १०।३।३।१८–२२. * पशुनियोजनं यूपधर्मः चातुर्मास्येषु (पशुमत्सु) परिधौ कर्तव्यः, 'परिधौ पशुं नियुञ्जीत' । वि. ९।२।१२ । परिधिश्चायं मध्यमः स्थूलः । अत्र तक्षणोच्छ्रायौ न कर्तव्यौ । अञ्जनादयस्तु कर्तव्याः । प्रैषे च 'यूपायाज्यमानाय' इत्येव ब्रूयात् न तु 'परिधयेऽज्यमानाय' इति । ९।२।१३.

* **पशुन्यायः** । पश्वेकत्वाधिकरणम् । ४।१।५। ११–१६.

* **पशुपुरोडाशः** दार्शपूर्णमासिकात् अग्नीषोमीयात् पुरोडाशात् विध्यन्तं गृह्णाति । टुप्. १२।१।१।१. * पशुपुरोडाशः देवतासंस्कारापूर्वोभयार्थः । ४।१।७. **मीको.** पृ. १०१५ 'आश्रयिन्यायः' इत्यत्र द्रष्टव्यम् । * पशुपुरोडाशः देवतासंस्कारार्थः इत्युक्तम् 'अपि वा शेषभूतत्वात्०' (१०।१।९।२३) इत्यत्र । (संस्कारः स्मरणविषयता । तेनादृष्टमपि) । भा. १२।२।२।९, * पशुपुरोडाशः पशुतन्त्रमध्ये उत्पन्नः पशुतन्त्रं गृह्णाति । १२।२।५।१४, * पशुपुरोडाशः पाशुकान् प्रयाजान् अन्यकालानपि उपजीवति । १२।१।७।१५. * पशुपुरोडाशः शास्त्रातिदेशात् सामानविध्याच्च पशुधर्माणां मध्ये अग्नीषोमसंस्कारार्थः देवतान्तरे न प्राप्नोति । वा. ३।८।१६।३१. * पशुपुरोडाशः सवनीये पशौ अपि कर्तव्यः, देवतासंस्कारार्थत्वात् । १२।२।२।८–१०. 'सवनीये पशौ' इत्यत्र द्रष्टव्यम् । * यद्देवत्यः पशुः तद्देवत्यः **पशुपुरोडाशः** । भा. १०।१।९।२०, * सौत्रामण्यां आश्विन–सारस्वत–सुत्रामदेवताकेषु पशुषु ऐन्द्र-वारुण–सावित्राः पशुपुरोडाशाः । १०।१।९।२२. * **पशुपुरोडाशस्य** अग्नीषोमीयादिसंबन्धिनः श्रपणं शालामुखीये कर्तव्यम्, न तु शामित्रे । १२।१।५।१२. * **पशुपुरोडाशे** (अन्यतः अलभ्योपकाराः) आज्यभागादयः कर्तव्याः । ('न तौ पशौ करोति' इति तु पशौ निषेधो न पशुपुरोडाशे) । १२।१।२।७. 'पौरोडाशिकाज्यभागन्यायः' इत्यत्र द्रष्टव्यम् । * **पशुपुरोडाशेषु** पाशुकैरनुयाजैः प्रसङ्गसिद्धिः अनुयाजानाम् । वि. ५।१।१५.

* **पशुपुरोडाशाङ्गे**डाभक्षणोत्तरमेव पिष्टलेपफलीकरणहोमौ, न तु अनूयाजैः सहोत्कर्षः । ५।१।१५।२८.

* **पशुपुरोडाशाङ्गप्रचाराणां** कालभेदेऽपि अङ्गानावृत्तिः । सु. पृ. ७७९.

* **पशुपुरोडाशाङ्गस्विष्टकृद्यागे** त्यागे निगमेषु च केवलस्यैवाग्नेरभिधानम् । भा. १०।४।१८।३६–३७. **मीको.** पृ. १०२ 'अग्नीषोमीयपशुपुरोडाशस्विष्टकृति०' इत्यत्र द्रष्टव्यम् ।

⌛ **पशुपुरोडाशाधिकरणम्** । अग्नीषोमीयपशुपुरोडाशे पाशुकमेव तन्त्रं प्रसज्यते ॥

**तन्त्रिसमवाये चोदनातः समानानामैकतन्त्र्यमतुल्येषु तु भेदो विधिप्रक्रमतादर्थ्यात्, तादर्थ्यं श्रुतिकालनिर्देशात् । १२।१।१।१॥**

**भाष्यम्**— अग्नीषोमीये पशौ पुरोडाशः 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपेत्' इति । किं तस्य पृथक्त्वेन अङ्गानि कर्तव्यानि, उत यानि पशौ कृतानि तस्याप्युपकुर्वन्तीति । ततः सूत्रेणैवोपक्रमः । 'तन्त्रिसमवाये... कालनिर्देशात्' । तन्त्रं साधारणो धर्मग्रामः । यथा दर्शपूर्णमासयोराज्यभागादिः

पूर्वः, स्विष्टकृदादिरुत्तरः। येषां प्रधानानाम्, तानि तन्त्रीणि प्रधानानि। तेषां तु समवाये एकदेशकालकर्तृत्वे, चोदनातः समानानां एकवाक्यचोदितानां एकतन्त्रत्वं भवति। यथा दर्शपूर्णमासयोः, यथा च चित्रायामिष्टौ। अतुल्येषु तु भेदः स्यात्। यानि तु चोदनातो न तुल्यानि नानावाक्यैश्चोदितानि, तेषु तु भेदः स्यात् तन्त्रस्य। यथा अत्रैव 'अग्नीषोमीयं पशुमालभेत', 'अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति.' इति। किं कारणम्? विधिप्रक्रमतादर्थ्यात्। विधिर्विधानं तदङ्गानां प्रयोगः, तस्य प्रक्रमः तदर्था प्रवृत्तिः। विधिप्रक्रमतादर्थ्यं विज्ञायते, अयं पश्वर्थः विधिप्रक्रमः, न पुरोडाशार्थ इति। कथं पुनः पश्वर्थत्वं विधिप्रक्रमस्य? तादर्थ्यं श्रुतिकालनिर्देशात्। श्रुत्या तत्र कालो निर्दिश्यते। अग्नीषोमप्रणयनादनन्तरं पशोः कालः। तत्र हि तस्य चोदना। वपाप्रचारादूर्ध्वं पुरोडाशस्य कालः। पशोरवसरे यो विधिप्रक्रमः स केवलः पश्वर्थो विज्ञायते पुरोडाशस्याप्राप्तत्वात्। अतस्तस्य पृथक् तन्त्रं कर्तव्यम्। लिङ्गं च पश्वर्थतां तन्त्रस्य दर्शयति। 'यदेकादशप्रयाजान् यजति पशुमेव तत् प्रयजति, यदेकादशानुयाजान् यजति पशुमेव तदनुयजति' इति। एवकारकरणात् अवधारणं विज्ञायते, पशुमेव, न पुरोडाशमिति।

**टुप्**— तन्त्रिसमवाये ... निदशात् ॥ (अग्नीषोमीये पशौ) 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इति (श्रूयते)। तत्र संशयः किं तस्य (पाशुकेभ्यः अङ्गेभ्यः) पृथगङ्गानि कर्तव्यानि, उत यानि पशोः (अर्थेन कृतानि) अङ्गानि, तानि (एव) तस्यापि उपकुर्वन्ति प्रसङ्गेन इति। ततः एतत्सिद्ध्यर्थं प्रसङ्गोऽस्ति नास्ति इति विचार्यते। (तत्र पूर्वः पक्षः) नास्ति प्रसङ्ग इति। कुतः? (उत्तरत्वेन सूत्रं योजयति —) तन्त्रिसमवाये (साधारणो धर्मग्रामस्तन्त्रम्। स येषाम्, ते तन्त्रिणः, तेषाम्—) प्रधानानां (आग्नेयाग्नीषोमीयानां पशुपुरोडाशादीनां च) समवाये (एकदेशकालकर्तृकत्वे सति) चोदनातः समानानामेकतन्त्रत्वम्। यानि एकचोदनया चोद्यन्ते (एकया प्रधानचोदनया सह चोद्यन्ते,) तेषां समानतन्त्रत्वम्। यथा दर्शपूर्णमासयोः, यथा च चित्रायामिष्टौ (दध्यादीनाम्)। अतुल्येषु तु भेदः स्यात्। यानि पुनः (प्रधान—) चोदनातो भिद्यन्ते, तेषां भेद एव यथा दर्शस्य पूर्णमासस्य च। तस्मात् द्विप्रकारत्वात् कर्मणां तृतीयः प्रकारो नास्ति। (एवं सामान्यन्यायमुक्त्वा प्रकृते योजयति। पशु—) पुरोडाशः (दार्शपौर्णमासिकात्) अग्नीषोमीयात् (पुरोडाशात्) विध्यन्तं गृह्णाति, पशुरपि सांनाय्यात्। एतावानतिदेशस्य व्यापारः। (तत्र) तयोः (पशुपुरोडाशयोः) भिन्नचोदितत्वात् न तन्त्रम्। लोके तु युक्तः प्रसङ्गः प्रत्यक्षगम्यत्वात् (उपकारस्य)। **अत्र परिचोद्यते**, चित्रेष्टिः अनुदाहरणम् (तन्त्रित्वेन बहुयागाभावात्) कथम्? 'दधि मधु घृतं धाना उदकं तण्डुलाः, तत् संसृष्टं प्राजापत्यम्' इति (अत्र) तत् इत्येकवचनान्तं सर्वनाम संसृष्टशब्देन संबध्यते एकवचनान्तेनैव। यदि दध्यादिभिः संबध्येत, बहुवचनान्तं स्यात् (तानि इति) वीप्सा वा (तत्तत् इति), न च वीप्सा श्रूयते, न बहुवचनम्। तस्मात् संसृष्टशब्देन (एव) संबन्धः। संसृष्टस्य च (तच्छब्दनिर्दिष्टस्य) प्रजापतिसंबन्धः (प्रजापतिशब्देन संबन्धः)। संसृष्टं चैकं वस्तु। तस्मात् (द्रव्यदेवतक्यात्) एक एव यागः, कुतस्तन्त्रम् (इति)। **अत्रोच्यते**। दध्यादिभिः (एव सर्वनाम) संबध्यते, (न तु संसृष्टेन)। निर्दिष्टस्य हि प्रतिनिर्देशकं सर्वनाम (भवति), निर्दिष्टानि (चेह) दध्यादीनि प्रथमया विभक्त्या। अतस्तान्येव शब्दोपात्तानि (साकाङ्क्षाणि) परिवर्तमानानि सर्वनाम्ना प्रतिनिर्दिश्यन्ते, न तु केन चित् शब्देन (दध्यादि—) संसर्गो निर्दिष्टः यः सर्वनाम्ना प्रतिनिर्दिश्येत (तस्मात् तेषामेव निर्देशः)। अथ यदुक्तं दध्यादिसंबन्धे बहुवचनं प्राप्नोति वीप्सा वेति। अत्रोच्यते। सर्वनामप्रातिपदिकस्य (हि) निर्दिष्टप्रतिनिदशकत्वे शक्तिः, वचनस्य तु एकार्थप्रतिपादकत्वम्। तस्मादनयोर्विरोधः। तत्र प्रथमोपनिपातात्, लिङ्गसंख्ययोश्च तदर्थत्वात् (प्रातिपदिकार्थत्वात्) यथाश्रुतं प्रातिपदिकं गृह्णीमः। उत्तरकालभावित्वाच्च लिङ्गसंख्ययोरविवक्षैव (युक्ता)। योऽयं 'गुणे त्वन्याय्यकल्पनैकदेशत्वात्' इति (पाशन्यायः ९।३।५।१५) स एवात्रापि न्यायः।

अथवा एकदेवतत्वात् लक्षणया लक्षितलक्षणया वा उपपन्नमेकवचनं लिङ्गं च । ( ननु लक्षणैव दोषः इति चेत्तत्राह– ) सर्वत्रैव लक्षणया लिङ्गसंख्ये प्रवर्तेते । ( तथाहि वृक्षः वृक्षौ इत्यादौ ) प्रातिपदिकं जातिं ब्रूते, लक्षणया तु द्रव्यम् ( तद्गतं च लिङ्गसंख्यं गम्यते ) ।

**गुणकालविकाराच्च तन्त्रभेदः स्यात् । २ ॥**

**भाष्यम्—** अपि च पाशुकाः प्रयाजानुयाजाः गुणतः कालतश्च विकृताः । एकादशसंख्याः पशौ उभयेऽपि । पञ्चभिश्च प्रयाजैः त्रिभिरनुयाजैः पुरोडाशस्य कार्यम् । तथा पृषदाज्येन अनुयाजाः पशोरिज्यन्ते, केवलेनाज्येन च पुरोडाशस्यार्थः । कालविकारोऽपि, आसन्ने हविषि पौरोडाशिकैः प्रयाजैर्भवितव्यम् , पाशुकास्तु तिष्ठति पशौ वर्तन्ते ' तिष्ठन्तं पशुं प्रयजन्ति ' इति वचनात् । उभयेऽपि पुरोडाशस्य पृथक्त्वेनाक्रियमाणाः न यथावत् संपादिता भवेयुः । तस्मादपि तन्त्रभेदः ।

**टुप्—** इतश्च नास्ति प्रसङ्गः । यतः कालगुणविकृताः प्रयाजानुयाजाः पशौ । तेऽन्यस्य नोपकुर्वन्ति ।

**तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः स्यात्, तन्त्रार्थस्याविशिष्टत्वात् । ३ ॥**

**भाष्यम्—** अथवा नैव भेदेन पुरोडाशस्य तन्त्रं कर्तव्यम् । किं तर्हि ? मुख्यतन्त्रेण सिद्धिः स्यात् । पाशुकमेव तन्त्रं पुरोडाशस्योपकुर्यात् । किं कारणम् ? तन्त्रमध्ये विधानात् । पाशुकस्य तन्त्रस्य मध्ये पुरोडाशो विहितः ' अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति ' इति । किमतः ? तन्त्रार्थस्याविशिष्टत्वं भवतीति । तन्त्रस्यार्थः तन्त्रार्थः अङ्गकृत उपकारः, सोऽत्राविशिष्टः पशोः पुरोडाशस्य च संनिधानाविशेषात् । पशावपि क्रियमाणान्यङ्गानि पुरोडाशस्य संनिहितानि । संनिधानाच्च पशोरप्युपकुर्वन्ति प्रदीपवत् । यथा प्रासादे कृतः प्रदीपः संनिधानात् राजमार्गेऽपि उपकरोति । विषम उपन्यासः । स खलु प्रत्यक्षेण ज्ञायते । अयं पुनः अप्रत्यक्षः अङ्गोपकारः कथं शक्यो विज्ञातुमिति । अयमपि शास्त्रदृश्यः, शास्त्रप्रत्ययाद्गम्यते । शास्त्रं चेदं दर्शपूर्णमासवत् कर्तव्यानि इति । तद्यचेत् कृतानि किमिति नोपकरिष्यन्ति । दर्शपूर्णमासयोः स्वप्रधानैः एकदेशकालकर्तृकाणि क्रियमाणानि उपकृतवन्ति, इहापि तथाविधान्येव क्रियन्ते, तस्मादिहापि तद्वदेव उपकुर्वन्तीति विज्ञायते । आह, नेह तद्विधानि । दर्शपूर्णमासयोः स्वप्रधानान्युद्दिश्य कृतान्यङ्गानि, इहापि तद्वदेव कर्तव्यानि । न च पुरोडाशमुद्दिश्य इह क्रियन्ते । किं तर्हि ? पशुम् । तस्मात् पुरोडाशस्य न प्रकृतिवत् कृतानि भवन्तीति । उच्यते । प्रकृतौ न शाब्द उद्देशः । नहि तत्र श्रूयते प्रधानान्युद्दिश्य अङ्गानि कर्तव्यानीति । किं तर्हि ? अर्थात् क्रियन्ते, तेषां तत्र चिकीर्षितत्वात् । न चार्थात् कृतं चोदकेन प्राप्यते । यत् कारणम् , विध्यन्तस्य तत्रापेक्षणात् । तेन यत् पठितम्, तत् प्राप्यते, न पाठात् बाह्यम् । तस्मात्तु अनुद्दिश्यापि क्रियमाणानि प्रकृतिवत् कृतानि भवन्ति । एवं सिद्धा प्रसङ्गादुपकारनिर्वृत्तिः । ननु एवं सति तन्त्रलक्षणात् अविशिष्टमेव भवति, न खलु तत्राङ्गमेव साधारणम् । इह तु अङ्गकृत एवोपकारः । सोऽपि न साधारणः । अन्यकृतोऽन्यस्य भवति ।

**टुप्—** अस्ति प्रसङ्गः, तस्य विषयो निरूप्यते । अन्यस्य तन्त्रे प्रतते यदन्यत् ( तुल्यधर्मकम् ) आपतति कर्म, तस्य कर्मणः ( पूर्वभाविकर्मणः ) या इतिकर्तव्यता ( प्रवृत्ता ) सा प्रसज्यते । यथा पशौ प्रतते पुरोडाश आपतति, तस्य पाशुकी इतिकर्तव्यता प्रसज्यते । कथम् ? तदुच्यते । भावयेत्, किम् ? पशूपकारम् । केन ? पुरोडाशयागेन । कथमिति अनेन ( कथम्भावेन ) यागगतो व्यापारः ( अभिलषितः ) । स च उपमितलक्षितप्रापणेन ( पौर्णमासिकस्य ) अग्नीषोमीयस्य यो यागगतो व्यापारः ( प्रयाजादिजन्यदृष्टादृष्टोपकारवत्तासंपादनाख्यः ) तं ( द्रव्यदेवता– )साहश्येन आकाङ्क्षति । तत्र यदेतत् अग्नीषोमीययागगतव्यापारविशेषनियमनमष्टमलक्षणसिद्धम्, तदुत्पत्तिरिव उत्पत्तिः ( प्रथमालोचनत्वात् ) तस्य च व्यापारस्य यत् इतरेण ( पशुपुरोडाशयागेन ) संबन्धकरणम्, सा प्राप्तिः ( विनियोगः ) । द्वावपि चेमौ ( उत्पत्तिविनियोगरूपौ यागगतव्यापारविशेषविषयौ ) चोदकव्यापारौ । तत उत्तरकालमुपसंग्रहः । ( उपसंग्रहपदार्थमाह– ) ' उप ' इति समीपे करणं

( अनुष्ठानम् ) 'सम्' इति ( तस्य नानाविधाङ्गजुष्टस्य प्रकारस्य ) साकल्येन ग्रहणम् । एष प्रयोग-वचनस्य व्यापारः । ( प्रकृते आह— ) सः ( प्रयोग-वचनः ) इह पाशुकेन प्रयोगवचनेन ( समीपे— ) कृतत्वात् न भूयः पौरोडाशिकः समीपे करोति । तस्मात् पौरोडाशिकः प्रयोगवचनो लुप्यते । एष प्रसङ्गः । कथं पुनरिदमवगम्यते, पाशुकः प्रयोगवचनः ( प्राकृतमुपकारं पुरोडाशस्यापि ) समीपे करोतीति ? ( उत्तरम्— ) 'अग्नीषोमीयं पशुमालभेत' इत्येतस्मादेव अवगम्यते । कथम् ? ( तदाह । अस्य वाक्यस्यायमर्थः— ) भावयेत् । किम् ? ज्योतिष्टोमोपकारम् । (अवान्तरोपकारमग्नीषोमीया-पूर्वमित्यर्थः ) । केन ? पशुयागेन । कथमिति ( अंशेन ) इतिकर्तव्यता संबध्यते । तत्र यस्मिन्नेव क्षणे ज्योतिष्टोमो-पकारो भवने कर्तृत्वं प्रतिपद्यते, तस्मिन्नेव क्षणे करणेन ( पशुयागेन ) भाव्यते । तस्मिन्नेव च ( क्षणे ) इति-कर्तव्यता करणमनुगृह्णती ( भाव्यमानेन ) संबध्यते । तस्मात् त्रयाणामेतेषां तुल्यकालत्वम् , भवन्तं ज्योति-ष्टोमोपकारं यागेन इत्थं भावयेदिति । ( किमिति तुल्य-कालता ? अत आह— ) यदि च भूते भविष्यति ( वा ) भाव्ये करणेतिकर्तव्यते स्याताम् , तयोस्तेन ( सह ) संबन्ध एव न स्यात् । तत्र यद्यपि उपकारस्य ( भाव्यस्य ) कालो नावधार्यते, तथापि ( त्रयाणामेककाल— ) संबन्धात् करणेतिकर्तव्यताकालेन परिच्छिद्यते । पशोश्च दीर्घकाल-त्वात् तन्मध्यपाती पुरोडाशः समीपे कृतान् ( बर्हिस्तर-णादिजन्यान् ) उपकारान् ( प्रयाजादिजन्यानि ) अपूर्वाणि च पाशुकेन प्रयोगवचनेन उपसंगृह्णाति ( स्वीकरोति प्रयोगवचनेन समीपे कृतानीत्यन्वयः ) । न तु स्वयं (पृथक्त्वेन) समीपे करोति । यानि च तेन (पाशुकेन) न समीपे कृतानि तानि ( आज्यभागावहन्त्यादीनि ) पृथगुपसंगृह्णाति (कथमित्याह–) 'न चेदन्येन शिष्टाः' इति न्यायात् येऽन्येन न विहिताः ( पदार्थाः ) तान् विदधाति ।

**विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात् । ४ ॥**

**भाष्यम्**— अथ यदुक्तं गुणकालविकाराच्च तन्त्र-भेदः स्यादिति, तत्र ब्रूमः । विकाराच्च न भेदः स्यात् अर्थस्याविकृतत्वात् । अर्थः अङ्गजनित उपकारः, स न विकृतः, यो दर्शपूर्णमासयोः स एव । कथं ज्ञायते ? तदुच्यते । प्रयाजानुयाजास्तावदेते दार्शपौर्णमासिकाः । तत्र प्रयाजानुयाजशब्दौ प्रज्ञातौ । ते च चोदकेन इह प्राप्ताः संनिहिता विद्यन्ते । प्रकृतगामित्वं च शब्दस्य न्याय्यम् । न चैकः शब्दः अनेकार्थो युक्तः । तस्मात् दार्शपौर्णमासिकास्ते । तदुपकारोऽपि एषां दार्शपौर्ण-मासिक एव । स हि तेषां प्रज्ञातः । यदि च प्राकृता-दुपकारात् उपकारान्तरं प्रकुर्युः, ततः अप्राकृतकार्यत्वात् नैव चोदकेन प्राप्येरन् , अपूर्वा भवेयुः । यथा सत्रे गौग्गुलवादिभिरभ्यञ्जनम् । अप्राप्तौ वा अनेनैव प्रयाजा विधीयन्ते, अनेनैव तेषां विकार इति, तत्र द्विकरः शब्दः स्यात् । न च सकृदुच्चरितः शक्नोत्यर्थद्वयं विधातुम् । अपूर्वत्वे च एतेषां प्राकृता अपि चोदकेन प्राप्येरन् । तत्र वैश्वदेवे त्रिंशत्संपत्तिराहुतीनां न युज्यते, 'नव प्रयाजाः, नवानुयाजाः, द्वावाज्यभागौ, अष्टौ हवींषि, अग्नये समवद्यति, वाजिनो यजति, आहुतीनां संपत्त्यै त्रिंशत्त्वाय' इति । तस्मात् गुणविकारेऽपि अवि-कृतः प्राकृतः अङ्गोपकारः । तत्कृता एव पुरोडाशस्यापि उपकुर्वन्ति इति न गुणकालविकारेऽपि तन्त्रभेदः । तदानीं तं उभौ प्रार्थयेते पशुः पुरोडाशश्च । उभयोश्च प्रकृतिवत् क्रियन्ते अङ्गानि । तस्मात् सकृत्कृतान्येव उभयोरुप-कुर्वन्ति । विकार इदानीं किमर्थः ? पश्वर्थः । पाशुकेषु हि प्रयाजानुयाजेषु श्रूयन्ते । न च पशोः पुरोडाशस्य च साधारणान्यङ्गानि । पाशुकान्येव संनिधानात् पुरोडाशस्यापि उपकुर्वन्तीत्युक्तम् । अपि च पृषदाज्येनापि इज्यमाना अनुयाजाः आज्येन इष्टा भवन्ति । न हि पृषत्त्वं आज्यत्वं नाशयति । यस्य क्षीरेण भोजनमुदितं भवति, यदि तस्मै सशर्करं दीयते, न कश्चित् विरोधो भवति, सशर्करमपि तत् पय एवेति । तथा य एकादश प्रयाजान् यजति, यजत्यसौ तदन्तर्गतान् प्राकृतान् पञ्च । येऽभ्यधिकाः षट् , न तैरिज्यमानैः पञ्च प्राकृता नष्टा भवन्ति । एवं तिष्ठति अपि पशौ क्रियमाणाः प्रयाजाः कृता एव पुरोडाशस्य भवन्ति । क्रमस्तेषां प्राकृतो हापितः, गुणमात्रं च क्रमः, न च गुणानुग्रहार्थे

प्रधानस्यावृत्तिर्युक्ता । न च गुणवशवर्ति प्रधानम् । कामं क्रमविपर्यासनिमित्तं प्रायश्चित्तं भवेत्, नावृत्तिः । प्रायश्चित्तं तर्हि कर्तव्यम् ? क्रियते, 'अयाश्चाग्नेः इति सर्वप्रायश्चित्तं जुहोति' इति । प्रासङ्गिकत्वाद्वा प्रायश्चित्ताभावः । तस्मादविरोधः ।

टुप्— अथ यदुक्तम्, द्रव्यसंख्याकालभेदात् न प्रसज्यते इति, तदुच्यते । सर्वः कथम्भावः उपकारमाकाङ्क्षति, तं तु चोदकः सादृश्येन उत्पादयति प्रापयति च । उत्पादितं प्रापितं च प्रयोगवचनः उपसंगृह्णाति । ते च ( उपकाराः ) शास्त्राण्यन्तरेण न संभवन्ति, इति शास्त्राणामुत्पत्तिं प्राप्तिं च करोति ( शास्त्रग्रहणं पदार्थानामपि उपलक्षणम् ) । पूर्ववच्च प्रयोगवचनेन उपसंग्रहः । तदिह पाशुकौ चोदकप्रयोगवचनौ सर्वं ( इदं ) कुरुतः । पौरोडाशिकस्तु चोदकः उत्पत्तिप्राप्ती करोत्येव । प्रयोगवचनस्तु पाशुकेन प्रयोगवचनेन उपसंगृहीतत्वात् न पृथगुपसंगृह्णाति उपकारान् । न चेदुपसंगृह्णाति, ते पदार्था एवात्र ( पुरोडाशे ) न सन्ति ( न कर्तव्या इत्यर्थः ) नतरां पदार्थानां गुणाः । तस्मान्नास्ति वैगुण्यम् । न च संख्याभेदेन द्रव्यभेदेन वा अपूर्वान्तरं भवति । किं तर्हि ? प्राकृती संख्या ( पञ्चत्वरूपा ) प्राकृतं च द्रव्यं ( केवलमाज्यम् ) अपनीयते । उपकारस्तु स एव ( स्थितः । एवं कालभेदोऽपि न दोष इत्याह— ) प्रयाजोपकाराश्च आदौ ये उत्पद्यन्ते, ते च आफलनिर्वृत्तेः ( फलभूतपश्वपूर्वनिर्वृत्तिपर्यन्तम् ) विद्यन्ते । विद्यन्ते चेत् अदोष एव कालभेदः । ( तस्मादस्ति प्रसङ्ग इति ) ।

**एकेषां चाशक्यत्वात् । ५ ॥**

**भाष्यम्**— एकेषां चार्थानां अशक्या भेदेन क्रिया । यथा वेदेरग्न्युद्धरणस्य व्रतोपायनस्येति । वेदिः कृता अनपवृक्ता तिष्ठति । सा न शक्या कर्तुम् । नहि अर्थः कृतः सन् कर्तुं शक्यते । अथोच्यते, अन्यां करिष्यतीति । आहोपुरुषिकं स्यात् । तिर्यक् चासौ भवेत् । तत्र दिक्कृतं मुह्येत । विहारपृथक्त्वं चाश्रुतमापद्येत । तत्र 'एकदेशकालकर्तृकत्वमङ्गप्रधानानाम्' इति स्थितो न्यायः प्रत्युद्ध्रियेत । एवमग्न्युद्धरणं तदाहवनीयनिर्वृत्त्यर्थम् । सकृदुद्धरणेन च निर्वर्तितोऽसौ । न च निर्वर्तितः शक्यो निर्वर्तयितुम्, यथा कृतः कर्तुम् । अथोच्यते, अन्यं निर्वर्तयिष्यतीति । न तस्मिन्ननुपरते द्वितीयस्तत्र आहवनीयोऽस्ति । यत् कारणम्, गार्हपत्याहवनीयौ उभावेकस्थौ । आहवनीयेऽपयातिते परिशिष्टो गार्हपत्यो भवति । यथा सर्वसाधारणात् ध्रौवाज्यात् उपांशुयाजार्थेऽपयातिते परिशिष्टमन्यदेवतार्थं भवति । विहारपृथक्त्वं च पूर्ववदापद्यते । तत्र पूर्वोक्ता एव दोषाः । तथा व्रतं यद् गृहीतम्, न तत् पुनरुत्सृष्टं शक्यते ग्रहीतुम् । अनुत्सृष्टं च तदा प्रधानापवर्गात् ।

**एकाग्निवच्च दर्शनम् । ६ ॥**

**भाष्यम्**— एकाग्निं पशोः पुरोडाशस्य च दर्शयति 'मध्येऽग्नेराज्याहुतीर्जुहोति, पुरोडाशाहुतीः पश्चाहुतीश्च' इति । नाग्न्युद्धरणस्य भेदः । तस्मात् पाशुकं तन्त्रं पुरोडाशे प्रसज्यते इति ।

शा — सकृदनुष्ठितमपि अङ्गं बहूनां प्रधानानामेकदेशकालकर्तृकाणां शक्नोति उपकर्तुं इत्येतत् तन्त्रलक्षणोक्तमुपजीव्य किमगृह्यमाणविशेषत्वादेव वा एवं भवति, उत 'अस्मै इदमनुष्ठानम्, नास्मै' इत्येवं गृह्यमाणेऽपि विशेषे अन्यार्थेऽपि अनुष्ठितमपि अङ्गमन्यस्यापि देशाद्यभेदे शक्नोत्युपकर्तुम्, न तादर्थ्येन पुनरनुष्ठातव्यमिति चिन्त्यते । इति तन्त्रप्रसङ्गयोर्हेतुहेतुमत्ता । तत्र '**अङ्गानि पशुकालानि पश्वर्थानीत्यसंशयम् । अनागते पुरोडाशकाले नहि तदर्थता ॥ अन्यार्थानुष्ठितं चाङ्गं नह्यन्यस्योपकारकम् । तदर्थेन कृतं चैव तथा प्रकृतिदर्शनात् ॥**' किञ्च '**विधीयमानं कालादौ कर्म साङ्गं विधीयते । स्वकालेऽतः पुरोडाशः कार्यः सर्वाङ्गसंगतः ॥ गुणकालकृतं चापि वैगुण्यं भाष्य ईरितम् । तेनापि न प्रसङ्गोऽस्तीत्येवं प्राप्तेऽभिधीयते ॥ वितते पाशुके तन्त्रे समाप्तिमागते सति । मध्ये पतन् पुरोडाशस्तत्तन्त्रमुपजीवति ॥ चोदकेन पुरोडाशे यो विध्यन्तः समर्थितः । ऐष्टिकः स पशावेव विततो दृश्यते यदा ॥ तदा तेनैव संतुष्टः पुरोडाशविधिः स्वयम् । प्राकृतानां पदार्थानां न करोत्युपसंग्रहम् ॥**' तस्मादस्ति प्रसङ्गः ।

**सोम—सूत्रार्थस्तु**– साधारणाङ्गग्रामभाजां समवाये एकदेशकालकर्तृत्वे सति यानि एकचोदनाचोदितानि आग्नेयादीनि तेषामेव ऐकतन्त्र्यं स्यात्, भिन्नचोदनाचोदितेषु पशुपुरोडाशादिषु अङ्गानुष्ठानस्य श्रुत्या अग्नीषोमीयप्रणयनानन्तरलक्षणाकालनिर्देशेन पश्वर्थत्वात् पुरोडाशार्थे तन्त्रभेदः स्यात् इति ।

**वि**—'पश्वर्थानुष्ठितैर्नास्ति पुरोडाश उपक्रिया । अस्ति वा, विध्यभावान्नो, ह्यर्थतस्त्वस्तु लोकवत् ॥'

**भाट्ट**—'अग्नीषोमीयस्य० निर्वपति' इति श्रुते अग्नीषोमीयपशुयागाङ्गभूते दार्शिकाग्नीषोमीययागप्रकृतिके पशुपुरोडाशयागे किं पाशुकानि प्रयाजादीन्यङ्गानि प्रसज्यन्ते, उत भेदेनानुष्ठीयन्ते इति चिन्तायाम्, न तावत् पौरोडाशिकं चोदकं प्रयोगविधिं च प्रयाजाद्यंशेऽपि अभ्युपगम्य केवलमनुष्ठानप्रसङ्ग एवाभ्युपगन्तुं शक्यः । प्रयोगविधिना वपाप्रचारोत्तरकालविशिष्टसाङ्गपुरोडाशयागप्रयोगविधौ ततः पूर्वकृतप्रयाजादीनां अकालकृतत्वेन उपकारकत्वानुपपत्तेः । **यदि तु** नायं कालविधिः, अपितु पशुपुरोडाशसमाख्यासहकृतानुष्ठानसादेश्यात् वाक्यादेव वा पश्वङ्गत्वावगतौ तत्प्रयोगान्तःपातेनानुष्ठानसिद्धेः अयं क्रमविधिरेव इत्युच्येत, **तथापि** पुरोडाशयागार्थं प्रधानविधिनैवानुष्ठापितानां प्राकृतानामङ्गानां अत्राकरणे वैगुण्यापत्तिरनिवार्यैव । यत्र हि पश्वङ्गानां पुरोडाशाङ्गानां च न वैलक्षण्यम्, तत्र सकृत्करणे वैगुण्याभावेऽपि तन्त्रत्वस्यैवापत्तेः न प्रसङ्गापत्तिः । यत्र वैलक्षण्यम्, यथा पशौ एकादश प्रयाजाः तिष्ठति च पशौ पृषदाज्येनानूयाजाः एकादश वैकृतयाज्यान्तरयुक्ताः, पुरोडाशे तु प्रयाजाः पञ्च हविरासादनोत्तरकालीनाः, अनूयाजाश्च शुद्धाज्येन त्रयः इत्यादि । तत्र त्रित्वादिसंख्यायाः चोदकेनाङ्गत्वप्राप्तौ प्रयोगविधिना चानुष्ठापने कथं पुरुषालस्यवशेनाननुष्ठाने वैगुण्यानापत्तिः ? । अतोऽवश्यं प्रसङ्गवादिना तदंशे शास्त्रस्यैव न व्यापारः इति अभ्युपगन्तव्यम् । अस्तु तर्हि तदंशे चोदकसत्त्वेऽपि प्रयोगविधिलोपः । तथात्वे पुरोडाशोद्देशप्रवृत्तपुरुषकृतौ प्रयाजाद्यनुकूलायां प्रयाजादेः कारकत्वाभावेन पुरोडाशाङ्गत्वानापत्त्या चोदकवैयर्थ्यात् । प्रयाजाद्यनुष्ठानस्य पशूद्देश्यकत्वेन पुरोडाशोद्देश्यकत्वाभावात् । **अथ** पुरोडाशयागानुकूलभावनायामेव प्रयाजादेः इतिकर्तव्यतात्वेनान्वयात्तदङ्गत्वमित्युच्येत, **तथापि** अनुष्ठानाभावेऽपि अङ्गत्वबोधकातिदेशस्वीकारे कृष्णलेषु अवघातातिदेशापत्त्या प्राभाकरमतप्रवेशापत्तेः । **अथ** उपकारपृष्ठभावेन पदार्थानामतिदेशात् उपकारलोपे इव अन्यत उपकारलाभेऽपि न पदार्थातिदेशः । उपकारस्य सिद्धत्वेन जनकापेक्षाऽभावे तदंशे अतिदेशकल्पने प्रमाणाभावात् । अत एव पुरोडाशातिदेशेन प्रयाजादिजन्यो विजातीयोपकार एव अतिदिश्यते, न तु तज्जनकप्रयाजादिकमपि । अतश्च पश्वर्थे क्रियमाणप्रयाजादिभिरेव तादृशविजातीयोपकारस्य लब्धत्वात् तेनैव पुरोडाशयागेऽपि योग्यताजननरूपफलोपपत्तेः प्रसङ्गाविरोधः । अत एव कालसंख्याद्यभावकृतं न वैगुण्यमपि । प्रयाजादीनामेवानतिदेशेन तत्पृष्ठभावेन तेषां सुतरामनतिदेशात् । **इति चेत्**, तथात्वेऽपि पशुयागोद्देशेन अनुष्ठितप्रयाजादिजन्यादृष्टानां पशूपकारं प्रत्येव फलोपधायकतया पुरोडाशयागोपकारकत्वानुपपत्तेः । अन्यथा स्वर्गोद्देशेन अनुष्ठितदर्शपूर्णमासादितः पुत्रवृष्ट्यादेरपि उत्पत्त्यापत्तेः । अतः पश्वर्थे क्रियमाणप्रयाजाद्यङ्गैः पुरोडाशोपकारकत्वानुपपत्तेः तदर्थं भेदेनानुष्ठेयानि प्रयाजादीनि । न च 'एकादश प्रयाजान् यजति' इत्यादिना अङ्गप्रधानसाधारणप्रयाजाद्युद्देशेन एकादशत्वादिविधानात् सकृत्कृतैरेव तैः तन्त्रेण उभयोपकारोपपत्तिः । 'एकादश प्रयाजान् यजति, पशुमेव तत् प्रयजति' 'एकादशानुयाजान् यजति, पशुमेव तदनुयजति' इत्यादिना एकादशत्वादीनां पश्वपूर्वसाधनीभूतप्रयाजार्थत्वावगमेन गृह्यमाणविशेषतया तन्त्रत्वानुपपत्तिः । **इति प्राप्ते,** सत्यम् । एकादशत्वादिगुणकं प्रयाजादिकं पश्वर्थमेव । तैरेव तु पशुप्रयोगमध्यवर्तिनः पुरोडाशयागस्य प्रसङ्गेन उपकारसिद्धेः न पृथक् तदर्थमनुष्ठानम् । अत एव प्रसङ्गस्थले अन्यतःसिद्धोपकारलाभात् पुरोडाशप्रयोगविधिलाघवेन नोपकारजनकीभूतं प्रयाजादिकमनुष्ठापयति, न वा तदीयचोदकः तदतिदिशति प्रयोजनाभावात् । अत एव उपकारमात्रांशे एव अतिदेशः । न च तैः पश्वपूर्वानुकूलयोग्यतामात्रस्यैव जननम्, पुरोडाशापूर्वानुकूल-

योग्यताया अपि सामग्रीसत्त्वेनोत्पत्तौ बाधकाभावात् । नहि एकं कारणं युगपत् क्रमेण वा एकमेवं कार्यं जनयति इत्यत्र नियामकमस्ति, एकस्यैव घटस्य युगपत् क्रमेण वा रूपरससंयोगाद्युत्पादकत्वदर्शनात् । कामोद्देशेन अनुष्ठितदर्शपूर्णमासजन्यापूर्वात् नित्यप्रयोगीयपापक्षयस्यापि उपपत्तेश्च । सामग्रीभेदस्य प्रकृतेऽपि समानत्वाच्च । एकस्मात् कारणात् युगपत् एककार्यताऽवच्छेदकाव-च्छिन्नस्य एकस्यैवोत्पत्तिः । इतरथा घटद्वयोत्पत्तिरपि युगपदापद्येत । अत एव 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ अर्थवादोपात्तकामशब्दानुरोधेन प्रवृत्तिप्रयोजककामनाविषयत्वस्यैव उद्देश्यताऽवच्छेदकत्वेन स्थापितत्वात् तदवच्छिन्नस्यैकस्यैव युगपदुत्पत्तिः, नानेकस्य । न च तर्हि क्रमेण तस्योत्पत्तिप्रसङ्गः, पूर्वोत्पन्नकार्येण अपूर्वस्य नाशे उत्तरोत्पत्तौ आपादकाभावात् । न चैवं इहापि प्राथमिकेन पुरोडाशपरमापूर्वेण प्रयाजादिजन्यादृष्टानां नाशात् पाश्चात्त्यपशुपरमापूर्वोत्पत्त्यनुपपत्तिः, लाघवेन उद्देश्यताऽवच्छेदकावच्छिन्नस्यैव अपूर्वनाशकत्वाङ्गीकारात् । अतोऽत्र कार्यान्तरोत्पत्तौ न किञ्चिद् बाधकं इति युक्त एव प्रसङ्गः । गुणकालादिकृतं वैगुण्यं तु त्वयैव निरस्तम् ।

**मण्डन**— 'अङ्गं पुरोडाश उपैति पाशुकम् ।'

**शंकर**— 'चित्रायां भिन्नकर्मता ।' १. 'पश्वङ्गानि प्रसज्यन्ते ।' २. (अत्र प्रथमाधिकरणत्वेन यन्निर्दिष्टं तत्, 'येषां तु समवाये एकदेशकालकर्तृत्वे चोदनातः समानानामेकवाक्यचोदितानां एकतन्त्रत्वं भवति । यथा दर्शपूर्णमासयोः । यथा च चित्रायामिष्टौ' इति भाष्यानुसारेण चित्रोदाहरणं गृहीत्वा शंकरभट्टैः किञ्चिदुक्तमिति ज्ञेयम् । **के.**)

* **पशुपुरोडाशादयः** अन्यार्थैरेवाङ्गैः उपक्रियमाणाः न स्वाङ्गान्युपसंगृह्णन्ति, न च तद्धान्या किञ्चिदवैगुण्यं भवति इति प्रसङ्गलक्षणे (१२) प्रतिपाद्यते । **वा.** ३।६।३।१० पृ. १०३६. * पशुपुरोडाशादयः आश्रयिणः पदार्थाः अदृष्टार्थाः, न तु देवतासंस्कारार्थाः । देवताऽऽश्रयात्तु देवतागतं तदपूर्वमिति गम्यते । **भा.** ४।१।७।१८-२०. * **पशुपुरोडाशादीनां** हविर्निर्वापः हविर्धानशकटाभ्यां भिन्ने शकटे, न तु हविर्धानशकटयोरन्यतरस्मिन् । १२।१।७।१४-१६. **मीको.** पृ. १७८६ 'ज्योतिष्टोमे इष्ट्यादौ०' इत्यत्र द्रष्टव्यम् । * **पशुपुरोडाशादौ** देवतादेः गुणत्वेन प्रतीतस्यापि प्रयोजनाकाङ्क्षायां प्राधान्यमिष्यते । **भाट्ट.** ३।४।८ पृ. ३१८.

* **पशुपुरोडाशतन्त्रस्य** प्रसङ्गः अग्निचयने अनुनिर्वाप्येषु देवसुवां हविरादिषु । १२।३।२।३-८. **मीको.** पृ. ३८३ 'अनुनिर्वाप्याधिकरणम्' इत्यत्र द्रष्टव्यम् ।

* **पशुपुरोडाशता च** (सौत्रामण्याम्) ग्रहाणां श्रूयते— 'नैतेषां पशूनां पुरोडाशा विद्यन्ते, ग्रहपुरोडाशा ह्येते पशवः' इति । (पशुदेवतावन्तः पुरोडाशा न सन्ति, अन्यदेवत्यास्तु सन्त्येव) । **भा.** ८।२।१।९.

**पशुपुरोडाशन्यायः** । अग्नीषोमीयपशुपुरोडाशयागः पशुदेवतासंस्कारकः ॥

**पशावपीति चेत् । १०।१।९।१९ ॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । 'आ सोमं वहन्त्यग्निना प्रतितिष्ठन्ति, तौ संभवन्तौ यजमानमभि संभवतो वरुणपाशाभ्यां वा एषोऽभिधीयते, यो दीक्षितो यदग्नीषोमीयं पशुमालभते, वरुणपाशाभ्यामेव मुच्यते' इति । तत्रेदं समामनन्ति— 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमनुनिर्वपति' इति । तत्र संदेहः किं पुरोडाशयागः आरादुपकारकः, उत देवतासंस्कारार्थः इति । किं तावत् प्राप्तम् ? ततः प्रयाजाधिकरणे पराजितोऽपि हेतुः केन चिदपरेण विशेषेण पुनरनुप्राप्यते इति पुनरुपदिश्यते 'पशावपीति चेत्' । इति चेत् पश्यसि किमारादुपकारको देवतासंस्कार इति, पशावपि आरादुपकारकः स्यात् । एतद्धि कर्मणां प्रसिद्धं कार्यम् । अग्नीषोमीयमिति च गुणभूतदेवताकः तद्धितशब्दो भवति । पशावपि तद्धित एव शब्दो वाक्यशेषेण बलवता ज्वलनवचनो व्यपदिश्यते, न नियोगतस्तद्वचनः पशुपुरोडाशे । अतः प्रसिद्धेः आरादुपकारकत्वम् ।

**टुप्**— यस्य प्रधानभूता देवता तस्य धर्मा एव न प्राप्नुवन्ति । तत्र 'अनिरुक्तः स्विष्टकृत्' इति दर्शनं नोपपद्यते । कथं (धर्माः) न प्राप्नुवन्ति ? उच्यते । विकृतौ

सादृश्येन धर्मप्राप्तिः विसदृशयोस्तु अग्नीषोमयोः ( कथं धर्मप्राप्तिः ? इत्यभिप्रायः काक्वा व्यञ्जनीयः । किं वैसादृश्यमित्याह– ) प्रकृतौ गुणभूतयोः ( अग्नीषोमयोः ) धर्मा विहिताः, विकृतौ प्रधानभूतयोः इति विसदृशम् ( वैसादृश्यमित्यर्थः ) । अयमभिप्रायः परिचोदयतः ।

**न, तद्भूतवचनात् । २० ॥**

**भाष्यम्**— नेति प्रतिषेधकः शब्दः । 'आ सोमं वहन्ति, अग्निना प्रतितिष्ठन्ति' इत्यर्थवादवचन एषः । यद्यर्थवादवचनात् अन्या पशौ देवता, अन्या पुरोडाशयागे इति गम्यते, अर्थवादवचनादेव सैवेत्यवगन्तव्या । एवं ह्याह– 'यद्देवत्यः पशुः तद्देवत्यः पशुपुरोडाशः' इति । तस्मात् अर्थवादसाम्ये देवतासंस्कार इति गम्यते ।

**लिङ्गदर्शनाच्च । २१ ॥**

**भाष्यम्**-- इतश्च पश्यामः संस्कारकर्म पशुपुरोडाश इति । कुतः ? लिङ्गमपि एतमर्थं दर्शयति । 'इन्द्राय वज्रिणे वृषभमालभेत' इत्यस्य पशोः पुरोडाशस्य क्रमे संप्रतिपन्नदेवताकं याज्याऽनुवाक्याद्वयं समाम्नातम् । 'इन्द्रं स्तुहि वज्रिणं स्तोमपृष्ठम्, स्तुहि शूरं वज्रिणं सुप्रतीतम्' इति च । तत् संस्कारपक्षेऽवकल्पते नान्यथा । तस्मात् पशुदेवतासंस्कारार्थः पुरोडाशयाग इति ।

**गुणो वा स्यात् कपालवद् गुणभूतविकाराच्च । २२ ॥**

**भाष्यम्**-- विशेषविवक्षया पुनस्तमेव हेतुं व्यपदिशति । वाशब्देन पक्षं व्यावर्तयति । गुणः स्यात् देवता । एवमारादुपकारकत्वप्रसिद्धिरनुग्रहीष्यते । अनेकगुणभावश्च कपालवत् भविष्यति । यथा कपालं श्रपणेऽपि तुषोपवपनेऽपि । एवं अग्नीषोमावपि अभिन्नौ पशुयागे पुरोडाशयागे च गुणभूतौ भविष्यतः । एवं च सति दार्शपौर्णमासिकयोः अग्नीषोमयोर्गुणभावेन यागे द्वारभूतयोः धर्मः आम्नातः, इह गुणभूतयोरेवाविरोधेन भविष्यति । इतरथा प्रधानभूतयोः अन्यकार्ययोर्न प्राप्नुयात् । दृश्यते च अनिरुक्तः स्विष्टकृदिति । तस्मादपि आरादुपक्रिया । अपिच सौत्रामण्यां आश्विनसारस्वतसुत्रामदेवताकेषु पशुषु ऐन्द्रवारुणसावित्राः पुरोडाशाः पशुप्रकरणान्नोत्कृष्यन्ते । संस्कारपक्षे उत्कृष्येरन् । छिद्रापिधानार्थतायाश्च उक्तमर्थवादत्वम् । तस्मादपि आरादुपक्रिया ।

**अपिवा शेषभूतत्वात् तत्संकारः प्रतीयेत स्वाहाकारवत् । २३ ॥**

**भाष्यम्**-- अपिवेति पक्षव्यावृत्तिः । नारादुपकारकं कर्म । तत्संस्कारः प्रतीयेत देवतासंस्कार इति । कुतः ? शेषभूतत्वात् देवतायाः प्रयोजनवत्त्वम् । तस्माद्यथा स्वाहाकारयजिर्निष्प्रयोजन इति देवतासंस्कारः प्रतीयते एवमिहापि ।

**अङ्गानामर्थसंयोगात् । २४ ॥**

**भाष्यम्**-- अर्थेन प्रयोजनेन संयोग इह गम्यते वाक्येन । तेन नारादुपकारकम्, आरादुपकारकेभ्यः सामवायिकान्यङ्गानि वरीयांसि भवन्ति इति । यदुक्तं गुणभूतदेवताकेन तद्धितशब्देन निर्देश इति, प्रधानभूतदेवताकेनापि एवंजातीयकेन शब्देन संबन्धे विधीयमाने निर्देशो भवति । अपिच दृष्टकार्यमदृष्टात् बलीयः । तस्मात् संस्कारकर्मेति । ( यद्यपि इदं पृथक्सूत्रत्वेन क्वापि नोपलभ्यते, तथापि भाष्यस्वारस्यात् पृथगेवेति सिध्यति इति अस्माभिः पृथक् कृतमिति ज्ञेयम् । कें. )

**व्यृद्धवचनं च विप्रतिपत्तौ तदर्थत्वात् । २५ ॥**

**भाष्यम्**-- इतश्च संस्कारकर्मेति । सौत्रामण्यां पशुपुरोडाशदेवताविप्रतिपत्तौ व्यृद्धवचनं देवतासंस्कारे एवावकल्पते । 'यद्वै सौत्रामण्यां व्यृद्धं तदस्याः समृद्धम्, यदन्यदेवत्याः पशुपुरोडाशा भवन्ति, अन्यदेवत्याः पशवः' इति ।

**गुणेऽपीति चेत् । २६ ॥**

**भाष्यम्**— एवं चेत् पश्यसि संस्कारपक्षे व्यृद्धवचनं अवकल्पते इति । तन्न । संस्कारपक्षेऽपि व्यृद्धवचनं नावकल्पते । नहि तत्र किञ्चित् व्यृद्धम् । विप्रतिपन्नदेवताकैरेव पुरोडाशैः तत् कर्म समृद्धतरं भवति । एवं ह्याह– 'यदन्यदेवत्याः पुरोडाशा भवन्ति अन्यदेवत्याः पशव इति तदस्यां समृद्धं भवति' इति । यश्चोभयोः पक्षयोर्दोषः, न तमेकश्चोद्यो भवति । यथैव

हि संस्कारपक्षे न्यृद्धवचनमर्थवादः एवमितरस्मिन्नपि पक्षे अर्थवादो भविष्यति।

**नासंहानात् कपालवत्। २७॥**

**भाष्यम्**— नैतदेवम्। भवदीये पक्षे न किञ्चिदपि हीनम्। यथैव एकेन कपालेन तुषेषु उप्यमानेषु अन्येषां कपालानां न किञ्चिद्धीयते, एवमन्यया देवतया पशुपुरोडाशयागे निर्वर्त्यमाने न किञ्चित् पशुदेवतायां हीयते। तत्र अन्यृद्धे एव न्यृद्धवचनं भवति। मदीये तु पक्षे देवताप्रकाशनमङ्गभूतं हीयते। अन्यदेतदुच्यते यत् न्यृद्धमपि समृद्धं भवतीति। अहीने तु न्यृद्धशब्दे उच्चरिते न शब्दार्थो गृहीत इति।

**ग्रहाणां च संप्रतिपत्तौ तद्वचनं तदर्थत्वात्। २८॥**

**भाष्यम्**— इतश्च संस्कारकर्मेति। सौत्रामण्यां संप्रतिपन्नदेवताकेषु ग्रहेषु तद्वचनं भवति पुरोडाशवचनम्। 'नैतेषां पशूनां पुरोडाशा विद्यन्ते ग्रहपुरोडाशा ह्येते पशवः' इति। न तावन्न विद्यन्ते। विप्रतिपन्नदेवताकैस्तु संस्काराभावमालोच्य एवमुच्यते। ग्रहा एषां पुरोडाशाः 'ग्रहपुरोडाशा ह्येते' इति। किं तेषां पुरोडाशैः सामान्यम्? यदेते देवतासंस्कारार्थाः। यदि पुरोडाशा अपि देवतासंस्कारार्थाः, एवमेतदवकल्पते। तस्मात् संस्कारपक्षः एव श्रेयान्।

**ग्रहाभावे च तद्वचनम्। २९॥**

**भाष्यम्**— एवं श्रूयते 'नैतस्य पशोर्ग्रहं गृह्णन्ति पुरोडाशवानेष पशुः' इति पशुपुरोडाशवत्ताहेतुकं ग्रहाभावं ब्रुवन् ग्रहपुरोडाशयोः एकार्थतां दर्शयति। तत्र ग्रहस्य देवतासंस्कारार्थता विज्ञाता। यदि पुरोडाशोऽपि देवतासंस्कारार्थः, एवमेतदवकल्पते।

**देवतायाश्च हेतुत्वं प्रसिद्धं तेन दर्शयति। ३०॥**

**भाष्यम्**— इतश्च पश्यामः संस्कारकर्मेति। एवं ह्याम्नायते— 'अग्निभ्यः कामेभ्यः पशव आलभ्यन्ते, कामा वा अग्नयः, आग्नेयाः पुरोडाशा भवन्ति, आग्नेया हि पशवः' इति। पशुदेवताहेतुकान् पुरोडाशान् ब्रुवन् देवतासंस्कारार्थतां पुरोडाशानां दर्शयति।

**अविरुद्धोपपत्तिरर्थापत्तेः शृतवद् गुणभूतविकारः स्यात्। ३१॥**

**भाष्यम्**— अथ यदुक्तं गुणभूतयोर्धर्मैः प्रधानभूतयोरग्नीषोमयोर्न स्यादिति। उच्यते। अविरुद्धा प्रधानभूतयोरपि अग्नीषोमयोर्धर्माणामुपपत्तिः। कुतः? अर्थापत्तेः। प्रधानभूतावपि प्राकृतं कार्यं यागनिर्वृत्तिं कुर्वाणौ द्वारभूतौ इति धर्मैर्योक्ष्येते शृतवत्। यथा 'शृते चरुम्' 'दधंश्चरुम्' इति प्रदानार्थे दधिशृते प्रणीताकार्यं कुर्वाते इति धर्मैर्युज्येते। न च दोषो भवति।

**स द्व्यर्थः स्यादुभयोः श्रुतिभूतत्वाद् विप्रतिपत्तौ तादर्थ्याद् विकारत्वम्। ३२॥**

**भाष्यम्**— अथ यदुक्तं ऐन्द्रवारुणसावित्राणां पुरोडाशानां सौत्रामणीप्रकरणात् उत्कर्षः प्राप्नोति। तत्रेदमुच्यते। स द्व्यर्थो यागो देवतासंस्कारार्थः छिद्रापिधानार्थश्च। उभयोरर्थयोः श्रुतिभूतत्वात्। अतो विप्रतिपन्नदेवताकेषु छिद्रापिधानार्थतया प्रकरणादुत्कर्षो न भविष्यति। तत्प्रकरणगत एवायं विकारो भविष्यतीति।

**तस्याप्युक्तमर्थवादत्वम्। ३३॥**

**भाष्यम्**— इति यदुक्तम्, तत्रेदमुच्यते।

**विप्रतिपत्तौ तासामाख्याविकारः स्यात्। ३४॥**

**भाष्यम्**— एवं तर्हि अनेन प्रकारेण प्रकरणादनुत्कर्षः। देवतासंस्कारस्तावत् प्रकरणादुत्कर्षेण न शक्यते बाधितुम्। तत्र सौत्रामण्यां संप्रतिपन्नदेवताका एव चोदकेन पुरोडाशाः प्राप्ताः। तत्र इन्द्रादयः शब्दाः पशुदेवतानामेव वाचकाः। कथम्? एकदेशा हि तेषामिमे वर्णान्तरसहिता उच्चारिता इति गम्यते। शक्नुवन्ति हि एकदेशाः समुदायिनः समुदायं प्रत्याय्य समुदायार्थान् गमयितुम्। यथा गाव्यादयः। यथा च सरस्वतीदेवताके निगदे 'सरस्वति देवनिदो निबर्हय प्रजां विश्वस्य बृसयस्य मायिनः।' (ऋसं. ६।६१।३) इति बृसयशब्दो बृहच्छब्दार्थं गमयति। किमर्थं पुनरेवं कल्प्यते? यतो देवतान्तराणि पशुदेवतासंस्कारार्थेषु यागेषु प्रत्याय्यमानानि अनर्थकानि भवेयुः। तस्मात् पशुदेवतानां आख्याविकाराः पुरोडाशदेवताशब्दा इति।

**अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः । ३५ ॥**

**भाष्यम्**— संस्कारपक्षे एव वाशब्दो युक्तिं व्यावर्तयति, न पक्षम् । न वा आख्याविकारः । संस्कारपक्षे अन्यथाऽनुपपद्यमाने आख्याविकारा भवन्ति । अनाख्याविकारेष्वपि संस्कारपक्षः अवकल्पते एव । कथम् ? अभ्यास एव पुरोडाशयागस्य भविष्यति । तत्र हि चोदकेन पशुदेवता च प्राप्नोति पुरोडाशश्च । पशुदेवताया अन्यत् द्रव्यं विधीयते ग्रहः । पुरोडाशस्य अन्या देवता । यागस्तु अविकृत एव तिष्ठति । स पशुदेवतासंबद्धश्चैव कर्तव्यो ग्रहसंबद्धश्च । तदुभयमपि अनभ्यस्ते यागे न संभवति इति अर्थादभ्यस्यते यागः । तस्य एकदेशः अन्यदेवत्यः प्रयाजवत् । तद्यथा पशौ पञ्चानां प्रयाजानां चोदकेन प्राप्तानामेकादशसंख्या विधीयते । सा च अन्तरेणाभ्यासं नावकल्पते इति अभ्यस्यन्ते प्रयाजाः । तेषामभ्यस्यमानानां एकदेशे अन्या देवताः दुरः उषासानक्ता इत्येवमादयः । एवमिहापि अभ्यासः पुरोडाशयागस्य । तस्मादनुत्कर्षः संस्कारपक्षेऽपीति ।

**टुप्**— अस्यां ( सौत्रामण्याम् ) चोदकेन पशुदेवता ( पशुपुरोडाशयागे ) प्राप्नोति, पशुपुरोडाशश्च । तत्र पशुदेवतायां द्रव्यान्तरम् ( ग्रहः ) विधीयते, पशुपुरोडाशस्य च देवताऽन्तरम् ( इन्द्रादि विधीयते ) । यागस्तु अविकृत एव ( अवतिष्ठते ) यथाऽभ्युदितेष्ट्याम् । सः ( यागः ) अभ्यस्यते यथा सोमयागः ।

इमे सूत्रभाष्ये अयुक्ते । अस्यां सौत्रामण्यां ( प्रधानभूताः ) पशुयागा आम्नायन्ते, देवतासंस्कारद्वारेण च ( तेषु चोदकेन ) पशुपुरोडाशाः प्राप्नुवन्ति । तत्र वाचनिकोऽयं देवताविधिः । तस्मादप्राकृतकार्याः (पशु–) पुरोडाशयागाः वचनसामर्थ्यात् ( भवन्ति ) । यो ग्रहो देवतासंबद्धः, स पशुपुरोडाशयागेन न संबध्यते । कथम् ? अविपरिवर्तमानत्वात् । कथमविपरिवृत्तिः ? अविधानात् । कथमविधानम् ? ( उत्तरम्– ) अत्र ( विकृतौ ) उपकारा अतिदिश्यन्ते ( न पदार्थाः, ) यत्र ( तु तेषाम् ) प्रकरणम्, तत्र विपरिवृत्तिः । तच्च प्रकृतौ ( एव ) । अभ्युपेत्य ब्रूमः । अस्तु ( नाम पुरोडाशयागस्य इह– ) प्रकरणं विपरिवृत्तिश्च, तथापि ( ग्रहदेवतासंबन्धेन ) न संबध्यते (प्रमाणाभावात्) नैतत् सोमयजिना तुल्यम् । तत्र ( 'सोमेन यजेत' इति ) सोमविशिष्टो यागो विधीयते ( ऐन्द्रवायवादीनि च ) ग्रहणानि सोमयागद्रव्यस्य संस्कारकाणि । तानि ( च सर्वाणि ) ग्रहणानि प्रकरणेन गृह्यन्ते । अर्थात् तत्र यागाभ्यासः । इह ( तु पशु– ) पुरोडाशस्य ग्रहदेवताया वा न कश्चित् संस्कारः ( क्रियते ) । तस्मात् यागान्तरम् ( इदम् ) । ननु अभ्युदितेष्टिवत् भविष्यति । नैतत् ( अभ्युदितेष्ट्या ) तुल्यम् । तत्र निमित्ते ( चन्द्राभ्युदये सति देवता– ) विभागो विधीयते, यागस्तु विद्यते एव । न तु इह तथा ( विभागवचनम् ), येन अभ्युदितेष्ट्या तुल्यं स्यात् । ननु प्रत्यक्षः पुरोडाशयागः ( क्लृप्तः इत्यर्थः ), आनुमानिकस्तु ( कल्प्यस्तु ) ग्रहदेवतासंबन्धेन ( यागः ) । तस्मान्न ( क्लृप्तहानेन ) यागान्तरम् ( कल्प्यम् ) । नैतदेवम् । यदि तस्मिन्नेव यागे केन चित् प्रकारेण निवेशः स्यात्, तथा यागान्तरं न कल्प्येत ( न तु संभवति निवेशः ) यदि च प्रत्यक्षे यागे सति आनुमानिको न लभ्येत ( ततः ) दीक्षणीयादीनि अधर्मकाणि भवेयुः । यदि च ( सौत्रामण्याम् ) एको यागः, तथा ( सति ) एक एव विध्यन्तः प्राप्नोति । ( चोदयति– ) द्वे चात्र द्रव्ये ( अस्यार्थः— यागभेदेऽपि समानतन्त्रत्वात् प्रयाजादयः सकृदेव कर्तव्याः, द्रव्यसंस्काराणामेव तु आवृत्तिः । ते चैकस्मिन्नपि यागे द्रव्यभेदात् आवर्तन्ते एव इति काऽत्र अनिष्टापत्तिः इति ) । उच्यते । तत्र एकस्य ( एव द्रव्यस्य ) संस्कारः प्राप्नोति, द्वितीयस्य ( तु द्रव्यस्य ) चोदक एव न ( प्राप्नोति । किञ्च– ) एकस्य ( एव ) च प्रदानं भवति, द्वितीयं तु प्रोक्षणादिवत् अदृष्टार्थं ( प्राप्नोति ) देवतयोस्तु यदि ( एकत्र ) निवेशः ( स्यात् ) विकल्पेन स्यात् । ( यत्तु प्रयाजवत् स एव यागोऽभ्यस्तः देवताऽन्तरेण युज्यते इति, तदपि न तुल्यमित्याह– ) प्रयाजानुवादेन च संख्या विधीयते, ( अतः ) तत्र यागान्तराशङ्कैव नास्ति । ( इह तु यागान्तरमिति वैषम्यम् ) । [ आनन्दाश्रमीयः टुप्टीकापाठस्तु तन्त्ररत्नेन न संगतः इति न स्वीकृतः ] ।

शा— अग्नीषोमीये पशौ पशुपुरोडाशः किं पशोरारादुपकारकः, उत पशुदेवतासंस्कार इति संदेहे आरादुपकारक इति प्राप्तम्। नैवम् '**दृष्टे स्मरणसंस्कारे सति नादृष्टकल्पना। पशुधर्मैश्च संदंशात् तदङ्गत्वं सुनिश्चितम्॥**'

**सोम**— पूर्ववदिहापि देवताऽन्तरत्वात् असंस्कारकत्वं इत्युत्थितेः **संगतिः**।

वि— 'उपकारी संस्कृतिर्वा पुरोडाशः पशूदितः (पशौ उदितः उक्तः)।, तद्धितोक्त्या द्वयोर्देवभेदादुपकृतिर्मता॥, संदंशान्निश्चितेऽङ्गत्वे दृष्टोऽर्थः स्मृतिसंस्कृतिः। देवान्तरं चेद् विकृतावग्नीषोमनिवर्तनम्॥'

**भाट्ट**— दैक्षे 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनु निर्वपति' इति श्रुतः पशुपुरोडाशयागोऽपि नोद्देशांशेन पशुदेवतासंस्कारकः, उभयत्र तद्धितान्तनिर्देशाविशेषेण उभयोरपि आरादुपकारकत्वावसायात्। **न च** पशुयागस्य ज्योतिष्टोमाङ्गत्वेन फलवत्त्वात् अस्यैव तदीयदेवतासंस्कारकत्वमिति **वाच्यम्।** सोमप्रकरणाविशेषेण तत्रापि विनिगमनाविरहात्, पशुपुरोडाशसमाख्यायाः पश्वङ्गकत्वेन तदुत्तरकालकत्वेन वा उपपत्तेः। न च वपाऽभ्यासमात्राङ्गत्वं तवाप्यभिप्रेतम्। अतः पूर्ववत् आरादुपकारक एवायम्। एवं च सौत्रामण्यां आश्विनसारस्वतसुत्रामदेवताकेषु पशुषु 'ऐन्द्रवारुणसावित्राः पुरोडाशा भवन्ति' इत्यादिना अपूर्वा विधीयमाना नोत्कृष्टा भवन्ति। इतरथा यत्र तद्देवत्याः पशुयागाः तत्रोत्कर्षापत्तिः। **इति प्राप्ते,** वाचनिकपशुयागधर्मसंदष्टत्वात् अस्य तदङ्गत्वावगतेः तदीयदेवतासंस्कारकत्वमेव। अत एव पशुपुरोडाशसमाख्याऽपि पश्वङ्गत्वेनैव उपपन्ना, इति न तस्य वपाऽभ्यासमात्राङ्गत्वापत्तिरपि आशङ्क्या। पशुपदस्यापि स्ववाक्ये श्रुतत्वात् न वपाऽभ्यासांशे वैमृधन्यायाशङ्काऽपि। अतश्च 'वपया प्रचर्य' इत्ययं कालार्थ एव संयोगः क्रमार्थो वा इत्यन्यदेतत्।

यत्तु सौत्रामण्यां अन्यदेवताकानां उत्कर्षापत्तिरिति, तन्न। इन्द्रादिदेवत्यपशुषु न्यायादेव ('यद्देवत्यः पशुः तद्देवत्यः पुरोडाशः' इति न्यायात्) तत्तद्देवत्यपुरोडाशसिद्धेः विधिवैयर्थ्यात्। अतश्च तद्वाक्ये न पशुपुरोडाशयागोद्देशेन देवताऽन्तरविधिः, तथात्वे पुरोडाशपदे तद्द्रव्यकयागलक्षणाऽऽपत्तेः। किन्तु पुरोडाशोद्देशेनैव अभ्युदितेष्टिवत्। तत्र च यागापेक्षायां योग्यतयैव पशुपुरोडाशयागस्यैव अतिदेशप्राप्तस्य संबन्धः, अन्यस्य पुरोडाशद्रव्यकत्वाभावात्। अतस्तस्य कार्यपृष्ठभावेन प्राप्तस्यापि वाचनिकदेवताऽन्तरसंबन्धात् प्राकृतकार्यमात्रबाधेऽपि तस्य अप्राकृतकार्यान्तरकल्पनया तत्रैव निवेशात् नोत्कर्षः।

यानि तु सौत्रामणीप्रकरणे एव तत्तत्पशुदेवत्यानि 'आश्विनं गृह्णाति' इत्यादिना सुरापयोद्रव्यकाणि ग्रहणानि विहितानि, तेषु ऐन्द्रवायवादिग्रहणेष्विव यागापेक्षायां अतिदेशप्राप्ते पशुपुरोडाशयागे एव देवताविशिष्टग्रहणसंस्कृतद्रव्यविनियोगविधिः नान्यत्र, आश्विनादिदेवत्यत्वस्य अन्यत्र असंभवात्। प्रधानभूतपशुयागेषु च उत्पत्तिशिष्टपश्ववरोधेन द्रव्यान्तरनिवेशानुपपत्तेः। अतो विभिन्नद्रव्यदेवतासंबन्धद्वयात् उत्पन्नवाक्यशिष्टात् प्रयाजैकादशत्वन्यायेन पशुपुरोडाशयागस्य अभ्यासः संपद्यते। तत्र च आश्विनादिदेवत्यस्य प्राकृतमेव कार्यम्, ऐन्द्रादिदेवत्यस्य तु (अश्व्यादिदेवत्यस्य, इन्द्रादिदेवत्यस्य तु इति पाठस्तु युक्तः) अप्राकृतं इति **सूत्रभाष्यकारयोरभिप्रायः। वार्तिककारस्य** तु न तावत् सुराऽऽदिद्रव्यस्य पशुपुरोडाशे विनियोगः संभवी, तस्य एतद्विध्यभावे देवताऽन्तरावरुद्धत्वेन आश्विनादिदेवत्यत्वस्य तत्र प्रकृतौ विकृतौ वा अप्रसिद्धेः। वक्ष्यमाणरीत्या तत्र पुरोडाशद्रव्यकत्वस्यापि औपदेशिकत्वेन सुराऽऽदिद्रव्यस्य निवेशानुपपत्तेश्च। नापि अतिदेशप्राप्तप्रयाजादौ निवेशः, तत्र अङ्गभूतक्लृप्तदेवताऽवरोधेन ग्रहणाङ्गभूतदेवतायाः प्रसङ्गेन उपकारकत्वानुपपत्तेः। अतो गुणात्कर्मान्तरमेव प्राकृतपशुपुरोडाशकार्यापन्नं दर्शपूर्णमासप्रकृतिकं विधीयते। न चैवमावाहनमन्त्रेण देवतास्मरणेऽपि स्वाहाकारादिमन्त्रेण दार्ढ्यार्थं पुनः स्मरणवत् पशुपुरोडाशस्यापि पुनःकरणापत्तिः, प्रकृतौ आम्नानाद्यनुरोधेन तथा कल्पनेऽपि विकृतौ आघारमन्त्रेण प्राकृतमन्त्रबाधस्येव इहापि पशुपुरोडाशबाधोपपत्तेः। **ननु** एवं पशुपुरोडाशस्य सौत्रा-

मण्यामप्राप्तेः कथं तत्र ऐन्द्रादिदेवताऽन्तरविधिः, कथं चित् प्राप्तावपि वा उपकारपृष्ठभावेनैव पदार्थप्राप्तेः। प्रकृते च देवतान्तरविधानेन प्राकृतोपकारस्य वस्तुतः अनतिदेशात् तत्पृष्ठभावेन पशुपुरोडाशयागस्य अतिदेशासंभवात् कथं तत्र देवतान्तरविधिः इति चेत्, अत एव ऐन्द्रादिवाक्ये द्रव्यदेवताविशिष्टप्राकृतपशुपुरोडाशयागस्यैव गृहमेधीये 'आज्यभागौ यजति' इतिवत् अप्राकृतकार्यार्थतया विधेयत्वा(न)ङ्गीकारात्। न च तद्वदिह पशुपुरोडाशयागस्यैव प्रत्यभिज्ञाऽभावः 'यद्वै सौत्रामण्यां व्यृद्धं तदेव समृद्धम्, यदन्यदेवत्याः पशुपुरोडाशाः अन्यदेवत्याः पशवः' इत्यर्थवादस्यैव प्रत्यभिज्ञापकत्वात्। अतः अप्राकृतकार्ये एव पशुपुरोडाशाः, सुराऽऽदियागास्तु कर्मान्तरमेव प्राकृतकार्यापन्नम्। अत एव 'नैतेषां पशूनां पुरोडाशा विद्यन्ते, ग्रहपुरोडाशा ह्येते पशवः' इति लिङ्गमपि पुरोडाशाः तज्जन्यदेवतास्मरणानि न विद्यन्ते, अपि तु ग्रहजन्यान्येव तानि इति व्याख्येयम्।

**मण्डन**— 'पशोः पुरोडाश उपस्करोति।'

**शंकर**— 'नैवं पशुपुरोडाशः।' ११. (संनिपाती)।

* ज्योतिष्टोमे 'तीर्थे स्नाति' इत्यत्र तीर्थस्नानस्य प्रकरणादेव आरादुपकारकत्वं प्राप्तं **पशुपुरोडाशन्यायेन** दृष्टरूपमलापाकरणार्थत्वलिङ्गेन बाधित्वा क्रतुपुरुषधर्मत्वम्। **भाट्ट.** ३।४।९.

* **पशुपुरोडाशयागः**। इदं दृष्टादृष्टोभयार्थं द्रव्यसंस्कारकं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म। **बाल.** पृ. ८३-८४. * पशुपुरोडाशयागः पशुयागीयदेवतासंस्कारकः। १०।१।९।१९-३५. **मीको.** पृ. २५१८ 'पशुपुरोडाशन्यायः' इत्यत्र द्रष्टव्यम्।

* **पशुपुरोडाशयागादिः** प्रसङ्गी पश्वङ्गस्य प्रयाजादेः स्वोपकारिणोऽपि अप्रयोजकः। **बाल.** पृ. १०८.

* **पशुपुरोडाशयागादिक्रियाया** एकस्याः संनिपत्योपकारित्वसंभवे अनपेक्षितानेकादृष्टकल्पनाऽऽपादकस्य आरादुपकारित्वस्य अयुक्तैव। **सु.** ३।७ पृ. ६७.

* **पशुपुरोडाशस्थानं** वपाप्रचारात् परतः। अङ्गैरपि तस्य तत्स्थानैरेव भवितव्यं प्रधानदेशत्वात्तेषाम्। **भा.** १२।३।२।५.

* **पशुप्रकृतिलिङ्गानि** आलभतिवत्त्वं प्राणिद्रव्यकत्वं सुत्याकालत्वं पशुगणत्वमित्यादीनि। **बाल.** पृ. ११९.

* **पशुप्रभवगतिमद्**-द्रव्यकत्वं इष्टिप्रकृतिलिङ्गम्। **बाल.** पृ. ११९.

* **पशुप्रयुक्तं** गोदोहनं स्वतन्त्रपशुकामनायामेव कर्तव्यम्। **भाट्ट.** ४।१।२ वर्णकं ३.

* **पशुप्रयोजकत्वं** शकृल्लोहितयोर्नास्ति अग्नीषोमीये पशौ। ४।१।१२।२७.

* **पशुबन्धः** ज्योतिष्टोमोपकारकः। **वा.** १।२।१।४. * '**पशुबन्धस्य** यज्ञक्रतोः षड् ऋत्विजः' इति कर्तॄणां नियमविधिः। अर्थापत्त्या तु पाक्षिकी प्राप्तिः (अध्वर्युः प्रतिप्रस्थाता ब्रह्मा होता आग्नीध्रः मैत्रावरुणश्च)। **वि.** ४।२।९. * **पशुबन्धेषु** सर्वेषु सर्वेष्टिषु च नारिष्टहोमाः, तेषु च स्वाहाकारः। **भा.** ८।४।५।१८.

* **पशुबन्धयाजी** सर्वान् लोकानभिजयति। **भा.** १।२।१।४.

* **पशुमन्ति** त्रीणि सवनानि कर्तव्यानि। तत्रेदं वचनम् 'वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यंदिने सवने अङ्गैस्तृतीयसवने' इति। **टुप्.** १२।२।१२।३२. * **पशुमत्सु** चातुर्मास्येषु परिधिरुभयधर्मा। तत्र यूपपरिधिधर्मविरोधे परिधिधर्म एव कर्तव्यः, न यूपधर्मः। सत्वक्त्वम् उपशयत्वं च परिधिधर्मः। यूपधर्मेश्च तक्षणम्, उच्छ्रयणम्, निखननमिति। १२।२।११।२७-२९. * पशुमत्सु चातुर्मास्येषु परिधिः परिधिधर्मा यूपधर्मा चेति उभयधर्मा स्यात्। तत्र अविरुद्धाः यूपधर्माः यवमतीभिः अद्भिः प्रोक्षणम्, अञ्जनम्, परिव्याणमिति। परिधिधर्माः इध्मसंनहनम्, संमार्जनम्, जुहा अञ्जनम्, अभ्याश्रावणमिति। १२।२।१०।२६. * पशुमत्सु चातुर्मास्येषु 'परिधौ पशुं नियुञ्जीत' इति यूपधर्मः पशुनियोजनं परिधौ कर्तव्यम्। ९।२।१२। परिधिश्चायं मध्यमः स्थूलः। परिधेश्च तक्षणोच्छ्रायौ न कर्तव्यौ। अञ्जनादयस्तु कर्तव्या एव। प्रैषे तु 'यूपायाज्यमानाय' इत्येव ब्रूयात्, न तु 'परिधयेऽज्यमानाय' इति। **वि.** ९।२।१३.

* **पशुयागः** वपापुरोडाशाङ्गप्रचारात्मकः । **सु. पृ. ६०.** * **पशुयागेषु** मनोतामन्त्रः अग्निदेवत्य एव, न तत्र पशुदेवताया ऊहः । मनोतान्यायः । १०।४। २१।४३.

* **पशुयागदिनेऽपि** अग्निहोत्रहोमः सायंतनः नौत्तरवेदिके, दैवात् पशुकर्मणः उत्कर्षे तु औत्तरवेदिके एव । **संकर्ष.** ३।२।२४. **मीको.** पृ. ८६ ' अग्निहोत्रहोमः ' इत्यत्र द्रष्टव्यम् ।

* **पशुयूपक्रमाधिकरणे** ( पशुसोमाधिकरणे २।२। ६।१७–२० ) न्यायोपोद्बलितवचनस्य न्यायविरुद्धवचनतः प्राबल्यं भाष्यकारैरेव वर्णितम् । **संकर्ष.** २।२।९.

* **पशुवत् ।** यथा पशौ भिन्नकालेषु अपि एकदेशेषु ' वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने, अङ्गैस्तृतीयसवने ' इति न अङ्गानामावृत्तिर्भवति तद्वत् । ११।२।३।१४ । यथा पशौ साप्तदश्ये श्रूयमाणे न दार्शपौर्णमासिकी तत्र प्रवृत्तिर्विप्रतिषिध्यते, वाचनिकत्वात् साप्तदश्यस्य । **भा.** ८।४।५।१४.

* **पशुविकृतिषु** ' द्यावापृथिव्यां धेनुमालभेत, मारुतं वत्सम्, ऐन्द्रमृषभम् ' इत्यत्र गोत्वजातिमन्तः एवैते पशवः, न तु अजत्वजातीयाः । १०।२।२९।६९. ( धेनुः नवप्रसूतिका । अत्रैकजननक्रियानुयोगिप्रतियोगिनः माता च पुत्रश्च पिता च धेनु–वत्स–ऋषभशब्देन ग्राह्याः । ते च गोत्वजातिमन्त इत्युक्तमेव । **के.** ) ।

* **पशुशब्दं** आकृतिवचनं शृङ्गिणि पुच्छवति लोमशे चतुष्पदि द्रव्यविशेषे उपचरन्ति । **भा.** २।२। ६।१७. * **पशुशब्दस्य** नियतलिङ्गत्वेन स्त्रियामपि पुंलिङ्गस्यैव प्रयोगः । **सु. पृ.** १४१४.

* **पशुशीर्षोपधाने** यदन्तरालमुत्पद्यते तत्पूरणार्थमिष्टका न निर्मातव्याः, किन्तु सिकताभिः पूरयितव्यम् । **संकर्ष.** २।१।४.

* **पशुसंज्ञपनम**ध्वर्युगणस्थेनैव कार्यम् । **संकर्ष.** १।१।१५. **मीको.** पृ. ३६० ' अध्वर्युगणस्थेनैव० ' इत्यत्र द्रष्टव्यम् ।

* **' पशुसप्तदशत्वस्य** न यागेयत्तया विना । सिद्धिरस्तीति चार्थेन सिद्धः संदिग्धनिर्णयः ॥ ' **वा.** ३।१।१।१ पृ. ६५०.

* **'पशुसवनीयेषु विकल्पः स्यात्०'** इत्यत्र द्वादशे उक्तम्— सवनीयपशौ मैत्रावरुणकर्तृकात् ' अग्निमद्य होतारमवृणीतायं सुतासुती यजमानः ' इत्यग्नीषोमीयात् अनतिदिष्टात् ( अतिदिष्टात् ) सूक्तवाकप्रैषात् तन्त्रिणि सवनीयहविरङ्गानां मैत्रावरुणरहितानां प्रसङ्गोपकारित्वे मन्त्रतः कर्तृतश्च विशेषग्रहणमस्ति इति । **बाल.** पृ. १४८.

**⌛ पशुसवनीयेषु विकल्पः स्याद् वैकृतश्चेदुभयोरश्रुतिभूतत्वात् । १२।२।१२।३०॥**

पशुसवनीयेषु सवनीये पशौ सवनीयेषु पशुपुरोडाशेषु च प्रसङ्गे विकल्पः स्यात् । पञ्च प्रयाजा एकादश प्रयाजा वा कार्या इति भावः । वैकृतश्चेत् पशुः वैकृताश्चेत् पुरोडाशाः तदा इत्थम् । वस्तुतस्तु वैकृता एव ते सर्वे न संशयः । कुतो वैकृताः सर्वे ? उभयोः पशुपुरोडाशयोः अश्रुतिभूतत्वात् अङ्गानां अश्रुतेः अश्रवणात् । चोदकगृहीताङ्गकत्वादुभयोः । तस्मात् पशुः सवनीयपुरोडाशाश्च इत्युभयोर्मध्ये कस्य प्रसङ्गः कश्च प्रसङ्गी इत्यत्र विकल्पः इति पूर्वः पक्षः ।

**पाशुकं वा, तस्य वैशेषिकाम्नानात्, तदनर्थकं विकल्पे स्यात् । ३१ ॥**

वाशब्दः विकल्पपूर्वपक्षं व्यावर्तयति । पाशुकं तन्त्रं सवनीयपुरोडाशेषु प्रसज्यते, न विकल्पः । तस्य पशोः वैशेषिकः धर्मः आम्नातः सूक्तवाकप्रैषः । विकल्पे तु सति तत् वैशेषिकधर्माम्नानं अनर्थकं स्यात् । आम्नानसामर्थ्यात् नित्योऽसौ । तस्मात् पाशुकं तन्त्रं पुरोडाशेषु प्रसज्यते इति सिद्धान्तः ।

**पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् । ३२ ॥**

इतश्च पाशुकं तन्त्रं पुरोडाशेषु प्रसज्यते इत्याह । पशोः तन्त्रस्य विप्रकर्षः श्रूयते– ' वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने सवने, अङ्गैस्तृतीयसवने ' इति । तस्य तन्त्रस्य मध्ये सवनीयपुरोडाशानां विधानात्

असंशयं पाशुकं तन्त्रं पुरोडाशेषु प्रसज्यते, न विकल्पः इति सिद्धान्तः । **के.**

*** पशु–(अग्नीषोमीय–सवनीय)साधारण्यं** रशनाधर्माणाम् । ३।६।१०।३१.

*** पशुसोमयोः** प्रदेयप्रकृतित्वेनैव साधनता । सु. पृ. ७९७.

**पशुसोमाधिकरणम्** । 'अग्नीषोमीयं पशुमालभते', 'सोमेन यजेत' इति आलभनं यागश्च अपूर्वं कर्म विधीयते ॥

**द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो नहि तस्य गुणार्थेन । २।२।६।१७ ॥**

**भाष्यम्—** ज्योतिष्टोमे श्रूयते— 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्रेदमामनन्ति 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः' इति । तथा 'सोमेन यजेत' इति, तथा 'ऐन्द्रवायवं गृह्णाति', 'मैत्रावरुणं गृह्णाति', 'आश्विनं गृह्णाति' इत्येवमादि । तत्र संशयः, किमवद्यतिगृह्णातिचोदितानां कर्मणामेव आलभतियजती समुदायस्य अनुवदितारौ, अथ अपूर्वयोः कर्मणोर्विधातारौ इति । किं तावत् प्राप्तम् ? समुदायस्येति । कुतः ? ये इमे आलभतियजतिभ्यां कर्मणी विधीयेयातामिति चिन्त्येते, पूर्वमेव ते अवद्यतिगृह्णातिभ्यामवगमिते । न च अवगमितोऽर्थो विधीयते । हृदयादींस्तु पशुशब्देन अनुवदति, सोमशब्देन च रसम् । तस्मात् 'सोमेन यजेत' इत्यनुवादो यजतिः । यजेत स्वर्गकामो वसन्ते वसन्ते इति फलगुणसंबन्धार्थः । 'पशुमालभेत' इति च आलभतिरग्नीषोमसंबन्धार्थः । अपि च 'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' इति समुच्चयो दृश्यते । तथा 'आश्विनो दशमो गृह्यते तृतीयो हूयते' इति च क्रमः । यदि च अपूर्वौ यागौ विधीयेते, तत्र ऐन्द्रवायवादिभिर्देवता विधीयेरन्, ता एकार्थाः सत्यो विकल्प्येरन्, यथा 'खादिरे बध्नाति' 'पालाशे बध्नाति' 'रोहितके बध्नाति' इति । तत्र क्रमसमुच्चयदर्शने नोपपद्येयाताम् । अथ पुनरस्मिन् समुदायवचने यजतौ सम्यगेतदवक्लृप्तं भवति । तस्मात् समुदायानुवादौ । एवं प्राप्ते, ब्रूमः । अपूर्वयोः कर्मणोः विधानचोदने पशुसोमयोः । कुतः ? सोमशब्दः क्षीरिण्यां लतायां प्रसिद्धो न रसे । आकृतिवचनो हि सोमशब्दो न व्यक्तिवचनः । तथा शृङ्गिणि पुच्छवति लोमशे चतुष्पदि द्रव्यविशेषे पशुशब्दं आकृतिवचनमुपचरन्ति । न च एवमाकृतिकद्रव्याः प्रकृता यागा विद्यन्ते, येषामिमौ समुदायस्यानुवदितारौ भवेयाताम् । ननु पशुविकारो हृदयादिः पशुशब्देन अग्नीषोमसंबन्धार्थमनूद्यते । नैतदेवम् । पशुरग्नीषोमीयो भवति इत्येतावदुच्यते, नायं प्रकृतो हृदयादिः पशुरिति । तत्र यदि लौकिकस्य पशोर्ग्रहणम्, ततो मुख्यः पशुशब्दः । यदि हृदयादेः, ततो जघन्यो विकारसंबन्धेन । तथा सोमशब्दोऽपि विकारसंबन्धेन अनुवादः स्यात् । तस्मात् अपूर्वे कर्मणी विधीयेयातां नानुवादौ । अथ ऐन्द्रवायवादिषु प्रकृतेषु यागेषु लता विधीयेतेति । उच्यते । न सा शक्या वाक्येन ऐन्द्रवायवी ज्ञातुम् । श्रुत्या हि रसः ऐन्द्रवायवः । तस्मात् द्रव्यसंयोगवचनः प्रकृतेषु यागेष्वपि सत्सु विधातुं अनुवदितुं वा न शक्नुवन् अनर्थकः स्यात् । तस्मादपूर्वे कर्मणी विधीयेयाताम्, न प्रकृतानामनुवादौ इति ।

**वा—** पशोः दुष्प्रतिपादनतरत्वात् पूर्वाभिधानम् । द्वौ चात्र शब्दौ समुदायानुवादत्वेन आशङ्क्येते पशुशब्दः तदग्नीषोमसंबन्धानुमितश्च यजिः । ईदृशं हि एतद्वाक्यं श्रुतानुमितैकदेशनिष्पन्नम्, यत् 'अग्नीषोमीयेण पशुना यजेत' इति । तत्र किं हृदयादीनां पशुशब्दः अनुवादः अवद्यत्यनुमितानां यागानां च यजिः, उत अपूर्वः पशुः यागश्च विधीयते, तत्र इतरे गुणविधयः इति संदिह्यते । तथा ऐन्द्रवायवादिवाक्यैः द्रव्यदेवतासंबन्धानुमिता यागाः तद्गतश्च सोमरसः किं यजतिसोमशब्दाभ्यामनूद्यते किंवा द्रव्ययुक्तं कर्म विधीयते इति । 'किमवद्यतिगृह्णातिभ्यां चोदितानाम्' इति (भाष्यम्) । अनयोः यागपर्यायत्वाभावात् तत्संबन्धानुमितानां तद्गताख्यातप्रत्ययविहितानां वा इत्येतत्प्रदर्शनार्थं तद्भाष्यम् । आलभतिरपि च तदनुमितयज्युपलक्षणार्थः । अथवा अवद्यतौ नैव यागानुवादः इत्युपन्यस्यते । कथं तर्हि ? तदाक्षिप्तस्य संस्पर्शनस्य आलभतिरनुवादः तद्-

द्वारेणैव च प्रत्यवदानं देवतासंयोगात्, तावतां च यागाना-मनुमानम्, उत पशुसंयुक्तः एको यागोऽनुमीयते इति। तथा सोमेऽपि अयमेव यागो यद्देवतोद्देशेन द्रव्यग्रहण-मिति। तथा सति यथाश्रुतेनैव भाष्येण संदेहोपन्यासः।

तत्र पौर्णमासीवदेव समुदायानुवादत्वम्। तथाहि **'यथाऽऽग्नेयादिवाक्यानां न प्राग् यागानुमानतः। स्वार्थपर्यवसायित्वं तथा सोमेऽपि गम्यताम्॥'** नहि ऐन्द्रवायवं इत्यादिद्रव्यदेवतासंयोगः अननुमिते यागे निराकाङ्क्षी न भवति। न च अपरिपूर्णं वाक्यं वाक्या-न्तरमाकाङ्क्षति, येन अनुमानवेलायाम् 'सोमेन यजेत' इत्ययमनुप्रविशेत्। एतद्विहितस्य वा देवताविरहात् अरूपस्य सतस्तैः देवता विधीयते। यदा तु तैः कल्पितो यजिः तदा नैव यागस्य यागान्तरं रूपं भवति इति बलात् प्रकृतानुवादत्वमापद्यते। यश्चात्र पक्षे विशिष्ट-विध्याश्रयणदोषः स भवत्पक्षेऽपि अविशिष्टः, सोम-द्रव्यकयागविधानात्। अपि च, तव इह च, ऐन्द्रवाय-वादिवाक्येषु च। मत्पक्षे तु तेष्वेव केवलेषु इति विशेषः। किञ्च, **'यादृशं द्रव्यसंबद्धं भवान् कर्म विधि-त्सति। तादृशस्याविधेयत्वमनन्तरमुदाहृतम्॥'** एकत्रैव ईदृशे गुणे श्रूयमाणे विधिशक्तिः संक्रामति इति अग्निहोत्रे (२।२।५) अभिहितम्। अतो न कर्मानु-वादबुद्धिरपैति इत्यनुवादत्वं यजेः। तत्र सोमशब्देन द्रव्यमेव गृह्णातिना सामान्याक्षिप्तं नियम्यते। अथवा 'सोमं क्रीणाति' 'सोममभिषुणोति' 'सोमं पावयति' इत्यादिभिः प्राकरणिकैर्गुणवाक्यैः सोमरसे कल्पिते गृह्णातिचोदनाः प्रवृत्ताः इति सोमो न विधीयते। ततश्च स्वाभाविककरणत्वयुक्तयागसामानाधि-करण्यात् 'तत्प्रख्यं चान्यशास्त्रम्' (१।४।३।४) इति नामधेयी भवति। ननु ज्योतिष्टोमः इत्यपरं नामधेय-मस्त्येव। यदि इदमपि अवगम्यते किं नो बाध्यते? तथा च याज्ञिकानां व्यवहारेषु नामद्वयमुपलभामहे। समस्त-वाक्यानुवादस्य तु तदेव प्रयोजनम्, यत् प्रयोगवाक्य-गतैकत्वोपजननं नाम। तस्मादनुवाद इति। **भवेदत्र** द्रव्यदेवतासंयोगादेवम्, पशौ तु 'वत्समालभेत' इत्येत-त्सदृशेन देवतारहितहृदयादिद्रव्यमात्रसंयोगिना अवद्य-तिना कथं यागविधानम्, कथं वा हृदयाद्यनुवादः पशु-ग्रहणेन इति वक्तव्यम्। उच्यते। **'यथैव पशुसामान्ये मन्त्राच्छागः प्रतीयते। तथैव हृदयादीनां ममासौ प्रकृतिर्मतः॥'** हृदयादिभिः प्रकृतिद्रव्ये अपेक्षिते मन्त्रवर्णाच्छागे लब्धे तदन्तर्गतं पशुत्वं तावदनूद्यते। तत्र तु देवतायां विहितायां यागो विधीयतां नाम। अथवा 'सांनाय्यं वा तत्प्रभवत्वात्' इत्यनेनैव न्यायेन अय-मवद्यतिः सारूप्यात् सांनाय्यावद्यतिप्रकृतिः। स च दर्श-पूर्णमासयागद्रव्यसंस्कारार्थः प्रसिद्धः। तत्र यदि हृदयादीनि यागद्रव्याणि, ततः तत्संयोगभाञ्जि भवन्ति, नान्यथा। तेन यथैव पूतीकानामभिषवसंबन्धे श्रूयमाणे तदर्हत्वा-न्यथाऽनुपपत्त्या यागसंगतिः अश्रूयमाणाऽपि गम्यते, तथा अत्रेत्युत्प्रेक्ष्यमाणे यागमनुमाय तदनुपपत्तेर्यागोऽप्यस्तीति गम्यते, तथा अनुमितानां च प्रतिद्रव्यमवस्थितानां समु-दायोऽनूद्यते। साधारणश्चायं तवापि आनुमानिकयागाभ्यु-पगमः इति न एतेन अस्मत्पक्षदौर्बल्यम्। सोमयागैकत्वे तुल्यार्थानां इन्द्रवाय्वादीनां विकल्पे सति क्रमसमुच्चय-दर्शनं नोपपद्यते। पश्य, **'यथैकबन्धनार्थत्वात्पलाश-खदिरादयः। तत्संबन्धे विकल्पन्ते यागेऽस्मिन् देवतास्तथा॥'** मम तु भिन्नयागविषयत्वात् देवतानां यागानां च अदृष्टार्थानां युगपदेकशब्देन फले विधानात् उपपत्स्यते। पशावपि 'हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः' इति क्रमदर्शनम्, 'एकादश वै पशोरवदानानि' इति च समुच्चयदर्शनं सदपि नोपात्तम्, एकयागत्वेऽपि समस्तपशुसाधनत्वेन तदुपपत्तेः। नहि हृदयादिषु असमु-च्चीयमानेषु उत्पत्तिवाक्यश्रुतेन समस्तेन पशुना इष्टं स्यात्। यन्मात्रं तत्र वचनान्तरवशेनापनेष्यते, तन्मात्रव्यतिरिक्तेन सर्वेण यष्टव्यं इति न्यायः। सोमे तु नैवं समस्तचोदनो-त्पत्तौ अस्ति इति उदाह्रियते। तस्मात् समुदायानुवादौ। इति प्राप्ते, अभिधीयते। **'प्रकृतप्रत्यभिज्ञानं वाक्ये यत्रोपलक्ष्यते। तत्र स्यादनुवादत्वं न चात्रैवं प्रतीयते॥'** यदि पौर्णमासीवत् अशेषरूपप्रत्यभिज्ञानं भवेत्, ततोऽनुवादः कल्प्येत। यदि वा यजिमात्रस्य अनुवादत्वमिष्यते, ततः परित्यक्तविशेषणोऽनुवादः इत्यव-धार्येत। अत्र पुनः प्रकृता हृदयादिद्रव्यका रसद्रव्यकाश्च

यागाः। इमौ च पशुसोमद्रव्यकौ। न चैवं सति प्रत्यभिज्ञानमस्ति इत्यनुवादत्वासंभवः। **तत्र एतत् स्यात्** विकारेषु प्रकृतिवदुपचारात् हृदयादिष्वेव रसे च पशुसोमशब्दौ वर्त्स्येते इति। **तन्न,** विना कारणेन लक्षणाऽनाश्रयणात्। विस्पष्टे हि परशब्दसामानाधिकरण्ये सति अनन्यथासंभवे च जघन्यवृत्तिः शब्दो भवति। न चैतदुभयमप्यस्ति। शक्यं हि मुख्यं पशुसोमद्रव्यं यागान्तरं विधातुम्। न च प्रकृतेषु अनिविशमानौ एतौ शब्दौ नोपपद्येते। तेन यद्यपि तावत् अवद्यतिगृह्णातिभ्यां चोदिता यागाः, तथापि कर्मान्तरत्वप्रसङ्गः। कस्मात् तेष्वेव यागेषु स्वद्रव्यप्रकृत्यपेक्षेषु पशुसोमौ न विधीयेते, तत्राह– '**श्रुत्या हि रस ऐन्द्रवायवः**' इति। पशुस्तावत् देवताविधिपरत्वात् अनुत्पत्तिवाक्ये सति अशक्य एव विधातुम्, इति नैव उपन्यस्यते। सोमलताऽपि वाक्यविधेया श्रौतरसविरोधे सति न संबध्यते। **कथं** पुनः अनुपात्तद्रव्यविशेषेषु ऐन्द्रवायवादिविधिषु रसस्य श्रौतत्वम्, अधिकारलभ्यो ह्यसौ, ततश्च वाक्यप्राप्ता लतैव बलीयसी स्यात्। **उच्यते**। '**श्रुत्यैव द्रव्यसंबन्धो देवतातद्धितैः कृतः। अधिकारेण तस्यैव केवलेष्टा विशेष्यता॥**' '**गुणश्चापूर्वसंयोगे**' इत्यत्राधिकरणे विस्तरेणाभिधास्यते। यथा तद्धितश्रुत्या वाक्यप्रकरणादिलभ्यस्य विशेषस्यैव अस्य–शब्दवाच्यस्य देवतासंबन्धे कृते कोऽसौ द्रव्यविशेष इत्यपेक्षायां वाक्यप्रकरणादिभिः तदवाप्तिः केवला, न तु तैरेव देवतासंबन्ध इति।

किञ्च '**उत्पत्तिवाक्यशिष्टश्च रसो, वाक्यान्तराल्लता। प्रकृतापेक्षिणस्तेन दुर्बलैषाऽवगम्यते॥**' ततश्च गुणादपि ते भेदः प्राप्नोति। शक्यपरिहारं तु इदम्। कुतः? '**यथैवाष्टाकपालादौ श्रौतेऽपि सति वाक्यतः। व्रीह्यादयो विधीयन्ते तथा सोमो विधास्यते॥**' विधीयमानं हि दुर्बलं विरुद्धं बाध्यते नानुगुणम्। अनुगुणश्च सोमो रसस्य प्रकृत्यपेक्षिणः तादर्थ्येन संबन्धात्। तद्यथा 'आग्नेयोऽष्टाकपालः' इति श्रुतिविहितेऽपि अष्टाकपाले सति व्रीहियवौ विधीयमानौ न विरुध्येते, पुरोडाशापेक्षितप्रकृतिरूपत्वात्। नहि व्रीहीन् गृह्णन् अष्टाकपालं न करोति। तेन चात्र न कर्मान्तरता। तथाऽत्र न सोमे गृह्यमाणे रसः परित्यक्तः इत्यविरोधात् पूर्वत्रैव संभवन् न गुणो भेदकः स्यात्। **अपि च** सिद्धान्तेऽपि एतत् तुल्यम्। अनभिषुतलताऽऽदानानभ्युपगमात्। तत्र यथा तव रसप्रकृतिर्लता भवति, तथा पूर्वपक्षेऽपि भविष्यति। **अपि च** विरुद्धतरं तवापद्यते। कथम्? '**उत्पत्तिवचनात् सिद्धा लता चेद्यागसाधनम्। न सा वाक्यान्तरैः पश्चाद् रसीभवितुमर्हति॥**' रसस्य प्रकृत्या विना निष्पत्त्यभावात् आकाङ्क्षितः प्रकृतिसंबन्धो वाक्यान्तरेणापि क्रियमाणो न विरुध्येत। प्रकृतेस्तु अविकृताया एव सामर्थ्यादनपेक्षिता विकारापत्तिः उत्पत्तिवाक्यविरोधिनी न युक्ता वाक्यान्तरैः कर्तुम्। तस्मात् व्रीहियवमुद्रामुद्रितत्वात् अनुद्घाट्यैव गुणविधित्वं समुदायानुवादमात्रं निराकार्यम्, पशौ तन्मात्रेणापि सिद्धेः। सोमे तु व्रीहिवाक्यतुल्यत्वाशङ्कामधिकां निराकर्तुं उत्तरं सूत्रं प्रस्तोतव्यम्।

**अथवा** भङ्क्त्वैव पूर्वोपपत्तिं उत्तरयैव निर्णयः। पूर्वसूत्रेण वा पूर्वपक्षं परिगृह्य उत्तरं तु सूत्रं तुशब्दस्थानचशब्दं उत्तरपक्षे योजयितव्यम्। **कथं पुनः** द्रव्यसंयोगात् इत्यनेन पूर्वपक्षोऽभिधीयते। **तदुच्यते।** 'हृदयस्याग्रेऽवद्यति' 'ऐन्द्रवायवं गृह्णाति' इत्येताः किं दध्यादिवत् गुणार्थाः श्रुतयः, ततश्च उत्तरयोरुत्पत्तिचोदनार्थत्वम्, उत एता एव कर्मचोदना इति। किं प्राप्तम्? नैताः पूर्ववत् गुणार्थाः पुनःश्रुतयः, किन्तु उत्पत्तिचोदनाः। कथम्? द्रव्यसंयोगात् हृदयादिद्रव्यसंयोगात् तैरेव वाक्यैः चोदना पशुसोमयोः। किं कारणम्? इतरथा हि प्रकरणेन हृदयादिसंयोगो यागाङ्गत्वं प्रतिपद्येत। न चासौ तस्य गुणार्थेन संभवति, उत्पत्तिवाक्यशिष्टपशुलताविरोधात्। **अथवा** पूर्वोक्तेन न्यायेन अन्यत एव पशुसोमयोः सिद्धत्वात् अस्मिन् प्रकरणे पुनरनर्थको द्रव्यसंयोगः त्वत्पक्षे भवेत्। मम तु सोमशब्दो नामधेयम्, अग्नीषोमीयवाक्यं च देवताविधानार्थमिति न किञ्चिदनर्थकम्। तस्मात् अवद्यतिगृह्णातिसंयुक्तैव यागोत्पत्तिचोदना स्यात्।

**अचोदकाश्च संस्काराः ॥ १८ ॥**

**भाष्यम्**— एवं तावत् प्रकृतेषु सत्स्वपि नानुवादौ इत्युक्तम् । अथेदानीं प्रकृता एव यागा न सन्तीत्युच्यते । कुतः ? अचोदकाः संस्काराः । न च ऐन्द्रवायवादिभिः यागा विधीयन्ते । तेन ग्रहणमुपकल्पनमात्रं दृष्टार्थम् । उपकल्प्यमाने तु देवतासंकीर्तनमदृष्टाय । अतः 'ऐन्द्रवायवं गृह्णाति' इति इन्द्रवायुभ्यां संकल्पयति इति एतावदुक्तं भवति । तत्र यागमन्तरेण संकल्पयति इत्येतन्न युज्यते इति यागः कल्प्येत । स एवाम्नातो यागो यस्मिन् सति संकल्पोऽवकल्प्येत । तस्मान्न 'ऐन्द्रवायवं गृह्णाति' इत्येवमादिभिः यागा विधीयेरन् । प्रकृतानां यागानामभावात् न समुदायशब्दो यजतिः । तथा आलभतिशब्द इति ।

**वा**— नैव एतौ समुदायानुवादौ, 'चोदना वाऽप्रकृतत्वात्' ( २।२।४।१० ) इत्येतस्मादेव हेतोः । कथं प्रकृता न संभवन्ति ? यतः अवद्यतिगृह्णातयः न यागानां चोदकाः, किं तर्हि ? संस्कारमात्रविषयः, तन्मात्रपर्यवसानात् । तन्मात्रपर्यवसायिनि वाक्ये निष्प्रमाणकत्वात् न अश्रुतयागकल्पनं शक्यम् । एवं हि स कल्प्यमानः कल्प्येत, 'देवतोद्देशेन गृहीतं द्रव्यं न यावत् यागेन संबध्यते न तावत् तद्देवत्यं कृत्यं कृतं भवति' इति । तत्र यदैव अन्यथाऽनुपपत्त्या यागं कल्पयितुमारभते, तदैव संनिहितः प्रत्यक्षो यजिः अविशेषात् सर्वान् द्रव्यदेवतासंयोगान् उपपादयितुमुपतिष्ठन् यागान्तरकल्पनाप्रमाणं निरुणद्धि । तस्मिंश्चाप्रतीते कस्य समुदायानुवादो भविष्यति ? । यदुक्तं आग्नेयादिवत् नापरिकल्पिते यजौ वाक्यान्तरापेक्षेति । **तत्र ब्रूमः । 'पुंव्यापारनियोगेन वाक्यं सर्वत्र पूर्यते । तदलाभे त्वपूर्णत्वं तल्लाभे वाक्यसंगतिः ॥'** 'आग्नेयोऽष्टाकपालो भवति' इति न यागादन्यः पुंव्यापारः प्रतीयते इति प्राक् तदनुमानात् अपरिपूर्णं वाक्यम् । इह तु 'ऐन्द्रवायवं गृह्णाति' इति ग्रहणभावनायां पुरुषो नियुज्यते । तत्र प्रागपि यज्यनुमानात् अस्ति विधेर्विषयः इति समाप्यते वाक्यम् । इदं तु अन्यत्, यत् ततः परमपि किञ्चिदपेक्ष्यते । सर्वमेव हि वाक्यं स्वार्थे पर्यवसिते अर्थान्तरापेक्षां न जहाति, न च तावता तदसमाप्तं भवति । या तु असौ अपेक्षा, सा वाक्यान्तरेण पूरयिष्यते इत्यवगमात् न वाक्यान्तरसंबन्धं न सहते । तेन यज्यनुमानवेलायां प्रतिवाक्यम् 'सोमेन यजेत' इत्यस्योपस्थानं न विरुध्यते । 'आग्नेयोऽष्टाकपालः' इति तु भवतेः अपुरुषव्यापारात्मकत्वात् प्राक् यजेः न किञ्चित् विहितं न किञ्चित् प्रतिषिद्धम्, इति असमाप्ते वाक्ये, वाक्यान्तरे चानपेक्षिते यजिः अनुमीयमानः न वाक्यान्तरगतः संबध्यते इति वैषम्यम् । **अथ** यदुक्तं उत्पत्तिशिष्टयोः पशुसोमयोः न वाक्यान्तरगता विकारापत्तिर्युक्ता इति, **तत्र ब्रूमः । 'द्रव्येणात्यन्तभिन्नेन सह चिन्त्यं बलाबलम् । हृदयादिरसद्वारमङ्गत्वं पशुसोमयोः ॥'** यद्यत्र औत्पत्तिकौ पशुसोमौ परित्यज्य अत्यन्तव्यतिरिक्तं किञ्चित् द्रव्यं विधीयते, ततो विरोधः स्यात् । इह तु पशुनैव हृदयादिद्वारेण यागः साध्यते, सोमेन च रसद्वारेण । न च इतिकर्तव्यतासंबन्धे कश्चिद्विरोधः । पशुसोमौ हि यागसाधनत्वेन चोद्यमानौ इतिकर्तव्यतामाकाङ्क्षतः । तत्र च रसहृदयादिनिष्पत्तिद्वारेण इत्येवं कथम्भावः पूर्यते । तेन अनुग्राहकत्वात् न तत्कल्पने विरोधापत्तिः । **यत्तु** प्राकरणिकैः क्रयादिवाक्यैरेव प्राप्तत्वात् इह द्रव्यसंयोगोऽनर्थक इति । **तत्रापि** 'अचोदकाश्च संस्काराः' इत्येवोत्तरम् । नहि ते विधयः सोमस्य पशोर्वा चोदकाः । किं तर्हि ? तयोरेव संस्कारकाः । तेन चोदितस्य द्रव्यस्य यथाकथञ्चित् उपादानेन यागसाधनत्वे प्रसक्ते क्रयोपात्तेनैव अभिषवादिसंस्कृतेन च साधयितव्यमिति विधीयते । न च मन्त्रवर्णस्यात्यन्ताविहितच्छागप्रापणसामर्थ्यम्, पशुचोदनाविहितस्य तु संदेहापनयनमात्रमुपयुज्यते । न चावद्यतिः एकान्तेन यागमनुमापयति, विनाऽपि तेन खण्डनमात्रतया लोके वेदे चोपपत्तेः । द्रव्यदेवतासंयोगस्तु न कथञ्चित् यागाद्विना सिध्यति इत्यनुमानवैषम्यम् । न च सांनाय्यावद्यतिः प्रकृतौ चोदितः, अर्थगृहीतत्वात्, यतस्तद्धर्मप्राप्तिरपि स्यात् । न चास्य यागद्रव्यार्थत्वं इतिकर्तव्यता, येन तदतिदिश्येत । न च ईदृशेऽर्थे सामान्यतोदृष्टं प्रक्रमते । पूतीकाभिषवफलचमसभक्षयोस्तु वाक्यप्रकरणाभ्यां तादात्म्यविज्ञानं इत्यसमानता । सोमवाक्येऽपि विशिष्ट-

विधौ प्रत्यक्षोपात्ते सति आनुमानिकासंभवादेव अतुल्यत्वम् । न च ऐन्द्रवायवादिवाक्येऽपि अष्टाकपालादिवाक्येष्विव गुणवाक्यत्वेऽपि वाक्यभेदः । कुतः ? '**विधेयानेकभावेऽपि देवताग्रहणात्मना । क्रियाऽन्तरप्रसादेन विशिष्टविधिसंभवः ॥**' शक्यते हि इन्द्रवाय्वादिविशिष्टग्रहणभावनाविधिः आश्रयितुम् । अर्थप्राप्ते वा ग्रहणे समासोपात्तैकदेवताविधानमात्रमविरुद्धम् । प्रकरणलभ्यश्च प्रधानसंबन्धः, इति गुणवाक्यत्वेऽपि अदोषः । तस्मात् एषां संस्कारत्वात् अन्यतो यागमपेक्षमाणानां अविरुद्धोऽन्येन यागविधिः । एवं च सति ज्योतिष्टोमेन इत्येकवचनं मुख्यमेव भवति । न च सोमशब्दः क्लेशेन अनर्थकं द्वितीयनामत्वं प्रतिपत्स्यते । न च आघाराग्निहोत्रपूर्वपक्षसदृशः समस्तवाक्यानुवादः अनर्थकः आश्रितो भविष्यति । तेन चोदना पशुसोमयोः इति सिद्धम् ।

**तद्भेदात् कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्यात् भेदो द्रव्यगुणीभावात् । १९ ॥**

**भाष्यम्** – पशौ वृत्ता कथा दशमे पुनरुद्भविष्यति । सोमे इदानीं वर्तते, कथं क्रमसमुच्चयाविति । इन्द्रवाय्वाद्याः देवता नैवं श्रूयन्ते, इन्द्रवायुभ्यां यागो निर्वर्तयितव्यः, मित्रावरुणाभ्यां यागो निर्वर्तयितव्य इति । यदि एवमश्रोष्यन्त यागं प्रति देवता व्यकल्पिष्यन्त । केवलया हि देवतया तदा यागो निर्वर्त्यते इति विहितमभविष्यत् । अथ पुनरिमा अदृष्टार्थे गृह्णातिसंस्कारं प्रति देवता विधीयन्ते, तत्र इन्द्रवायुसंकल्पात् अन्यो मित्रावरुणसंकल्पः, तेन गृह्णातौ तत्कृतादृष्टात् अदृष्टान्तरमुत्पादयति । एवमपरेष्वपि ग्रहणेषु । तस्मात् समुच्चयः । ग्रहणं च नियतपरिमाणेषु ऊर्ध्वपात्रेषु प्रादेशमात्रेषु नियतपरिमाणेषु उदककलशेषु संस्कृतस्य दशमुष्टिपरिमितस्य कृत्स्नस्य सोमस्य नावकल्पते । यद्यपि चावकल्प्येत, तथापि नित्यवद्विहितानां देवतानां विकल्पपक्षे तावत् प्रयोगवचनो मा बाधि इति अवयवग्रहणमेव न्याय्यम् । कृत्स्नग्रहणे हि तदेव इन्द्रवायुभ्यां संकल्पितं तदेव मित्रावरुणाभ्यां इति नावकल्पेत । तस्मात् कल्पनभेदात् पृथगवस्थितः सोमः नानादेवतत्वादेव नैक्येन शक्यः कर्तुम् । न च असति देवतायागे देवताभ्यः शक्यते संकल्पयितुम् । तस्मात् अवश्यं यथासंकल्पिता देवता यष्टव्याः । तासु चेज्यमानासु 'ज्योतिष्टोमेन यजेत' इति श्रुतो यागो निर्वृत्त एव भवति, न देवतान्तरमाकाङ्क्षति । कृत्स्नेन च दशमुष्टिना सोमेन यागः श्रुतः, सोऽसति अभ्यासे नावकल्पते इति अर्थात् स गुणो भविष्यति इति अभ्यसितव्यो यागः । नहि अनभ्यस्तः सर्वाभिर्देवताभिः सर्वेण च सोमेन संपन्नो भविष्यति । तस्मिंश्चाभ्यस्यमाने क्रमसमुच्चयौ युक्तावेव भवतः । तस्मात् तयोर्दर्शनं युज्यत एवेति ।

**वा**— क्रमसमुच्चययोः पशौ अपरिचोदितत्वात् वृत्ता कथा । पशोरेकहविष्ट्वं ( १०।७।१।१ ) इत्यत्र उद्भविष्यति । किं समस्तादवदातव्यम्, उत प्रत्यङ्गम्, उतैकस्मात् अथवा हृदयादिभ्यः परिगणितेभ्य इति । सोमे तु परिचोदनापरिहारः अभिधीयते । '**वाक्येन यदि यागस्य श्रूयेरन् देवताः पृथक् । व्यकल्पिष्यन्त, सर्वास्तु युगपद्यागसंगताः ॥ यत्र वाक्येन संबन्धो निरपेक्षेण चोद्यते । तत्र तुल्यार्थवर्तित्वान्नोपपन्नः समुच्चयः ॥**' यदि ऐन्द्रवायवेन यजेत, इन्द्रवायुभ्यां यागं निर्वर्तयेत् इति वा श्रूयेत ततः अन्योन्यनिरपेक्षैर्वाक्यैः तुल्यार्थत्वेन ज्ञायमाना विकल्पभाजो भवेयुः । इमाः पुनर्ग्रहणसंबद्धाः श्रुताः प्रकरणेन यागसंबन्धं प्रतिपद्यन्ते । न च प्रकरणव्यापारः पर्यायः (सः ?), येन अन्योन्यनिरपेक्षाः संबध्येरन् । सर्वग्रहणेषु हि युगपत् इतिकर्तव्यतात्वेन गृहीतेषु तद्गता देवताः तन्मात्रेणापर्यवस्यन्त्यः प्रकरणिना यागेन आकाङ्क्षिताः युगपदेव संबध्यन्ते । तत्र नाम विकल्पो युज्यते, यत्र इतरेतरनिरपेक्षाः समानार्थे नियुज्यन्ते । किं कारणम् ? '**प्रत्येकं हि समर्थत्वं वाक्यादेवावधारितम् । सापेक्षत्वे विपद्येतेत्येवं सर्वं विकल्पते ॥**' न त्विह प्रत्येकं ज्योतिष्टोमनिर्वर्तनसामर्थ्यं इन्द्रवाय्वादीनामवगम्यते, तादृग्विनियोजकाभावात् । सत्यपि च प्रत्येकं यागनिर्वर्तनसामर्थ्ये तद्विशेषज्योतिष्टोमनिर्वृत्तिः यथावचनं विज्ञायते इति नैव प्रत्येकं तुल्यार्थत्वम् । प्रत्येकं तुल्यार्थाश्च व्रीहियवादयो विकल्पन्ते । वाक्यसंयोगिनो हि ते परस्परनिरपेक्षाः

स्वेनस्वेन वाक्येन विनियुज्यन्ते । ननु 'ऐन्द्रवायवं गृह्णाति' इति वाक्यमेव विनियोजकमुपलभ्यते । अतश्च 'मैत्रावरुणम्' इत्यस्य पूर्वनिरपेक्षमेव देवताविधिसामर्थ्यं विज्ञायते । सत्यम्, ग्रहणं प्रति अन्योन्यनिरपेक्षा विधीयन्ते । न तु तत्रैकार्थत्वम्, अदृष्टार्थत्वात् । कथमदृष्टार्थत्वमिति चेत्, उच्यते । '**पूर्वं प्रधानसंबद्धं संस्कारे श्रूयते यदि । तद् दृष्टार्थं विना तेन, यदि वाऽसौ न सिध्यति ॥**' यदि हि प्रथमं यागेन संबद्धाः सत्यो देवताः निर्वापावाहनादिष्विव ग्रहणेषु पुनः श्रूयेरन्, यदि वा ताभिर्विना ग्रहणमेव न निर्वर्तेत ततस्तत्र श्रवणं दृष्टार्थं अनागतस्मृतिरूपेण कल्पेत । न तु इन्द्रवाय्वादयः प्रथमं ज्योतिष्टोमे श्रुताः । नापि तदभावेन ग्रहणं सिध्यति । तत्र एवं सत्यपि यत् देवतायुक्तं ग्रहणं कर्तव्यमिति श्रूयते, तत्र अदृष्टादृते न किञ्चित् प्रयोजनमस्ति । ननु च यागस्यैता देवता भविष्यन्तीति ज्ञात्वा विनाऽपि प्रथमविनियोगेन तद्विषयस्मृत्यर्थत्वं विज्ञायते । नैतदस्ति । कुतः ? '**सर्वेण विधिवेलायां प्रयोजनमपेक्ष्यते । तद्वेलायामतः कल्प्यो दृष्टादृष्टार्थनिर्णयः ॥**' 'ऐन्द्रवायवं गृह्णाति' इत्येतद्वाक्यप्रवृत्तिकाले 'किं प्रयोजनम्' इत्यपेक्षा भवति । तत्र यद्यपि प्रकरणवशात् इतिकर्तव्यतात्मकस्य ग्रहणस्य यागसंबन्धः कथमपि भवति इत्यवधार्यते, तथापि देवतानामन्यसंयुक्तत्वात् अक्रियारूपत्वाच्च न प्रकरणेन यागार्थत्वं विज्ञायते इत्यवश्यं यागसंबन्धनिरपेक्षं तावत् ग्रहणं प्रति प्रयोजनं कल्प्यं इति अदृष्टकल्पनमापद्यते । तस्मिंस्तु शास्त्रवेलायां अवधारिते, यदि अनुष्ठानकाले दृष्टमपि अनुनिष्पादि भवति, केन तन्निवार्यते ? न तु तेन शास्त्रप्रवृत्तिः प्रतिबध्यते । तेन प्रतिवाक्यं देवतासंयोगानामदृष्टार्थत्वात् समुच्चयः । तत्र 'न च यत्समित्संबन्धेन क्रियते तत्तनूनपात्संबन्धेन' इत्यनेन न्यायेन ( भा. २।२।२।२ पृ. ४७२ ) भेदेन श्रुता देवता ग्रहणसंबद्धा नोपपद्यते यदि ग्रहणं नावर्तते, इति प्रतिदेवतं सोमो ग्रहीतव्यः । एष तावत् सूत्रार्थः— तद्भेदात् देवतासंयोगभेदात् ग्रहणकर्मणः अभ्यासः देवतासंयुक्तग्रहणसंस्कार्यद्रव्यपृथक्त्वात् अनर्थकं हि संयोगान्तरश्रवणमननुष्ठीयमानमनर्थकं स्यात् । तेन ग्रहणस्य भेदः संस्कार्यं द्रव्यं प्रति गुणभावात् । एतद्देवतावन्ति ग्रहणानि यागप्रक्रमात्मकत्वात् न यागादृते देवतार्थं द्रव्यं संस्कर्तुं शक्नुवन्ति इत्येवमपेक्षिते भविष्यति कश्चिद्यागः, य एतानि द्रव्याणि देवतासंबन्धं आपादयिष्यतीति । यागोऽपि च अविहितदेवताकः श्रुतिलिङ्गवाक्यैः देवतामलभमानः प्रकरणस्य च ईदृशे वस्तुनि अक्रियात्मके व्यापाराभावात् ग्रहणेषु तावत् विनियोजकं भवति । तानि च अपर्यायविधानात् भिन्नादृष्टसंबन्धित्वाच्च युगपत् गृह्यन्ते, तद्वशेन देवतानामपि समुच्चयसिद्धिः । ननु प्रकरणगृहीतानामपि एकार्थानां पुरोडाशविभागमन्त्रप्रभृतीनामिष्यत एव विकल्पः । सत्यमिष्टः, न तु तत्र प्रकरणं केवलं व्याप्रियते । लिङ्गानुमितया श्रुत्या प्रत्येकं विभागाङ्गत्वे विज्ञाते दर्शपूर्णमासविभागार्थत्वमात्रं प्रकरणाद्भवति, विभागान्तरेऽपि आनर्थक्यात् । तत्र यद्यपि दर्शपूर्णमासौ समुच्चयेन गृहीतः, तथापि न विभागद्वारनिरपेक्षयोः सामर्थ्यमस्ति । यच्च द्वारं, तत् विकल्पेनावरुद्धम्, न समुच्चयगम्यम् । इह पुनर्विपरीतमेतत् । यान्येव हि द्वाराणि ग्रहणानि, तेष्वेव देवताः समुच्चिताः । तत्र प्रत्येकं ग्रहणयोग्योऽपि द्वारसमर्पणवशेन प्रवर्तमानः किमिदानीं करिष्यति ? । ननु ग्रहणानामपि प्रत्येकं द्रव्यप्रकल्पनरूपेण देवतासमर्पणेन च प्रधानोपकारसामर्थ्यमस्ति इति विभागमन्त्रवत् विकल्पेन भवितव्यम् । भवेदेवम्, यदि पूर्वं नानादेवतः यागोऽवगतः स्यात्, ततस्तदर्थोऽयं द्रव्यप्रकल्पनभेदः इत्यवगम्यते, न तु असौ एवमवगतः, इति प्रकल्पनभेदाम्नानं अदृष्टार्थं विज्ञायते । अवश्यं च गुणात् प्रकल्पनानि भेत्तव्यानि । नहि एकस्मिन् प्रकल्पने युगपत् पर्यायेण वा देवताः संकल्पयितुं शक्यन्ते । यौगपद्यं तावत् क्रमवर्तिन्या वाचा नैव शक्यम् । अदेवताभूत एव समुदायः संकल्पितः स्यात् । नहि इन्द्रवाय्वादिसमुदाये देवतात्वं केन चिदुक्तं प्रतिपदोत्पन्नैस्तद्धितैः प्रत्येकं प्रतीयमानत्वात् । न च क्रमेणोद्देशः । कथम् ? '**द्रव्यस्य गृह्यमाणस्य देवतोद्देशचोदना । न चैकां देवतां मुक्त्वा तदुद्देशस्य संभवः ॥**' यदि तु

प्रागूर्ध्वं वा ग्रहणात् उद्दिशेत् अचोदितमेव कुर्यात्। **किञ्च 'एतस्या इति संकल्प उद्देशोऽत्राभिधीयते। अन्यस्मिन् क्रियमाणे च पूर्वस्तत्र विपद्यते॥'** यद् द्रव्यं इन्द्रवायुभ्यां दातव्यमिति संकल्पितम्, तस्य त्यक्तप्रायत्वात् अनीशो यजमानः कथमिव वक्ष्यति मित्रावरुणाभ्यामेतदेव इति ? । तत्रैकामुद्दिश्य देवतान्तर-संकल्पे क्रियमाणे पूर्वदेवतातः तद्द्रव्यमाच्छिन्नं स्यात्। पूर्वसंकल्पालोचनेन वा नैवोत्तरः पारमार्थिकत्वं प्रतिपद्येत इति असत्संव्यवहारमात्रमेव अनुष्ठीयेत, न चोदनार्थः। तेनावश्यं यावद्देवतं ग्रहणभेदः कर्तव्यः । **किञ्च 'शक्यते चागृहीतेऽपि यत्र कचिदवस्थिते। द्रव्येऽस्मिन् देवतोद्देष्टुमित्यदृष्टार्थता विधेः॥'** देवतोद्देशस्त्वत्यागात्मको हि यागः, शक्यते च पूय-मानावस्थेनापि सोमेन क्रयोत्तरकालं वा सर्वावस्थावियुक्ते-नापि निर्वर्तयितुमिति अशेषोत्तरसंस्कारविधानमदृष्टार्थम्। यत्र तु पुरोडाशादि द्रव्यं चोद्यते तत्र यावत् अव-हन्त्यादिविधानम्, तत्सर्वं तन्निष्पत्त्यर्थत्वात् दृष्टार्थं भवति । न च ग्रहचमसस्थेन सोमेन यष्टव्यमिति उत्पत्तिचोदना, लतामात्रपर्यवसानात् । तेन आत्मीया-दृष्टभेदनिर्वृत्त्यर्थमपि ग्रहणानि समुचेतव्यानि । 'दश-मुष्टीर्मिमीते' इति च प्रकरणे परिमाणं श्रुतम्। अतः 'सोमेन यजेत' इत्येतद्वचनमेव विशेष्यते 'दशमुष्टिना सोमेन यजेत' इति । स च नियतपरिमाणेन उदकेनाभिषुतः अल्पपरिमाणेषु भिन्नेषु ग्रहचमसेषु न ग्रहणभेदमन्तरेण शक्यते ग्रहीतुं इति भेदेन गृह्यते । तथाऽवस्थेन च यागो निर्वर्तयितव्यः। सोऽपि अन-भ्यस्तः तथाऽवस्थितं न शक्नोति सर्वं संभावयितुम्, इति प्रयोजनवशेन अभ्यस्यते। तेन तत्रापि सूत्रम्। तद्भेदात् प्रकल्पितसोमभेदात् यागकर्मणः अभ्यासः स्वीकृतद्रव्यपृथक्त्वात् अशेषमत्यज्यमानं अनर्थकं स्यात्। अतः उत्पत्तौ सकृत् श्रुतस्यापि वाक्यान्तरप्रकल्पि-तावस्थौत्पत्तिकद्रव्यगुणत्ववशेन अनुष्ठानभेदः। तद्धि द्रव्य-मवश्यं यथागृहीतमेव दातव्यम्। पुनरेकीकरणे पूर्वकृत-ग्रहणभेदवैयर्थ्यप्रसङ्गात्। न च यथासंकल्पिताः स्वैर्भागैः देवताः संबध्येरन्। न च त्यागकाले सर्वाः संकल्पयितुं शक्यन्ते, येनाभ्यासभीतैः सर्वोद्देशेन सकृदेव सर्वं द्रव्यं मिश्रीकृतं दीयेत। तथाकृतेऽपि च भागसंकरः प्राप्नोत्येव। प्रकल्पिते च भागनानात्वे वचनादृते अवश्यं परिहार्या संकरापत्तिः । तस्मात् यथासंकल्पितस्य प्रदानात् सर्व-देवतासमुच्चये सति उपपन्नमेतत् 'दशैतानध्वर्युः प्रातः-सवने ग्रहान् गृह्णाति' 'आश्विनो दशमो गृह्यते' 'तं तृतीयं जुहोति' इति । तेन सिद्धमेककर्मत्वम्।

**प्रयोजनं** पूर्वपक्षे सोमविकारेषु एकस्यैव ग्रहस्य धर्मैः सकृदनुष्ठानेन भवितव्यम्। सिद्धान्ते तु प्रकृतितुल्यमेवा-नुष्ठानमिति ।

**संस्कारस्तु न भिद्येत परार्थत्वाद् द्रव्यस्य गुणभूतत्वात्। २०॥**

**भाष्यम्**— यदप्युच्यते यथा 'खादिरे बध्नाति', 'पालाशे बध्नाति' इति खादिरादयः संस्कारे विकल्पन्ते, तद्वत् देवता विकल्पयिष्यन्ते इति। तच्च नैवं युक्तम्। तत्र संस्कारमभिनिर्वर्तयितुं खादिरादयः श्रूयन्ते। यदि च इन्द्रवाय्वाद्या अपि ग्रहदेवताः यागमभिनिर्वर्तयितुं श्रूयेरन्, ततः अत्रापि विकल्पः स्यात्। न तु एता यागे श्रुताः। तस्मात् समुच्चीयेरन्।

**शा**— **'ऐन्द्रवायवमित्यादिद्रव्यदैवतसंगतेः। याग एव विधातव्यो गृह्यातौ नहि देवता॥'** त्रेधा पूर्वः पक्षः, सोमशब्देन द्रव्यं विधीयते, प्रकृति-द्रव्यं वा नामधेयं वेति। सर्वथाऽपि आलभतियजती समुदायानुवादः। इति प्राप्तेऽभिधीयते। **'द्रव्यान्तरेण संयोगान्नानुवादोऽवकल्पते। तेन यागविधी एता-वन्ये गुणविधायिनः॥'**

**सोम**— दध्यादिवाक्येषु गुणाकृष्टशक्तिकत्वात् न कर्मविधिः, किन्तु कर्मानुवादेन गुणविधिः इत्युक्ते तद्वदेव पशुसोमवाक्ययोरपि न कर्मविधिः इति प्रत्यवस्थानात् **संगतिः**। यद्वा दध्यादिवाक्येषु कर्मविध्यभावेन अग्नि-होत्राघारवाक्ययोः अनुवादाभावेऽपि हृदयादि-ऐन्द्रवाय-वादिवाक्येषु कर्मविध्यवश्यम्भावेन पशुसोमवाक्ययोः अनुवादो भवति इति प्रत्यवस्थानात् **संगतिः**।

**प्रयोजनं** पूर्वपक्षे ऐन्द्रवायवादिवाक्यानां यागविधा-यकत्वे तस्य यागस्य स्वार्थतया विनियुक्तदेवताकत्वा-

भावलक्षणाव्यक्तत्वाभावात् विश्वजिदादिष्विव 'अव्यक्तासु तु सोमस्य' इति न्यायाप्रवृत्तिः। सिद्धान्ते तु तत्प्रवृत्तिः। पश्वुदाहरणे तु पूर्वपक्षे यागभेदात् विकृतिषु एकस्यैव यागस्य इतिकर्तव्यताप्राप्तेः हृदयादिना तु एकेन यागः, सिद्धान्ते सर्वैः। यद्वा पूर्वपक्षे 'सारस्वतं मेषम्' 'ऐन्द्रमृषभम्' इत्यादिषु विशसनादिकमकृत्वा श्रुतमेषादिजातीयेन द्रव्येण अविकृतेनैव यागः कर्तव्यः। विकृतिषु विशसनादीनामनुपदिष्टत्वात् अभिषवादिविधिभिश्चोत्पत्तिशिष्टा लता न रसीकर्तुं शक्यते इत्यादिग्रन्थेन परंपराऽऽश्रयणे श्रुतिविरोधस्योक्तत्वेन तन्न्यायेन मेषवृषभादिष्वपि श्रुतमेषादिजातीयसाधनत्वविरोधप्रसङ्गेन विशसनादीनां चोदकतः प्राप्त्यसंभवात्। सिद्धान्ते तु प्रकृताविव विकृतावपि परंपराऽऽश्रयणेऽपि श्रुतद्रव्यस्य अविरोधात् चोदकानुसारात् हृदयादिभिः यागः इत्यादि ऊह्यम्। **सूत्रार्थस्तु**— पशुसोमवाक्ययोः द्रव्यान्तरसंयोगात् कर्मचोदनाप्रकरणे प्रकृतहृदयाद्यैन्द्रवायवादिवाक्यविहिते यागे सति हि पशुसोमवाक्ययोः द्रव्यसंयोगः अनर्थकः स्यात्, नहि तस्य गुणार्थेन संभव इति।

**वि**— 'यजत्यालभतीत्येतावनुवादौ विधी उत।, गृह्णात्यवद्यतीत्याभ्यां विहितेऽर्थेऽनुवादिनौ॥, नानुवादोऽपुरोवादे यज्यालभ्योरतो विधिः। ग्रहणे सोमसंस्कारोऽवदाने पशुसंस्क्रिया॥'

**भाट्ट**— 'अग्नीषोमीयं पशुमालभेत' इति श्रुतम्, तथा 'सोमेन यजेत' इति च। तत्र आद्यविधिप्रकारस्यासंभवात् न पूर्ववत् कर्मविधित्वम्। अपि तु समुदायानुवादत्वमेव। कर्मप्राप्तिस्तु पशौ 'हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः' इत्यादिभिः। अत्र हि उत्पन्नशिष्टपशुसाध्ये यागे हृदयादीनां साधनत्वानुपपत्तेः न तदुद्देशेन अवदानाख्यसंस्कारविधिः। अतो विहितानां हृदयाद्यवदानानां पशुप्रभवद्रव्यवृत्त्यवदानत्वसादृश्यात् सांनाय्यावदानप्रकृतिकत्वावगतेः सांनाय्यवदेव हृदयादीनां यागसाधनत्वस्य पूतीकवदनुमानात् यावद्-हृदयादियागा एव विधीयन्ते। तांश्च लक्षणया आलभतिना अनूद्य अग्नीषोमदेवता विधीयते। पशुपदं च हृदयादीनां छागप्रकृतिकत्वस्य मन्त्रवर्णात् प्राप्तत्वात् लक्षणया हृदयादिपरम्। अथवा हृदयादिवाक्यविहितावदानाक्षिप्तस्पर्शानेव आलभतिना शक्त्या अनूद्य पशुशब्दलक्षितहृदयादीनां प्रत्येकं देवतासंबन्धे कृते तावन्तो यागाः देवतासंबन्धकल्पिताः तेनैव विधिना विधीयन्ते। सर्वथा पशुपदं समुदायानुवादः। **तथा** सोमेऽपि 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' इत्यादिवाक्यैः द्रव्यदेवतासंबन्धानुमितयागविधानं ग्रहणे देवताऽन्वयानुपपत्तेः। द्रव्यं च 'अण्व्या धारया गृह्णाति' इति प्रकृतं धारासमर्थं द्रवद्रव्यं तद्धितोपात्तम्। सोमवाक्ये तु तत्प्रकृतित्वेन सोमलताविधिः व्रीहिवत्। 'सोममभिषुणोति' इत्यादिसंस्कारविध्यन्यथाऽनुपपत्त्यैव वा 'अध्वर्युं वृणीते' इतिवत् सोमप्राप्तेः सोमपदं नामधेयम्। सर्वथा यजिः समुदायानुवादः। तत्प्रयोजनं चास्मिन् पक्षे सोमद्रव्यकयागमात्रानुवादात् अस्तुतशस्त्राणामपि फलसंबन्धः। ज्योतिष्टोमपदं च वैश्वदेववत् गौणम्। समुदायानुवादाभावे हि तद्वशात् सस्तुतशस्त्राणामेव यागानां फलसंबन्धापत्तिः। तेषामेव ज्योतीरूपस्तोमसंबन्धात्। सिद्धान्ते तु यागस्यैकत्वात् फलवाक्यस्थयजिना अभ्यासलक्षणापत्तेः विजातीययागत्वावच्छिन्नस्यैव फलसंबन्धः। ज्योतिष्टोमपदे बहुव्रीह्यर्थस्तु स्वसंबन्ध्यभ्यासघटितसमुदायाश्रयरूपः। अतः समुदायानुवादौ एतौ। **इति प्राप्ते,** पशुपदे हृदयादिलक्षणायां प्रमाणाभावात् तत्रैव विशिष्टयागविधिः। हृदयादिवाक्यैश्च हृदयाद्युद्देशेन संस्कारमात्रम्। पशोश्च न साक्षात् हविष्ट्वेन विधानम्। किन्तु विशसनावदानादिविधिरूपतात्पर्यग्राहकानुरोधेन हृदयादिप्रकृतित्वेनैव। करणत्वस्य साक्षादिव परंपरयाऽपि तात्पर्यग्राहके सति उपपत्तेः। अत एव अतिदेशप्राप्तावदानसंबन्धोऽपि हृदयादीनां हविष्ट्वसिद्ध्यर्थं तदितराङ्गानां हविष्ट्वपरिसंख्यार्थश्चेति कौस्तुभे द्रष्टव्यम्। सोमेऽपि न ऐन्द्रवायवादिवाक्ये यागविधिः, गौरवात्। किन्तु देवताविशिष्टग्रहणस्यैव तद्धितोपात्तद्रव्योद्देशेन विधिः। संभवति च देवतात्वस्य निरूपकतासंबन्धेन ग्रहणे वैशिष्ट्यायोगेऽपि ग्रहणकालीनोच्चारणकर्मीभूतशब्दवृत्तित्वसंबन्धेन ग्रहणे वैशिष्ट्यम्। अतश्च देवतायाः ग्रहणाङ्गभूताया अपि यागापेक्षायां सोमवाक्यविहितयागस्यैव देवताऽपेक्षस्य उपपादकत्वमात्रकल्पनात्

लाघवम् । सोमपदं तु संस्कारविध्यन्यथाऽनुपपत्त्या संभवत्प्राप्तिकत्वेऽपि सक्तुव्यावृत्तिफलकसोमनियमार्थं न विरुध्यते । यथा च एवं सति ग्रहणानां समुच्चयो यागस्य च प्रतिग्रहणमावृत्तिः तथा सर्वं कौस्तुभे एव निरूपितम् । प्रयोजनं पशुविकारे हृदयादियागाद्यन्यतमप्रकृतित्वात् नैकादशावदानगणप्राप्तिः पूर्वपक्षे, सिद्धान्ते सा इति द्रष्टव्यम् । सोमे चाव्यक्तत्वसिद्धिरेव ।

**मण्डन**— 'सोमेन ( इत्यत्र ) यागविधिरस्य गुणो ग्रहोक्तिः ।'

**शंकर**—'पशुसोमवचोस्तथा' ( यजुर्विधिः यागविधिः ) ।

* **पशुसोमाधिकरणं** अभ्यासापवादत्वेन उत्थितम् । **कौ.** २।२।७।२० पृ. २३२, * पशुसोमाधिकरणं आघाराग्निहोत्राधिकरणप्रत्युदाहरणम् । २।२।६।१७ पृ. २०७. * पौर्णमास्यधिकरणा (२।२।३)पवादः **पशुसोमाधिकरणम्** । **वा.** २।१।१।१. * **पशुसोमाधिकरणे** भट्टसोमेश्वरेण शेषपरिसंख्योदाहरणमुक्तम् "न्यायात् सर्वावयवप्राप्तावपि 'एकादश वै पशोरवदानानि' इत्यस्य अनन्यप्रयोजनत्वात् अवयवान्तरपरिसंख्याऽर्थत्वाभ्युपगमेन दाशमिकः सिद्धान्तः" इति, ( १०।७।१।१–२ ) तदेतदस्माभिः दशमे 'पशोरेकहविष्ट्वम्' इत्यतोऽग्रिमेऽधिकरणे दूषितम् । मिश्रा हि तत्र अस्य 'द्विर्द्विरवद्यति' इति संख्याविधिना एकवाक्यतामेवाहुः । यदि परं हृदयादिवाक्यानामेव 'इमामगृभ्णन्' इतिवत् फलतः परिसंख्यात्वं तत्रत्यभाष्यकृदुक्तं वरम्, तदपि विशसनेऽपि पशुप्रत्यभिज्ञानात् हृदयादिवाक्याभावे पशोरेव मध्यात् पूर्वार्धाच्च सकृदवदानं प्राप्नुयात् नावयवेभ्यः इति निरस्तम् । यत्तु तत्र मिश्रैः पशोर्विशसनेन साधनत्वायोगात् सर्वावयवेभ्योऽवदानप्रसक्तिरुक्ता, सा आपातत एव इत्युक्तं तत्रैव ( अस्माभिः ) । तदुक्तं आकृत्यधिकरणवार्तिके ( पृ. ३०५।५ ) 'पश्वादिषु अपनीताङ्गेषु विशेषबुद्ध्यभावात् सामान्यरूपैव विशसनादिविशिष्टा बुद्धिर्दृष्टा' इति । **बाल.** पृ. २४–२५, * पशुसोमाधिकरणे वत्सस्यैव विनियुक्तदोहाङ्गगोद्रव्योपकारकतया 'वत्समालभेत' इत्यत्र आलम्भसंस्कार्यत्वमिति **भवदेवः** । पृ. ८२. * न च **पशुसोमाधिकरणे** पशुसोमयोः प्रणाड्या यागकारकत्वं कथमुक्तमिति **वाच्यम्** । तत्र प्रकृतिविकृत्योः अत्यन्तानतिरिक्ततया हृदयादिगणसोमरसात्मना साक्षादेव पशुसोमयोः यागकारकत्वसंभवेऽपि आरादुपकारकस्य स्तोत्रस्य यागे कारकत्वासंभवात् । **कु.** २।२।१२।२७, * पृष्ठस्तोत्रमेकमनेकं इति पक्षद्वयसद्भावात् एकमिति पक्षमाश्रित्य अङ्गानुरोधात् प्रधानावृत्तिरुदाहृता, बहुयागसमुच्चये एवेदमुदाहरणम्, न तु एकस्य यागस्याङ्गानुरोधादभ्यासे, इति शङ्कां पशुसोमाधिकरणे सोमोदाहरणविषयसिद्धान्तं दर्शयन् परिहरति । **परिमल.** ३।२।२।७ ब्रसू. * प्रमाणान्तरेण अर्थादिना संभवत्प्राप्तिकानां तत्तद्ग्रहाणां तत्तद्देवतासंयोगानां च तत्तद्विधिभिः पुनर्विधानस्य आरादुपकारकविधया क्रत्वर्थफलकत्वं पशुसोमाधिकरणे कौस्तुभे व्यवस्थापितम् । **भाट्ट.** १०।५।१७. * 'सोमेन यजेत' सोमपदानुवादशङ्का तु सक्तुविनियोगविधिकल्पनाव्यावृत्तिफलकतयाऽपि विध्युपपत्तौ अनुवादत्वे वैयर्थ्यापत्तेः पशुसोमाधिकरणे एव निरस्ता । **कौ.** ३।२।१७।३८. * 'हृदयस्याग्रेऽवद्यति' इत्यादीनि हृदयादिवाक्यानि तेषामवदानाख्यसंस्कारविधिद्वारा हविष्ट्वबोधकानि सन्ति इतरेषां हविष्ट्वपरिसंख्यार्थानि इत्युक्तं पशुसोमाधिकरणे कौस्तुभे । **भाट्ट.** १०।७।२.

* ऐन्द्रवायवादिविधयो यागानामचोदकाः, यतो ग्रहणलक्षणसंस्कार एवात्र चोद्यते इति **पशुसोमाधिकरणगुणसूत्रार्थः** ( २।२।६।१८ ) । **सोम.** १०।६।१३.

**पशुसोमाधिकरणन्यायः** । ( पशुसोमाधिकरणोक्ता युक्तिः ) । **साहस्री.** ८६६.

* **पशुसोमाधिकरणव्युत्पादितः** यजिवाच्यकर्मविधिः । **सु.** पृ. ९३१.

* प्रयाजाभ्यासवत् ग्रहाभ्यासेष्वपि अनुष्ठानभेदचोदनायां धर्मग्रहणशक्तापूर्वभेदात् पशुसोमाधिकरणपूर्वपक्षवत् सिद्धान्तेऽपि सोमविकारेषु एकस्यैव ग्रहणस्य धर्मैः सकृदनुष्ठानेन च भवितव्यं इति प्रकृतितुल्यानुष्ठानं **पशुसोमाधिकरणसिद्धान्तप्रयोजनं** न सेत्स्यति । **सु.** पृ. ७१८.

* **पश्चादाम्नातं पूर्वाम्नातेन बाध्यते** यथा अध्वरकल्पायां आग्नावैष्णवद्वादशकपालस्य ऐन्द्राग्नविकारत्वात् आमावास्यतन्त्रेण सरस्वत्यां आज्यभागायां प्राप्तं पौर्णमासतन्त्रम् । **बाल.** पृ. १४१.

* **'पश्य मृगो धावति'** इत्यादौ पश्य इत्यस्य कर्मान्वयं विना शाब्दबोधाजनकत्वात् युक्तो धावनभावनायाः कर्मत्वेन तस्यामन्वयः । **रहस्य.** पृ. २४.

* **पाकः** अन्वाहार्यस्थानापन्नेऽपि वत्से नानुष्ठेयः आग्रयणे । १०।३।८।३६. * पाकः अन्वाहार्यस्थानापन्ने वाससि नानुष्ठेयः आग्रयणे ! १०।३।९।३७. * पाकः कृष्णलेषु औष्ण्यरूपः कार्यः । १०।२।१. **मीको.** पृ. १४७५ 'कृष्णलेषु मुख्यपाकासंभवात्' इत्यत्र द्रष्टव्यम् । * पाकः कृष्णलचरौ 'घृते श्रपयति' इति प्रत्यक्षशिष्टत्वात् अदृष्टार्थः कर्तव्यः । १०।२।१।१–२. * पाकः नाम 'येयं तण्डुलानां विक्लित्तिः' इति महाभाष्ये विक्लेदनस्य पाकत्वोक्तिः । विक्लित्तिफलस्य अधिश्रयणादिव्यापारसमूहस्य पचिवाच्यत्वम् , नाधिश्रयणादिमात्रस्य एकैकस्य इत्येवमर्थत्वेन 'विक्लित्तिः पाकफलम्' इति प्रयोजनवाच्यर्थशब्दाभ्युपगमेन भाष्यं व्याख्येयम् । **सु.** पृ. १४३४. * पाकः सौर्यचरोः स्थाल्यामेव । १०।१।११. 'सौर्यचरोः पाकः' इत्यत्र द्रष्टव्यम् । * पाको हविर्भूतस्य मांसस्य नियतः । **वि.** १०।७।२.

**⌛ पाकस्य चान्नकारितत्वात् । १०।३।९।३७॥**

आग्रयणे 'वासो दक्षिणा' श्रुता । तत्र वाससि पाको न कर्तव्यः । पाकस्य हि अन्वाहार्ये अन्नकारितत्वात् । अन्वाहार्यो हि ओदनः अन्नम् । तेन पाकः कारितः । नहि पाकं विना अन्नं भवति । वासस्तु नान्नम् । तस्मात्तत्र पाको न कार्यः । इति सिद्धान्तः । **के.**

* **पाकस्य पुरुषार्थस्य** दीक्षितकर्तृकत्वपर्युदासः ज्योतिष्टोमे । नदीक्षिताधिकरणम् । १०।८।७।१२–१५.

* **पाकादिक्रियाकर्मणः** तण्डुलादेः क्रियाजन्यातिशयाश्रयत्वदर्शनात् कर्मत्वेन ज्ञानक्रियाकर्मणोऽपि क्रियाजन्यातिशयाश्रयत्वमनुमीयते । **सु.** पृ. ६६१.

* **पाकभेदात्** नानाजातीयेषु पशुषु कुम्भ्यादीनां भेदः । ११।४।१०।४०–४१. **मीको.** पृ. १९३६ 'तन्त्रं न०' इत्यत्र द्रष्टव्यम् ।

* **पाकयज्ञः** पाकं निर्वर्त्य क्रियमाणो यज्ञः । **संकर्ष.** २।४।१०.

**⌛ पाकयज्ञेषु 'द्विर्जुहोति, द्विर्निमार्ष्टि, द्विः प्राश्नाति, उत्सृज्याचामति, निर्लेढि' इति धर्मा भवन्ति ॥**

पाकयज्ञकरणकभावनायाः कथम्भावाकाङ्क्षायामाक्षेपलभ्यैः संनिपातिभिरेव अङ्गानामिव आकाङ्क्षानिवृत्तिः । इति प्राप्ते, 'द्विर्जुहोति, द्विर्निमार्ष्टि, द्विः प्राश्नाति, उत्सृज्याचामति, निर्लेढि' इति प्रकरणिनः शेषित्वेन विहिता अपि धर्माः पाकयज्ञेऽपि प्राप्नुयुः । 'यद्येतान् नालभेत वायव्यस्यैव शिर उपदध्यात्' इत्येकस्या एव श्रुतेः पशुशीर्षादिविकल्पवायव्यशीर्षोपधानोभयप्रापकत्वदर्शनात् । **संकर्ष.** २।४।१२.

**⌛ पाकयज्ञशब्दः दर्विहोममात्रवाचकः ॥**

पाकं निर्वर्त्य क्रियमाणो यज्ञ इति व्युत्पत्त्या सोमयागान्यनिखिलयागपरोऽयं शब्दः । इति प्राप्ते, 'यद्वै चातुर्मास्यानां पाकयज्ञः सैव तदेषां पशव्यं गृहमेधीयो ह्येषां पाकयज्ञो न इध्मा बर्हिर्भवति न सामिधेनीरन्वाह न प्रयाजा इज्यन्ते' इत्यादिना ऐष्टिकाङ्गानां अभावबोधनेन दर्विहोममात्रवाचकः । **संकर्ष.** २।४।१०.

**⌛ पाकयज्ञशब्दः नाहुतिपर्यायः ॥**

पाकयज्ञशब्दस्य आहुत्यादिशब्दवत् स्मार्तश्रौतसाधारण्येन यागमात्रवचनत्वे प्राप्ते, 'मनुर्वै पाकयज्ञीय आसीत् स इमामितरं यज्ञमपश्यत्' इत्यादिना वाक्यशेषेण कतिपयाहुतिष्वेव शक्तिग्रहात् न आहुतिपर्यायता । **संकर्ष.** २।४।९.

**⌛ पाकयज्ञशब्दः लौकिकहोमानामेव वाचकः॥**

दर्विहोमत्वाविशेषात् लौकिकवैदिकाग्निसाध्यानाम् खिलानां वाचकः । इति प्राप्ते, लौकिकानामेव दर्वि-

होमानामेष वाचकः । 'शिबीनां पाकयज्ञः, उशीनराणां पाकयज्ञः' इत्यादेः स्मार्ते एव व्यवहारस्य दर्शनात् । 'यदाऽन्यस्य हविषः स्रुच्यवद्यति, सर्वमेतदग्नौ जुहोति' इति विधाय 'अथ कस्मात् द्विर्जुहोति' इत्यादिना 'तदस्य पाकयज्ञस्यैव' इत्यनेन द्विर्होमादिनिर्लेहनान्तपदार्थाः पाकयज्ञीयाः अत्र किमिति क्रियन्ते इत्याक्षेपेण वैदिकानामेषां न पाकयज्ञता इति ध्वननाच्च । **संकर्ष.** २।४।११.

* **पाकहोमयोः** ( यवागूपाकाग्निहोत्रहोमयोः ) अर्थतः क्रमः । ५।१।२।२.

* **पाकहोमदानानां** दीक्षाकालोत्कर्षः । ६।५।१०। ३८-३९. **मीको.** पृ. २१०८ 'दीक्षोत्कर्षे०' इत्यत्र द्रष्टव्यम् ।

* **पाचकादिशब्दाः** न शक्तिपराः, किं तर्हि ? शक्त्यन्तरायोगित्वात् शक्तिमत्पराः । **वा.** ३।४।४।१३ पृ. ९३४.

* **पाञ्चदश्यं** सामिधेनीनां ब्राह्मणराजन्यविषयं दर्शपूर्णमासयोः । साप्तदश्यं तु विकृतिषु वर्णत्रयसाधारणम्, वैश्यस्य च दर्शपूर्णमासयोरपि । ६।६।७।३६-३९. **मीको.** पृ. २८३ 'अधिकारः अध्वरकल्पादिषु०' इत्यत्र द्रष्टव्यम् । * **पाञ्चदश्यस्य** नित्यस्य, वैश्यनिमित्तकस्य च साप्तदश्यस्य प्रतिष्ठाऽर्थेन काम्येन ( सामिधेनीनाम् ) एकविंशतित्वेन बाधः । **बाल.** पृ. १३३.

* **पाञ्चरात्राद्यागमानां** वैदिकविरुद्धवामागमप्रचुरत्वात् सर्वथैवाप्रामाण्यम् । **कु.** १।३।३।४.

* **पाञ्चसांवत्सरिकावृत्तावपि** चातुर्मास्येषु वैश्वानरपार्जन्यचातुर्होतृहोमानां सकृदेवानुष्ठानम् । **संकर्ष.** ३।१।२१. **मीको.** पृ. १६९२ 'चातुर्मास्येषु पाञ्चसांवत्सरिकावृत्तौ०' इत्यत्र द्रष्टव्यम् ।

* **पाञ्चसांवत्सरिकपक्षोऽपि** चातुर्मास्येषु । **संकर्ष.** ३।१।१९. **मीको.** पृ. १६९१ 'चातुर्मास्येषु पाञ्चसांवत्सरिकपक्षे०' इत्यत्र द्रष्टव्यम् ।

⌛ **पाटच्चरलुण्ठिते वेश्मनि यामिकजागरणं इति न्यायः** । पाटच्चरश्चौरः । यामिकः प्रहरकः । प्रयोजनाऽनुपयुक्तवेलायामयमवतरतीति खण्डने स्पष्टः । **साहस्री.** ६७२.

* **पाटनमन्तरेण** विषव्रणानां नोपशान्तिः । **वि.** ३।८।४.

* योऽपि हि स्रुघ्नान्मथुरां गत्वा मथुरायाः पाटलिपुत्रं व्रजति, सोऽपि स्रुघ्नात् पाटलिपुत्रं याति इति शक्यते वदितुम् । इति भाष्योक्त**पाटलिपुत्रगमनन्यायेन** 'तेजः परस्यां देवतायाम्' इति निर्देशः प्रत्यक्षसिद्धत्वाभावेऽपि उपगन्तव्यः । **आभरणम्.** ४।२।१।५. **ब्रसू.**

* **पाठः** क्रमं कल्पयन् वस्तुसामर्थ्ये अनुसृत्यैव कल्पयति । **वि.** ५।४।१. * पाठः क्रमबोधकं प्रमाणम् । **मणि.** पृ. १३, **बाल.** पृ. ८. * पाठः न क्रमस्याभिधायकः, किन्तु अन्यथाऽनुपपत्त्या क्रमं कल्पयति । **वि.** ५।४।१. * पाठः भिन्नप्रयोगविधिपरिग्रहस्थले पारायणादौ उपयुज्यते । **भाट्ट.** ५।३।१२. * **पाठं** बाधित्वा श्रुत्यर्थौ क्रमं नियच्छतः । **वि.** ५।४।१. * **पाठस्य** सारक्रमविधयैव क्रमनियामकत्वम् । **भाट्ट.** ५।१।९.

⌛ **पाठयोर्मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान्** ( भाट्ट. ) ॥

**मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मादुत्पत्तिदेशः सः । ५।१।९।१६॥**

**भाष्यम्--** दर्शपूर्णमासयोराग्नेयस्य पूर्वं मन्त्रपाठः, उत्तरो ब्राह्मणस्य । तत्र संदेहः कतमः पाठो बलीयानिति । उच्यते । अनियमः । नियमकारिणः शास्त्रस्याभावादिति । **एवं प्राप्ते, ब्रूमः ।** मन्त्रपाठो बलीयान् । कुतः ? प्रयोगरूपसामर्थ्यात् । प्रयोगाय मन्त्रस्य रूपसामर्थ्यम् । तदस्य सामर्थ्यम्, येन मन्त्रः प्रयुज्यते । तस्य च प्रयुज्यमानस्य क्रमो दृष्टाय भवति । ननु च ब्राह्मणपाठस्यापि तदेव प्रयोजनम् । उच्यते । उत्पत्तिदेशः सः । अपरमपि तस्य प्रयोजनं कर्मोत्पत्त्यर्थं भविष्यति ।

**टुप्--** मन्त्रतस्तु विरोधे स्यात् ॥ आग्नेयस्य पूर्वो मन्त्रपाठः ( उत्तरो ब्राह्मणपाठः ), अग्नीषोमीयस्य तु पूर्वो ब्राह्मणपाठः ( मन्त्रपाठस्तूत्तरः ) । तत्र ब्राह्मणपाठात् किमग्नीषोमीयस्य पूर्वं धर्माः, उत मन्त्रपाठात् आग्नेयस्येति ( इति मन्त्रब्राह्मणपाठयोर्बलाबलं चिन्त्यते ) ।

किं प्राप्तम् ? पूर्वो मन्त्रः उत्तरं ( मन्त्रं पाठेन प्रत्यक्षेणैव ) उपस्थापयति । ( यथा ) 'समिधो यजति' इति समाप्यमानः तनूनपातमुपस्थापयति । अतो द्वयोरपि समाम्नायपाठयोः प्रत्यक्षत्वात् अनियमः । इति प्राप्ते, ( ब्रूमः ) । मन्त्रपाठो बलीयान् । कुतः ? ( ब्राह्मणपाठस्य विप्रकृष्टत्वात् । तथाहि, ) 'समिधो यजति' इत्यनेन पदार्थो विहितः । सः अनुष्ठानवेलायां येन वाक्येन विहितः, तत् वाक्यं स्मारयति । तेन वाक्येन स्मृतेन अनुष्ठानवेलायां स पदार्थः स्मारितः सन् अनुष्ठीयते, ( अनुष्ठितश्चासौ झटित्येव ) द्वितीयं पदार्थं न स्मारयति ( अर्थानां ग्रन्थानपेक्षरूपेण पौर्वापर्यस्य अनवक्लृप्तत्वात् ) । किं तर्हि ? अनुष्ठानोत्तरकालं योऽसौ कृतः पदार्थः, तमालोचयति । स चालोच्यमानः येन ( समिधो यजतीत्यनेन ) ब्राह्मणखण्डकेन विहितः, तत् स्मारयति । तच्च ( स्मृतम् ) स्वादुत्तरं ब्राह्मणखण्डकम् ( तनूनपातं यजति इत्येतत् ब्राह्मणखण्डकम् ) स्मारयति पाठात् । तत् ब्राह्मणं पुनः पदार्थं विदधाति ( पुनःशब्दः तु-शब्दार्थकः ) । अनुष्ठानवेलायां तत् ( ब्राह्मणम् ) स्मारकमपेक्षितव्यम् । अयं ( मन्त्रपाठात् ब्राह्मणपाठे ) विप्रकर्षः । मन्त्रः पुनः ( अन्तःक्रतु प्रयुज्यमानः ) परिसमाप्यमानः उत्तरं मन्त्रं पर्युपस्थापयति । स च ( उत्तरो मन्त्रः ) पर्युपस्थाप्यमानः उत्तरं पदार्थं पर्युपस्थापयन्नेव पर्युपतिष्ठते । तस्मात् तत्र ( आलोचना- ) अपेक्षाऽभावात् नास्ति विप्रकर्षः । 'उत्पत्तिदेशः सः' इति ( सूत्रांशस्य अयमर्थः-- ) पूर्वः पदार्थो विहितः, उत्तरः पदार्थो विहितः इति विधीयमानानां यः क्रमः, तेन अर्थवान् ब्राह्मणपाठक्रमः, नानुष्ठानक्रमेणेति । ( तस्मात् मन्त्रक्रमो बलीयान् ) ।

**शा--** '**विधिक्रमबलीयस्त्वमुत्पत्तावववधारणात् । उत्पन्नेषु नियुक्तेषु मन्त्रे मन्त्रक्रमो भवेत् ॥, नैवं स्मृतिक्रमेणैव ह्यनुष्ठानक्रमो भवेत् । स्मारकक्रमतश्चापि स्मृतीनां क्रम इष्यते ॥ मन्त्राश्चानन्यकार्यत्वात् स्मृत्यर्था विषयः पुनः । विधिनैव कृतार्थत्वान्नावश्यं स्मारका मताः ॥**' तस्मात् मन्त्रक्रमेणैवानुष्ठानम्, तदभावे तु विधिरपि स्मारकः इति तत्रैव तत्क्रमस्य प्रामाण्यम् ।

**सोम--** प्रथमावगतत्वात् यथा पूर्वत्र पाठक्रमस्य प्राबल्यमेवं इहापीति प्रत्यवस्थानात् **संगतिः । सूत्रार्थस्तु**--मन्त्रब्राह्मणक्रमविरोधे मन्त्रपाठक्रमात् पदार्थक्रमः स्यात् प्रयोगसामर्थ्यात् मन्त्रस्य प्रयोज्यपदार्थस्मारणे सामर्थ्यात्, ब्राह्मणपाठस्तु उत्पत्तिदेशः इति न प्रयोगकाले स्मृत्युपयुक्तः इति ।

**वि--** 'अग्नीषोमीय आग्नेयात् पूर्वो नो वा, ऽस्तु पूर्वता । ब्राह्मणक्रमतो, मैवं मन्त्रक्रमबलित्वतः ॥ स्मृतिक्रमादनुष्ठानं मन्त्राणां स्मारकत्वतः । प्राबल्यं ब्राह्मणस्यास्ति विधिनाऽपि कृतार्थता ॥'

**भाट्ट--** पाठयोस्तु मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान्, न तु ब्राह्मणपाठः, तस्योत्पत्तिविनियोगविधिगतत्वेन प्रथमोपस्थितत्वेऽपि पाठस्य स्मारकक्रमविषयैव क्रमनियामकत्वोक्तेः, मन्त्रसत्त्वे च तस्यैव स्मारकतया विधानोपयुक्तस्यासमर्थस्य च विधेः स्मारकत्वाभावात् मन्त्रपाठक्रमः एव बलीयान् । तेन याज्याऽनुवाक्यादिमन्त्रपाठक्रमात् आग्नेयस्य प्रथमानुष्ठानम्, पश्चाच्च उपांशुयाजोत्तरमग्नीषोमीयस्य । न तु ब्राह्मणपाठक्रमादग्नीषोमीयस्य प्रथमम्, पश्चादुपांशुयाजोत्तरमाग्नेयस्य । अत एव तत्र पाठक्रमः स्वाध्यायादावुपयुज्यते ।

**मण्डन--** 'मन्त्रक्रमो बली तत्र ।' मन्त्रब्राह्मणपाठविरोधे । ११.

**शंकर--** 'विधिपाठान्मन्त्रपाठः ।' बली । ११.

* **पाठे** आनुमानिको विधिः प्रत्यक्षेण विधिना बाध्यते । भा. ८।४।५।१६.

* **पाठाधिकरणे** ब्राह्मणस्य स्मारकत्वं विधायकत्वं चेत्युभयार्थत्वं वक्ष्यते । सु. पृ. ६६६.

* **पाठादीनां** क्रमापेक्षायां नियामकता तत्रैव, यत्र एकप्रयोगविधिपरिग्रहः अनेकेषाम् । भाट्ट. ५।३।१२.

* **पाठोपस्थितस्य** क्रमस्य विनियोजकवाक्यकल्पनया अङ्गत्वे अवगते प्रयोगविधिना प्रयोगविधानम् । भाट्ट. ५।१।४.

* पाठक्रमोऽपि पदार्थबोधकवाक्यानां पदार्थक्रमनियामकः। पदार्थबोधकत्वं च क्वचित् अनुष्ठेयपदार्थबोधकत्वम्, क्वचिच्च तत्संबन्धिद्रव्यदेवतादिबोधकत्वम्। तेन च द्विविधेनापि अनुष्ठेयपदार्थक्रमनियमः। भाट्ट. ५।१।४, * पाठक्रमः अर्थक्रमेण बाध्यते 'अग्निहोत्रं जुहोति, यवागूं पचति' इत्यादौ। ५।४।१. * पाठक्रमः आतिदेशिकः औपदेशिकमुख्यक्रमात् बलवान्। ५।१। १०।१७–१८. * पाठक्रमः उपदेशविषयः एव। टुप्. ५।१।१।१ पृ. १२८७. * पाठक्रमः काम्यानुष्ठाने न नियामकः, किन्तु यथाकाममनुष्ठानम्। ५।३।१२।३२–३६. * पाठक्रमः चोदकाश्रितत्वाद्बलीयान्, मुख्यप्रवृत्तिक्रमौ तु प्रयोगवचनाश्रितत्वात् दुर्बलौ। टुप्. ५।१।१०।१८, * पाठक्रमः प्रत्यक्षः, मुख्यक्रमस्तु आनुमानिकः, तेन पाठक्रमो मुख्यक्रमात् बलवान्। तेन दर्शपूर्णमासयोः आज्यनिर्वापः पूर्वं न कार्यः, अग्नीषोमीयनिर्वाप एव आज्यात् पूर्वं कार्यः। ५।१।८।१५.

**पाठक्रमः मुख्यक्रमापेक्षया बलीयान्॥**

**प्रकृतौ तु स्वशब्दत्वाद् यथाक्रमं प्रतीयेत। ५।१।८।१५॥**

**भाष्यम्**— दर्शपूर्णमासयोः पूर्वमौषधधर्माः समाम्नाताः, तत आज्यस्य। तत्र संदेहः किमग्नीषोमीयधर्माणां मुख्यक्रमेण पूर्वमाज्यस्य धर्माः कर्तव्याः, उत यथापाठमिति। मुख्यक्रमानुग्रहेण आज्यस्य पूर्वम्। इति प्राप्ते, ब्रूमः। प्रकृतौ यथापाठं प्रतीयेत। स्वशब्दो हि तेषां पाठक्रमः। सोऽन्यथा क्रियमाणे बाधितः स्यात्। सहत्वस्य पुनरुपसंग्राहकः प्रयोगवचनः स्वक्रमेण पदार्थे संनिकृष्यमाणे न बाधितो भविष्यति। अपिच पाठक्रमे स्वशब्दः 'स्वाध्यायोऽध्येतव्यः' इति। मुख्यक्रमे प्रयोगवचनैकवाक्यता सूक्ष्मा।

**टुप्**— (इह तावत् पूर्वाधिकरणापवादरूपेण सिद्धान्तमभिधातुं मुख्यपाठयोर्बलाबलं चिन्त्यते)। आज्यनिर्वापः इहोदाहरणम्। पूर्वेण न्यायेन तथैव (मुख्यक्रमेण अनुष्ठाने) प्राप्ते अपवाद आरभ्यते। पाठक्रमेणानुष्ठानं स्वाध्यायेन (अन्यानपेक्षतया) अवगतत्वात् प्रत्यक्षम्। (मुख्य आनुमानिकः। कल्पना च विलम्बते इत्याह–) सह पदार्थाः कर्तव्याः इति पदार्थेषु अयं धर्मः सहत्वं नाम (अपेक्षितः)। तत्र प्रयोगवचनेन सहत्वमवबोध्यते। सहत्वं (च) अवबोधयन् अन्यथाऽनुपपत्त्या क्रममनुमापयति प्रधानासत्त्यै (प्रधानासत्तिसिद्ध्यर्थम्)। तत्र (अङ्गेषु) यत् अश्रुतक्रमानुमानम्, तत् प्रत्यक्षेण (पाठ–)क्रमेण बाध्यते। ततो यथा– (पाठ–) क्रमं व्यवस्था। (भाष्यं व्याचष्टे–) मुख्यक्रमे प्रयोगवचनेन एकवाक्यता सूक्ष्मा, अश्रुतः क्रमः कल्प्यते इत्यर्थः।

**शा**— **'तत्र मुख्यक्रमादाज्यनिर्वापस्य पुरःक्रिया। पाठतस्त्वौषधस्यैव प्राथम्यमनपेक्षतः॥'**

**सोम**— पूर्वाधिकरणोक्तप्रधानप्रत्यासत्त्यनुग्रहात् मुख्यक्रमः युक्तः। अत एव **संगतिः**। **सूत्रार्थस्तु**—प्रकृतौ यथाक्रमं यथापाठक्रमं निर्वापक्रमः प्रतीयते, पाठक्रमस्य स्वशब्दत्वात् अङ्गावगमकशब्दधर्मतया प्रत्यक्षेण झटित्यवगमादिति।

**वि**— 'उपांशुयाजे पूर्वत्वमग्नीषोमीयकेऽथवा। धर्मानुष्ठान(ने), आद्योऽस्तु मुख्ययोस्तादृशक्रमात्॥, युक्तमौषधधर्माणां प्राथम्यं पूर्वपाठतः। पाठक्रमस्याविलम्बादाज्यधर्मास्तु पश्चिमाः॥'

**भाट्ट**— तदेवं षट् प्रमाणानि निरूपितानि। तेषां चाद्याधिकरणोक्तक्रमेण पारदौर्बल्यं द्रष्टव्यम्, न तु सूत्रक्रमेण। तत्र श्रुतिविरोधे अर्थस्यैव अन्यथाकल्पनात् दौर्बल्यम्। अर्थविरोधे पाठस्य वक्ष्यते। एवं वैकृतपाठविरोधे प्राकृतस्थानबाधोऽपि। प्राकृतक्लृप्तस्थानविरोधे प्रधानप्रयोगविध्याश्रितमुख्यक्रमस्य दौर्बल्यं वक्ष्यते एव। मुख्यक्रमविरोधे प्रवृत्तिक्रमस्य दौर्बल्यमपि तथैव।

तदिह पाठक्रममुख्यक्रमयोः बलाबलं चिन्त्यते। दर्शपूर्णमासयोः आग्नेयोपांशुयाजाग्नीषोमीयरूपमुख्यक्रमात् आज्यस्योपांशुयाजीयस्य प्रथमं निर्वापः, पश्चादग्नीषोमीयद्रव्यस्य। पाठक्रमात्तु विपरीतः क्रमः। तत्र पाठस्य स्मारकवाक्यवृत्तित्वेन प्रत्यक्षत्वात् शीघ्रोपस्थितेश्च बलवत्त्वम्। मुख्यक्रमस्तु मुख्ययोरेव प्रथमं केनापि प्रमाणेनावगम्य तदपेक्षया तत्साहित्यसंपत्तये कल्प्यमानो विलम्बित इति दुर्बलः।

मण्डन— 'मुख्यात् पाठक्रमो बली।' १०.
शंकर— 'पाठो मुख्यक्रमाद् बली।' ११.

* नैमित्तिको हि पाठक्रमः इतरं पाठक्रमं बाधित्वा निविशते। टुपू. ४।३।१६।३९, * पूर्वः पदार्थः समाप्यमानः उत्तरं बुद्धौ अभिनियंस्यति इत्ययं पाठक्रमः बाध्यते। ५।१।६।१३, * यत्र आनुपूर्व्येण पदार्था विधीयन्ते स पाठक्रमः। यथा 'हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः' इति। ५।१।१।१ पृ.१२८९. * पाठक्रमेण एव ऋचः आगमयितव्याः आगमेन संख्यापूरणे, एकविंशे त्रिणवे त्रयस्त्रिंशे चातिरात्रे। भा. ५।१।६।१३. * पाठक्रमेण स्थानक्रमो बाध्यते। यथा—सावित्रहोम—उखासंभरणाद्यपूर्वपदार्थान् विधाय दीक्षणीयाऽऽदयः प्राकृताः सगुणाः श्रुताः। तत्र प्राकृतेन दीक्षणीयाप्राचीनेन पदार्थेन उपस्थितानां दीक्षणीयादीनां स्थानेन प्रागनुष्ठाने ततः प्राक् पाठः सावित्रहोमादेः न स्यात् इति (पाठक्रमेण स्थानक्रमो बाध्यते)। इदं 'प्राकृताच्च पुरस्ताद्यत्' (५।२।११) इत्यधिकरणे उक्तम्। बाल. पृ. १३७.

**पाठक्रमादर्थक्रमो बलीयान् इति न्यायः।** यथा—'अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीः' इति। तस्य यथेष्टमभिसंबन्धो भवति, उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा, अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति। अत एव 'आनुपूर्व्येण संनिविष्टानां यथेष्टमभिसंबन्धः' इति न्यायोऽप्यवतरतीति। 'न पदान्त०' (पा. १।१।५८) इति सूत्रमहाभाष्यकैयटयोः स्पष्टः। साहस्री. ५९९. * 'पाठक्रमादर्थ०' इति न्यायेन 'सुसंभृता त्वा सं भरामि' 'अदित्यै रास्नाऽसि' इति मन्त्रद्वयस्य व्यत्यासेन विनियोगः कल्पे दर्शितः। तैसंसा. १।१।२।२. * 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषायां बहिरङ्गस्य प्रथमोपस्थितावपि 'पाठक्रमादार्थक्रमो बलीयान्' इति न्यायेन प्रथममन्तरङ्गपदार्थं विविनक्ति। भूति. पृ. १६८.

* पाठक्रमात् यथासंख्यरूपात् दधिमन्त्रो मध्यवर्ती मध्यवर्तिनः उपांशुयाजस्याङ्गम्। ३।३।५, मीको. पृ. १५०९ 'क्रमाधिकरणम्' इत्यत्र द्रष्टव्यम्। * पाठक्रमस्य श्रुत्यर्थक्रमाभ्यां बाधः। क्रमकोपाधिकरणम्। ५।४।१।१.

**पाठक्रमाधिकरणम्।** पाठक्रमन्यायः। प्रयाजेषु पाठक्रमो नियामकः॥

**क्रमेण वा नियम्येत क्रत्वेकत्वे, तद्गुणत्वात्। ५।१।४।४॥**

**भाष्यम्—** दर्शपूर्णमासयोराम्नातम् 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति' इति। तत्र संशयः किमनियतेनैव क्रमेण एषामनुष्ठानम्, उत यः पाठक्रमः, स एव नियम्येत इति। किं प्राप्तम्? नियमकारिणः शास्त्रस्याभावात् अनियम इति। एवं प्राप्ते, ब्रूमः। क्रमेणैव नियम्येत एकस्मिन् क्रताविति। कुतः? तद्गुणत्वात्। तद्गुणत्वं हि गम्यते पदार्थानाम्। यथा 'स्नायात् अनुलिम्पेत् भुञ्जीत' इति च क्रमेणानुष्ठानमवगम्यते वाक्यात् पदार्थानाम्। यथा च अदृष्टार्थेषूपदिश्यमानेषु कश्चित् ब्रूयात् 'देवाय धूपो देयः, पुष्पाण्यवकरितव्यानि, चन्दनेनानुलेप्तव्यः, उपहारोऽस्मै उपहर्तव्यः, एवं कृते देवस्तुष्यति' इति। तमन्यः प्रतिब्रूते— 'नैतदेवम्, न प्रथमं धूपो दातव्यः, प्रथमं पुष्पाण्यवकरितव्यानि' इति। एवं मन्यते धूपदानस्य प्राथम्यमनेनोक्तमिति। तस्मात् वाचनिक एषामेष क्रम इति।

**अशाब्द इति चेत् स्याद्वाक्यशब्दत्वात्। ५॥**

**भाष्यम्—** इति चेत्पश्यसि, अर्थैवं गम्यमाने अशाब्द एव क्रमः। कथम्? पदार्थपूर्वको वाक्यार्थः। पदेभ्यश्च पदार्था एवावगम्यन्ते न क्रमः। स्यादेतदेवम्, यदि पदानां समूहस्य श्रवणं प्रत्यायकमर्थस्य स्यात्। न तु समुदायः प्रत्यायक इत्युक्तम्, 'तद्भूतानां क्रियार्थेन समाम्नायः' इत्यत्र। तस्मात् क्रमस्य वाचकशब्दाभावात् व्यामोह एष क्रमोऽवगम्यते। एवं पूर्वासत्तिरनुग्रहीष्यते। इतरथा साऽपि विप्रकृष्येत घटीयन्त्र इव। दर्शयिष्यति च 'हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसः' इति। यदि नियामकः पाठक्रमस्ततो न विधातव्यमेतत्। नियामके हि पाठक्रमे पाठक्रमादेव प्राप्नुयात्।

**अर्थकृते वाऽनुमानं स्यात् क्रत्वेकत्वे परार्थत्वात्, स्वेन त्वर्थेन संबन्धस्तस्मात् स्वशब्दमुच्येत ।६॥**

**भाष्यम्**— एकस्मिन् क्रतौ एकत्वात् कर्तुः अनेकस्मिन् पदार्थे अर्थकृतत्वात् क्रमस्य । तत्रैष एव क्रमो नियम्येतानुमानेन । कुतः ? परार्थत्वाद्वेदस्य । परार्थो हि वेदो यद्यदनेन शक्यते कर्तुं तस्मैतस्मै प्रयोजनायैष समाम्नायते । शक्यते चानेन पदार्थो विधातुम्, शक्यते च क्रियाकाले प्रतिपत्तुम् । तस्माद्वेदः पदार्थाश्च विधातुमुपादेयः, क्रियाकाले च प्रतिपत्तुम् । न गम्यते विशेषः विधातुमयं समाम्नायते न प्रतिपत्तुमिति । अगम्यमाने विशेषे उभयार्थमुपादीयते इति गम्यते । प्रतिपत्तुं चानेन क्रमेण शक्यते नान्येन । अत एव च कृत्वा पाठक्रमापचारे विनष्टः इत्युच्यते । इतरथा हि यद्यस्य प्रयोजनं तस्मिन्निर्वर्तमाने एव किं नष्टं स्यात् । अदृष्टं कल्प्येत, तच्चान्याय्यं दृष्टे सति । तस्मात् स्वशब्दः क्रमः । य एव पदार्थानां वाचकः शब्दः स एव क्रमस्यापि ।

**टुप्**— 'स्वाध्यायोऽध्येतव्यः' इति (वाक्यस्य तावदयमर्थः) स्वाध्यायाध्ययनेन भावयेत्, (तत्र) किमिति (भाव्यविशेषापेक्षायाम्) तत्र विश्वजिद्वत् फलं न कल्प्यते, न च रात्रिसत्रन्यायेन अर्थवादतः फलम् (कल्प्यम्) । भवितव्यं च फलेन । तस्मात् स्वाध्यायाध्ययनेन यदवबोध्यते, तदत्र फलम् (कर्मावबोधनमेव दृष्टं फलमित्यर्थः) । पदार्थाश्च अनवबुद्धा अनेन बोध्यन्ते (तेषाम्) क्रमश्च । तस्मात् यथा पदार्थस्वरूपमनवबुद्धमवबुध्यते, एवं क्रमोऽपि अनवबुद्ध एव । अतः स्वाध्यायेन पदार्थज्ञानं भावयेत् क्रमज्ञानं चेत्यर्थः । तस्मात् स्वशब्दः (क्रमः प्रतीयते) ।

**तथा चान्यार्थदर्शनम् । ७ ॥**

**भाष्यम्**— एवं चान्यार्थं दर्शयति, 'व्यत्यस्तमृतव्या उपदधाति । व्यत्यस्तं षोडशिनं शंसति' 'आश्विनो दशमो गृह्यते । तं तृतीयं जुहोति' इति । यदि अनियमेनोपधानं शंसनं च, व्यत्यस्तवचनमनर्थकं स्यात् । नहि कथञ्चिद्व्यत्यास इति । तथा आश्विनस्य तृतीयस्य होमानुवादो नावकल्प्येत, यदि पाठक्रमेणानियम इति । तथा 'अभिचरता प्रतिलोमं होतव्यम् । प्राणानेवास्य प्रतीचः प्रतियौति' इति क्वचित् प्रतिलोमं विदधदनुलोमं दर्शयति । तदुपपद्यते यदि पाठक्रमेण प्रयोगः । इतरथा सर्वमनुलोमं स्यात्, प्रतिलोमदर्शनं नोपपद्येत । तथा चतुर्थोत्तमयोः प्रतिसमानयतीत्युक्ते सति 'अतिहायेडो बर्हिः प्रति समानयति' इत्युच्यते । तेन बर्हिषश्चतुर्थतां दर्शयति । सा पाठक्रमे नियामके अवकल्पते ।

**शा**— अनियमः इति प्राप्ते, ब्रूमः । **'यथापाठमनुष्ठानं तथैव प्रतिपत्तितः । स्मृतिः प्रयोगवेलायां वाक्यैरेव च कर्मणाम् ॥'**

**सोम**— पूर्ववत् अनियमः इति प्रत्यवस्थानात्; श्रुत्यर्थाभ्यां जघन्यप्रमाणाद्वा **संगतिः । सूत्रार्थस्तु**— एकक्रतुगतत्वे पाठक्रमेणैवानुष्ठानं नियम्येत 'गन्धो देयः, पुष्पाणि देयानि' इत्यादौ पाठक्रमस्य पदार्थक्रमबोधकतया गुणत्वावगमात् इति ।

**वि**— 'प्रयाजेषु क्रमो नास्ति विद्यते वा, न विद्यते । श्रुत्यर्थाभावतो, मैवं क्रमः पाठान्नियम्यताम् ॥'

**भाट्ट**— पदार्थबोधकवाक्यपाठक्रमोऽपि पदार्थक्रमनियामकः । न च विधीनां तत्तत्पदार्थविधायकत्वात् क्रमस्य च स्वाध्यायत्वसिद्ध्यर्थत्वेन अध्ययनविध्युपयुक्तत्वान्न पदार्थक्रमनियामकत्वम्, पदार्थानामनुष्ठानकाले स्मारकापेक्षायां मन्त्रादीनामुपस्थितत्वेन स्मारकत्वनियमात् तत्क्रमेणैव अनुष्ठानक्रमनियमोपपत्तेः । अत एव यत्र मन्त्राम्नानम्, तत्र तत्क्रम एव नियामकः । यत्र तु न तत्, तत्र विधायकत्वेनोपयुक्तस्यापि विधिवाक्यस्यैव उपस्थितस्य स्मारकत्वेन नियमात् तत्क्रमस्यापि पदार्थक्रमनियामकत्वम् । पाठोपस्थितस्य च क्रमस्य विनियोजकवाक्यकल्पनया अङ्गत्वेऽवगते प्रयोगविधिना प्रयोगविधानम् । लक्षणे पदार्थबोधकत्वं च क्वचिदनुष्ठेयपदार्थबोधकत्वम्, क्वचिच्च तत्संबन्धिद्रव्यदेवतादिबोधकत्वम् । तेन च द्विविधेनापि अनुष्ठेयपदार्थक्रमनियमः । अत एव देवताबोधकयाज्याऽऽदिक्रमादपि यागक्रमः । अतः पाठोऽपि क्रमनियामकः अपेक्षितत्वात् । अत एव यत्र न क्रमापेक्षा यथा सांनाय्यादौ एकप्रयोगविधिपरिग्रहेऽपि संप्रतिपन्नैकदेवताकत्वेन सहानुष्ठानात्, यत्र वा भिन्न-

प्रयोगविधिपरिग्रहो यथा तत्तत्काम्यकर्मणाम्, तत्र न पाठो नियामकः। तत्र तु स्वाध्यायत्वसिद्ध्यर्थं एवोपयुज्यते इति द्रष्टव्यम्।

**मण्डन**— 'समिदादौ क्रमः पाठात्।' ५.

**शंकर**— 'पाठक्रमात् क्रमश्च स्यात्।' ६.

* **पाठक्रमन्यायः** । ५।१।४।४–७ । पाठक्रमन्यायानुसारेण प्रयोजकप्रधानप्राक्स्मृतिद्वारा प्रथमहविःशेषस्यैव प्राक् स्मृतिः । सु. पृ. १५४२.

* **पाठसादेश्यं** द्विविधम्– यथासंख्यपाठः संनिधिपाठश्चेति । ऐन्द्राग्नादीष्टीनां काम्ययाज्यानुवाक्यानां चाङ्गाङ्गिभावः, यथासंख्यपाठात्। वैकृताङ्गानां विकृत्यर्थत्वं संनिधिपाठात् । मीन्या.

* **पाणिनिना** नार्थानुशासनं कृतम्, किं तर्हि? यथा लोके अवस्थितोऽर्थस्तथास्थितस्य शब्दानुशासनं कृतम्। वा. ६।१।६।२२ पृ. १३७४.

* **पाणिनिकात्यायनपतञ्जल्यो** व्याकर्तारः मन्वादिसमानाः । वि. १।३।९.

* **पातञ्जलाः** ईश्वरं जगत्कारणं मन्यन्ते । (इदं चिन्त्यम्। के.)। सु. पृ. १३१.

* **'पात्नीवतमुत्सृजन्ति'** इति न कर्मान्तरम्, पूर्वस्यैव उत्सृजतिशब्देन अवच्छेदो विधीयते । उत्सर्गान्तमेवेदं पशुकर्म । २।३।८।१९. * पात्नीवतं ग्रहं आग्रयणात् उपांशुपात्रेण गृह्णाति । भा. ३।२।१३।३३. * **पात्नीवतस्य** पशोः पर्यग्निकरणान्तत्वं गुणः 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति । वि. २।३।८.

## पात्नीवते तु पूर्वत्वादवच्छेदः । २।३।८। १९ ॥

त्वाष्ट्रं पात्नीवतं विधायाह–'पर्यग्निकृतं पात्नीवतमुत्सृजति' इति। तत्र संदेहः किं त्वाष्ट्रस्य पर्यग्निकृतस्यैव उत्सर्गो विधीयते, उत तस्माद्यागान्तरमिति । आलम्भनिर्वापयोः प्रत्युदाहरणत्वेन यजिमदभिधानं निराकृत्येदानीं प्रकृतोदाहरणेऽपि यजिमदभिधानं निराक्रियते । अत्रायं पूर्वपक्षिणोऽभिसंधिः– यद्यपि 'त्वाष्ट्रं पात्नीवतमालभेत' इति यागं विधाय तं प्रकृत्य श्रूयते 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इति, तथापि पूर्वत्र गुणविधानासंभवात् कर्मान्तरविधिरेवायम् । तथाहि, न तावत् पूर्वस्मिन् यागे विकल्पेन पात्नीवतशब्दोपनीता एका देवता विधीयते, उत्पत्तिशिष्टदेवताऽवरोधात् । नापि पर्यग्निकरणम्, अतिदेशप्राप्तत्वात् । नाप्युत्सर्गः, उत्पत्तिवाक्येनोपलब्धत्वात् । तेन वायव्यवाक्यवत् पत्नीवच्छब्दाभिधेयद्रव्यदेवतान्वयार्थसंक्रान्तोऽयं विधिः कल्पितयजिशब्दप्रतिपाद्यं यागान्तरमेव द्रव्यदेवताविशिष्टं देवतागुणसामान्येन पूर्वयागप्रकृतिकम्, अग्नीषोमीयप्रकृतिकमेव वा विदधाति इति । एवं प्राप्ते, अभिधीयते । भवेदेवं यदि प्रकृतगुणविधिर्न संभवेत्। तत्र यद्यप्यन्ये गुणा न विधीयन्ते, तथापि पर्यग्निकरणान्तानि अङ्गान्येव अत्र विधास्यन्ते । तथाहि, कथम्भावाकाङ्क्षी त्वाष्ट्रप्रयोगवचनः प्रकृतौ क्लृप्तोपकारकाण्यङ्गानि अपेक्षमाणः पर्यग्निकृतशब्दोपनीतान्येव तदन्तानि अङ्गानि औपदेशिकानि गृहीत्वा चरितार्थो नातिदेशलभ्यानि अङ्गान्तराण्यपेक्षते । ननु 'इडान्ता आतिथ्या संतिष्ठते' इत्यादिवच्च नात्र पर्यग्निकरणान्ताङ्गप्रतिपादकशब्दोऽस्ति । अतः कथं तदन्ताङ्गविधानम्? उच्यते। पर्यग्निकृतशब्दो हि निर्वृत्तयथाप्रसिद्धपर्यग्निकरणविशिष्टं द्रव्यमुपादत्ते । तच्च पर्यग्निकरणं पूर्वाङ्गेषु कृतेष्वेव प्रकृतौ निर्वृत्तम्, तेन पर्यग्निशब्दोऽत्र प्रकृतचोदनाप्रतिपादितमेव अङ्गकलापमुपनयति। स एवात्र उत्सृजत्याख्यातवर्तिना विधिना उत्सर्गानुवादेन विधीयते, नैवोत्सर्गः । विधिप्रत्ययसंनिधिविशेषेण भाष्यकारेणोक्तम् 'उत्सर्गो विधीयते' इति । न च वाच्यम् 'अतिदेशतोऽपि प्राप्स्यतः किं विधिना' इति । उत्तराङ्गव्यवच्छेदफलत्वेन विधिसाफल्यात् । न चैवं सति परिसंख्या, अतिदेशप्राप्तेः प्रागेव विधिप्राप्तेः । नापि वाच्यम् 'यदुत्सृजन्ति तत्पर्यग्निकृतमित्येतावतैव वाक्यसमाप्तौ पुनः पात्नीवतमिति विशेषणे विशिष्टानुवादात् वाक्यभेदः स्यात्' इति । यतो नोद्देश्यविशेषणं पात्नीवतशब्दार्थः, विनाऽपि विशेषणं प्रकरणादेव पर्यग्निकरणविधेः त्वाष्ट्रसंबन्धात् । किञ्च नित्यानुवादोऽयम् । अनुवादस्य च यद्यपि अन्यत्प्रयोजनं नास्ति, तथापि भिन्नतद्धितान्तपदाभिधेयदेवतयोः समुच्चये एकेनापि तद्धितान्तेन पदेन तदभिधानं शक्यम्, नत्वेकतद्धितान्तपदाभिधेययोः समुच्चितदेवतयोरग्नीषोमयोः अन्यतरपदेनेति

ज्ञापनार्थे प्रकृतप्रत्यभिज्ञाद्योतनमेव प्रयोजनम् । अतः प्रकरणप्रत्यभिज्ञाते त्वाष्ट्रयाग एव पर्यग्निकरणान्ताङ्गरीति-विधानमिति सिद्धम् । तदुक्तम् — '**प्रकृतप्रत्यभिज्ञानात् प्रयोगोऽन्योऽवगम्यते । पर्यग्निकरणात् तस्मिन्नङ्गरीतिर्विधीयते ॥**' इति । (वा.पृ.६०७)।

नन्वेवं सति गृहमेधीयेन सहास्य को विशेषः ? उच्यते, अत्र देवताऽभिधानं निराकृत्य गुणविधित्व-व्युत्पादनेन स एव न्यायः स्थिरीक्रियते इति नानुपपन्नं किञ्चित् । **प्रयोजनम्**– पूर्वपक्षे केवलपत्नीवद्देवताक-यागान्तरानुष्ठानम् । सिद्धान्ते नेति । **सूत्रं तु** पात्नीवते पत्नीवत्पदयुक्तवाक्ये पूर्ववत्त्वादुपदेशेनैव प्राकृतधर्मवत्त्व-संभवात् पर्यग्निकरणान्ताङ्गातिरिक्ताङ्गानामवच्छेदः फलं विधेरित्यर्थः । **तौता.**

**♉ पात्नीवते तु पूर्वत्वादवच्छेदः । २।३।८। १९ ॥**

त्वाष्ट्रं पात्नीवतं विधाय 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इत्युच्यते । अत्र किं त्वाष्ट्रस्य पर्यग्निकृतस्य एष उत्सर्गो विधीयते उत तस्माद्यागान्तरम्, उत्सृजतिरपि यजेरभिधानं न वा, उत्सृजतिः गुणविधिः, उत कर्मान्तरं इति विचारे यागान्तरमिति पूर्वपक्षे सिद्धान्तमाह । तुशब्दः पूर्वपक्षं व्यावर्तयति । पात्नीवते 'पर्यग्निकृतं पात्नीवतम्' इति वाक्ये न कर्मान्तरविधिः । किन्तु पूर्वत्वात् प्रकृतप्रत्यभिज्ञानात् पर्यग्निकरणान्ताङ्ग-कलापविधानेन उत्तराङ्गानामवच्छेदः निवृत्तिरुक्ता । तस्मात् पूर्वस्य कर्मणः अवच्छेदः पर्यग्निकरणान्ताङ्ग-कलापेन परिसमाप्तिः उत्सृजतिवाक्येनोक्ता इति सिद्धान्तः । **के.**

**♉ पात्नीवते तु पूर्ववत् । ३।२।१३।३३ ॥**

अग्निष्टोमे प्रातःसवने ऐन्द्रवायवमैत्रावरुणाश्विनाः द्विदेवत्या ग्रहाः सन्ति । तेषु हुतेषु तदीयाः शेषाः आदित्यस्थाल्यामवनीयन्ते । अस्ति च तृतीयसवने आदित्यग्रहः । स च सशेषं हूयते । अस्ति च तृतीय-सवने आग्रयणग्रहणविधिः । 'चतसृभ्यो धाराभ्यः आग्रयणं गृह्णाति' 'आग्रयणादुत्सिच्य द्वितीयां धारां करोति' 'आदित्यस्थाल्याः तृतीयाम्' 'आदित्यग्रहसंपातात् चतुर्थीम्' इति । तदेतस्मात् आग्रयणात् पात्नीवतग्रह-ग्रहणमाम्नातम् 'आग्रयणात् पात्नीवतं गृह्णाति' इति । अथ तस्मिन् पात्नीवते हुते तच्छेषे भक्ष्यमाणे भक्षमन्त्रे कथं देवतानिर्देशः कर्तव्यः इति विचारे पूर्वपक्षमाह । पूर्ववत् पूर्वाधिकरणसिद्धान्तरीत्या पात्नीवते सोमभक्षे सर्वेषां देवतानामुपलक्षणं कर्तव्यम् 'वाग्विन्द्रवायुमित्रा-वरुणाश्व्यादित्यपत्नीवत्पीतस्य' इति पठनीयम् ।

**ग्रहणाद् वाऽपनीतः स्यात् । ३४ ॥**

वाशब्दः पूर्वाधिकरणसिद्धान्तवैषम्यं सूचयति । पुनर-भ्युन्नीतांशस्यैव उन्नयनेन मित्रावरुणादिदेवताऽन्तरार्थतया तत्संसृष्टस्यापि ऐन्द्रशेषस्य मित्रावरुणादिदेवताऽन्तर-संबन्धाभावात् न पूर्वदेवताऽपनयः इति युक्तम् । 'आग्रयणात् पात्नीवतं गृह्णाति' इति पात्नीवते तु द्विदेवत्या-दिशेषसंसृष्टात् आग्रयणात् गृह्यमाणस्य संसृष्टत्वरूपेणैव पत्नीवद्रूपदेवताऽन्तरार्थतया ग्रहणात् पूर्वशेषः पूर्वदेवता-संबन्धादपनीतः स्यात् । तस्मात् पात्नीवतशेषभक्षमन्त्रे 'पत्नीवत्पीतस्य' इत्येवोहः । **के.**

* पात्नीवते त्वष्टुरतन्त्रता । वा. ३।१।१५।२६ । 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इत्यत्र पत्नीवच्छब्दस्य पशूपलक्षणार्थत्वात् त्वष्टुरनादरः 'पात्नीवतेऽनुपूर्वत्वा-दवच्छेदः' (२।३।८।१९) इत्यत्रोक्तः । सु. पृ. १०७३.

**♉ पात्नीवते पशौ 'आज्येन शेषं संस्थापयति' इति वाक्येन कर्मान्तरविधानम् ॥**

**आज्यसंस्था प्रतिनिधिः स्याद् द्रव्योत्सर्गात् । ९।४।१४।५६ ॥**

**भाष्यम्**-- 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इति प्रकृत्य श्रूयते 'आज्येन शेषं संस्थापयति' इति । तत्र संदेहः किमाज्यं पूर्वस्मिन् (कर्मणि) प्रतिनिधी-भूतम्, अथवा आज्यद्रव्यकं पूर्वस्मात् कर्मान्तरं विधीयते इति । किं प्राप्तम् ? प्रतिनिधिरिति । कुतः ? पात्नीवतमिति द्रव्यमुच्यते । उत्सृजति इति तत्रैव उत्सर्गः श्रूयते । शेषं इति उपयुक्तेतरत् विद्यमानं गम्यते । तत् आज्येन संस्थापयति इति पशोः कार्ये आज्यं श्रुतं भवतीति । ननु पूर्वकर्म परिसमाप्तमित्युक्तम् । अत्रोच्यते ।

द्रव्योत्सर्गवचने प्रत्यक्षे, शेषशब्दे वा अपरिहृते पुनरसमाप्तं पूर्वकर्म इत्याशङ्क्यते। तस्मात् प्रतिनिधीयते आज्यं इत्याशङ्कामहे। संस्थापयति इति चापूर्वे नोपपद्यते।

**समाप्तिवचनात् । ५७ ॥**

**भाष्यम्**— इतश्चाशङ्कामहे। समाप्तिवचनमिदं भवति 'संस्थापयति' इति। तेन मन्यामहे यत् पूर्वं पशुना आरब्धम्, तत् उत्सृष्टे पशौ आज्येन परिसमाप्यते इति। अपूर्वस्यात्र कर्मण उच्यमानस्य आरम्भ एव वक्तव्यो भवति। यतस्तु अनभिधाय आरम्भं परिसमाप्तिरेवोच्यते, ततोऽवगच्छामः पूर्वस्यैव परिसमाप्तिः, नापूर्वं कर्म चोद्यते इति।

**चोदना वा, कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात् । ५८ ॥**

**भाष्यम्**— कर्मान्तरचोदना वा। कुतः? पूर्वस्य कर्मणः परिसमाप्तत्वात्। ननूक्तं द्रव्योत्सर्गे शेषवचने वा अपरिहृते पूर्वकर्मणः असमाप्तिराशङ्किता भवति। अत्रोच्यते। इदं द्वयमपि परिह्रियते। संस्थापयति इति प्रकृतेन पात्नीवतशब्देन संबध्यते। तत्रायमर्थः, 'पात्नीवतं संस्थापयति' इति। स एष यागो विधीयते। संपूर्वश्च स्थापयतिः प्रयुज्यते। अवश्यं कश्चित् धातुः संपूर्वो भावनावचनस्य प्रयोक्तव्य इति। तत्राविरुद्धो भावनायामुच्यमानायां अर्थप्राप्तः संस्थापयतिः आलभतिरिव प्रयुज्यते, शेषशब्दैश्च एवं सादृश्यात् प्रयुज्यते। द्रव्योत्सर्गश्च अविरुद्धः एव यागे उच्यमाने। तस्मात् यथा अन्ये निर्वपत्यादयः कर्मान्तरविधाने भवन्ति, एवं तैरविशिष्टत्वात् संस्थापयतिरपि भवितुमर्हतीति।

**अनिज्यां च वनस्पतेः प्रसिद्धां तेन दर्शयति । ५९ ॥**

**भाष्यम्**— प्रसिद्धां वनस्पतेरनिज्यां अत एव दर्शयति। कथम्? 'यत् त्वष्टारं च वनस्पतिं( तिं चावा )मावाहयसि, अथ वैतौ यक्ष्यसि, त्वाष्ट्री नवमी प्रयाजेज्या, वानस्पत्या दशमी। अत्रैवैतौ इष्टौ विद्यात्' इति अङ्गान्तरेण अनुग्रहं ब्रुवन् वनस्पतीज्याया अभावं दर्शयति। शेषपरिसमाप्तौ सत्याम् 'वनस्पतिं जुहोति' इति वनस्पतीज्या क्रियते। अथ परिसमाप्तं पूर्वं कर्म, ततो लुप्ता स्यात्, तत्र अभावदर्शनमुपपद्यते। तस्मात् पूर्वकर्म परिसमाप्तम्। इदमपि कर्मान्तरमिति।

**संस्था तद्देवतत्वात् स्यात् । ६० ॥**

**भाष्यम्**— अथ यदुक्तम् 'संस्थापयति इति चापूर्वे नोपपद्यते' इति, तत् परिहर्तव्यम्। अत्रोच्यते। असंस्थायां संस्थावचनमेतत्। तदपि पूर्वं पात्नीवतमिति समानदेवतत्वात्, समाप्तिसादृश्यं ज्ञायते। तत्र तत् पात्नीवतमारब्धम्, इह परिसमाप्तमिति। स एष सादृश्यात् संस्थापयति इति शब्दः अवकल्पते इति।

**सोम**— पूर्वाधिकरणे 'आज्येन शेषं (सं)स्थापयति' इतीदं लिङ्गदर्शनेन प्रसक्तम्। तत्र च यागान्तरविधित्वे एव तस्य लिङ्गत्वमुपपद्यते इति तस्य यागान्तरविधित्वसमर्थनात् **संगतिः। सूत्रार्थस्तु**— 'आज्येन शेषं (सं)स्थापयति' इत्यत्र आज्यं प्रतिनिधिः स्यात् पशुद्रव्यस्य उत्सृष्टत्वेन कर्मणो द्रव्यापेक्षत्वादिति।

**वि**— 'आज्येन शेषमित्युक्तौ द्रव्यप्रतिनिधिर्भवेत्।
कर्मान्यद् वा, ऽग्निमस्त्यागशेषसंस्थापनोक्तिभिः ॥,
अङ्गरीत्या समाप्तत्वाद् देवतोक्त्यनुवर्तनात्। साम्याच्छेषः संस्थितिस्तु याग आलम्भनादिवत् ॥'

**भाट्ट**— पात्नीवतवाक्ये पुनराक्षेपः। तत्र हि 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इत्युक्त्वा 'आज्येन शेषं संस्थापयति' इति श्रुतम्। अपूर्वत्वे हि शेषसंस्थाऽनुपपत्तेः पर्यग्निकरणवाक्ये पर्यग्निकरणाव्यवहितोत्तरमेव प्रधानयागकर्तव्यता अपकृष्य विधीयते। तत्करणे च विशसनादिपदार्थलोपेऽपि अन्याङ्गलोपे प्रमाणाभावात् शेषं यत् स्विष्टकृत्प्रयाजादि, तत् आज्येन संस्थापयति इति विधीयते। यद्यपि च प्रयाजादौ आज्यं प्राप्तमेव, तथापि स्विष्टकृद्वनस्पतियागादौ आज्यविधिर्न विरुध्यते। न च विशसनाभावादेव त्र्यङ्गासंभवात् 'यस्य सर्वाणि हवींषि' इत्यनेनैव स्विष्टकृत्यपि आज्यप्राप्तिः शङ्क्या, नाशादिनिमित्ताभावेन तदप्राप्तेः। विशसनस्य अङ्गप्रधानसाधारण्येन त्र्यङ्गार्थमपि प्राप्त्युपपत्तेश्च। वनस्पतियागादौ आज्यविधेरपि उपपत्तेश्च। नहि अत्र कर्मान्तरत्वे किञ्चित् प्रमाणमस्ति, प्रत्युत शेषसंस्थापदयोरनुपपत्तिः।

इति प्राप्ते, 'यत् त्वष्टारं च वनस्पतिं (च) आवाहयसि अथ वैतौ यक्ष्यसि' इति पृष्टे 'त्वाष्ट्री नवमी प्रयाजेज्या, वानस्पत्या दशमी, अत्रैवैतौ इष्टौ विद्यात्। इति वनस्पतियागस्य अङ्गान्तरेण अनुग्रहवचनेन अभावावगतेः, तस्य च अपूर्वत्वमन्तरेण अनुपपत्तेः न पूर्ववाक्ये प्रधानापकर्षमात्रविधिः, अपितु तदन्ताङ्गरीतिविधिरेव अपूर्वत्वफलकः। यद्यपि चाक्रियमाणस्य वनस्पतियागस्य देवताऽऽवाहनमपि नैव प्राप्यते, तथापि सिद्धवन्निर्देशान्यथाऽनुपपत्त्यैव आवाहनविधिकल्पना। त्वष्टुस्तु प्रधानदेवतात्वादेवावाहनाविरोधः, प्रक्षेपाभावाभिप्रायेण च नवम्या अनुग्रहोक्तिः। अतश्च पूर्वकर्मणि शेषाभावेन आज्यविधानानुपपत्तेः गुणात् कर्मान्तरमेवेदं आज्यद्रव्यकं अनुषक्तपत्नीवद्देवत्यं उपांशुयाजप्रकृतिकम्। शेषसंस्थाशब्दौ तु पूर्वस्य कर्मणः असमाप्तप्रायतया कथञ्चित् अनुवादकाविति। सिद्धस्त्रिविध ऊहः। १३.

**मण्डन**—'संस्थाज्येन पृथग्यजिः।' १४.

**शंकर**—'आज्यशेषवचस्यपि।' यागः। १५.

* **पात्नीवताधिकरणम्।** ३।२।१३।३३-३४. 'पूर्वदेवतानुपलक्षणाधिकरणम्' इत्यत्र द्रष्टव्यम्।

* पात्नीवताधिकरणम्। २।३।८।१९. **मीको** पृ. १९९० 'त्वाष्ट्रपात्नीवताधिकरणम्' इत्यत्र द्रष्टव्यम्।

* (देवताकर्तृक)स्वीकाराङ्गीकरणावश्यकत्वं **पात्नीवताधिकरणादौ** उपपादितम्। **कौ.** ३।२।१८।४०.

* विधिस्थस्य निःसंदिग्धस्य पात्नीवतपदस्य देवतापरत्वोपपत्तेः यागानुमापकत्वं इति **पात्नीवताधिकरणपूर्वपक्षन्यायस्वरूपम्।** **कौ.** २।३।८।१९ पृ. ५५.

* **पात्नीवतग्रहस्य** याज्यामन्त्रः 'ऐभिरग्ने सरथं याह्यर्वाङ्०' इति। **भा.** ३।२।१५।३७. * पात्नीवतग्रहस्य होममन्त्रः 'अग्ना३इ पत्नीवा३न् सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा' इति। **वि.** ३।२।१४.

* **पात्नीवतग्रहे** पत्नीवानेव उपलक्षणीयः नान्यदेवता। **वा.** ३।२।१३।३३-३४.

* **पात्नीवतभक्षणाधिकरणम्।** पात्नीवतग्रहभक्षणे पूर्वदेवता इन्द्रादयो नोपलक्षणीयाः, किन्तु 'पत्नीवत्पीतस्य' इत्येव पठनीयम्। (कृत्वाचिन्ता। वस्तुतस्तु 'इन्द्रपीतस्य' इत्येव पठनीयम्। **के.**) ३।२।१३।३३-३४. 'पूर्वदेवताऽनुपलक्षणाधिकरणम्' इत्यत्र द्रष्टव्यम्।

* **पात्नीवतयागे** साक्षात् पशुरेवाङ्गम्, न तु हृदयादीनि 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति उत्सर्गविधानात्। **मीन्या.**

* **पात्नीवतसोमभक्षणे** त्रयस्त्रिंशतां देवानां नोपलक्षणम्। कृत्वाचिन्ता। ३।२।१५. **मीको.** पृ. १९६७ 'त्रिंशदधिकरणम्' इत्यत्र द्रष्टव्यम्।

* **पात्नीवतसोमभक्षणमन्त्रे** ('पत्नीवत्त्वष्टृपीतस्य' इति) त्वष्टुर्नोपलक्षणम्। (कृत्वाचिन्ता)। ३।२।१४. **मीको.** पृ. १९८९ 'त्वष्ट्रधिकरणम्' इत्यत्र द्रष्टव्यम्।

* **पात्रं** अनुयाजार्थपृषदाज्यधारणार्थं प्रयाजाज्यपात्राद्भिन्नं अग्नीषोमीये पशौ। ५।२।८।१६. * पात्रं प्रयाजशेषधारणार्थं शेषधारणं च वाजपेयगतप्राजापत्यपशुवपाऽभिघारणार्थं न कर्तव्यम्। ४।१।१४. * पात्रं वारणवैकङ्कतादिजन्यं दर्शपूर्णमासादिसर्वयज्ञेषु विनियुज्यते। **वि.** ३।१।१२. * पवित्रं हि सोमः, न तस्मिन् भक्षिते पात्रं व्यापद्यते। तत्र चमसेन शक्यते होतुम्। **भा.** ३।५।७।२२. * **पात्राणि** 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति यज्ञपात्राणां प्रतिपत्तिः। 'दक्षिणे पाणौ जुहूमासादयति'। ततश्च यज्ञपात्राणि प्रथमप्रयोगमारभ्य आमरणान्तं धार्याणि। इति पुनः पुनः प्रयोगान्तरेषु तान्येव प्रयोक्तव्यानि। **वि.** ११।३।१३, * पात्राणि एकस्मिन् प्रयोगे प्रयुक्तान्यपि पुनः प्रयोगान्तरे प्रयोगानर्हाणि न भवन्ति। प्रक्षाल्य ग्राह्याणि। ११।३।१२। तान्येव पात्राणि प्रक्षाल्य पुनः पुनर्ग्राह्याणि, न तु इच्छया भेदः। अन्त्येष्टिपर्यन्तं तद्धारणस्यावश्यकत्वात्। ११।३।१३. * 'पात्राणि तु दहेदग्नौ यजमाने वृथा मृते' अयं क्रियाप्रतिनिधिनियमविधिः। **बाल.** पृ. २३. * पात्राणि सत्रे साधारणानि पृथगेव कर्तव्यानि। ६।६।६।३३-३४. * **पात्रैः** ऐष्टिकैरेव सौम्यचरोः सवनीयपुरोडाशादीनां च ज्योतिष्टोमे होमः, न तु सौमिकैः चमसादिभिः प्रसङ्गसिद्धिः। १२।१।४।१०-११,

* **पात्राणां** यज्ञावचरवाक्येन प्रकरणादाधानाङ्गत्वबाधः।

सु. पृ. १०६३. * पात्राणां यज्ञियानामाधानमारभ्यैव यावन्मरणं धारणं कर्तव्यम् । ११।३।१४. * पात्रे एकस्मिन् बहुभिः सोमभक्षणे होतुः प्रथमं भक्षः । ३।५।१३।३६–३९.

**पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् । १२। १।४।१०॥**

सोमे यानि दर्शपूर्णमासप्रकृतीनि कर्माणि यथा सवनीयः पशुः, सवनीयाः पुरोडाशाः, सौम्यश्चरुः इति, तेषां होमः दार्शिकैः पात्रैः कर्तव्यः । पात्रेषु च वेद्यामिव प्रसङ्गः स्यात् । यथा सौमिक्या वेद्या दार्शिक्या प्रसङ्गः, तथा सौमिकैः पात्रैः दार्शिकपात्राणां प्रसङ्गः । होमार्थत्वात् सौमिकान्यपि पात्राणि होमार्थानि । तस्मात्तैः सिद्धिः इति पूर्वः पक्षः ।

**न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् । ११ ॥**

सोमे यानि दर्शपूर्णमासप्रकृतिकानि कर्माणि, तेषां होमे दार्शपूर्णमासिकानि पात्राणि प्रयोक्तुं न्याय्यानि । दार्शिकैः पात्रैः तादृशो होमः कर्तव्यः । प्रयुक्तत्वात् सौमिकतन्त्रात् प्राक् आज्यासादनान्तस्य प्राकृतस्य तन्त्रस्य प्रक्रान्तत्वात् 'अथ यदगृहीत्वा आज्यानि सोममासादयेयुः अपघ्नन्ति यजमानम्' इति वाक्येन । अप्रयुक्ते यदि दार्शिकं पात्रं प्रयुक्तं न स्यात् तदा सौमिकैः पात्रैः दार्शिकानां पात्राणां प्रसङ्गः स्यात् । तानि तु अत्र प्रयुक्तान्येव पूर्वं इति दार्शिकैरेव सवनीयपुरोडाशादिहोमः स्यात् इति सिद्धान्तः । के.

* पात्रेषु दार्शपौर्णमासिकेषु सवनीयपुरोडाशसौम्यचरुहोमयोः सौमिकैः पात्रैर्न प्रसङ्गः । ज्योतिष्टोमे । १२।१।४।१०–११.

**पात्रापात्रविचारस्तु धेनुपन्नगयोरिव, इति न्यायः** । यथा– 'तृणात्संजायते क्षीरं क्षीरात्संजायते विषम्' इति । गावस्तृणं खादन्ति क्षीरं ददति । सर्पाश्च क्षीरं पिबन्ति विषं ददति । एवं ज्ञात्वा पात्रापात्रविचारः कर्तव्य इति भावः । **साहस्री**. ७५७.

* **पात्रन्यायेन** प्रधानस्रुगपेक्षया संमार्गस्रुचां भेदेन कर्तुं शक्यत्वात् न प्रसङ्गोपपत्तिः ( पात्रभेदन्याय एवायम् । ५।२।८।१६ ) । कौ. २।१।५।१२ पृ. ८५, * न च एवमपि **पात्रन्यायेन** हविरासादनरूपस्य कार्यस्य पृथगनुष्ठेयत्वात् न प्रसङ्गोपपत्तिः, कर्तृप्रचारार्थमनुष्ठितेनैव सौमिकवेदिकरणेन अदृष्टविशेषावच्छिन्नाहवनीयप्रत्यग्देशरूपाया वेदेः सिद्धत्वात् ऐष्टिकवेदिकरणनिवृत्त्या प्रसङ्गोपपादनात् । २।१।५।१२ पृ. ८४–८५.

* सांनाय्य**पात्रप्रोक्षणे** 'शुन्धध्वम्' इत्यादिर्मन्त्रः संनिधिपाठात् विनियुज्यते । वि. ३।३।५.

**पात्रभेदन्यायः** । पात्रन्यायः । अग्नीषोमीये पशौ अनुयाजार्थस्य पृषदाज्यस्य धारणार्थं पात्रं भिन्नम् ॥

**विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात् स्यात् । ५।२।८।१६ ॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । तत्र श्रूयते 'पृषदाज्येन अनुयाजान् यजति' इति । तत्र संदेहः किं प्रयाजानुयाजानामेकं पात्रं आज्यस्य पृषदाज्यस्य च धारणार्थम्, उत भिद्यते । किं प्राप्तम् ? एकमिति । कुतः ? प्रकृतौ एकम् । प्रकृतिवदिहापि एकेन भवितव्यम् । **एवं प्राप्ते, ब्रूमः** । पात्रभेदः स्यात् । कुतः ? अर्थभेदात् । शुद्धस्य प्रयाजा अर्थः, पृषतोऽपि अनुयाजाः । पृषति गृह्यमाणे प्रयाजानां वैगुण्यम्, शुद्धे अनुयाजानाम् । न च एकस्मिन् पात्रे विविक्तं शक्यं कर्तुम् । मर्यादायामपि क्रियमाणायां प्रदीयमानं संसृज्येत । अपि च आकारभेदात् उपभृतः उपभृत्त्वं विहन्येत । पाणिमात्रपुष्करा हि सा एकपुष्करा च । अथोच्येत पृषदाज्यमपि आज्यमेव इति मिश्रत्वं न दोषायेति । नैतदेवम् । प्रकृतौ उत्पवनावेक्षणयोः प्रयोजनमेतत् यत् आज्यस्य अपरेण द्रव्येणासंसर्गः । एवं चेत् अनुपपन्नम्, यत् प्रयाजाः पृषदाज्येन इज्येरन्निति । अपि च एवं सति अवश्यं हविषः का चिन्मात्रा अपनीयते । न च शक्यं प्रयाजकार्ये अवसिते अनुयाजार्थं ग्रहीतुम् । प्रकृतौ एककालं ग्रहणम् । इहापि एककालमेव कर्तव्यम् । तस्मात् पात्रभेद इति ।

**टुप्**— ( पूर्वपक्षमाह— ) प्रकृतौ उपभृतः एकत्वम् ( 'अष्टावुपभृति गृह्णाति' इत्युपादेयगतत्वात् ) विवक्षितमिति ( हेतोः ) तत्रैव पृषदाज्यग्रहणं प्राप्नोति

कालान्तरे। तत्र यथा सत्यपि प्रधानकालत्वे अङ्गानां कर्तुरेकत्वाद्विप्रकर्षः, न तु विप्रकर्षदोषात् कर्त्रन्तरमुपादीयते, एवमाज्यपृषदाज्ययोर्भेदेऽपि नैव पात्रान्तरमुपादेयम् । ( तदेकत्वानुग्रहार्थं तु विप्रकर्ष एवाङ्गीकर्तव्य इति ) एवं प्राप्ते, ब्रूमः । यथैव हि प्रकृतौ एकपात्रता विवक्षिता एवमेककालता। इह तु ( यत्र द्रव्यभेदात् उभयानुग्रहासंभवः ) ऐककाल्यं विवक्षितम् ( नैकपात्रत्वम् )। किं कारणम् ? प्रयाजाज्यं गृह्यमाणं मन्त्रब्राह्मणपाठक्रमात् अनुयाजाज्यग्रहणमुपस्थापयति । ( एवं तावत् विवक्षितमपि पात्रैकत्वमिह बाध्यते इति सिद्धान्तितम्। मतान्तरमाह- ) अथवा, 'अष्टावुपभृति गृह्णाति' इति असंयुक्तोत्पन्नस्य ( चतुर्ग्रहणद्वयस्य केवलम् ) वाक्यान्तरेण ( 'यदुपभृति, प्रयाजानुयाजेभ्यस्तत्' इत्यनेन ) प्रयाजानुयाजार्थता कृता, न तु उपभृत् ( प्रयाजानुयाजाङ्गत्वेन ) विधीयते ( नतरां तदेकत्वम् )। अर्थलब्धा तु सा ( यत्रक्वचन पात्रे ग्रहीतव्ये सति जुहूध्रुवयोः आज्यान्तरधारणे व्यापृतत्वात् अव्यापृता उपभृत् अनूद्यते )। न च अर्थप्राप्तं विवक्षितमित्युच्यते। तस्मात् भिन्नत्वात् द्रव्ययोः अर्थात् पात्रभेदः । ( अयं विचारः क्रमलक्षणे कथमुपनिपतितः अत आह- ) पूर्वोत्तरपक्षयोः क्रमान्यत्वेन उपनिपातः । ( पूर्वपक्षे प्रयाजहोमानन्तरं पृषदाज्यग्रहणम्, सिद्धान्ते तु प्राकृते एव स्थाने इति )।

शा-- किं कालभेदेन तस्यामेवोपभृति प्रयाजाज्यं अनूयाजपृषदाज्यं च द्वयं ग्रहीतव्यम्, उत एककाले पात्रभेदेनेति चिन्त्यते। तत्र '**पदार्थत्वात् श्रुतत्वाच्च पात्रैकत्वस्य संग्रहः। गुणत्वात् पाठकल्प्यत्वात् क्रममात्रं तु बाध्यते ॥**' ततः एकस्मिन्नेव पात्रे प्रयाजाज्यं प्रथमं गृहीत्वा प्रयाजेषु हुतेषु पश्चात् पृषदाज्यं ग्रहीतव्यम्। इत्येवं प्राप्ते, उच्यते। '**उभयोर्ग्रहणाङ्गत्वात् पात्रैक्यस्य क्रमस्य च । विकृतौ चानुमानेन प्राप्तेस्तुल्यं बलाबलम् ॥**' तथा च आज्यग्रहणकाले एव पात्रान्तरमुपादाय पृषदाज्यं ग्रहीतव्यम्। ७.

मी. को. ३१९

**सोम--** पूर्वत्र उलूखलैक्यवत् इह उपभृदैक्यं इति प्रत्यवस्थानात् संगतिः। **सूत्रार्थस्तु-** विकारे पशौ अनूयाजानामर्थभेदात् द्रव्यभेदात् पात्रभेदः स्यादिति ।

वि- 'प्रयाजानूयाजसिद्ध्यै पात्रैक्यमुत भिन्नता। एकोपभृद् द्वयोरर्थे दृष्टाऽतो विकृतौ तथा ॥, विकृतौ पात्रभेदोऽस्तु शुद्धाज्यपृषदाज्ययोः । एकपात्रे ग्रहाशक्तेर्द्रव्यैक्यं प्रकृतौ द्वयोः ॥' तस्मात् पृथक् पात्रम् ।

**भाट्ट--** दैक्षे पशौ अनूयाजानाम् 'पृषदाज्येनानूयाजान् यजति' इति पृषदाज्यं श्रुतम्। प्रयाजानां तु शुद्धमेवाज्यं प्रकृतिप्राप्तम्। प्रकृतौ च उपभृति एकस्मिन्नेव पात्रे प्रयाजाङ्गभूतं चतुर्गृहीतं गृहीत्वा तस्मिन्नेव काले अनूयाजार्थं चतुर्गृहीतं गृहीतमासीत्। अत्रापि तथैव ग्रहणे प्रयाजाज्यस्य दधिसंसर्गेण उत्पवनावेक्षणयोः अदृष्टार्थत्वप्रसङ्गेन अप्राकृतकार्यकारितापत्तेः समानयनवेलायां प्रयाजाज्यस्य न्यूनत्वापत्तेश्च । अतोऽवश्यं पात्रैकत्वमनुगृह्य क्रमो बाध्यतां विपरीतं वा इति चिन्तायाम्, पात्रैकत्वस्य श्रुतत्वात् पदार्थत्वाच्च बाधानुपपत्तेः क्रमस्यैव मन्त्रपाठकल्प्यत्वेन पदार्थगुणत्वेन च दौर्बल्यात् शिष्टाकोपाधिकरणन्यायेन ( १।३।३।५-६ ) बाधः । एवम् 'अष्टावुपभृति' इत्येतद्वाक्यावगम्यचतुष्कद्वयसाहित्यबलकल्प्यैककालत्वस्यापि बाधः। न च प्रकृतौ तयोः क्लृप्तकल्प्यत्वादिना बलाबलेऽपि विकृतौ अतिदेशेन प्राप्तयोस्तयोः समत्वात् न बलाबलमिति शङ्क्यम्। क्लृप्तकल्प्यत्वादिरूपबलाबलस्य विकृतौ असंभवेऽपि पदार्थतद्गुणत्वादिकृतबलाबलस्य विकृतावपि नियामकत्वोपपत्तेः । संभवति विकृतौ नियामकान्तरासत्त्वे प्राकृतस्यापि बलाबलस्य सप्तदशशरावे चरौ चतुःसंख्यामुष्टिनिष्ठप्राथम्यजघन्यत्वस्येव नियामकता। अतः तस्मिन्नेव पात्रे अनूयाजकरणवेलायां पृषदाज्यग्रहणम्। इति प्राप्ते, पात्रैकत्वस्य पदार्थत्वेऽपि अनुष्ठेयपदार्थमात्रवृत्तिक्रमस्य तद्धर्मत्वाभावात्, प्रत्युत साक्षाद्ग्रहणाङ्गभूतक्रमककालाद्यपेक्षया ग्रहणाङ्गभूतपात्राङ्गैकत्वस्य अङ्गगुणविरोधन्यायेन दौर्बल्यात् तदैव उपभृद्द्वयं संपाद्य शुद्धं दधिसंस्कृतं च चतुर्गृहीतद्वयं ग्राह्यम्।

**मण्डन--** 'भिन्नं पशौ स्यात् पृषदाज्यपात्रम्।'

**शंकर--** 'पृषदाज्ये पात्रभेदः।'

* **पात्री** तन्त्रेणैका राजसूये नानाबीजेष्टौ । **भाट्ट.** ५।२।७. * **पात्र्याम्** 'स्योनं ते सदनम्' इत्यादिपूर्वार्धरूपमन्त्रेण आज्येन पुरोडाशस्य सदनं कृत्वा 'तस्मिन् सीद' इति मन्त्रेण पुरोडाशासादनं कार्यम् । **वि.** ३।३।८.

* **पाथिकृतादीनां** नैमित्तिकानां यागानां पाठक्रमो न नियामकः, किन्तु यथानिमित्तमनुष्ठानम् । ५।३।१२.

* **पाथिकृतीष्टिर्वैश्वानरेष्टिर्वा** दर्शस्य पूर्णमासस्य वा स्वकाले अकरणे प्रायश्चित्तं विकल्पेन । १२।३।५।१६.

* **पादनिचृत्** गायत्री । पादेषु अक्षराणि ७।७।७ । उदा० 'त्वावतः पुरूवसो' ( ऋसं. ८।४६।१ ) । **के.**

* **पादप्रग्रथनेन** ब्रह्मसामगानं गवामयने । **वि.** ९।२।६ वर्णकं ४.

* **पादव्यवस्था** ऋक्षु अपर्यवसितेऽर्थे वृत्तवशेन । **वा.** २।१।१०।३५.

* **पादसंगतिः** । पादानां ऐकार्थ्यनियमाभावात् नावश्यं सर्वत्र पादसंगतिः अपेक्षणीया । एकप्रकरणगतानां तु अधिकरणानां प्रकरणप्रतिपाद्यैकार्थ्यान्वयाय प्रकरणसंगतिः अवश्यापेक्षणीया । **सु. पृ.** ३७०.

* **पादिनः** ऋत्विजः । पादोऽस्ति प्रत्येकं येषां दक्षिणायाश्चतुर्थांशः ते पादिनः । द्वादश गावः पूर्णा दक्षिणा, तत्पादः तिस्रो गावः । उन्नेता अध्वर्योः, पोता ब्रह्मणः, ग्रावस्तुत् होतुः, सुब्रह्मण्यः उद्गातुः, एते पादिनः । **वि.** १०।३।१३.

**पानव्यापच्च तद्वत् । ३।४।१२।३२ ॥**

'सोमेन्द्रं चरुं निर्वपेत् श्यामाकं सोमवामिनः' इति श्रूयते । अयं चरुः किं लौकिके सोमवमने यत् सप्तरात्रेषु दशरात्रेषु वा धातुसाम्यार्थं आसेव्यमाने सोमे सति कदा चित् जायमाने, किंवा ज्योतिष्टोमे तद्विकृतिषु वा सोमे पीते जायमाने वमने स्यात् इति विचारे पूर्वपक्षमाह । पानव्यापत् यदि पीतस्य सोमस्य व्यापत् वमनं स्यात् लौकिकविषयम्, तदा इयं श्यामाकेष्टिः स्यात् । तद्वत् अश्वप्रतिग्रहेष्टिपूर्वपक्षवत् । लोके धातुसाम्यार्थमासेविते सोमे वमनेन विनष्टे धातुसाम्यं न स्यात् । इन्द्रियबलहानिः स्यात् इति लौकिके सोमवमने दोषः स्यात् । वैदिके तु न दोषः स्यात् । तत्र हि 'शेषः पातव्यः' इति शास्त्रात् चोदिते निष्पादिते यद्यपि वम्यते तथापि कृतः शास्त्रार्थः इति न दोषः स्यात् । तस्मात् लौकिकस्य सोमपानस्य व्यापदि वमने सोमेन्द्रश्चरुः स्यात् इति पूर्वः पक्षः ।

**दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न स्यात् । ३३ ॥**

पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह । वैदिके सोमपाने वमने सति सोमेन्द्रश्चरुः स्यान्न लौकिके । दोषात् वमने दोषश्रवणात् 'इन्द्रियेण वा एष वीर्येण व्यृध्यते यः सोमं वमति' इति । लौकिके हि यस्मात् अर्थात् धातुसाम्यं प्रयोजनमभिप्रेत्य सोमपाने कृते, सत्यपि वमने न दोषः स्यात् । वमनायैव हि तं पिबन्ति लोके । तस्मान्न लौकिके सोमेन्द्रश्चरुः स्यात् । वैदिके दोषात् चरुः, लौकिके तु दोष एव नास्ति इति सिद्धान्तः । **के.**

* **पानव्यापदि** वैदिकस्य पीतसोमपानस्य वमने एव सोमेन्द्रः श्यामाकश्चरुः प्रायश्चित्तम्, न लौकिकस्य । ३।४।१२।३२–३३ । स च यजमानस्यैव वमने, न ऋत्विजः । ३।४।१३।३४–३६.

* **पानव्यापदधिकरणम्** । 'वमनाधिकरणम्' द्रष्टव्यम् । ३।४।१२।३२–३३.

* **पापमस्ति** अप्रतिग्राह्यात् प्रतिगृह्णतः वैदिकेऽपि प्रतिग्रहे । **भा.** ३।४।१०।२८. * **पापान्निवर्तयति** प्रतिषेधः । **वा.** ३।४।४।१३ पृ. ९११. * पापान्निवृत्तस्य प्रायश्चित्तश्रवणम् । **सोम.** ६।८।४.

* '**पापक्षयो** हि शुद्धत्वं धर्मयोग्यत्वमेव वा ।' **वा.** १।३।२।४ पृ. १८९.

* **पापक्षयकृतूपकारादिशेष्यर्थं** प्रयुज्यते दर्शादिकं भेदनहोमादिकं च । **बाल.** पृ. १०७.

* **पापफलं** हि ( कर्म ) अकर्तव्यम् । **भा.** ३।४।१०।२८. * विधेयं कर्म **पापफलं** न संभवति । **वा.** ३।४।१०।२८ पृ. ९५८.

* यदा द्रविडादिभाषायामीदृशी स्वच्छन्दकल्पना तदा **पारसी**बर्बरयवनरौमकादिभाषासु किं विकल्प्य किं प्रतिपत्स्यन्ते इति न विद्मः । **वा.** १।३।५।१० पृ. २२६.

* यज्ञान्तरधर्मभूतपश्चाद्भावावच्छेदकत्वेन ज्योतिष्टोमस्य परार्थतया उपादानात् '**पारार्थ्ये चैक इष्यते**' इत्यनेन **न्यायेन** एकस्यैव ज्योतिष्टोमस्य प्राथम्यावसायात् नैतद्वशेन सर्वशाखास्थानां द्वादशाहानां ज्योतिष्टोमपश्चाद्भावावगतिः। **सु. पृ. ९८३.**

* **पारिप्लवत्वम्।** परितः प्लवन्ते इति परिप्लवाः। ते एव पारिप्लवाः। तेषां भावः पारिप्लवत्वम्, अव्यवस्था इति यावत्। **सोम. ७।१।१.**

⌛ **पारिषदन्यायः।** 'समज्या परिषद् गोष्ठी सभा' इत्यभिधानात् परिषदि सभायां साधुः पारिषदः सभ्यः। तेषामेकस्मिन् मृतेऽपि अवशिष्टैस्तत्कार्यनिर्वाहो यथा भवति, तथा प्रकृतेऽपीत्यर्थः। **साहस्री. १५.**

* '**पार्थिवावयवप्रायाः** शेषतोयाद्यनुग्रहात्। जरायुजादयो देहा दृष्टा भुवि चतुर्विधाः॥' **वा. ३।१।७।१३ पृ. ७०२.**

* **पार्थुरश्मं** राजन्यस्य ब्रह्मसाम कुर्यात्। **भा. ६।१।७।२८।** इति द्वादशाहे भवति वचनम्। **६।६।३।१७।** इति ज्योतिष्टोमे नैमित्तिकमेव न नित्यम्। **४।३।२।४.** (वस्तुतस्तु इदं वचनं द्वादशाहे एव, ज्योतिष्टोमे नौधसं ब्रह्मसाम, न तु बार्हद्गिरादीनि तत्र श्रूयन्ते। भाष्यकारेण ज्योतिष्टोमग्रहणमनास्थया कृतमिति तन्त्ररत्नादौ स्पष्टम्)। * पार्थुरश्मं साम अश्वमेधे समाम्नायते। **टुप्. ६।१।७।२८.**

* **पार्वणौ** होमौ स्रुवेण जुहोति 'स्रुवेण पार्वणौ जुहोति' इत्युक्तत्वात्। **वा. ३।६।१।१.**

⌛ **पार्वणन्यायः।** पार्वणहोमयोर्विकृतौ नातिदेशः॥

**पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात् तदभीज्या हि। ९।२।१८।५०॥**

**भाष्यम्**— स्तो दर्शपूर्णमासौ। तत्रेदं समामनन्ति 'स्रुवेण पार्वणौ जुहोति' इति। सौर्यादिषु वैकृतेषु कर्मसु भवति संदेहः, किं तेषु पार्वणहोमौ कर्तव्यौ, न वेति। तत इदं तावत् परीक्ष्यम्, किं कालाभीज्या पार्वणहोमौ उत समुदायाभीज्येति। कालाभीज्यायां तयोः प्रवृत्तिः। समुदायाभीज्यायामप्रवृत्तिः। कुतः संशयः? उभयत्र प्रसिद्धेः। उभयत्र हि पर्वशब्दो लोके प्रसिद्धः, काले समुदाये च, आ हिमवत आ च कुमारीभ्यः। किं तावत्प्राप्तम्? कालाभीज्येति। ततः कालगता प्रसिद्धिर्व्यपदिश्यते। **एवं प्राप्ते, ब्रूमः।** पार्वणयोर्वैकृतेषु कर्मस्वप्रवृत्तिः। कुतः? समुदायार्थसंयोगात्। ततः समुदाये प्रसिद्धिर्व्यपदिश्यते। काले प्रसिद्धिं परिहरिष्याम इति। अतः समुदायवाचित्वात् पर्वशब्दस्य समुदायस्याभियष्टव्यत्वात् वैकृतेष्वप्रवृत्तिरिति।

**कालस्येति चेत्। ५१॥**

**भाष्यम्**— इति चेत्पश्यसि, कालस्य पर्वशब्दो वाचकः, तस्मात् कालाभीज्येति। तत् परिहर्तव्यम्। आभाषान्तं सूत्रम्। प्रकरणेन विशेष्यते।

(अत्र आनन्दाश्रमीये 'प्रकरणेन विशेष्यते' इति उत्तरसूत्रस्य अवतरणत्वेन सूत्रात् प्राक् मुद्रितम्। जीवानन्दीये बिबलकरीये च 'परेण विशेष्यते' इति पङ्क्तिः, सा च पूर्वसूत्रभाष्यान्ते लिखिता।)

**नाप्रकरणत्वात्। ५२॥**

**भाष्यम्**— नास्ति कालस्य प्रकरणम्। अस्ति तु समुदायस्य। तस्मात् प्रकरणेन विशेषेण समुदायवाची गृह्यते, न कालवाची। अत्राह। न प्रकरणेन शक्यते पर्वशब्दस्य कालवाचितां बाधितुम्। दुर्बलं हि लिङ्गात् प्रकरणम्। उच्यते। नायमुभयत्र पर्वशब्दो वर्तते। यदि कालवचनः, तत्संबन्धात् समुदाये गम्यते। यदि वा समुदायवचनः, तत्संबन्धात् काले। अन्यतरवचनो युक्तः, नोभयवचनः। तत्र समुदायवचने कल्प्यमाने प्रकरणमनुगृहीतं भवति। अपिच, पृणातेः पर्वशब्दः। पृणातिश्च दाने प्रसिद्धः। दानानि च समुदायाः। तस्मात् समुदायाभीज्या। एवं शब्दावयवप्रसिद्धिरनुगृहीता भवतीति। तस्माद्वैकृतेषु पार्वणयोरप्रवृत्तिः।

**मन्त्रवर्णाच्च। ५३॥**

**भाष्यम्**— मन्त्रवर्णाच्च फलवदनुवादो भविष्यति। 'ऋषभं वाजिनं वयं पूर्णमासं यजामहे' 'अमावास्या सुभगा सुशेवा' इति च। तस्मादपि समुदायाभीज्येति।

तदभावेऽग्निवदिति चेत् । ५४ ॥

**भाष्यम्**— नैतदस्ति, यदुक्तं वैकृतेष्वप्रवृत्तिरिति । तदभावेऽपि, यद्यपि समुदायवचनोऽयम्, न च वैकृतेष्वयमस्ति समुदायः, तथापि पार्वणहोमौ भवेतामेव । कुतः ? अन्या एवंशब्दिका देवता भविष्यन्ति । समुदायो वा असंनिहितोऽपि यक्ष्यते सौर्याद्युपकारार्थेन । यथा 'अग्निमग्न आवह' इति संनिहितः असंनिहितो वा अग्निर्यागार्थेन आवाह्यते । एवमिहापीति ।

नाधिकारिकत्वात् । ५५ ॥

**भाष्यम्**— नैतदेवम् । आधिकारिकं हीदं वचनं अधिकारे भवम्, यस्याधिकारस्तस्य गुणं विदधातीति । आग्नेयादीनां चाधिकारः । ते चात्र देवताः । तेषां होमो देवतार्थः । एवं यत्र सा देवता नास्ति, तत्र तदर्थो होमो न करिष्यते । तस्मात् पार्वणहोमयोर्वैकृतेभ्यो निवृत्तिः ।

( के-५०-५५ इति षट् सूत्राणि भाष्ये एकाधिकरणत्वेन व्याख्याय उत्तरे द्वे ( ५६-५७ ) सूत्रे अधिकरणान्तरत्वेन व्याख्याते । वार्तिककारेण तु तत् दूषयित्वा प्रकृताधिकरणप्रयोजनप्रतिपादनपरत्वेन ते सूत्रे व्याख्याते । तच्च वार्तिकं अत्र वा अधिकरणे निवेश्यं उत्तरस्मिन् भाष्यकारीयाधिकरणे वा निवेश्यं इति संकटे पतिता वयम् । परन्तु 'पार्वणहोमयोरन्यतरस्यैव' इत्युत्तराधिकरणे एव निवेशितमस्माभिरिति तत्रैव द्रष्टव्यम् । )

**शा**-- 'स्रुवेण पार्वणौ जुहोति' इति तद्धितश्रुत्या पर्वदेवत्यौ होमौ किं विकृतिषु अतिदिश्येते, नेति संशयः । ( तदर्थं च किमारादुपकारकौ होमौ, उत संस्कारार्थौ इति, तदर्थं च किं पर्वशब्दः कालवचनः, उत आग्नेयादिसमुदायपरः इति चिन्ता । ) तत्र '**काले शब्दस्य मुख्यत्वात् कालाभीज्येह मन्यते । ( सिद्धान्तमाह- ) पृणातेर्दानकर्मत्वात् कर्मण्यपि च मुख्यता ॥**' पृणातेर्दानकर्मणः पर्वशब्दः । स च दीयते अस्मिन् इत्यधिकरणव्युत्पत्त्या कालेऽपि मुख्यः, भावव्युत्पत्त्या कर्मण्यपि ।

**सोम**— **सूत्रार्थस्तु**- पार्वणहोमयोर्विकृतिषु अप्रवृत्तिः, पर्वशब्दस्य कर्मसमुदायार्थपरत्वात् । तस्मात् तदभीज्येति ।

**वि**-- 'सौर्यादौ पार्वणौ होमौ स्तो न वा, कालदेवकौ । स्तः, संघदेवकौ संघाविकारत्वान्न तत्र तौ ॥' ( 'ऋषभं वाजिनं वयं पूर्णमासं यजामहे' इत्यादिः पूर्णमासगतपार्वणहोममन्त्रः । 'अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना' इत्यादिः दर्शगतपार्वणहोममन्त्रः । )

**भाट्ट**-- दर्शपूर्णमासयोः 'स्रुवेण पार्वणौ होमौ जुहोति' इति श्रुतम् । तत्र संख्याभिन्नं कर्मद्वयं स्रुवपर्वदेवताविशिष्टं विधीयते । न च हविःसमभिव्याहाराभावात् नायं देवतातद्धितः, संबन्धसामान्यवाचिन एव योग्यतया देवतापरत्वोपपत्तेः । तदिदं होमद्वयं विकृतावतिदिश्यते न वेति चिन्तायाम्, प्रयाजवदतिदेशसंभवः । न च पर्वशब्दवाच्यकर्मसमुदायस्यैवात्र देवताभूतस्य उद्देश्यांशे संस्कारात्, तस्य च विकृतौ अभावान्नातिदेशः, पर्वशब्दस्य काले मुख्यतया कर्मणि लक्षणाङ्गीकारे प्रमाणाभावात् । अतोऽत्र कालस्यैव देवतात्वात्, तस्य चासंस्कार्यत्वात् आरादुपकारकयोरनयोर्युक्त एवातिदेशः । **यदि तु** कालस्यापि कर्माङ्गतयोपयोगात् स्मृतिबलेन सर्वादौ स्मृतस्यापि पुनराकालिकत्वसंभावनानिमित्तकाश्रद्धापरिहारार्थे कर्मवदेव स्मरणोपपत्तेः सामवायिकत्वलाभाय कालसंस्कारकत्वमिष्येत, **तथापि** विकृतौ तत्कालीनायामतिदेशो बाधकाभावात् । अन्यकालीनायामपि पशुपुरोडाशादिवत् ऊहेनातिदेशोपपत्तेर्न काचित् क्षतिः । अस्तु वा पर्वशब्दस्य पृणातेर्दानवाचित्वात् अधिकरणव्युत्पत्त्या कालवाचित्ववत् भावव्युत्पत्त्या कर्मवाचित्वस्यापि संभवात् प्रकरणात्कर्मपरत्वमेव, तथापि पर्वशब्दवाच्यस्यापि आग्नेयादिसमुदायस्य विकृतावपि देवतात्वसंभवादारादुपकारकयोः अनयोरतिदेशे न किञ्चिद्बाधकम् । **यदि तु** संनिपत्योपकारकत्वलाभार्थं देवतासंस्कारकत्वमिष्येत, **तथापि** पर्वत्वस्य दानत्वापरपर्यायस्य प्रत्येकमाग्नेयादिवृत्तितया समुदायवृत्तित्वाभावादपूर्वसाधनत्वेन रूपेण आग्नेयादीनां प्रत्येकमेवोद्देश्यत्वावगतेः हविरभिमर्शनमन्त्रवत् विकृतावतिदेशोपपत्तिः । **न च**

तत्र शब्दत एव हविषामुद्देश्यत्वावगतेः उद्देश्यसाहित्यस्य चाविवक्षितत्वात् युक्तोऽतिदेशः । प्रकृते तु तद्धितशब्देन देवतात्वेन एतेषामुपादानात् साहित्यविवक्षोपपत्तेः । सत्यपि वैमृधन्यायेनोद्देश्यवाचकपदान्तरकल्पनया आग्नेयादीनां प्रत्येकमुद्देश्यत्वे उपादेयतादशायां विवक्षितसाहित्यानामाग्नेयादीनामेव देवतात्वावगमात्, विकृतौ च तेषामनुपयोगित्वेन संस्कार्यत्वानुपपत्तेर्देवतासंस्कारकयोः पार्वणहोमयोरनतिदेशः इति **वाच्यम्** । उद्देश्यसामर्थ्यानुरोधेनाग्नेयादीनामपूर्वसाधनत्वेनैव रूपेण देवतात्वावगतेः विकृतावतिदेशोपपत्तेः । इतरथा स्वाहाकारपशुपुरोडाशादावपि अग्नीषोमत्वादिनैव देवतात्वापत्तेः सौर्यसवनीयादौ तेषामतिदेशानापत्तिः । इदं च सर्वं तद्धितस्य देवताविधायकत्वमङ्गीकृत्योक्तम् । **वस्तुतस्तु** विशिष्टविधौ गौरवापत्तेः, हविःसमभिव्याहाराभावेन च देवतातद्धितत्वानिश्चयात् पर्वणि भवौ पर्वसंस्कारकौ च इत्येवमपि तद्धितोपपत्तेर्योग्यतयाऽपि तदवधारणायोगात् नायं देवतातद्धितः । मन्त्रवर्णादेव तु क्रमावगताङ्गभावात् देवताप्राप्तिसिद्धेः पार्वणपदं नामधेयमेव । अत एव **याज्ञिकानां** 'ऋषभं वाजिनं वयं पूर्णमासं यजामहे' 'अमावास्या सुभगा सुशेवा' इतिमन्त्रगतपूर्णमासामावास्याशब्दयोरेव त्यागवेलायामुद्देशः, न तु पर्वशब्दस्य । एवं च तत्रत्यपूर्णमासामावास्याशब्दयोः काले प्रयोगाभावात् मन्त्रार्थपर्यालोचनया कर्मपरत्वावगतेः एकैकस्य आग्नेयादित्रिकसंस्कारकत्वेऽपि पूर्वोक्तरीत्या पशुपुरोडाशादिवत् सौर्यादावतिदेशे बाधकाभावः । नह्युद्देशांशस्य प्रयोजकसत्त्वे परप्रयुक्तदेवतोपजीवित्यागांशे स्वरूपेण आग्नेयादेर्देवतात्वं संभवति । अतो येनैव अपूर्वसाधनविशेषरूपेण उद्देशांशं प्रति संस्कार्यता, तेनैव रूपेण त्यागांशं प्रति देवतात्वमिति युक्त एव पशुपुरोडाशादेरिव पार्वणहोमयोरपि अतिदेशः । एवं वैमृधेऽपि येनैव रूपेण अपूर्वसाधनविशेषत्वादिना पौर्णमास्या उद्देश्यता, तेनैव रूपेण उत्तरकालप्रतियोगित्वं दृष्टार्थत्वात्, न तु समुदिताग्नेयत्वादिरूपेणेति उद्देश्यताऽवच्छेदककोटौ साहित्यस्याग्नेयत्वादेश्च अविवक्षितत्वात् युक्त एव वैमृधस्यापि विकृतावतिदेशः । अस्तु वा तत्रोद्देश्यताऽवच्छेदककोटौ साहित्याद्यविवक्षायामप्युत्तरकालप्रतियोगित्वे उपादेयत्वात् 'दर्शपूर्णमासाभ्यामिष्ट्वा' इतिवत् विवक्षा । अतश्च सोमे विकृत्युत्तरत्वप्रसङ्गवत् सौर्यादावपि पौर्णमास्युत्तरत्वाभावात् नातिदेशप्रसङ्गः । अन्वारम्भणीयायां तु साहित्यादेरविवक्षा दर्शपूर्णमासत्वस्य उद्देश्यताऽवच्छेदककोटिप्रविष्टत्वाभावादिति युक्तस्तस्या अतिदेशः । प्रकृते पार्वणहोमयोस्तु आश्रयिकर्मत्वेन परप्रयुक्तदेवतोपजीवित्वात् स्वरूपेण आग्नेयादीनां देवतात्वानुपपत्तेर्युक्त एवातिदेशः ।

**यत्तु** समुदायापूर्वप्रयुक्तत्वात् पार्वणहोमयोः, विकृतौ च सौर्यादौ तदभावादनतिदेश इति । **तन्न, एवमपि** वैश्वदेवादिपर्वणि तत्सत्त्वेन अतिदेशापत्तेः । प्रयाजादेरपि तत्प्रयुक्तत्वेन सौर्यादावनतिदेशापत्तेश्च । नहि प्रयाजादीनां प्रकृतौ परमापूर्वप्रयुक्तत्वम्, द्विःकरणानापत्तेः । अपितु समुदायापूर्वप्रयुक्तत्वमेव । अथ तस्य प्रयोजकता न समुदायापूर्वत्वेन, अपितु उत्पत्त्यपूर्वाव्यवहितापूर्वत्वेनेति तेषां सौर्यादावतिदेशः, ततः पार्वणहोमयोरपि तुल्यम् । **इति प्राप्ते**, सत्यमेवम्, तथापि केषामपि **याज्ञिकानां** विकृतौ पार्वणहोमाननुष्ठानात्, आचारस्यैव प्रकृतौ साहित्यस्य आग्नेयत्वादेश्चोद्देश्यतावच्छेदककोटौ विवक्षा, न तु व्रीहित्वादिवदविवक्षा इत्येवंविधतात्पर्यग्राहकत्वावसायात्, तस्य च विकृतौ अभावादनतिदेशः पार्वणहोमादीनाम् । अत एव नाचारेण तत्तद्विकृतिपर्युदासरूपेणानन्तश्रुतिकल्पना, गौरवापत्तेः । सूत्राण्यप्याचारमेव उररीकृत्य समुदायार्थतारूपहेतुपरतया व्याख्येयानि । १७.

**मण्डन**— 'पार्वणौ वैकृते न स्तः ।' २५.

**शंकर**— 'पार्वणानतिदेशनम् ।' २९.

* **पार्वणस्थालीपाके** लौकिकीतिकर्तव्यता । **भा.** ७।४।२।२.

* **पार्वणस्थालीपाकादीनि** कर्माणि लौकिकानि । तेषां निर्दिष्टमायतनं औपासनोऽग्निः । न तानि आहवनीये प्रसज्येरन् । **भा.** १२।२।१।१–३.

**पार्वणहोमौ विकृतिषु न भवतः ॥**

'पार्वणौ जुहोति' इति होमः कालाभीज्या, **इति प्राप्ते**, कर्माभीज्यैव । तेन विकृतिषु पौर्णमास्यमावास्यानां

एकसमुदायाभावे न तत्संस्कारकहोमातिदेशः इति नावमिकप्रयोजनम् । संकर्ष २।२।३.

**पार्वणहोमयोरन्यतरस्यैव तत्तत्समुदायोपकारकस्य दर्शपूर्णमासयोरनुष्ठानम् ॥**

**उभयोरविशेषात् । ९।२।१९।५६ ॥**

**भाष्यम्**-- इदमिदानीं संदिह्यते । किमुभौ होमौ पौर्णमास्याममावास्यायां च, उत पौर्णमासीहोमः पौर्णमास्यां अमावास्याहोमः अमावास्यायामिति । किं प्राप्तम् ? उभावपि उभयत्र । कुतः ? उभयोर्हि प्रकरणे उभावपि आम्नातौ । तस्मादुभयत्र भवितुमर्हतः ।

**यदभीज्या वा, तद्विषयौ । ५७ ॥**

**भाष्यम्**-- वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति, उभयमुभयत्रेति । यदभीज्या, स तत्र भवेत् । तस्य हि स उपकारकः । अनुपकारक इतरस्य । न च अनुपकारकः कर्तव्यः । समुदायप्रधानौ अत्र होमौ इत्युक्तम् । तस्मात् यदभीज्या, तद्विषयौ भवेतामिति ।

**टुप्**-- ( अत्रानन्तरम् 'उभयोरविशेषात्' इत्यादि सूत्रद्वयम् । तत् अधिकरणान्तरमिव [ इवशब्दो वार्तिकमनुसृत्य ] भाष्यकारेण व्याख्यातम् । तदाक्षिपति- ) 'उभौ होमौ पौर्णमास्याममावास्यायां च' इत्येतदयुक्तम् ( अधिकरणान्तरकरणं पूर्वपक्षासंभवात् । तदाह- ) यदा समुदायस्य संस्कारकौ होमौ अवगतौ, तदा यः पौर्णमासीलिङ्गः ( मन्त्रः ), स पौर्णमास्यामेव प्राप्नोति, इतरोऽपि ( अमावास्यालिङ्गः ), सोऽपि तत्रैव ( अमावास्यायामेव प्राप्नोति ) इति नास्त्यनियमः ( अनियमप्रसङ्गः । अथ स्वमतेनाह- ) तस्मादन्यथा वर्ण्यते । ( पार्वणन्यायाधिकरणस्य ९।२।१८ ) प्रयोजनसूत्रे एते । यदि पर्वशब्दः कालवचनः, तथा सति कालस्य असंस्कार्यत्वात् आरादुपकारकौ स्याताम् । कथम् ? यद्यपि कालस्य कर्माङ्गता अवगम्यते, तथापि सकृदेव ( आदौ स्मृत्वा ) वेदिते ( काले ) कर्म प्रस्तूयते । न तस्य भूयोभूयः स्मृत्या प्रयोजनम् ( येन कर्ममध्ये स्मर्येत ) । यथा अन्यान्यङ्गानि भूयोभूयः स्मारकमपेक्षन्ते, नैवं कालः । तस्मात् कालवचने पर्वशब्दे ( सति ) अदृष्टार्थौ होमौ प्राप्नुतः । अत आह ( भाष्यकारः पूर्वाधिकरणे ) 'कालाभीज्यायां विकृतिषु प्रवृत्तिः' इति । ( वैकृतेषु इति रत्नपाठः । वस्तुतस्तु एतादृशी पङ्क्तिः भाष्ये नोपलभ्यते । तत्र संशयभाष्ये 'कालाभीज्यायां तयोः प्रवृत्तिः' इति ५१ सूत्रे सिद्धान्तभाष्यान्ते च 'वैकृतेषु अप्रवृत्तिः' इति ) । न च प्रकरणादुत्कृष्य कालस्य संस्कारकौ कल्प्येते, फलकल्पनाभयात् । तस्मात् यदि कालवचनः पर्वशब्दः ( पूर्वपक्षे ), तथा सति ( आरादुपकारकौ स्याताम् ) आरादुपकारकत्वात् न लिङ्गं व्यवस्थां करोति । अत आह ( सूत्रकारः- ) उभयोः ( पर्वणोः पूर्वपक्षे स्याताम् ) अविशेषात् इति । ( सिद्धान्ते तु- ) समुदायवाचकत्वेन तस्य ( समुदायस्य ) संस्कार्यत्वात् भवति व्यवस्थाकरणे लिङ्गम् । अत आह- 'यदभीज्या वा तद्विषयौ' इति ।

**सोम**-- पूर्वोक्तार्थे एव विशेषविचारात् **संगतिः** । कालाभीज्यापक्षे उभयोः पर्वणोः उभावपि होमौ स्याताम्, आरादुपकारकत्वेन लिङ्गेन विशेषासिद्धेः इति 'उभयोरविशेषात्' इति सूत्रं पूर्वाधिकरणपूर्वपक्षप्रयोजनकथनपरम् । 'यदभीज्या वा तद्विषयौ' इति सूत्रं च यस्य समुदायस्य यत्र संस्कार्यत्वसंभवः, तद्विषयो होमस्तत्र इति संस्कार्यवशात् व्यवस्था इति सिद्धान्तप्रयोजनकथनपरम् ।

**वि**-- 'संकीर्णौ संघयोर्होमौ न वा, प्रकरणादुभौ । संकीर्णा, बुपकार्यस्य भेदादेतौ व्यवस्थितौ ॥'

**भाट्ट**-- संख्यया कर्मभेदावगतेः एकवाक्योपात्तकर्मद्वयस्यापि संनिधानात् अवान्तरप्रकरणाद्वा एकैकमन्त्रं प्रति शेषित्वावगतेः कर्मद्वयस्यापि पूर्णमासदेवताकतया तत्संस्कारकत्वम्, अमावास्यादेवताकतया चामावास्यासंस्कारकत्वम् । प्रधानद्वयानुरोधेनैव मन्त्रद्वयस्यापि तत्रतत्रावृत्तिः । एकपदोपादानावगतकर्मद्वयसाहित्यवत्त्वाच्च सकृत्स्मृतस्यापि पुनःस्मरणम् 'तां चतुर्भिः' इतिवन्नानुपपन्नम् । नहि अत्र यथाक्रमं पाठः येनैकस्य कर्मण एक एव मन्त्रो भवेत् । एकपदोपादानात्तु उभयोरपि उभयाङ्गत्वम् । अत एव नात्र सूक्तवाकविभागन्यायः । **इति प्राप्ते**, समसंख्याङ्गप्रधानविषये यथाक्रममेव संबन्ध इति न्यायस्यौत्सर्गिकत्वात् एकस्य प्रधानस्यैकेनैव मन्त्रेण निराकाङ्क्षत्वाच्च, अश्रुतमन्त्रावृत्तिकल्पने पुनःस्मारकाकाङ्क्षाकल्पने च

प्रमाणाभावात् एकस्य एकसंस्कारार्थत्वमेवेति प्रयोजनवशाद्विभागः । १८.

**मण्डन—** 'पर्वणोस्तौ व्यवस्थितौ ।' २६.

**शंकर—** 'व्यवस्थोक्ता पार्वणयोः ।' ३०.

* 'पार्वणहोमयोस्त्वप्रवृत्तिः' इति विशेषातिदेशापवादः फलनियमकर्तृसमुदायवत् अष्टमे एव वक्तव्योऽपि कथञ्चित् प्रसङ्गात् नवमे उक्तः । प्रमेयं तु आष्टमिकमिति इहैव तत्र किञ्चित् चिन्त्यते । 'स्रुवेण पार्वणौ जुहोति' इति संख्यया कर्मभेदात् द्वौ पर्वदेवत्यौ होमौ विधीयेते । तत्र पर्वशब्दः पृणातेर्दानकर्मणो निष्पन्नः कर्मवचनः । तेन कर्मैव देवता । सा च स्मरणीयत्वेन संस्कार्या । तत्र यदि एकैको होमः षट्कर्मदेवत्यः स्यात् ततः अविद्यमानकर्मांशे अदृष्टार्थता आपद्येत । तत्परिहाराय एकः पौर्णमासीदेवत्यः अपरः अमावास्यादेवत्य इति कल्प्यते । तेन प्रकरणाविशेषेऽपि सूक्तवाकन्यायेन संस्कार्यवशात् व्यवस्था । सौर्यादौ च संस्कार्यस्य समुदायस्याभावात् नातिदेशः इत्यधिकरणार्थः । **बाल. पृ. १२१-१२२.**

**⌛ पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात् तदभीज्या हि । ९।२।१८।५० ॥**

दर्शपूर्णमासयोः समामनन्ति 'स्रुवेण पार्वणौ जुहोति' इति । एतौ पार्वणहोमौ सौर्यादिषु विकृतिषु स्यातां न वेति विचारः, पार्वणहोमौ कालाभीज्या समुदायाभीज्या वा इति च विचारः । कालं अभिलक्ष्य इज्या यागः कालाभीज्या । समुदायं पौर्णमासयागत्रयं अमावास्यायागत्रयं चाभिलक्ष्य इज्या समुदायाभीज्या । तत्र सिद्धान्तमाह । पार्वणहोमयोः 'ऋषभं वाजिनं वयम्' इति मन्त्रेण पौर्णमासे स्रुवेण आज्यहोमः 'अमावास्या सुभगा सुशेवा' इति मन्त्रेण अमावास्यायागे स्रुवेण आज्यहोमः इतीमौ पार्वणहोमौ नाम । तयोः सौर्यादौ विकृतौ अप्रवृत्तिः प्रवृत्तिर्न स्यात् । समुदायार्थसंयोगात् पौर्णमासत्रिकेण दार्शिकत्रिकेण च समुदायरूपेण अर्थेन पार्वणहोमयोः संयोगात् संबन्धात् । हि यस्मात् पार्वणहोमौ तदभीज्या तं समुदायं अभिलक्ष्य इज्या यागः । तस्मात् विकृतौ पार्वणहोमयोर्नातिदेशः इति सिद्धान्तः ।

**कालस्येति चेत् । ५१ ॥**

पार्वणहोमयोः समुदायाभीज्यत्वात् सौर्यादौ विकृतौ नातिदेश इति सिद्धान्ते उक्ते पूर्वपक्षी आह । कालस्य पर्वशब्दो वाचकः, इति कालाभीज्या पार्वणहोमौ । तस्मात् पर्वकाले क्रियमाणे सौर्यादौ तयोरतिदेशः स्यात् । इति चेत् ।

**नाप्रकरणत्वात् । ५२ ॥**

पूर्वपक्षशङ्कां निषेधति सिद्धान्ती । नेमौ कालाभीज्या । कालस्य अप्रकरणत्वात् प्रकरणेन समुदायवाची पर्वशब्दो गृह्यते न कालवाची । अपिच पृणातेः पर्वशब्दोऽयम् । पृणातिश्च दाने प्रसिद्धः । दानानि च समुदायौ । तस्मात् समुदायाभीज्या पार्वणौ होमौ । तस्मात् वैकृतेषु पार्वणयोरप्रवृत्तिः ।

**मन्त्रवर्णाच्च । ५३ ॥**

'ऋषभं वाजिनं वयं पूर्णमासं यजामहे' 'अमावास्या सुभगा सुशेवा' इति मन्त्रवर्णात् पूर्णमासामावास्याशब्दाभ्यां यजिसमानाधिकरणाभ्यां पार्वणहोमयोः समुदायाभीज्यत्वावगमः । न तयोः कालाभीज्यता ।

**तदभावेऽग्निवदिति चेत् । ५४ ॥**

पूर्वपक्षी आह । तदभावे सौर्यादौ तस्य आग्नेयादिसमुदायस्य अभावेऽपि सौर्यादौ असंनिहितयोरपि पार्वणहोमयोः अनुष्ठानं स्यात् । अग्निवत् यथा 'अग्निमग्न आवह' इत्यावाहननिगदे असंनिहितोऽप्यग्निः आवाह्यते । एवमिहापि असंनिहितयोरप्यनुष्ठानम् । इति चेत् ।

**नाधिकारिकत्वात् । ५५ ॥**

पूर्वपक्षिणा उक्तं निषेधति सिद्धान्ती । न असंनिहितयोः अनुष्ठानम् । आधिकारिकत्वात् अधिकारे भवत्वात् पार्वणयोः । आग्नेयाद्यधिकारे हि तौ पठितौ । तस्मात् सौर्यादौ विकृतौ पार्वणहोमयोर्न प्रवृत्तिः इति सिद्धान्तः । **के.**

* पार्वणहोमयोः स्वाहाकारस्यार्थवत्त्वं प्रकृतावेव । **भा. ८।४।५।१५.**

* **पार्वणहोममन्त्रौ** । 'ऋषभं वाजिनं वयम् । पूर्णमासं यजामहे । स नो दोहतां सुवीर्यम् । रायस्पोषं

सहस्रिणम् । प्राणाय सुराधसे । पूर्णमासाय स्वाहा ॥' (तैब्रा. ३।७।५।१३) इति पूर्णमासे । 'अमावास्या सुभगा सुशेवा । धेनुरिव भूय आप्यायमाना । सा नो दोहतां सुवीर्यम् । रायस्पोषं सहस्रिणम् । अपानाय सुराधसे । अमावास्यायै स्वाहा ॥' १४ । इत्यमावास्यायाम् । अत्र प्रथमवाक्यद्वयेन एकमर्धर्चं कृत्वा अनन्तरवाक्यत्रयेण उत्तरार्धर्चं कृत्वा होमकाले मन्त्रौ प्रयोक्तव्यौ । प्रतिमन्त्रे च होमार्थमेकैकं स्वाहान्तं वाक्यं ब्राह्मणेनैव संयोजितम् । मन्त्रौ तु पङ्क्तिच्छन्दस्कौ पञ्चपदावेव । के.

* **पार्ष्ठिकबोधः** यादृशोपपदद्वयसमभिव्याहारे आगोपालाङ्गनं तदर्थयोः यादृशोऽन्वयोऽवगम्यते तादृशस्यैव तदर्थयोः अन्यान्वयव्युत्पत्तौ पार्ष्ठिकबोधविषयत्वम् । अत एव अरुणैकहायनीस्थले परिच्छेद्यपरिच्छेदकभाव एव पार्ष्ठिकबोधविषयः । **भाट्ट. १०।४।२.**

* विशिष्टकर्मविधित्वेऽपि विशेषणानां **पार्ष्ठिकसंबन्धावगमः** । सहकारितामात्रेण च पार्ष्ठिकसंबन्धायोगः । **कौ.** २।४।२।३०.

**पार्ष्णिकान्वयन्यायः** । (अरुणाधिकरणोक्तोऽयम्) । क्रमप्रकरणाभ्यां स्तोत्राङ्गत्वेनावगतानामृचां अभिव्यक्तिं कुर्वत् साम तद्द्वारा स्तुतिं निर्वर्तयितुं शक्तमिति श्रुतस्तुत्यर्थत्वनिर्वाहकानुष्ठानविशेषलाभाय पार्ष्णिकान्वयेन स्तुत्यर्थासु ऋक्षु अवतरति । **रसायनम्.** पृ. ६९.

* '**पालाशं** ब्रह्मवर्चसकामस्य' यूपं कुर्यात् इति फलविधिः । **भा.** ४।३।१।१, * '**पालाशे** बध्नाति' 'खादिरे बध्नाति' 'रोहितके बध्नाति' । एकार्थाः सन्तो विकल्प्यन्ते खादिरादयः । २।२।६।१७.

* '**पावकाग्निनयेनात्र** वक्तव्यौ सगुणाविमौ' (अग्नीवरुणौ) । **वि.** १०।४।१९.

**पावकाग्निन्यायः** । विकृतौ देवतानिष्ठगुणवाचिपदस्यापि त्यागादौ प्रयोगः ॥

**प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् । १०।४।१४।२६ ॥**

**भाष्यम्**— अस्त्याधानम् 'य एवं विद्वानग्निमाधत्ते' इति । तत्र पवमानहवींषि श्रूयन्ते 'अग्नये पवमानायाष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये' इति । तत्र संशयः क्रियते किं सगुणं अग्नेरभिधानं कर्तव्यम्, उत निर्गुणमिति । किं प्राप्तम् ? प्राकृतस्य निर्गुणस्य सगुणेनाभिधानं कर्तव्यमिति ।

**अविकारो वाऽर्थशब्दानपायात्स्याद् द्रव्यवत् । २७ ॥**

**भाष्यम्**— अविकारो वा स्यात् निर्गुणमभिधानम् । कुतः ? अर्थशब्दानपायात् । एवं शब्दः अर्थश्च अनपेतो भवति । य एवासावग्निः, स एव पवमानः पावकः शुचिश्च । या देवता निर्देष्टव्या, सा निर्दिष्टैव भवति असत्यपि गुणवचने । द्रव्यवत् । यथा 'सा वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेत भूतिकामः' इति । अजावशाशब्देन चोदिते कर्मणि छागाशब्देन वाचिषु निगमा भवन्ति । अर्थः शब्दः अनपेत इति कृत्वा । एवमिहापि द्रष्टव्यम् । तस्मात् निर्गुणेनाभिधानं कर्तव्यमिति ।

**आरम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशासनमनर्थकं स्यात् । २८ ॥**

**भाष्यम्**— अथवा चोदितेन सगुणेनाभिधीयेत । कुतः ? आरम्भासमवायात् । नहि आरम्भेण देवता कर्मणि समवैति । न स्वेन रूपेण देवतायाः कर्मणि साधनभाव इत्युक्तम् । यदि हि रूपेण समवेयात् तथा सति अग्निशब्देन पवमानोऽपि प्रत्याय्यते इति गुणाभिधानं न क्रियेत । कथं तर्हि साधनभावः ? श्रुतिसमवायित्वात् देवतार्थस्य । देवताशब्दस्य च हविषश्च संबन्धः साक्षादुच्यते । यस्य शब्दस्य संबन्धः स शब्दो वदितव्यः । एवमसौ संबन्धः कृतो भवति । यदि च गुणाभिधानं न क्रियते गुणशासनमनर्थकं स्यात् । एवमर्थं हि तत्र शब्द उच्चार्यते, कथमसौ कर्मणि संबध्येतेति । तत्र यदि गुणो न संबध्नीयात् गुणवचनवैयर्थ्यं स्यात् । तस्मात् सगुणेनाभिधानं कर्तव्यमिति ।

**द्रव्येष्वारम्भगामित्वादर्थेऽविकारे सामर्थ्यात् । २९ ॥**

**भाष्यम्**— अथ यदुक्तं द्रव्यवदिति, 'सा वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेत भूतिकामः' इति, अजावशाशब्देन चोदिते कर्मणि छागाशब्देन निगमा वाचिषु भवन्ति इति यदुक्तम्, तत् परिहर्तव्यम् । अत्रोच्यते । युक्तं द्रव्येषु आरम्भसमवायः । रूपेण समवायं गच्छति द्रव्यम् । तत्र छागाशब्देन याऽसौ आलब्धा यदि वशा यदि अवशा, तत्र सा अभिधीयते इति गम्यते । तस्मात् अर्थे साधने सति अविकारेऽप्यर्थे वचनसामर्थ्यमुपपद्यते इति विना गुणवचनेन अभिधानं स्यात् चोदकानुग्रहाय । इह श्रुतिसमवायित्वात् अवश्यं चोदकप्राप्तस्य विकारः कर्तव्य इति ।

**शा**— तत्र संशयः तद्वाचिषु निगमेषु किं एक एवाग्निशब्दो वक्तव्यः, किमुभौ शब्दौ वक्तव्यौ 'अग्नये पवमानाय निर्वपामि' 'अग्निं पवमानमावह' 'अग्नेः पवमानस्याहमुज्जितिमनूज्जेषम्' इति । '**तत्रैकेनार्थनिर्देशसिद्धेर्नोच्चारणं द्वयोः । स चाग्निशब्द एवैकश्चोदकानुग्रहो भवेत् ॥**' स्यादेवं यदि प्रथममर्थं विधाय पश्चाच्छब्दाश्रयणं स्यात् । शब्द एव तु भावनाङ्गत्वेन विधीयते इत्युक्तम् । तस्मादुभयोर्विधानात् उभौ वक्तव्यौ ।

**सोम**— सिद्धे विधिशब्दनियमे किमेक एव उत सर्वोऽपि इति विशेषचिन्तनात् **संगतिः । सूत्रार्थस्तु**— प्राकृतस्याग्नेः पावकादिश्रुतौ तच्छब्देनाभिधानं स्यादिति ।

**वि**— 'निगमे पावकाग्न्योः किमग्निः स्यादथवोभयम् ।, अग्निश्चोदकतो, मैवं वैधोऽग्निः सगुणो यतः ॥' तस्मात् अग्निशब्दः पावकादिशब्दश्चेत्युभयं पठनीयम् ।

**भाट्ट**— अर्थस्य देवतात्वपक्षे शब्दस्य वा देवतात्वपक्षे यत्रार्थद्वयं शब्दद्वयेनोच्यते, यथा 'अग्नये कृत्तिकाभ्यः' इत्यादौ तत्र द्वयोरेकवाक्योपादानेन समुच्चयप्रतीतेः उभयोरपि त्यागे आवाहनादिमन्त्रेषु वा उच्चारणं निर्विवादमेव । यत्र तु प्राकृत्यां तत्स्थानापन्नायां वा कश्चित् गुणः श्रुतः, 'अग्नये दात्रे' 'अग्नये पवमानाय' इत्यादौ तत्र किं गुणवाचकं पदमपि त्यागकाले आवाहनादिनिगमेषु च प्रयोक्तव्यम्, न वेति चिन्तायाम् 'सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेत' इत्यत्र प्रकृतिप्राप्तद्रव्ये वशात्वगुणविधानेऽपि न तस्य 'छागस्य वपायाः' इति मन्त्रे वशात्वगुणप्रकाशनार्थं तत्पदप्रयोगः । एवमिहापि विहितेऽपि अर्थरूपदेवतागुणे तत्प्रकाशस्य प्रयोजनाभावात् न तद्वाचकं पदं त्यागकाले आवाहनादिमन्त्रेषु वा उच्चारणीयम् । इति प्राप्ते, वशात्वगुणस्य स्वरूपेण क्रियाऽन्वयवत् इह देवतागुणस्य स्वरूपेण क्रियाऽन्वयाभावात् तद्वाचकशब्दस्यापि अप्रयोगे विधिवैयर्थ्यापत्तेः अर्थदेवतापक्षेऽपि तद्वाचकपदप्रयोग आवश्यक एव । शब्दस्य देवतात्वपक्षेऽपि सुतराम् । यत्र तु द्वयोः पर्यायता पुराणादिपर्यालोचनया एकस्यैव विशिष्टार्थवाचकत्वम्, पदान्तरं तु सामान्यवाचि, यथा 'अग्नये पावकाय' इत्यादौ पावकशब्दस्य अग्निविशेषरूपाग्निसंततिवाचित्वस्य पुराणादौ प्रसिद्धत्वात्, तत्र पावकपदेनैव विशिष्टार्थप्रतीतिसिद्धौ अग्निपदप्रयोगो यद्यपि अर्थस्य देवतात्वपक्षे तथा नोपपादयितुं शक्यः, तथापि शब्ददेवतात्वस्यैव पूर्वं साधितत्वात् तत्रापि पदद्वयप्रयोगो नायुक्तः ।

**मण्डन**— 'सगुणा देवता वाच्या ।' १७.

**शंकर**— 'सगुणायां गुणस्यापि ।' १७. सगुणायां देवतायां विहितायां गुणस्यापि विधिशब्दः वक्तव्यः स्यात् ।

* **पावने** इष्ट्यादौ शुद्ध्यर्थं क्रियमाणे 'एकविंशत्या दर्भपिञ्जूलैः पावयति' इत्युक्तत्वात् द्विबहुयजमानके एकविंशतिसंख्यया अनुसमयः । **के.** ( भा. ५।२।३।४–५ ).

**पाशाधिकरणम् ।** अग्नीषोमीये पशौ पाशैकत्वपाशबहुत्वाभिधायिनोर्मन्त्रयोर्विकल्पः ॥ ( पाशाधिकरणम् ( ९।३।५ ), पाशन्यायः ( ९।३।४ ) इति द्वे अधिकरणे । तत्र पाशाधिकरणे विकल्पः साधितः, पाशन्याये तु ऊहः साधितः । तस्मात् सावधानतया उपयोगो ज्ञातव्यः । **के.** )

**विप्रतिपत्तौ विकल्पः स्यात् समत्वाद् , गुणे त्वन्यायकल्पनैकदेशत्वात् । ९।३।५।१५ ॥**

**भाष्यम्**— अस्ति पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति। तत्र पाशैकत्वाभिधायी ('अदितिः पाशं प्रमुमोक्त्वेतम्' तैसं. ३।१।११।११) पाशबहुत्वाभिधायी च ('अदितिः पाशान् प्रमुमोक्त्वेतान्' मैसं. १।२।१०८, कासं. ३०।४५) मन्त्रौ समाम्नातौ। तयोः किमेकत्वाभिधायी प्रकरणे निविशते, बहुत्वाभिधायी प्रकरणादुत्कृष्यते, उत उभावपि प्रकरणमभिनिविशेते इति। किं प्राप्तम्? बहुत्वाभिधायी उत्कर्ष्टव्य इति। कुतः? बहूनां हि स पाशानां मोचकः। न च प्रकरणे बहवः पाशाः सन्ति! तस्मात् प्रकरणे असंबध्यमानो यत्र बहवः पाशास्तत्र नीयेत। यथा 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्' इति। 'एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्यः प्रतिपदं कुर्यात्' इति प्रतिपद्विधानमुत्कृष्यते। यथा च पौष्णसावित्रसारस्वतद्यावापृथिव्याद्यनुमन्त्रणानि उत्कृष्यन्ते, एवं पाशबहुत्वाभिधाय्यपीति। **एवं प्राप्ते, ब्रूमः।** विप्रतिपत्तौ एतस्याम्, का विप्रतिपत्तिः? यत् प्रकृतावेकः पाशः, पाशबहुत्वाभिधायी च मन्त्रः, एतस्यां विप्रतिपत्तौ किं मन्त्रः उत्कृष्यते, नेति। उच्यते। नोत्कर्ष्टव्यः। ननु प्रकृतावन्यो मन्त्रः। उच्यते। तेन सह विकल्पो भविष्यति। कुतः? पाशप्रातिपदिकार्थस्य प्रकृतौ विद्यमानत्वादुत्कर्षो न न्याय्यः। ननु बहुपाशवचन एष मन्त्रः। प्रकृतौ त्वेकः पाशः। तस्मात्तत्र न संभवतीति। उच्यते। बहूनप्यसौ पाशान् वदन् बहुत्वाधिष्ठानं द्रव्यं प्रकाशयत्येव। यदि न प्रकाशयेत्, न पाशविशिष्टं बहुत्वं गम्येत। प्रकाशयति चेत्, तावता नः प्रयोजनम्। तस्य ह्युन्मोचनं क्रियते, न बहुत्वस्य, पाशाकृतेर्वा। तस्मात्तस्य प्रकाशनं कर्तव्यम्। तत्प्रातिपदिकेन करिष्यते, नोत्कृष्यते। अथोच्यते। अस्त्येव हि एकवचनान्तं प्रातिपदिकम्, तत् तस्य प्रकाशनं करिष्यतीति। अत्रोच्यते। न हीदं तस्मादन्यत्। यद्येकवचनान्तं प्रातिपदिकं नोत्कृष्यते, प्रकरणादित्युच्यते, सिद्धस्तर्ह्यनुत्कर्षस्तदेवेदमिति। ननु बहुवचनस्य बहुपाशकप्रयोगे अर्थवत्ता, तस्मादुत्कर्ष्टव्यम्। तदुत्कृष्यमाणमेकदेशत्वात् प्रातिपदिकमुत्कर्षतीति। उच्यते। गुणे त्वन्यायकल्पना स्यादिति, न प्रधाने। गुणश्च विभक्त्यर्थः। प्रधानं प्रातिपदिकार्थः। प्रातिपदिकार्थविशेषो विभक्त्या अभिधीयते। सति प्रातिपदिकार्थे विभक्त्यर्थेन भवितव्यम्। न च विकृतौ प्रातिपदिकमस्ति। अनारभ्यापि अभिहितं प्रकृतिं प्रविशति, किमङ्ग पुनः प्रकृतावेव अभिहितम्। तस्मात् यत्र प्रातिपदिकार्थः, तत्र विभक्त्यर्थो भविष्यति। ननु विकृतौ अपि चोदकेन प्राप्तं प्रातिपदिकम्, प्रातिपदिकार्थश्च उच्यते। बाढम्। विप्रकृष्टस्तु चोदकः। बहुवचनसमर्थकं प्रातिपदिकं चोदको नोत्क्रक्ष्यति। तस्मात् प्रातिपदिकमेकदेशत्वात् बहुवचनमाक्रक्ष्यतीति। न च प्रकृतौ अनर्थकमेव बहुवचनम्, पाशाकृतिकस्य हि तदुन्मोचने कर्मसंबन्धं करोति। तस्मात् गुणे बहुवचने अन्यायकल्पना, न प्रधाने प्रातिपदिकार्थे इति। किं पुनरन्याय्यम्? यत् बहुत्वं गम्यमानमविवक्षितमित्युच्यते तत्कल्प्यताम्, न तु प्रकृतौ प्रातिपदिकस्य प्रातिपदिकार्थाभिधानमन्याय्यं कल्पयितव्यम्। अस्य हि गुणस्य अवाच्यमेव वैकृतं बहुत्वम्, संनिधानाभावात्। तस्मात् प्रकृतौ बहुवचनान्तस्यापि निवेश इति।

**प्रकरणविशेषाच्च । १६ ॥**

**भाष्यम्**— प्रकरणविशेषाच्च एतदध्यवसीयते, प्रातिपदिकं बहुवचनमाकर्षति, न प्रातिपदिकं बहुवचनेनोत्कृष्यते इति। प्रकृतौ हि प्रातिपदिकार्थो विद्यते अग्नीषोमीये पशौ। बहुवचनार्थो विकृतिषु। तस्मादपि बहुवचनान्तस्य प्रकृतौ निवेश इति।

**उत्कर्षो वा द्वियज्ञवत् । १७ ॥**

**भाष्यम्**— इति यदुक्तं तत् परिहर्तव्यम्।

**अर्थाभावात्तु नैवं स्याद् गुणमात्रमितरत् ।१८॥**

**भाष्यम्**— (तत् परिह्रियते)। युक्तं यत् प्रतिपद्विधानमुत्कृष्यते, नास्ति प्रकृतौ यजमानद्वित्वं यजमानबहुत्वं वा। तत्र न भवेत् विषय एतयोः प्रतिपदोः। इह तु गुणमात्रं नास्ति बहुत्वम्। अन्यत्तु बहुवचनस्य प्रयोजनम्, मुचिना संबन्धः। न चानेकप्रयोजनमन्यतमेन प्रयोजनेन न प्रयुज्यते। नहि, उल्का प्रकाशनेन

अप्रयुज्यमाना भसना न प्रयुज्यते । तस्माद्विषमं प्रतिपद्यामिदमिति ।

**द्यावोस्तथेति चेत् । १९ ॥**

**भाष्यम्**— अथ यदुक्तम्, द्यावापृथिव्यादीनामनुमन्त्रणानां यथोत्कर्षः, तथा अस्येति । तत् परिहर्तव्यम् ।

**नोत्पत्तिशब्दत्वात् । २० ॥**

**भाष्यम्**— नैतदनुमन्त्रणेन तुल्यम् । नहि दर्शपूर्णमासयोर्द्यावापृथिव्यादीनामुत्पत्तौ शब्दोऽस्ति । अस्ति त्विह पाशस्योत्पत्तौ शब्दः । तस्माद्विषममनुमन्त्रणेनेति ।

**शा**— एकस्मिन् बहुवचनस्य असमवेतार्थत्वात् उत्कर्षे प्राप्ते, अभिधीयते । '**प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्मणः । उभयोः प्रकृतौ भावान्नोत्कर्षोऽस्यावकल्प्यते ॥**'

**सोम**— बहुवचनान्तमन्त्रस्यापि प्रकृतिनिवेशस्य पूर्वोक्तोहनिर्वाहस्य चिन्तनात् **संगतिः । सूत्रार्थस्तु**— अनुष्ठेयपाशस्य एकत्वात् मन्त्रस्य बहुत्वाभिधायित्वाच्च विप्रतिपत्तौ विरोधे सति न मन्त्र उत्कृष्टव्यः, किन्तु एकवचनान्तेन सह अस्य विकल्पः स्यात्, उभयोरपि पाशविशिष्टकर्मप्रतिपादकत्वेन समत्वात् । गुणे तु बहुवचने अन्याय्यत्वकल्पना । ततश्च एकदेशबहुवचनाश्रयेण नोत्कर्षः इति ।

**वि**— 'उत्कष्टव्यो न वा मन्त्रो बह्वर्थो, ऽसंगतत्वतः । उत्कर्षो, न विकल्प्योऽसौ गुणे त्वन्यायकल्पना ॥'

**भाट्ट**— बहुवचनान्तपाशमन्त्रस्य दैक्षे एव निवेशमङ्गीकृत्य विकृतौ ऊहश्चिन्तितः ( ९।३।४ इत्यत्र ) । स एव तु इह चिन्त्यते, किं बहुपाशिकायामुत्कर्षः, उत दैक्षे एव निवेशः इति । तत्र बहुत्वप्रकाशनलिङ्गात् अनुष्ठानसादेश्यादेर्बाधे पूषाऽनुमन्त्रणादिवत् विकृतावुत्कर्षः । न च तद्वत् सामान्यसंबन्धबोधकप्रमाणाभावः, ज्योतिष्टोममहाप्रकरणस्यैव आनर्थक्यतदङ्गन्यायसहकृतस्य क्रतुपशुषु सामान्यसंबन्धबोधकस्य सत्त्वात् । न च एवमपि पाशप्रातिपदिकार्थस्य पाशस्य, द्वितीयाऽर्थस्य कर्मत्वस्य, प्रमोचनभावनायाश्च प्रधानभूतायाः, दैक्षेऽपि संभवेन तत्प्रतिपादकपदानां लिङ्गविरोधाभावेन अनुष्ठानसादेश्यादिबाधे प्रमाणाभावात् न गुणभूतबहुवचनमात्रानुरोधेन उत्कर्षकल्पना युक्ता इति वाच्यम् । अनेकेषामपि पदानां एकव्रीह्यादिपदानुरोधेन व्रीहिप्रयोगे एव संकोचवत् उत्कर्षस्याप्युपपत्तेः । इतरथा एकपूषपदानुरोधेन इतरपदानामुत्कर्षानापत्तेश्च । गुणभूतलिङ्गानुरोधेन प्रातिपदिकादेः मेषीवर्जे संकोचवत् गुणभूतवचनानुरोधेनापि तदुत्कर्षोपपत्तेश्च । प्रातिपदिकार्थवत् लिङ्गसंख्यादेरपि कारके एवान्वयेन प्रातिपदिकार्थं प्रति संख्यादेर्गुणत्वे प्रमाणाभावाच्च । एवं च एकवचनान्तपाशमन्त्रेण विकल्पोऽपि अष्टदोषदुष्टो न भवेत् । इति **प्राप्ते,** नात्रोत्कर्षः गुणभूतबहुवचनानुरोधेन प्रधानभूतानां बहूनामुत्कर्षे प्रमाणाभावात्, विभक्त्युपात्तलिङ्गसंख्याऽन्वयित्वरूपसत्त्वसमाख्याऽनुरोधेन पार्ष्ठिकान्वयवेलायां लिङ्गसंख्याऽऽदेः प्रातिपदिकार्थप्राधान्येनैव अन्वयाच्च । न चैवं लिङ्गाद्यनुरोधेन प्रधानभूतबहुतरेतरपदसंकोचस्याप्यनापत्तिः, गुणभूतानुरोधेन प्रधानभूतस्य संकोचेऽपि प्रकरणादिबाधप्रसङ्गेन उत्कर्षे प्रमाणाभावात् । संकोचे तु अवर्जनीयतया नान्तरीयसंनिधिबाधेऽपि उत्कर्षे नान्तरीयकत्वाभावेन तद्बाधस्य अन्याय्यत्वाच्च । पूषादिपदानां तु गुणत्वाभावात्, तद्व्यतिरेकेण इतरपदानां प्रकृतोपयोग्यर्थप्रतिपादकत्वाभावाच्च उत्कर्ष इति वैषम्यम् । प्रकृते तु पशुपाशकर्मकोन्मोचनमात्रप्रकाशनस्यैव उपयोगित्वात् संख्यायाः स्वरूपेण प्रकाशनानपेक्षत्वात् संख्यावाचकपदवैयर्थ्यपरिहारार्थं तस्य पाशसंख्याप्रकाशनोपयोगकल्पनेऽपि नेतरपदानां तद्व्यतिरेकेण प्रकृतोपयोग्यर्थप्रतिपादकत्वमिति विशेषः । अत एव बहुवचनम् 'सुपां सुलुक्' ( पा० ७।१।३९ ) इत्येवं स्वशक्यबहुत्वाश्रयीभूतपाशावयवजन्यपाशरूपावयविवृत्तित्वसंबन्धेन एकत्वलक्षणार्थमेव । एवं च फलमुखत्वात् विषमशिष्टोऽपि विकल्पो न दोषाय इति ध्येयम् । इतरथा उत्कर्षपक्षेऽपि एकवचनान्तमन्त्रस्यैव ऊहेन बहुपाशिकायामन्यस्यामिव क्रतुपशुष्वपि बहुवचनान्तत्वोपपत्तेः तत्पाठफलं मन्त्रत्वमात्रसिद्धिरूपं मन्दं स्यात् ।

**मण्डन**— 'द्वौ चापि मन्त्रौ प्रकृतौ निविष्टौ।'

**शंकर**— 'बहुपाशार्थः प्रकृतौ।'

* 'पत्नीं संनह्य' इति चिन्त्यते। अस्ति हि यजमान एकपत्नीको बहुपत्नीकश्च। तत्र सर्वस्य प्रयोगमधिकृत्य पत्नीशब्द उच्चरितः इत्येतत् **पाशाधिकरणेनैव** निर्णीतम्। **भा.** ९।३।६।२०. * प्रकृतौ बहुवचनस्य असमवेतार्थत्वे विकृतावपि अविकृतस्यैव प्रयोगः इति नवमे **पाशाधिकरणे** स्थितम्। **श्राद्धमयूखः** पृ. ७५. * यदि पत्नीप्रातिपदिकार्थः प्रधानं बलवत्, ततः एकद्विबहुपत्नीकेषु प्रयोगेषु प्रातिपदिकार्थोऽस्तीति तद्वशेन विभक्तिरपि एकवचनं त्रिष्वपि प्रवर्तमानं आकृतिसंख्याऽभिप्रायम्। अथ विभक्तिः प्रधानम्, ततो यत्र सा स्वार्थं लभते, तत्रैव पर्यवसितः प्रातिपदिकार्थः, इति द्विबहुपत्नीके मन्त्र एव न स्यात्, इत्येतयोः पक्षयोः किं न्याय्यं इत्येतत् पाशाधिकरणे वर्णितम्। **टुप्.** ९।३।६।२०.

* **पाशाधिकरणन्यायेन** 'गुणे त्वन्याय्यकल्पनैकदेशत्वात्' इति प्रातिपदिकार्थप्राधान्यात् एकस्मै एव उद्गात्रे चमसो दातव्यः श्रूयते। तस्मादेको भक्षयेत्। **वा.** ३।५।८।२३. * पाशाधिकरणन्यायेन द्विवचनस्याप्रसिद्धत्वेऽपि प्रातिपदिकमात्रप्रसिद्ध्या कालयोगिनामेव वा अनयोरेव वा द्वित्वस्यापि कथञ्चिदुपपत्तेः फलसंबन्धः, न तु षण्णामेव आग्नेयादीनाम् (इदं पूर्वपक्षे)। **भाट्ट.** २।२।३, * पाशाधिकरणन्यायेन बहुवचनातिरिक्तसकलमन्त्रस्य (उपरवमन्त्रस्य) प्रत्येकावृत्तिप्रतीतेः बहुवचनस्यापि तदनुरोधेन पूजाद्यर्थत्वेन व्याख्यानं द्रष्टव्यम्। ११।४।१९. * पाशाधिकरणन्यायेन लक्षणया, साधुत्वमात्रेण आश्रयनिष्ठतया वा लिङ्गसंख्यान्वयोपपत्तौ प्रातिपदिके लक्षणाऽनापादकत्वम्। **कौ.** ३।१।६।१२ पृ. १५७. * पाशाधिकरणन्यायेन लिङ्गसंख्ययोरपि सामानाधिकरण्येन पार्ष्ठिको जातिगुणसंबन्धः। **भाट्ट.** १।३।१०, * अष्टरात्रे विश्वजिति 'अवभृथादुदेत्य वत्सत्वचं परिधत्ते' इति एकवचनस्य **पाशाधिकरणन्यायेन** बहुत्वलक्षणयाऽपि उपपत्तौ प्रातिपदिकोपदेशस्य उपरिधारणमात्रविषयत्वसंकोचे प्रमाणाभावात् इति प्राप्ते। १२।३।१, * आग्नेयादीनां षण्णां विद्वद्वाक्यविहितयोश्च कर्मणोः कालयोगस्य अविशेषात् दर्शपूर्णमासपदेन ग्रहणोपपत्तेः, द्विवचनस्य च पाशाधिकरणन्यायेन बहुत्वलक्षणार्थत्वेऽपि बाधकाभावात् अष्टानामेव फलसंबन्धोपपत्तेः न षण्णामेव सः। **कौ.** २।२।३।३ पृ. १६२. * 'एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः' (प्रतिपदं कुर्यात्)। अत्र पाशाधिकरणन्यायेन लिङ्गानुरोधेन प्रकरणबाधानुपपत्तेः व्यत्ययानुशासनेन पुंलिङ्गस्य स्त्रीत्वपरत्वावगतेः पत्नीबहुत्वे द्वितीयो मन्त्रः इति पूर्वपक्षः। **भाट्ट.** ३।३।९, * 'ग्रहं संमार्ष्टि' इत्यत्र गुणभूतैकवचनाद्यनुरोधेन प्रत्यये करणत्वलक्षणाङ्गीकारस्य युगपत् वृत्तिद्वयविरोधवैरूप्यादेश्चान्याय्यत्वात्, तत् वरं अनुवादके एकवचने तस्मिन्नेव पाशाधिकरणन्यायेन लक्षणामात्रम्। ३।१।७, * द्वन्द्वे कस्यापि लक्षणीयत्वाभावात् तत्पुरुषापेक्षया तस्य प्रबलत्वम्। यदि परं एकवचनस्य (रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति) द्वित्वादौ लक्षणा उद्भाव्येत, तथापि तस्या जघन्यैकवचननिष्ठत्वात् पाशाधिकरणन्यायेन अदोषतया तत्पुरुषापेक्षया प्रबलत्वमेव। १०।४।२, * न चैवमपि ऊहितमन्त्रपाठमात्रस्य प्रयोजनालाभेऽपि 'यदि द्वौ' इत्यादिविनियोगप्रयोजनाभावः दैक्षसंनिधिपठितानां त्रयाणामेषां पाशाधिकरणन्यायेन तत्रैव विकल्पप्रसक्तौ उत्कर्षसिद्ध्यर्थत्वात्। इति प्राप्ते ('यद्येकं यूपमुपस्पृशेत्' इत्यादिवाक्यविषयकमिदम्)। ९।३।३. * न च दर्शपूर्णमासप्रातिपदिकस्य कालयोगिषु प्रसिद्धार्थकत्वेऽपि द्विवचनस्याप्रसिद्धेः, कथं तस्य यज्यवच्छेदकत्वं इति वाच्यम्। प्रातिपदिकप्रसिद्धिसत्त्वे पाशाधिकरणन्यायेन द्विवचनानुरोधेन तत्त्यागानुपपत्तेः। **कौ.** २।२।३।३ पृ. १५५. * नवमाद्यस्य पञ्चदशे अधिकरणे अध्रिगुप्रैषे पुंपशुमादायापि निवेशसंभवात् न लक्षणा आश्रिता, इह तु यजमानद्वित्वस्य प्रकृतौ सर्वथा निवेशनासंभवात् पाशाधिकरणन्यायेन लक्षणैव युक्ता। **भाट्ट.** ३।३।९ टिप्पणी, * 'पृष्ठैरुपतिष्ठते' इत्यत्र पाशाधिकरणन्यायेन बहुवचनानुरोधेन पृष्ठप्रातिपदिके गौण्यङ्गीकारस्यायुक्तत्वात् बहुवचनेन एकत्वादि लक्षयित्वा चय-

नाङ्गतया ज्योतिष्टोमपृष्ठविधिरेवायम् । इति प्राप्ते । ७।३।१२. * पृष्ठप्रातिपदिकस्य गौणत्वकल्पनापेक्षया पाशाधिकरणन्यायेन बहुवचनस्य एकत्वलक्षणया स्तोत्रसंबन्धोपपत्तौ तदसंबन्धापादकं गौणत्वकल्पनं नोपपत्तिमत् । कौ. १।४।३।३ पृ. १९४. * 'प्रास्मा अग्निं भरत' पुल्लिङ्गस्य मेष्यामसमर्थत्वेऽपि अस्मै इति प्रातिपदिकार्थचतुर्थ्यर्थयोः प्रधानभूतयोः मेष्यां समवेतत्वात् पुल्लिङ्गस्य च गुणभूतस्य पाशाधिकरणन्यायेन निर्देशमात्रार्थत्वात् समस्तस्य मन्त्रस्य प्रकरणात् मेष्यर्थत्वमपि अविरुद्धम् । इति पूर्वपक्षे । भाट्ट. ९।१।१६, * 'प्रोद्गातॄणाम्' इत्यत्र पाशाधिकरणन्यायेन उद्गातैवैकः पिबेत् उद्गातृशब्दस्य प्रचुरप्रयोगेण उद्गीथापरपर्यायसामद्वितीय( तृतीय ) भागोद्गानकर्तरि रूढत्वात्, गुणभूतबहुवचनानुरोधेन त्वदुक्तायाः त्रिविधाया अपि अन्याय्यकल्पनाया पाशाधिकरणन्यायेनानुपपत्तेः, इति पूर्वः पक्षः । ३।५।६ पृ. ७, * विकृतौ द्विबहुपत्नीकप्रयोगयोः एकवचनस्य प्रमाणान्तरानवधृतपत्न्येकत्वावरुद्धप्रयोगविषयेऽपि पाशाधिकरणन्यायेन प्रवृत्त्यवगतिः । ९।३।७.

* विभक्त्यर्थे संख्यायां नामार्थस्य विशेषणत्वासंभवः । अन्यथा **पाशाधिकरणविरोधात्** इति चेत् । **चन्द्रिका.** पृ. ४५०.

**पाशन्यायः ।** पशुद्वयवत्यां विकृतौ पाशैकत्वपाशबहुत्वाभिधायिनौ मन्त्रौ द्विवचनान्तेन ऊहितव्यौ ॥

[ पाशाधिकरणम् ( ९।३।५ ) पाशन्यायः ( ९।३।४ ) इति द्वे अधिकरणे । तत्र पाशाधिकरणे विकल्पः साधितः, पाशन्याये तु ऊहः साधितः । तस्मात् सावधानतया उपयोगो ज्ञातव्यः । **के.** ]

**अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य । ९।३।४।१०॥**

**भाष्यम्**— अस्ति पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्र पाशैकत्वाभिधायी मन्त्रः 'अदितिः पाशं प्रमुमोक्त्वेतम्' ( तैसं. ३।१।११।११ ) । तथा पाशबहुत्वाभिधायी 'अदितिः पाशान् प्रमुमोक्त्वेतान्' इति ( मैसं. १।२।१०८, कासं. ३०।४५ ) । प्रकृतौ तयोः समुच्चयं वक्ष्यति ( उत्तराधिकरणे ) । अस्ति द्विपशुर्विकृतिः 'मैत्रं श्वेतमालभेत, वारुणं कृष्णं अपां चौषधीनां च संधौ अन्नकामः' इति । तत्र चोदकेन पाशाभिधायिनौ मन्त्रौ प्राप्तौ । तयोः संशयः किं बहुवचनान्तः अविकारेण प्रवर्तते एकवचनान्तस्य निवृत्तिः, उत बहुवचनान्तो निवर्तते एकवचनान्त ऊहितव्यः, उत उभयोरपि प्रवृत्तिः अभिधानविप्रतिपत्तिश्च, उत एकवचनान्त ऊहितव्यो बहुवचनान्तोऽपि न निवर्तेत । किं प्राप्तम् ? अन्यायस्तु अविकारेण । अन्यायनिगदः बहुवचनान्तः अविकारेण प्रवर्तते, एकवचनान्तो निवर्तितुमर्हति । कुतः ? नास्य एकस्मिन् पाशे प्रवर्तमानस्य दृष्टः प्रतिघातः । यथैव एकस्मिन् पाशे प्रवर्तते तथा द्वयोरपि प्रवर्तितुमर्हति । नासौ एकस्य वाचको न द्वयोः । एवमार्षश्चोदकोऽनुगृहीतो भविष्यति । इतरथा हि ऊह्यमाने यथाप्रकृति मन्त्रो न कृतः स्यात् । न द्वयोः पाशयोः एकस्मिंश्च पाशे कश्चित् विशेषोऽस्ति । तस्मादविकारेण बहुवचनान्तः प्रयुज्यते, एकवचनान्तस्य निवृत्तिरिति ।

**टुप्**— 'तयोः समुच्चयं वक्ष्यति' ( इति भाष्यमनुपपन्नम् । नहि समुच्चयो वक्ष्यते । अत आह— ) प्रकृतौ उभयोर्निवेश इत्यर्थः ( अङ्गत्वाभिप्रायं समुच्चयवचनं न प्रयोगाभिप्रायमित्यर्थः ) । ननु अयं पाशमन्त्रः ( पाशोन्मोचनस्य ) करणत्वात् ( द्वयोरपि पाशयोः ) पर्यायेण स्यात् । ( तेन उभयोरपि मन्त्रयोः ) नार्थ ऊहेन । ( परिहरति— ) जपोऽयं पाशोन्मोचनकाले, क्रियमाणानुवाद्येव वा ( न तु करणः । असिद्धे मन्त्रयोः समावेशे कथमिदमधिकरणं चिन्तितमत आह— ) अर्थाच्च उत्तरस्मात् ( अधिकरणात् ) उत्तरमधिकरणम् ( इदम् ) । प्रकृतौ विचारितायां विकृतेर्विषयः ।

**विकारो वा तदर्थत्वात् । ११ ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति । विकारो वा स्यात् । एकवचनान्त ऊहेन प्रवर्तते, बहुवचनान्तनिवृत्तिरिति । कुतः ? तदर्थत्वात् । यौ पाशौ विकृतौ वक्तव्यौ, तौ च प्रयोगवचनानुग्रहात् यौगपद्येन, न पर्यायेण । तत्र न गम्यते विशेषः, पाशशब्दे उच्चरिते कस्य पाशस्याभिधानं कस्य नेति । अविशेषात् द्वयोरपि पाशयोः ।

तत्र तयोः कर्मत्वाभिसंबन्धं द्वितीयाद्विवचनमेव शक्नोति वदितुम्, नान्यत् । तस्मात् द्विवचनमूह्येत । बहुवचनमेकवचनं च निवर्तितुमर्हतः इति ।

**अपित्वन्यायसंबन्धात् प्रकृतिवत् परेष्वपि यथार्थं स्यात् । १२ ॥**

**भाष्यम्**— अपितु इति पक्षो व्यावर्त्यते । न बहुवचनं निवर्त्येत । यथा प्रकृतौ बहुवचनान्तं एकवचनान्तं च प्रवृत्तम् । अन्यायसंबन्धात् बहुवचनान्तम् । एवं विकृतावपि एकवचनान्तं द्विवचनान्तमूह्येत । अन्यायसंबन्धाच्च बहुवचनान्तं प्रवर्तेत । यदि प्रकृतौ प्रातिपदिकार्थमात्रं पक्षे प्रकाशितम्, विकृतावपि तत् पक्षे प्रकाशयितव्यम् । अथ बहुवचनान्तेन एकत्वमुक्तम्, इहापि बहुवचनान्तेन द्वित्वं वक्तव्यम् । तस्मात् अभिधानविप्रतिपत्तिः कर्तव्येति ।

**यथार्थं त्वन्यायस्याचोदितत्वात् । १३ ॥**

**भाष्यम्**— तुशब्दस्तमपि पक्षं व्यावर्तयति । नाभिधानविप्रतिपत्तिः कर्तव्येति । किं तर्हि ? यथार्थं द्विवचनमूहितव्यम् । बहुवचनमेकवचनं च निवर्तेयाताम् । तद्धि द्विपाशाभिधायिनः पाशशब्दात् परं बहुवचनमेकवचनं वा न शक्नोति कर्मसंबन्धं वदितुम् । लोको हि शब्दार्थावगमे प्रमाणम् । न च लोके द्वयोरर्थयोः बहुवचनान्त एकवचनान्तो वा प्रवर्तमानो दृश्यते । तस्मादूहेन द्वयोः पाशयोः बहुवचनान्त एकवचनान्तो वा प्रयोक्तव्यः ।

**छन्दसि तु यथादृष्टम् । १४ ॥**

**भाष्यम्**— कथं प्रकृतौ एकस्मिन् पाशे बहुवचनान्त इति चेत्- ( छन्दसि तु यथादृष्टम् ) । यावद्दर्शनं प्रामाण्यं अभ्युपगन्तव्यं छन्दसि, न दर्शनमतिक्रमितव्यम् । यो हि दर्शनमतिक्रम्य अन्यदपि कल्पयेत्, न तेन छान्दसं कृतं स्यात्, न लौकिकम्, नापि लक्षणसिद्धम् ।

यदुक्तं चोदकेन अभिधानविप्रतिपत्तिश्चोद्यते इति, नैतदेवम्, अन्यायस्याचोदितत्वात् । ( त्रयोदशसूत्रावयवोऽयं तत्र न व्याख्यातः, स इदानीं व्याख्यायते । 'यथार्थं तु' इति प्रथमावयवस्तु तत्र व्याख्यातः । एवं च त्रयोदशसूत्रव्याख्यामध्ये चतुर्दशं सूत्रं व्याख्यातमिति विचित्रैव क्वचित् व्याख्यापद्धतिर्भाष्यकाराणाम् । के. ) नहि चोदकः अन्याय्यां अभिधानविप्रतिपत्तिमभिप्रापयति । किं कारणम् ? प्रकृतौ एकत्वात् पाशस्य प्रयुक्तत्वाच्च बहुवचनान्तस्य, प्रत्यक्षा अभिधानविप्रतिपत्तिः । केयमभिधानविप्रतिपत्तिर्नाम ? यत् अन्यथाऽभिधानम्, अन्यथाऽभिधेयम् । न च प्रकृतौ एकस्मिन् बहुवचनान्तं प्रयुक्तं अभिधानविप्रतिपत्तिं कर्तुम्, किं तर्हि ? यत् तेन शक्यते, तत् कर्तुम् । किं चानेन शक्यते ? अस्य सिद्धे प्रयोगे अर्थमन्विच्छन्तो यदवगम्यते तदर्थः शब्दः इत्यवधारयामः । यस्माच्च पाशद्रव्यस्य मोचनेन संबन्धोऽवगम्यते, तदर्थता शब्दस्य भवितुमर्हति, नैकत्वेन बहुत्वेन वा प्रयोजनम् । इह तु विकृतौ पाशस्य च पाशस्य च यौगपद्येन मोचनेन संबन्धो वदितव्यः । बहुवचनं च द्वयोः पाशयोरन्याय्यम् । कर्माभिधाने इह पुनर्न प्रयोगः सिद्धः । किन्तु प्रयोग एव चिन्त्यते कः शब्दः प्रयोक्तव्य इति । तत्र प्रयोगे अस्मदायत्ते किमिति अवाचकं प्रयोक्ष्यामहे विद्यमाने वाचके । न चायं द्वयोः छन्दसि दृष्टो बहुवचनान्तः । सोऽयं मन्त्रः प्रयुज्यमानः अपभ्रंश एव स्यात्, न छान्दसः । न च बहुवचनं द्वित्वप्रत्ययार्थं लभ्यते लौकिके वैदिके वा । न च अभिधित्सिते द्वित्वे द्वयोर्बहुवचनं भवति । तद्यथा देवदत्तयज्ञदत्ताभ्यां कर्तव्यं इति देवदत्तयज्ञदत्तशब्दद्वयादेव द्वित्वं प्राप्तं न विभक्त्या अभिधास्यते, तथापि द्विवचनमेव भवति न बहुवचनम् । तस्मात् विकृतौ ऊहितव्यमिति ।

**सोम**— प्रधानभूतप्रकृत्यूहचिन्ताऽनन्तरं गुणभूतवचनोहचिन्तनात् **संगतिः** । अत्रेदं चिन्त्यम्- पाशमन्त्रस्य पाशोन्मोचनकरणत्वेन द्वयोरपि पाशयोः युगपन्मोचयितुमशक्यत्वेन याज्ञिकैरपि पर्यायेण प्रयोगस्योक्तत्वेन च पर्यायेण प्रयोज्यतया युगपत् पाशद्वयाभिधानस्य अनपेक्षितत्वेन कथं ऊहोदाहरणत्वम् । **न च** क्रियमाणानुवादित्वमेवास्य न करणमन्त्रत्वम्, अतः तन्त्राभिधानसंभवात् ऊहोदाहरणत्वं युक्तमिति **वाच्यम्** । तथा सति द्वादशे क्रियमाणानुवादिनां समुच्चयप्रतिपादनेन प्रकृतौ द्वयोरपि समुच्चयप्रसङ्गात् । **न च** इष्टापत्तिः, अत एव भाष्ये तयोः समुच्चयं वक्ष्यति इत्युक्तं इति **वाच्यम्** । प्रकृतौ उभयोर्निवेशोऽस्ति इत्येतदभिप्रायं भाष्यम्, न तु

एकस्मिन् प्रयोगे उभयोः समुच्चयः इत्यभिप्रायम्, इति टुप्टीकातन्त्ररत्नयोः व्याख्यातत्वेन सूत्रकाराप्रतिपत्तेः। यथायथं ऊहेन अनूहेन च विकल्पेन प्रयोगः इति मूलग्रन्थानुसारेण ग्रन्थकारस्यापि (शास्त्रदीपिकाकारस्यापि) विकल्पस्यैव संमतत्वाच्च। उत्तराधिकरणे सूत्रकारश्चाप्याह 'विप्रतिपत्तौ विकल्पः स्यात्' इति। अत एव च तन्त्ररत्ने द्वितीयचतुर्थपक्षयोः अनुष्ठाने विशेषाभावेऽपि न्याय्यत्वात् चतुर्थपक्ष एव स्वीकृतः इत्युक्तं संगच्छते। अन्यथा द्वितीयपक्षे बहुवचनान्तस्याप्रवृत्त्या एकस्यैव मन्त्रस्य प्रयोगः। चतुर्थपक्षे तु द्वयोः समुच्चयेन प्रयोग इति अनुष्ठानविशेषसंभवात् अयुक्तमिदं तन्त्ररत्नवाक्यं स्यात्। एतेन जपमन्त्रत्वाश्रयणेनापि ऊहोदाहरणत्वं निरस्तम्। तथापि समुच्चयापरिहारात् जपमन्त्रत्वे दृष्टार्थत्वेन अविवक्षितार्थतया सर्वथा ऊहाप्रसङ्गाच्चेति। तस्मात् उदाहरणान्तरमन्वेष्टव्यं इति। **सूत्रार्थस्तु**- अन्यायः अन्यायनिगदो बहुवचनान्तः अविकारेण प्रयोज्यः, एकस्मिन् बहुवचनस्य प्रतिघातदर्शनात् द्वयोश्चैकस्मात् विशेषाभावात्।

**वि**— 'पाशं पाशान् द्वयोः पश्वोरेको मन्त्रोऽथवा द्वयम्। एकैकत्वे द्वयत्वे किमेकस्योहोऽथवा द्वयोः॥, एकेनैव कृतार्थत्वादेको मन्त्रस्तदाऽपि च। अविकारेण बह्वर्थे एकार्थः समाम्नायतः॥, प्राकृतत्वादुभावूह्य एकार्थोऽत्र विवक्षया। बह्वर्थोऽप्यूहनीयोऽत्र द्वयोः शक्तेरक्लृप्तितः॥'

**भाट्ट**— दैक्षे एव पशुपाशप्रमोचने अनुमन्त्रणद्वयमाम्नातम्। 'अदितिः पाशं प्रमुमोक्त्वेतम्' इत्येकवचनान्तमेकम्, 'अदितिः पाशान् प्रमुमोक्त्वेतान्' इति बहुवचनान्तमपरम्। तत्र अन्त्यस्यापि विकल्पेन एकपाशिकायामेव प्रकृतौ निवेश इति वक्ष्यते। तदेतन्मन्त्रद्वयं द्विपाशिकायां विकृतौ अतिदेशेन प्राप्तम्। तत्र एकवचनान्तस्य तावत् प्रकृतौ समवेततया पाशसंख्याप्रकाशकत्वात् द्विवचनेनोहः इत्यविवादमेव। न च प्रतिपाशमस्यावृत्तेः अनूहः शङ्क्यः, अस्य अनुमन्त्रणमन्त्रत्वेन तन्त्रेणैव प्रयोगात्। बहुवचनस्य तु प्रकृतौ असमवेतार्थकत्वेन अदृष्टार्थं साधुत्वार्थं वा प्रयोगात् विकृतौ अनूहः। अस्तु वा लक्षणयाऽपि अर्थप्रकाशकत्वे संभवति साधुत्वाद्यर्थकत्वस्य अन्याय्यत्वात् बहुवचनस्य एकत्वलक्षणार्थकत्वम्, तथापि स्वशक्याश्रयावयवजन्यावयविवृत्तिसंख्यात्वसंबन्धेन प्रकृतौ एकत्वलक्षणाया इव विकृतौ द्वित्वलक्षणाया अपि संभवादनूहः। न चेयं (लक्षणा) निषिद्धा, 'सुपां सुलुक्' इत्यनुशासनेनैव विहितत्वात्। न च 'दृष्टानुविधिश्छन्दसि' इत्यनुशासनात् प्रकृतौ अस्य दृष्टत्वेन एकत्वलक्षकत्वेऽपि विकृतौ अदृष्टत्वेन द्वित्वलक्षकत्वानुपपत्तिः इति **वाच्यम्**। प्रकरणेन प्रकृतौ दृष्टत्ववत् अतिदेशेन विकृतावपि दृष्टत्वात्। इतरथा उत्कर्षेणापि अस्य मन्त्रस्योपपत्तेः एकत्वस्यापि लक्षणाऽनापत्तेः। अतो द्विपाशिकायामपि विकल्पेन द्विवचनवत् बहुवचनप्रयोगः। इति **प्राप्ते**, सत्यं निरुक्तसंबन्धेन द्वित्वलक्षणासंभवः, तथापि सा किम् 'सुपां सु-लुक्' इत्यनुशासनशिष्टतया निरूढलक्षणा वा स्यात्, गङ्गायां घोष इतिवत् सांप्रतिकी वा। **नाद्यः**, अनुशासनस्य 'दृष्टानुविधिश्छन्दसि' इत्यनेन यत्रैव पाठाख्यदर्शनं तद्विषयत्वेनैव नियतत्वात्। अन्यथा वैदिकप्रमाणप्रमितमात्रस्य दृष्टपदार्थत्वे विश्वजिति स्वर्गकामपदे ऊहादौ च छान्दसविधिप्रवृत्त्यापत्तेः। अतश्छान्दसविधेः पठितमात्रविषयत्वात् विकृतौ अतिदिष्टमन्त्रे अप्रवृत्तेः नानुशासनिकनिरूढलक्षणया द्वित्वोपस्थितिः। **नान्त्यः**, अनुशासनाविषयीभूतेऽपि बहुवचनस्य लक्षणाऽङ्गीकारे अनुशासनवैयर्थ्यापत्तेः। अस्तु वा सा, तथापि प्रकृतौ यथा वृत्त्या एकत्वोपस्थितिः, न तया विकृतौ द्वित्वोपस्थितिः, इति प्राकृतवृत्तिबाधात्तद्द्वारकस्य बहुवचनस्यापि बाधे द्वित्वप्रकाशनरूपकार्यानुरोधेन शक्तद्विवचनप्रक्षेपावश्यम्भावः, 'स्वाधीने शब्दप्रयोगे किमित्यवाचकं पदं प्रयोक्ष्यामहे' इति न्यायात्। अत एव द्वित्वोपस्थित्यर्थं अङ्गुलिविन्यासोऽपि अनाशङ्क्यः, मन्त्रपदान्तराणामपि अर्थबोधकत्वानापत्तेः। अत एव बहुपाशकस्थले बहुवचनप्रयोगेऽपि न तस्य मन्त्रत्वम्। प्रकृतौ निरूढलक्षणया एकत्वप्रकाशके एव तस्मिन् मन्त्रत्वात्। इह शक्त्या बहुत्वप्रकाशके तस्मिन् मन्त्रत्वानुपपत्तेः।

**मण्डन**—‘ ऊह्यौ विकृत्यां खलु पाशमन्त्रौ । ’

**शंकर**—‘ ऊह्यौ पाशमनू द्विवत् । ’

* यत्र च अन्यत्राभिधानविप्रतिपत्तिः तत्र **पाशन्यायः**। यत्र तु एक एव मन्त्रः तत्र पत्नीन्यायः ‘पवित्रे स्थः’ इति यथा । **टुप्**. ९।३।६।२०. * अध्रिगुप्रैषे मेधपतये मेधपतिभ्यां इत्यत्र पतिशब्दो यजमानपर एव, न देवतापरः, न च तस्यैकत्वेन द्विवचनानुपपत्तिः, **पाशन्यायेन** तदुपपत्तेः, इति प्राप्ते । **भाट्ट**. ९।३।१२, * दर्शपूर्णमासयोः ‘पत्नीं संनह्य’ इत्येकवचनान्तो मन्त्रः द्विबहुपत्नीकप्रयोगयोरपि अविकारेणैव प्रयोक्तव्यः । पाशन्यायेन प्रातिपदिकादिलिङ्गस्य सर्वविषयत्वोपपत्तेः एकवचनानुरोधेन संकोचायोगात् । ९।३।६. * ‘पत्नीं संनह्य’ इत्यत्र साधारणे तूपदेशे सर्वप्रयोगसमवेतार्थतया पत्नीपदे प्रातिपदिकं कर्मकारकविभक्तिश्च इत्युभयमेव पाशन्यायेन विवक्षितम् । एकवचनं तु अदृष्टार्थम् । तेन अनेकपत्नीकत्वेऽपि नोहः । **वि**. ९।३।६, * परमार्थतस्तु सवनीयपशूनां अग्नीषोमीयविकृतित्वात् अस्त्येव लिङ्गवचनयोः पाशन्यायेन ऊहः । ९।३।८. * यत्र ग्रहमित्यादौ द्वयोरपि प्राप्तिसंभवः एकवचनस्यैव च प्रातिपदिकार्थगतसंख्यालक्षकत्वे **पाशन्यायादिरूपनियामकास्तिता** तत्र नोभयत्र लक्षणा । **कौ**. ३।१।७।१४ पृ. १८३.

* **पाशमन्त्रो** द्विविधः शाखाभेदेन, ज्योतिष्टोमगताग्नीषोमीयपशौ एकवचनान्तो बहुवचनान्तश्च । द्विपशुकविकृतौ च द्वावप्यतिदेष्टव्यौ प्रत्येकं च द्विवचनान्तत्वेन विपरिणामः । **वि**. ९।३।४. * **पाशमन्त्रस्य** ( दैक्ष— ) प्रकरणे बहुत्वं न कथञ्चित् प्रकारेणास्ति इत्यविवक्षा युक्ता । **वा**. ३।५।८।२४. * पाशमन्त्रस्य बहुवचनान्तस्य प्रकृतौ निवेशः । **भा**. ९।३।५।१६. * ‘पाशान्’ इति बहुवचनान्तस्य मन्त्रस्य प्रकृताविव एकपाशिकायां विकृतावपि लक्षणयैव एकत्वप्रकाशकत्वान्नोहः । **भाट्ट**. ९।३।१. * **पाशमन्त्रयोरेकवचनान्तबहुवचनान्तयोः** द्विवचनान्तेनोहः द्विपशुकायां विकृतौ । ९।३।४। १०–१४.

* **पाशुकं** तन्त्रं पुरोडाशे प्रसज्यते । **भा**. १२।१।१। ६, * पाशुकं तन्त्रं प्रातःसवनीयपुरोडाशेषु प्रसज्यते न विकल्पते । १२।२।१२।३०–३२. * पाशुकं तन्त्रं सूक्तवाकस्य प्रैषेण वैशेषिकेण नियतं सवनीयपुरोडाशेषु । **भा**. १२।२।१५।३५. * **पाशुकः** सूक्तवाकः उत्कृष्यते, तेन देवतापदानामन्वयात् पशुपुरोडाशदैवतानामपि उत्कर्षः । ११।३।१६।५५. * **पाशुकानामनुयाजानामुत्कर्षोऽयम्** ‘आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति’ इति । न पुरोडाशानुयाजानाम् । **भा**. १२।२।१२।३२. * **पाशुकेषु** चातुर्मास्येषु परिधौ यूपपरिध्युभयधर्माणामविरुद्धानामनुष्ठानम् । १२।२।१०।२६. * पाशुकेषु चातुर्मास्येषु परिधौ स्वधर्मविरुद्धयूपधर्मा नानुष्ठेयाः । १२।२।११। २७–२९. * पाशुकेषु सर्वेष्वङ्गेषु प्रत्यभिघारणम् । **संकर्ष**. २।२।१७ **मीको**. पृ. १५९ ‘अङ्गेषु पाशुकेषु०’ इत्यत्र द्रष्टव्यम् ।

## ⧗ पाशुकाज्यभागन्यायः ।

आज्यभागप्रतिषेधस्य नित्यानुवादत्वेन पशौ आज्यभागप्रतिषेधस्य अर्थवादत्वं सोमे ॥

**अपूर्वे चार्थवादः स्यात् । १०।८।२।५॥**

**भाष्यम्**— स्तो दर्शपूर्णमासौ । तत्र आज्यभागौ प्रकृत्य समामनन्ति ‘न तौ पशौ करोति, न सोमे’ इति । तत्रायमर्थः सांशयिकः किं पर्युदासः, उत प्रतिषेधः, अथवा अर्थवाद इति । किं प्राप्तम् ? यथा पूर्वत्र ( नानुयाजेषु इत्यत्र ) पर्युदासः, तथा तावत् पर्युदासो नावकल्पते । कथम् ? दर्शपूर्णमासयोरेतत् श्रूयते । तत्र कः प्रसङ्गो यत् सोमे स्यात् । यदि सोमः पर्युदस्येत संबन्ध एव न स्यात् ‘सोमवर्जितयोर्दर्शपूर्णमासयोः’ इति। तस्मात् चोदकप्राप्तयोः सोमे प्रतिषेधः । ननु अपूर्वः सोमः । नैव तत्र चोदकेन आज्यभागौ प्राप्नुतः । उच्यते। लक्षणाऽर्थः सोमशब्दो भविष्यति, सौमिकेषु दीक्षणीयादिषु पशुबन्धमात्रे च न कर्तव्यौ इति । **एवं प्राप्ते, ब्रूमः** । अपूर्वे चार्थवादः स्यात् इति । अपूर्वे सोमे नैव आज्यभागौ प्राप्नुतः, तस्मान्न तत्र प्रतिषेधः । अथ दीक्षणीयादीन् सोमशब्दो लक्षयति, तत्र अयमेव दोषो भवति, यत् लक्षणा । अपिच प्राप्तप्रतिषिद्धत्वात् दीक्षणीयाऽऽदिषु विकल्पः प्राप्नोति । विकल्पश्च अन्याय्य इत्युक्तम् । तस्मात् संभवति अस्मिन् न विकल्पो भविष्यति । संभवति चायम्

'तौ न पशौ करोति' इत्यस्यार्थवादत्वेन। कः पुनरत्र प्रशंसाऽर्थः? सोमे आज्यभागौ न क्रियेते, पशावपि (न क्रियेते) इति। तद्यथा 'आदित्यो यूपः' इति अञ्जने कृते तेजःसामान्यादुच्यते, एवमिहापि पशौ आज्यभागौ कथं न क्रियेयातामिति, तदर्था प्रशंसेति।

टुप्— (भाष्यकारेण 'न सोमे' इत्यत्र पर्युदासस्तावन्न घटते इत्युक्तम्, तत् 'न पशौ' इति आद्येऽपि तुल्यमिति दर्शयन् उपपादयति—) 'न तौ पशौ करोति, न सोमे' इति आज्यभागयोः पर्युदासो न घटते। यदि पशुप्रकरणे इदं श्रूयेत (तथा सति) चोदकेन प्राप्तौ पर्युदस्येयाताम् (आज्यभागवर्जं प्रकृतिवत् कुर्यादिति)। इह तु दर्शपूर्णमासप्रकरणे इदं वर्तते। तत्र यदि इयं वचनव्यक्तिः, 'आज्यभागवर्जं दर्शपूर्णमासौ कुर्यात्' इति, ततः (आज्यभागयोः) विधानमनर्थकम् (स्यात्) 'पशौ' इत्ययं च प्रमादपाठः (स्यात्)। अथोच्येत न आज्यभागाभ्यां नञः संबन्धः (अनाज्यभागौ दर्शपूर्णमासौ इति), किं तर्हि? पशुशब्देन 'यत् दर्शपूर्णमासयोः (आज्यभागौ) कुर्यात्, तत् अपशौ' पशुवर्जितयोः इति। एतदपि न (युक्तम्,) अपशुत्वात् दर्शपूर्णमासयोः। तस्मात् आज्यभागयोः (चोदकप्राप्तयोः) पशौ प्रतिषेधः। ततश्च (पशौ आज्यभागयोः) विकल्पः इति स्थितम्। (पूर्वपक्षस्तु सोमेऽपि दीक्षणीयाऽऽदिषु आज्यभागयोः प्रतिषेध इति। सिद्धान्तमाह—) 'आनर्थक्यात् तदङ्गेषु' इति न्यायोऽत्र नास्ति सोमे येन प्रतिषेधः स्यात्। वाजपेयस्य इति षष्ठ्या (सामान्येन) संबन्धी उपात्तः। तस्य (च) सप्तदशारत्निता विधीयते। संबन्धमात्रं च अङ्गाङ्गस्यापि अस्त्येव इति यूपे निवेशः (युक्तः)। इह तु आधारत्वेन सोमः श्रूयते (न संबन्धिमात्रतया)। न च परम्परासंबन्धे अस्ति आधारत्वम्, इति साक्षादेवायम् (सोमसंबन्धः) प्रतीयते। स च अप्राप्तः (इति प्रतिषेधासंभवः) तस्मात् अर्थवादार्थं सोमग्रहणम्।

सोम— पूर्वत्र पर्युदाससंभवात् विकल्पावहप्रतिषेधनिरासेऽपि इह तदसंभवात् प्रतिषेध एव न्याय्यः इत्युक्तेः संगतिः। सूत्रार्थस्तु- अपूर्वे प्रकृतिरहिते सोमे श्रूयमाणः 'न सोमेऽध्वरे' इत्ययमर्थवादः स्यात् इति।

वि— 'न सोमेऽध्वर इत्युक्तौ निषेधः पर्युदस्यते (वा)। उतार्थवादो वा, ऽऽद्यः स्यादसमस्तपदोक्तितः॥ सोमे प्रसक्तिरङ्गेष्टावविकल्पाय मध्यमः। नैवास्त्यत्र समासस्य नियमः पाणिनेर्मते॥, पुरैतस्मात् सोमयाग आज्यभागाप्रसक्तितः। न पर्युदासः किन्त्वर्थवादो दृष्टान्तवर्णनात्॥'

भाट्ट— दर्शपूर्णमासयोराज्यभागौ प्रकृत्य 'न तौ पशौ करोति न सोमे' इति श्रुतम्। तत्र पशुवाक्ये तावत् पूर्वाधिकरणोक्तरीत्या भाष्यकार- (शबराचार्य-) स्वारस्याच्च यद्यपि पर्युदास इत्येव प्रतीयते, तथापि न तावत् नञ्पशुपदयोः अन्वयाङ्गीकारेण 'अपशौ करोति' इत्येवंरूपः, तथात्वे दर्शपूर्णमासाङ्गताबोधकप्रकरणकल्प्यवाक्यैकवाक्यताऽऽपत्तेः। तत्र च दर्शपूर्णमासयोरेव उद्देश्यत्वात्, तयोश्च अपशुत्वादेव पर्युदासवैयर्थ्यात्। न हि तेन पशौ अतिदेशनिवृत्तिः सिध्यति। पशुप्रकरणस्थाज्यभागप्रापकातिदेशविधिनैकवाक्यतामङ्गीकृत्य आज्यभागव्यतिरिक्तं प्रकृतिवत् इत्येवंविधः पर्युदासस्तु अतिदेशविधेर्दूरस्थत्वात् दर्शपूर्णमासप्रकरणस्थपर्युदासेन एकवाक्यताऽनुपपत्तेः अयुक्तः। वस्तुतस्तु न सर्वत्र पर्युदासविधौ पदैकवाक्यता, तथात्वे आख्यातद्वयानन्वयापत्तेः। अपितु आख्यातद्वयसत्त्वे वाक्यैकवाक्यताऽपि। अतश्च प्रकृते दूरस्थत्वेऽपि वाक्यैकवाक्यत्वोपपत्तेः नायुक्तः पर्युदासः। न च 'आज्यभागव्यतिरिक्तं पशौ कुर्यात्' इतिवाक्यस्य विशेष्यविशेषसाकाङ्क्षतया स्वार्थबोधे समाप्त्यभावः, विशेष्यविशेषस्य प्रमाणान्तरावगमोपपत्तौ अनुगतधर्मावच्छिन्नं आदाय शाब्दबोधोपपत्तेः, इतरथा वाक्यमात्रस्य निराकाङ्क्षताऽनापत्तेश्च। अतोऽत्र पर्युदासखण्डनमेवं कार्यम्। विकल्पभिया खलु पर्युदास इष्टः। स चात्र पर्युदासपक्षेऽपि आवश्यकः इति व्यर्थं पर्युदासाङ्गीकरणम्। तथाहि, पशुप्रकरणे 'अग्नय आज्यस्यावदीयमानस्यानुब्रूहि, सोमायाज्यस्यावदीयमानस्यानुब्रूहि, अग्नय आज्यं प्रस्थितं प्रेष्य, सोमायाज्यं प्रस्थितं प्रेष्य, होता यक्षदग्निराज्यस्य जुषतां हविर्होतर्यज' इत्यादि-

प्रैषाणामाम्नानात्, तेषां च लिङ्गात् आज्यभागमात्राङ्गत्वात् आज्यभागयोरपि करणप्रतीतेः विहितप्रतिषिद्धत्वात् विकल्प इति। अतः सिद्धम् 'न तौ पशौ करोति' इत्ययं प्रतिषेधः इति। तदर्थवादश्च 'न सोमे' इति। यथा सोमे आज्यभागौ अप्रसिद्धौ तथा पशावपि इति निन्दा। नहि अयं सोमे आज्यभागयोर्निषेधः पर्युदासो वा संभवति, सोमस्यापूर्वत्वेन तत्र आज्यभागप्रसिद्ध्यभावात्। न च सोमाङ्गभूतदीक्षणीयाऽऽदिषु प्रसक्ताज्यभागपर्युदासः, तथात्वे तत एव पशावपि तत्सिद्धेः 'न तौ पशौ' इत्यस्य वैयर्थ्यात्। पूर्वप्रतिषेधैकवाक्यत्वे संभवति वाक्यभेदस्य अन्याय्यत्वाच्च। अतोऽत्र आज्यभागकर्तव्यतामात्रप्रतियोगिकः अभावः सोमे प्राप्त एव निन्दाऽर्थमनूद्यते। प्रतियोगी च दर्शपूर्णमासादौ प्रसिद्धः, इति सिद्धमस्य 'नान्तरिक्षे न दिवि' इतिवत् नित्यानुवादत्वम्।

**मण्डन**— 'न सोमे इति सुश्रुतिः।' सुश्रुतिः अर्थवादः। (सुस्तुतिः इति पाठस्तु युक्तः।)

**शंकर**— 'न तौ पशाविति न सा।' (सा पर्युदासता)। २. 'न सौम्य इति तु स्तुतिः।' ३.

* प्रकृतितः प्राप्तानामतिग्राह्याणां विकृत्युक्थ्ये प्रतिषेधे **पाशुकाज्यभागन्यायेन** विकल्पापत्तेः पर्युदासपक्ष एवाश्रयणीयः इति पूर्वपक्षः। **संकर्ष.** ३।३।४.

* **पाशुकतन्त्रस्यैव** सवनीयपुरोडाशेषु प्रसङ्गः। १२।२।१२।३०–३२. 'सवनीयादिन्यायः' इत्यत्र द्रष्टव्यम्।

* **पाशुकप्रयोगविधिविहितानां** समिष्टयजुःपत्नीसंयाजानां क्रमः व्यवधायकाभावविशिष्टप्रकृतिदृष्टपौर्वापर्यात्सिध्यति। **भाट्ट.** ५।१।१५.

* **पाशुकवाग्यमस्य** पौरोडाशिकहविष्कृदाह्वानकाले विसर्गः। ११।३।८।१८. **मीको.** पृ. १२२ 'अग्नीषोमीये पशौ वाग्विसर्गः' इत्यत्र द्रष्टव्यम्।

⌛ **पाषाणेष्टकान्यायः**। यथा इष्टकापेक्षया पाषाणस्यातिकठिनत्वम्, तथा प्रकृतेऽपि। अयं न्यायः वैषम्याधिक्यविषयक(अश्मलोष्ट)न्यायापेक्षया स्वल्पवैषम्यविवक्षायां बोध्यः। **साहस्री.** ११२.

* 'पिकमालभेत' इत्यत्र पिकः कोकिलः, अनार्यप्रसिद्धेः। **वि.** १।३।६.

⌛ **पिकनेमाधिकरणम्**। आर्यम्लेच्छाधिकरणम्। क्वचित् म्लेच्छप्रसिद्धार्थस्य प्रामाण्यम्॥

**चोदितं तु प्रतीयेताविरोधात् प्रमाणेन। १।३।५।१०॥**

**भाष्यम्**— अथ यान् शब्दान् आर्या न कस्मिंश्चिदर्थे आचरन्ति, म्लेच्छास्तु कस्मिंश्चित् प्रयुञ्जते, यथा पिक-नेम-सत-तामरसादिशब्दाः। तेषु संदेहः किं निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः कल्पयितव्यः, उत यत्र म्लेच्छा आचरन्ति स शब्दार्थ इति। शिष्टाचारस्य प्रामाण्यमुक्तम्, नाशिष्टस्मृतेः। तस्मान्निगमादिवशेन अर्थकल्पना। निगमादीनां चैवमर्थवत्ता भविष्यति। अनभियोगश्च शब्दार्थेषु अशिष्टानाम्, अभियोगश्चेतरेषाम्। तस्माद्धातुतोऽर्थः कल्पयितव्यः इति। **एवं प्राप्ते, ब्रूमः।** चोदितमशिष्टैरपि शिष्टानवगतं प्रतीयेत, यत् प्रमाणेनाविरुद्धं तदवगम्यमानं न न्याय्यं त्यक्तुम्। यत्तु शिष्टाचारः प्रमाणमिति, तत् प्रत्यक्षानवगतेऽर्थे। यत्तु अभियुक्ताः शब्दार्थेषु शिष्टा इति। तत्रोच्यते। अभियुक्ततराः पक्षिणां पोषणे बन्धने च म्लेच्छाः। यत्तु निगमनिरुक्तव्याकरणानामर्थवत्तेति, तत्रैषामर्थवत्ता भविष्यति, न यत्र म्लेच्छैरपि अवगतः शब्दार्थः। अपि च निगमादिभिरर्थे कल्प्यमाने अव्यवस्थितः शब्दार्थो भवेत्, तत्रानिश्चयः स्यात्। तस्मात् पिक इति कोकिलो ग्राह्यः, नेमोऽर्धम्, तामरसं पद्मम्, सत इति दारुमयं पात्रम्, परिमण्डलं शतच्छिद्रम्।

**वा**— '**ये शब्दा न प्रसिद्धाः स्युरार्यावर्तनिवासिनाम्। तेषां म्लेच्छप्रसिद्धोऽर्थो ग्राह्यो नेति विचिन्त्यते॥**' तथा '**निरुक्तव्याक्रियाद्वारा प्रसिद्धिः किं बलीयसी। समुदायप्रसिद्धिर्वा म्लेच्छस्यैवाथ वा भवेत्॥**' म्लेच्छप्रसिद्धिर्व्यवहर्तृदौर्बल्येऽपि समुदायरूढिबलेन स्वरूपगतेन ज्यायसी प्रतिभाति। '**तत्र प्रयोक्तृदौर्बल्यस्वरूपबलवत्तयोः। किं तु (नु) न्याय्यतरं युक्तं ज्ञातुमित्यत्र चिन्त्यते॥**'

तथा, ' निरुक्तव्याक्रियाद्वारा किं शास्त्रस्था बलीयसी। किं वाऽवयवविक्षेपजननात् सैव दुर्बला॥ एवं नानोपपत्तित्वात् संदेहे, तावदुच्यते। निरुक्तव्याक्रियाद्वारा प्रतिपत्तिर्बलीयसी ॥ शास्त्रस्था वेत्यनेनासौ कल्प्याऽपि हि बलीयसी। सन्मूलस्य प्रमाणत्वं साध्यस्यापि वरं श्रितम् ॥ न सिद्धमप्यसन्मूलमाश्रयेण हि दूषितम्। कथं वेदगतैः शब्दैर्म्लेच्छस्थोऽर्थः प्रतीयते ॥ येषां दर्शनमात्रेऽपि वेद एव न पठ्यते। संभाषाऽपि च न म्लेच्छैः सहार्यावर्तवासिनाम् ॥ तत्र तेषु प्रसिद्धोऽर्थः कथमार्यैः प्रतीयताम्। एवं च सति यस्यापि प्रसिद्धिर्नोपलभ्यते ॥ तस्यापि म्लेच्छदेशेषु सर्वेष्वन्वेष्यतां व्रजेत्। ततश्च निगमादीनां न कश्चिद्विषयो भवेत् ॥ अनन्तम्लेच्छदेशांश्च कः सर्वानुपलप्स्यते। य एव स्यादनन्विष्टस्तत्र शङ्का प्रसज्यते ॥ अनन्तेषु हि देशेषु कः सिद्धः क्वेति गम्यताम्। निगमादिवशाच्चाद्य धातुतोऽर्थः प्रकल्पितः ॥ द्वित्रेष्वहःसु बाध्येत प्रयोगान्म्लेच्छचोदितात्। म्लेच्छाचाराप्रमाणत्वमथ त्वध्यवसीयते ॥ आर्यावर्ते ततः शक्या प्रसिद्ध्यन्वेषणक्रिया। तस्याश्चाल्पेन कालेन सदसद्भावनिर्णयः ॥ ततश्च निगमादीनां सुज्ञातः स्वार्थगोचरः। तस्मात्तदर्थवत्त्वाय म्लेच्छाचाराप्रमाणता ॥ धर्मे चानादरात्तेषां भ्रश्येतार्थोऽपि शब्दवत्। न चास्ति संस्कृतः शब्दः कश्चिन्म्लेच्छापभाषणे ॥ संस्कृतप्रतिरूपा हि तद्भाषाऽर्थान्तरे स्थिता। न चावाचकरूपाणां वाचकत्वं कथं चन ॥ आर्याश्च म्लेच्छभाषाभ्यः कल्पयन्तः स्वकं पदम्। पदान्तराक्षरोपेतं कल्पयन्ति कदा चन। न्यूनाक्षरं कदा चिच्च प्रक्षिपन्त्यधिकाक्षरम् ॥ ' तद्यथा द्राविडादिभाषायामेव तावद् व्यञ्जनान्तभाषापदेषु स्वरान्तविभक्तिस्त्रीप्रत्ययादिकल्पनाभिः स्वभाषानुरूपानर्थान् प्रतिपद्यमाना दृश्यन्ते। तद् यथा ' ओदनं चोर् ' इत्युक्ते चोरपदवाच्यं कल्पयन्ति। 'पन्थानमतर' इत्युक्ते अतरः इति कल्पयित्वा आहुः सत्यं दुस्तरत्वादतरः एव पन्था इति। तथा पाप्शब्दं पकारान्तं सर्पवचनमकारान्तं कल्पयित्वा सत्यं पाप एवासाविति वदन्ति। एवं माल्शब्दं स्त्रीवचनं मालेति कल्पयित्वा सत्यमित्याहुः। वैर्शब्दं च रेफान्तमुदरवचनं वैरिशब्देन प्रत्याम्नायं वदन्ति । सत्यं सर्वस्य क्षुधितस्याकार्ये प्रवर्तनादुदरं वैरिकार्ये प्रवर्तते इति। तद्यदा द्रविडादिभाषायामीदृशी स्वच्छन्दकल्पना, तदा पारसीबर्बरयवनरौमकादिभाषासु किं विकल्प्य किं प्रतिपत्स्यन्ते इति न विद्मः। ' तस्मान्म्लेच्छप्रसिद्धं यत् पदमार्यैर्विकल्प्यते। न कश्चित्तत्र विश्वासो युक्तः पदपदार्थयोः ॥ निरुक्तव्याक्रियाद्वारा यस्त्वर्थः परिगम्यते । पिकनेमादिशब्दानां स एवार्थो भविष्यति ॥ ' इति प्राप्तम्।

' एवं प्राप्ते, वदामोऽत्र पदं निपुणदृष्टिभिः। विज्ञायेताविनष्टं यत् तत् तदर्थं भविष्यति ॥ ' देशभाषापभ्रंशपदानि हि विप्लुतिभूयिष्ठानि न शक्यन्ते विवेक्तुम्। ' यत्तु वेदतदङ्गेषु पदं दृष्टमविप्लुतम्। म्लेच्छभाषासु तद्रूपमर्थे क्व चन चोदितम् ॥ तत्तथैव प्रतीयेत प्रमाणेनाविरोधतः। पिकनेमादि तद्ध्येवं निपुणैरवधारितम् ॥ चोदितं ह्युपदिष्टं वा प्रयुक्तं वा क्रियागतम्। म्लेच्छैरवधृतं पश्चादार्यैर्द्वैभाषिकैः क्वचित् ॥ तादृशं तु प्रतीयेत प्रामाण्येनेति निश्चितम्। न तद्धर्मप्रमाणेन वेदाख्येन विरुध्यते ॥ ' अपिच ' पदार्थपदसंबन्धज्ञानापेक्षप्रवर्तनात्। प्रसिद्धिर्यत्र तत्रस्था वाक्यार्थायानुगम्यते ॥ पिकादिशब्दवाच्यं वा म्लेच्छैर्यदवधारितम्। अविरोधात् प्रमाणेन तद्विद्यावेदनोदितम् ॥ चोदितं वा प्रमाणेन वेदेनेत्यस्य संगतिः। आर्यैः सहाविरुद्धत्वात् तस्य तैरप्यपेक्षणात् ॥ ' यथैव क्रोमादयः पश्वयवा वेदे चोदिताः सन्तः अध्वर्य्वादिभिः स्वयमज्ञायमानार्थत्वात् नित्यं ये प्राणिवधाभियुक्ताः, तेभ्य एवावधार्य विनियुज्यन्ते, यथा च निषादेष्ट्याम्, 'कूटं दक्षिणा' इति विहिते ये एवैतेन व्यवहरन्ति, तेभ्य एवार्थतत्त्वं ज्ञात्वा दीयते, तथेह पिकनेमतामरसादिचोदितं सत् वेदादार्यावर्तनिवासिभ्यश्चाप्रतीयमानं म्लेच्छेभ्योऽपि प्रतीयेत लोकावगम्यनित्यशब्दार्थाभ्युपगमाविरोधात्

स्वेनैव प्रमाणेन प्रतीयेतेति । यत्तु शास्त्रबलीयस्त्वात् एतदग्रहणमिति । तन्न । अविरोधे दुर्बलस्यापि ग्राह्यत्वात् यदेवात्यन्तं प्रमाणाभासमेव मृगतृष्णाज्ञानवत् भवति तत् सर्वदैव परिहर्तव्यम्, यत् पुनर्बलवद्विरोधापेक्षमप्रमाणं भवति, तत् विरोधाभावात् प्रमाणमेवेत्यवधारणीयम्। न चैवमादि विरुध्यते, विपरीतार्थप्रसिद्ध्यन्तराभावात्। अत एव वैदिकवाक्यार्थस्वविषयप्रयुक्तपदार्थमात्राभियुक्ततरार्यप्रसिद्धिबलीयस्त्वाश्रयणम्। '**प्रसिद्धौ विद्यमानायां तद्बलीयस्त्वमिष्यते। असत्यां तु बलीयस्त्वं वन्ध्यासुतबलोपमम्॥**' अष्टकादिषु हि अदृष्टार्थेषु समूलकेषु स्मर्यमाणेषु गवादिपदस्वरूपतदर्थज्ञानेषु च सत्यं आर्याणामाप्ततरत्वाभियुक्ततरत्वे विद्येते। पिकादिषु तु आर्यबलेनैव अवगतस्वरूपमात्रवाचकत्वेषु वाच्यविशेषज्ञानरहितत्वेन आर्येषु निर्व्यापारीभूतेषु पदवत् दृष्टार्थप्रतिपत्त्यर्थानादिशब्दप्रयोगलब्धसंबन्धप्रसिद्धिम्लेच्छप्रयोगेभ्यः अर्थनिर्णये सति, न किंचिद्विरुद्धम्, आकाङ्क्षितपदार्थज्ञानं च सेत्स्यति। निगमनिरुक्तव्याकरणैरपि न चैवमादीनामर्थान्तरं किञ्चिदुदाहृतम्, यत् प्राप्य कृतार्थाः सन्त इतरेषां प्रसिद्धिं परित्यजेम। '**काल्पनिक्याः प्रसिद्धेश्च या क्लृप्ता सा बलीयसी। तस्यां सत्यां हि नात्मानमितरा लब्धुमर्हति॥ आश्रयाणां च दौर्बल्यं धर्मं प्रति निरूपितम्। दृष्टार्थव्यवहारेषु कृष्यादाविव तुल्यताम्॥ तस्माद्यथैव सेवाऽऽदौ गृहादिषु च कौशलम्। म्लेच्छानामधिकं तद्वदभिधेयार्थनिर्णये॥**' शब्दस्वरूपं तावत्तेऽनभियुक्तत्वात् चिरविनष्टाविनष्टत्वेन न विविञ्चीरन्। यस्तु कथमप्यविनष्ट एव शब्दस्तेषामपि प्रयोगविषयमापन्नः, तस्य च आर्यवदेव अनादिवृद्धव्यवहारपरम्परया अर्थं जानन्ति तत् किं तेषां निराकर्तुं शक्यते। '**पत्त्रोर्णवारबाणादि यच्च तद्देशसंभवम्। तैरेवाकथितं नाम तच्च को वेदितुं क्षमः॥**' तस्मान्न तेषां व्यवहारप्रसिद्धौ दौर्बल्यम्। '**निरुक्तादेश्च सिद्धेऽर्थे तन्निमित्तादिमात्रके। व्यापारो न च पूर्वार्धप्रतिपत्तौ स्वरूपतः॥**' निरुक्तेन तावल्लोकव्यवहारप्रसिद्धान्येव पदानि तद्गतक्रियानिमित्तशब्दप्रयोगभाक्त्वेन निरुच्यन्ते। व्याकरणेनापि प्रसिद्धार्थानामेव अविनष्टस्वरूपान्वाख्यानमात्रं क्रियते, तत्र प्रासङ्गिकमेव कियदप्यर्थनिरूपणम्। तानि स्वविषयादन्यत्र दुर्बलानामपि न बाधकानि। '**यस्य चान्विष्यमाणाऽपि प्रसिद्धिर्न भविष्यति। कामं प्रदर्शितद्वारा तत्र कल्प्याऽऽश्रयिष्यते॥ विक्षिप्ता बहुरूपा च या संदेहप्रदायिनी। अनन्योपायतामात्रे क्वचिदेव ग्रहीष्यते॥ न चार्थप्रत्ययानङ्गनिरुक्ताद्यप्यनर्थकम्। षडङ्गवेदविज्ञानपूर्वकर्मक्रियाफलात्॥**' यथा महाभारतनिर्वचनान्वाख्याने द्वैपायनेनोक्तम् '**महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते। निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते॥**' इत्येवं निरुक्तव्याकरणाद्यङ्गानुगृहीतवेदाध्ययनजनितकर्मावबोधपूर्वकानुष्ठानायत्तत्वात् स्वर्गादिसिद्ध्यर्थापूर्वसिद्धेः अव्युत्पन्नरूपे च ज्ञातेऽपि निरुक्तावगतधात्वर्थपूर्वकनामार्थज्ञानद्वारवाक्यार्थप्रतिपत्तिपूर्वकानुष्ठानादेव अदृष्टसिद्धिरिति म्लेच्छसिद्धपिकाद्यर्थग्रहणेऽपि निरुक्तादीनामर्थवत्ता सिद्धेति।

शा— तत्र पूर्वः पक्षः '**म्लेच्छेषु हि पदार्थानां विप्लुतिर्भूयसी यतः। ततस्तेषु प्रसिद्धेऽर्थे न विस्रम्भः कथं चन॥**' सिद्धान्तस्तु '**पदानि तावदेतानि वेदादिष्वेव दर्शनात्। अविप्लुतानि, तेषां च भाव्यमर्थेन केन चित्॥ नित्येनार्येष्वसौ नास्ति यतो म्लेच्छेषु विप्लुतिः (कल्पनीया)। म्लेच्छप्रसिद्ध एवार्थस्तेषामिति हि निर्णयः॥**' ६.

**सोम—** पूर्वोक्तस्य म्लेच्छप्रसिद्ध्यप्रामाण्यस्यापवादात् **संगतिः। सूत्रार्थस्तु—** म्लेच्छैः चोदितमपि प्रतीयेत, ग्राह्यं स्यादिति यावत् प्रमाणेन आर्यव्यवहारेणाविरोधादिति।

**वि—** 'कल्प्यः पिकादिशब्दार्थो ग्राह्यो वा म्लेच्छरूढितः।, कल्प्य आर्येष्वसिद्धत्वादनार्याणामनादरात्॥, ग्राह्या म्लेच्छप्रसिद्धिस्तु विरोधादर्शने सति। पिकनेमादिशब्दानां कोकिलाद्यर्थता ततः॥' तस्मात् अनार्यप्रसिद्ध्या पिकः कोकिलः, नेमशब्दः अर्धवाची, तामरसशब्दः

पद्मवाची, सतशब्दः शतच्छिद्रघटवाची इति द्रष्टव्यम् । **गुरुमतमाह**— ' अर्थाबोधादप्रमाणं पिकालम्भनचोदना । , मैवं म्लेच्छप्रसिद्ध्याऽपि तद्बोधादविरुद्धया ॥ ' इति । ६.

**भाट्ट**— यत्र पिकनेमसततामरसादिशब्दानां नार्याणामर्थविशेषे प्रसिद्धिः, म्लेच्छेषु तु पिकः कोकिलः, नेमं अर्धम्, सतं बृहत् परिमण्डलं शतच्छिद्रं दारुपात्रम्, तामरसं कमलमित्येवं प्रसिद्धिः, तत्र तत्प्रसिद्धार्थस्यैव ग्रहणम्, न तु निगमनिरुक्तादिना तत्कल्पनम् । न च म्लेच्छेषु शब्दार्थयोर्विप्लुतिदर्शनात् तत्प्रसिद्धेरविस्रम्भणीयता, पिकादिशब्दानां वेदे एव दृश्यमानत्वेन अविप्लुतत्वात् । अतश्च तेषां वाच्याकाङ्क्षायां तत्प्रसिद्धेरपि क्लृप्ततया शक्तिग्राहकत्वम् । अत एव निगमादिप्रसिद्धेरपि आर्यप्रसिद्धित्वेन प्राबल्येऽपि कल्प्यत्वेन दौर्बल्यम्, म्लेच्छप्रसिद्धेश्च म्लेच्छप्रसिद्धित्वेन दौर्बल्येऽपि क्लृप्तत्वेन प्राबल्यम्, प्रमाणबलाबलापेक्षया प्रमेयबलाबलबलीयस्त्वस्य स्थापितत्वात् । अत एव नात्र विशेषेण पूर्वः पक्षः कथितः ।

**मण्डन**— ' म्लेच्छप्रयोगात् पिकनेमशक्तिः । ' १०.

**शंकर**— ' पिकनेमादिचिन्ताऽथ । ' ११.

* आर्यम्लेच्छप्रसिद्ध्योः अविरोधे म्लेच्छप्रसिद्धेरपि अस्ति प्रामाण्यं इति **पिकनेमाधिकरणम् । कु.** १।३।६।९. * **पिकनेमाधिकरणे** म्लेच्छप्रयोगरूपाचारप्रामाण्यं वक्ष्यते । **कौ.** १।३।४।९. * पिकनेमाधिकरणे स्वरूपबलाबलेन आश्रयबलाबलस्य बाध्यत्वं वक्ष्यते । **सु.** पृ. १७४.

* न च **पिङ्गाक्ष्येकहायनीन्यायः**, तद्वत् इह एकवाक्यत्वाभावेन सहप्रवृत्त्यभावात् । **कौ.** ३।३।३।१०. पृ. ३२८, * उभयत्रापि ( वेदद्वये ) लिङ्गादिश्रवणात् **पिङ्गाक्ष्येकहायनीन्यायेन** विधित्वे एकत्रैव देवताविधिसमभिव्याहारवति उत्पत्तिविधितात्पर्यकत्वम्, अपरत्र तु सत्यपि उत्पत्तिविधित्वे न तत्तात्पर्यकता, वाक्यान्तरोपात्तगुणविनियोगोपयोगिप्रकरणोज्जीवनार्थत्वात् । ३।३।३।१० पृ. ३२८.

* **पिङ्गाक्षी–एकहायनीशब्दौ** द्वावपि सामानाधिकरण्यात् एकद्रव्यवचनौ । **वा.** ३।१।६।१२ पृ. ६७३.

* **पिच्छोलाभिरुपगायन्ति** पत्नयः महाव्रते ( पिच्छोला मयूरपिच्छभूषितो वाद्यविशेषः ) । **भा.** १०।४।५।८.

* **पिठरादयः** शूर्पेण सह ( होमकरणत्वेन ) विकल्प्यन्ते इति प्राप्ते, ब्रूमः । शूर्पस्य होमसाधनत्वं श्रौतम्, तृतीयया तदवगमात् । पिठरादीनां तु आनुमानिकम् । अतः असमानबलत्वात् न विकल्पो युक्तः । **वि.** १।२।३.

* **पिठरपाकवादिनां** ( पैठराणाम् ) तावत् कार्यद्रव्याण्येव घटादीनि पच्यन्ते, तन्मतेन अभेद एव ( शुक्लरक्तघटयोः ) । **वा.** ३।१।६।१२ पृ. ६८२.

**पिण्डं त्यक्त्वा करं लेढीति न्यायः ।** यथा विहाय ब्रह्मानन्दं तल्लेशभूतविषयानन्दाद्यनुभवनं व्यर्थमिति । **साहस्री.** ३६१.

**पिण्डार्थत्वाच्च संयवनम् । १०।१।११।५४॥**

सौर्ये चरौ प्रणीताभिः संयवनं न कर्तव्यम्, तस्य पिण्डार्थत्वात् । पिष्टानां पिण्डो यथा स्यादित्येवमर्थमद्भिः संयवनं भवति । चरौ पिण्डाभावात् न संयवनम् । इति सिद्धान्तः । **के.**

* **पिण्डपितृयज्ञः** ( ' अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति ' इति ) । अनारभ्याधीतः पुरुषार्थः, न तु क्रत्वर्थः । ४।४।८।१९–२१.

**पिण्डपितृयज्ञः अनाहिताग्नेः औपासनाग्नौ स्यात् ॥**

तस्य वैश्वदेवादिवत् पचने अग्नौ लौकिकाग्नावपि अनियमेन अनुष्ठाने प्राप्ते, येषां त्रेताऽग्निसंबन्धो नास्ति, तेषां सर्वेषां कर्मणामनाहिताग्नेः औपासनाग्निसंबन्धदर्शनात् औपासनाग्नावेव पितृयज्ञः । वचनात्तु कतिपयकर्माणि अग्न्यन्तरेऽपि । **संकर्ष.** १।२।१३.

* पिण्डपितृयज्ञः अपूर्वो ह्ययमनङ्गं चेति स्थास्यति ( ४।४।८।१९–२१ इत्यत्र ) । **वा.** ३।७।१।३. * पिण्डपितृयज्ञः आहिताग्नेः अनाहिताग्नेश्च । **भा.**

६।८।१।८. * पिण्डपितृयज्ञः दर्शेष्ट्यभावेऽपि कार्यः दर्शविकारेषु च नातिदेशोऽस्य । भाट्ट. ४।४।८.

**पिण्डपितृयज्ञः दर्शदिनेऽपि स्वकाले एव ॥**

अमावास्यायां पिण्डपितृयज्ञोत्तरमेव दर्शेष्टितन्त्रं प्रक्रान्तव्यम् । सोमयागे दर्शपौर्णमासोत्तरत्वस्यैव 'दर्शे पितृयज्ञोत्तरत्वस्य असम्भ्यमेव प्रथमं निरूप्यताम्' इति पितृप्रार्थितवरदानार्थवादेनावगमितत्वात् । 'यत्पितृभ्यः पूर्वेद्युः करोति, पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुते' इति श्रुतेश्च । अत एव 'प्रातरग्निहोत्रं हुत्वाऽन्यमाहवनीयं प्रणयति' इति विहितं प्रणयनमपि पितृयज्ञाङ्गमेव । इष्ट्यङ्गत्वे अग्नेः परेद्युः कर्मापवर्गे एव तदपनयेन पितृयज्ञस्याग्न्यभावापत्तेः । न च निशीष्टिवत् दार्शिकप्रणयनोपकार्यत्वम्, पितृयज्ञस्यापूर्वत्वात् । न वा ऐष्टिकानामिव सौमिकप्रणयनोपकार्यत्वम्, तस्य दर्शानङ्गत्वात् । प्रणयनस्य पितृयज्ञाङ्गत्वे तु तदपवर्गे दर्शार्थं पुनः प्रणयनसंभवात्, हुत्वा इति क्त्वाप्रत्ययस्य पूर्वकालमात्रपरत्वेन अपराह्ण एव प्रणेतुमुचितत्वात्, वचनादपकर्षो वा । तस्मात् पितृयज्ञं समाप्यैवान्वाधानम् । इति प्राप्ते, पूर्वाह्णापराह्णकालविहितयोः अन्वाधानपितृयज्ञयोः कालातिक्रमायोगात् प्रणयनस्यापराह्णे करणे प्रातरग्निहोत्रं हुत्वेत्यस्य अनतिप्रयोजनकत्वापत्तेः, पितृयज्ञस्यापूर्वत्वेऽपि दार्शिकप्रणयनेन प्रसङ्गादुपकारसिद्धेः, प्रणयनविध्यनन्तरं दार्शिकानेकपदार्थविधानदर्शनेन च क्रत्वङ्गत्वस्यासंदिग्धत्वात् दर्शतन्त्रप्रक्रमोत्तरमेव स्वकाले पितृयज्ञः । पूर्वेद्युरिति वचसो वरप्रार्थनार्थवादस्य च प्रधानयागाभिप्रायेणोपपत्तेः । संकर्ष. १।२।९.

* पिण्डपितृयज्ञः न दर्शाङ्गम् । अयं स्वर्गार्थ इति मूलानुयायिनः । वस्तुतस्तु नित्य एवायम् । भाट्ट. ४।४।८. * पिण्डपितृयज्ञः यदि पौर्णमास्यामाधानं तदा अनन्तरायाममावास्यायां कर्तव्यः, कुण्डपायिनामयने 'मासं दर्शपूर्णमासाभ्यां यजेत' इत्यत्र न कर्तव्यः । भा. ४।४।८।२१, * पिण्डपितृयज्ञः सफलः । ४।३।५। १०-१२, पिण्डपितृयज्ञः एकफलकः, न सर्वार्थः । ४। ३।६।१३-१४, पिण्डपितृयज्ञः स्वर्गफलकः । ४।३।७। १५-१६.

**पिण्डपितृयज्ञः सिनीवालीकुह्वोः संनिपाते उत्तरस्मिन् दिन कार्यः ॥**

यदा सिनीवाली कुहूश्चेति द्वे अपि क्रमेणापततः तदाऽपि पूर्वाधिकरणन्यायेन पूर्वस्मिन्नेव पर्वणि पितृयज्ञे प्राप्ते, परस्मिन्नेवेत्युच्यते । 'यदहरेष पुरस्तान्न दृश्यते तदहर्दद्यात्' इति 'यत् पितृभ्यः पूर्वद्युः' इति 'अपराह्णे ददाति' इति वचनत्रयैकवाक्यतया लब्धस्य चन्द्रादर्शनापराह्णविशेषणद्वितयविशिष्टामावास्याकालस्य तत्रैव लाभात् । चन्द्रादर्शने 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इत्येकस्मिन्नेव वाक्ये विशिष्टकालविधिः, प्रतीक्षाविषयतया उपादेयत्वाच्च न विशेषणयोरविवक्षेति तु भाष्ये स्थितम् । न च पूर्वदिने चन्द्रदर्शनाभावस्येव परदिनापराह्णे अमावास्यायाः अभावादन्यतरपरित्यागावश्यकत्वे यत्पूर्वेद्युरिति वचनानुसारेण चन्द्रादर्शनस्यैव हानं युक्तमिति वाच्यम् । 'यां तिथिं समनुप्राप्योदयं याति दिवाकरः' इति स्मृत्या परदिने अमावास्यायाः पूर्णतोक्तेः । अपराह्णे सूर्याचन्द्रमसोरतीव संनिकर्षात् ।

ननु 'पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते' इति स्मृत्यन्तरेण चन्द्रादर्शनपदस्य चन्द्रक्षयोपलक्षकत्वेन व्याख्यानात् चन्द्रक्षयस्य च 'अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः । अमावास्याऽष्टमांशे च पुनः किल भवेदणुः ॥' इति स्मृत्या चतुर्दशीयुक्तामावास्यायामेवोपलम्भात् सिनीवाल्यामेव पितृयज्ञः, अत एव 'यदहस्त्वेव चन्द्रमा न दृश्यते याममावास्यां कुर्वीत' इत्यादिवचनैरन्वाधानस्यापि काले चन्द्रादर्शनस्य विशेषणत्वात् तुल्यन्यायेन परदिने तदनुष्ठाने प्रसक्ते 'पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः । पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ॥' इत्यादिना अन्वाधानपितृयज्ञश्राद्धानां एककर्तव्यताविधानात् अन्वाधानवाक्यस्थचन्द्रादर्शनपदं चन्द्रक्षयोपलक्षकमेवेत्युक्तं कर्मप्रदीपे इति चेत्, न । 'अर्वागस्तमयाद्यत्र द्वितीया तु प्रदृश्यते । तत्र यागं न कुर्वीत सर्वे देवाः पराङ्मुखाः ॥' इति वचनेन सायं चन्द्रदर्शनविशिष्टप्रतिपदि प्रधानयागनिषेधादुभयोरपि चन्द्रादर्शनस्यावश्यकत्वे द्व्यहकालक्रियमाणयोः अङ्गप्रधानयोस्तदसंभवे अङ्गगुणविरोधन्यायेन अन्वाधाने

एवं तद्भावस्य युक्तत्वात् । अत एव ' तद्धैके दृष्ट्वा उपवसन्ति ' इति श्रुतिः दृश्यमानेऽपि कदा चिदिति गोभिलश्च । पितृयज्ञस्य तु ' यदहरेष पुरस्तान्न पश्चाच्च दृश्यते ' इति श्रुत्यन्तरेण कुहूमेव विशिष्य विधानान्न स्मृत्या क्षीणचन्द्रोपलक्षकत्वेन व्याख्या युक्ता, अपितु अमावास्यापदस्यैव सूर्याचन्द्रमसोः संनिकर्षपरत्वं पञ्चदशाद्याधिकरणसिद्धं सूत्रोक्तं युक्तम् । न च ' यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजन् इमाँल्लोकानभिजयति ' इत्यादिश्रुतिभिः चन्द्रदर्शनदिने यागनिषेधस्मृतेरपि बाधोऽस्तु इति वाच्यम् । चन्द्रदर्शनदिनं प्रशस्तमपि तद्दर्शनात् प्रशस्ततरात् हीनमेवेति रीत्या जर्तिलगवेधुकस्तुतेः क्षीरविधिशेषत्ववत् चन्द्रादर्शनदिने यागविधिशेषत्वेनापि अस्यार्थवादस्योपपत्तेः, अमावास्याऽष्टमांशप्रभृति चन्द्रोदयस्य सत्त्वादुदितमात्रस्य लोकैरदर्शनात् श्रुतिस्मृत्योरविरोधः इति के चित् । तस्मात् सिनीवाल्यामन्वाधानं कुहूां यागोत्तरं पितृयज्ञः । वरदानार्थवादादिश्च पूर्णयोः पर्वप्रतिपदोरुपपन्नः । संकर्ष. १।२। १०.

* पिण्डपितृयज्ञस्य अतिप्रणीताग्नौ विहितस्य आहवनीयानधिकरणत्वम् । सु. पृ. ७८०.

## पिण्डपितृयज्ञे अनाहिताग्निना अतिप्रणीत औपासनो वा उपस्थेयः ॥

' यदन्तरिक्षम् ' ( -पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम ) इति मन्त्रेण गार्हपत्यस्योपस्थानं पितृयज्ञे विहितम् । तच्च आहिताग्निकर्तृकात् प्रकृतितः अनाहिताग्निकर्तृकविकृतौ प्राप्तं इति तदर्थं गार्हपत्य उत्पादनीयः । प्रकृतौ होमार्थादग्नेः उपस्थेयस्य भिन्नत्वात् । इति प्राप्ते, संस्कारविशेषविशिष्टस्यैव गार्हपत्यत्वात् तादृशस्योत्पादने च अनाहिताग्नित्वभङ्गात् प्रकृतौ आर्थिकस्य भेदस्य चोदकेन अनतिदेशात् आयतनमात्रभेदेऽपि गार्हपत्यदक्षिणाग्न्योरभेदात् ' यस्मिन्नेव प्रदीयते तमेवोपतिष्ठेत ' इति वचनाच्च अतिप्रणीताग्नेः औपासनाग्नेर्वा उपस्थानम् । संकर्ष. १।२।१४.

## पिण्डपितृयज्ञे अनाहिताग्नेरप्यधिकारः ॥

अग्निसाध्येषु दर्शपूर्णमासादिष्विव पितृयज्ञेऽपि अनाहिताग्नेर्नाधिकारः । यत्तु श्रूयते 'अप्यनाहिताग्निना कार्यमेव, इदं चिन्मे कृतम्, इदमविशत्, इदं चिच्छकवाम, पितरश्चिन्माऽऽवेदयन्ति ' इति, तदनाहिताग्निनाऽपि एतत्कर्तव्यम्, किं पुनराहिताग्निना, इत्येवमर्थवादत्वेनापि उपपन्नम् । इति प्राप्ते, अवधारणार्थकेन अपिशब्देन कर्तव्यमेवेति स्पष्टविधिना च अनाहिताग्नेरपि अधिकारावगतेः इतरांश एव तत्रार्थवादः । संकर्ष. १।२।१२.

## पिण्डपितृयज्ञे उपस्थानमन्त्रस्थगार्हपत्यपदलोपः ( आहिताग्नेरिदम् ) ॥

तस्मिन्नेव मन्त्रे ' अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु ' इति गार्हपत्यशब्दस्य असमवेतार्थत्वेऽपि मन्त्रानुग्रहायाविकारेण प्रयोगे होमाधिकरणत्वेन संस्कार्यत्वात् गार्हपत्यपदं अपनीय आवसथ्यपदप्रक्षेपरूपे ऊहे वा प्राप्ते, गार्हपत्यशब्दमात्रं लुप्यते, तावन्मात्रस्य अनन्वितवचनत्वात् । उपतिष्ठेत इत्यात्मनेपदेन मन्त्रस्य करणत्वेन प्राप्तेः, प्राकृतस्य तस्य गार्हपत्यपदविनिर्मुक्तस्यैव समवेतार्थकत्वात् । अग्नेः अदृष्टपुञ्जरूपस्य अग्न्यन्तरेण प्रत्याम्नायाभावेन पदान्तरप्रक्षेपासंभवात् । अत एव ' न देवताऽग्निशब्दक्रियम् ' इति षाष्ठो न्यायः संगच्छते । ईदृशपदघटितमन्त्रस्यैव लोप इति याज्ञिकपक्षः काचित्कस्तु चिन्त्य एव । संकर्ष. १।२।१५.

* पिण्डपितृयज्ञे विशेषाणां अन्यतोऽसिद्धेः तेषामभावे च विधेस्तत्त्वानुपपत्तेः तद्विशेषाभिधायिशब्दकल्पना ( तद्विशेषाः विनियोगाधिकारप्रयोगाः ) । कणिका. पृ. ३८० * पिण्डपितृयज्ञे ' समूलं बर्हिर्भवति ' इति दर्भाणां समूलत्वमुक्तम् । तत्स्तुतये च ' यत् परुषि दितं तद् देवानाम्, यदन्तरा तन्मनुष्याणाम् ' इत्यनुवादः । परुषिदिताधिकरणम् । ३।४।३।११.

## पिण्डपितृयज्ञाधिकरणम् । पिण्डपितृयज्ञन्यायः । पिण्डपितृयज्ञः पुरुषार्थो न दर्शाङ्गम् ॥

**पितृयज्ञः स्वकालत्वादनङ्गं स्यात् । ४।४। ८।१९ ॥**

**भाष्यम्**— अस्ति आमावास्ये कर्मणि पितृयज्ञः ' अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति ' इति । तत्र संशयः किमामावास्यस्य कर्मणः पिण्डपितृयज्ञोऽङ्गम्, उतानङ्गमिति । किं प्राप्तम् ? अङ्गम् , फलवत्संनिधानात् निष्क्रयवचनाच्च । **आह,** ननु फलवत्संनिधावफलं तदङ्गं भवति । फलवच्चेदं कल्प्येत स्वर्गेणेति। **उच्यते** । सत्यम्। अमावास्यया एकवाक्यत्वान्न शक्यः स्वर्गः कल्पयितुमिति । **आह** । कालवचनत्वान्न कर्मणैकवाक्यत्वं संभवतीति । **उच्यते** । लक्षणयाऽपि तावत्कर्मैकवाक्यता संभवति । स्वर्गे कल्प्ये न लक्षणा, न श्रुतिः । एवं चामनन्ति, ' यत्पितृभ्यः पूर्वेद्युः करोति, पितृभ्य एतद्यज्ञं निष्क्रीय यजमानो देवेभ्यः प्रतनुते ' इति । अमावास्यां प्रति निष्क्रेतुं प्रतनितुं च श्रूयते । तस्मात्तदङ्गभूतमिति । **एवं प्राप्ते, ब्रूमः । पितृयज्ञः स्वकालत्वादनङ्गं स्यात्** । अनङ्गभूतः पिण्डपितृयज्ञः । कस्मात् ? स्वकालत्वात् । स्वशब्दाभिहितेन कालेनास्य संबन्धः, न कर्मणा लक्षितेनेति । यथा ' दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत ' इति । यथा ' पुरस्तादुपसदां सौम्येन चरन्ति ' इति । अत्र काले एवायं मुख्यः शब्दो न कर्मणि । कर्मणि लक्षणा । श्रुतिश्च लक्षणाया बलीयसी । यच्चोक्तं लक्षणया कर्मैकवाक्यता भविष्यतीति, तच्च न । कस्मात् ? अनुवादे हि लक्षणा न्याय्या, न विधौ । विधिश्चायम् । तस्मान्नामावास्याकर्मणा संबन्धः । एकस्मिन् काले द्वे कर्मणी परस्परेणासंबद्धे इति ।

**टुप्**— पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ॥ (सिद्धान्तमाह– ) ' अमावास्यायामपराह्णे ' इति सामानाधिकरण्यम् ( अवगम्यते ) । तच्च कालवचनत्वे ( सति ) उपपद्यते । इतरथा अमावास्याशब्देन आग्नेयादीनि उच्येरन् । तेषामङ्गत्वेन पिण्डपितृयज्ञो विधीयते ( विधीयेत ) । तस्य अपराह्णः कालः ( विधीयते ) इत्यनेन द्वारेण सामानाधिकरण्यं कीदृशमपि स्यात् ( न स्यादित्यर्थः ) । क्लिष्टा चेयं ( वैयधिकरण्यद्वारा सामानाधिकरण्य– ) कल्पना ( न संभवति ) । तस्मात् ( कालवचनत्वात् ) अमावास्याशब्दार्थे (काले) निमित्ते फलाय कर्म विधीयते । (तस्मात् फलप्रयुक्तः पिण्डपितृयज्ञः, न क्रतुप्रयुक्त इति) ।

**तुल्यवच्च प्रसंख्यानात् । २० ॥**

**भाष्यम्**— तुल्यवच्चान्यैः प्रधानैः प्रसंख्यायते । ' चत्वारो वै महायज्ञाः अग्निहोत्रम् , दर्शपूर्णमासौ, ज्योतिष्टोमः , पिण्डपितृयज्ञः ' इति महायज्ञैस्तुल्यवत् प्रसंख्यायते । काऽस्य महायज्ञता स्यादन्यतः फलवत्तायाः । तस्मादनङ्गम् ।

**प्रतिषिद्धे च दर्शनात् । २१ ॥**

**भाष्यम्**— इतश्चानङ्गम्। प्रतिषिद्धे हि आमावास्ये पिण्डपितृयज्ञं दर्शयति । ' पौर्णमासीमेव यजेत भ्रातृव्यवान् नामावास्याम् , हत्वा भ्रातृव्यममावास्यया यजेत, पिण्डपितृयज्ञेनैवामावास्यायां प्रीणाति ' इति । असत्याममावास्यायां पिण्डपितृयज्ञं दर्शयति । तदनङ्गत्वे उपपद्यते । तस्मादपि नाङ्गं पिण्डपितृयज्ञ इति ।

किं प्रयोजनं चिन्तायाः । यदि पौर्णमास्यामाधानम् , ततोऽनन्तरायाममावास्यायां न क्रियते, यथा पूर्वपक्षः । यथा तर्हि सिद्धान्तस्तथा कर्तव्यः । इदमपरं प्रयोजनम् । कुण्डपायिनामयने ' मासमग्निहोत्रं जुहोति ' ' मासं दर्शपूर्णमासाभ्यां यजेत ' इति । यथा पूर्वः पक्षस्तथा कर्तव्यः पिण्डपितृयज्ञः । यथा सिद्धान्तस्तथा न कर्तव्य इति । श्लोकमप्युदाहरन्ति ' **आधानं पौर्णमास्यां चेद् वृत्ते दर्शे करिष्यते । अनङ्गं पितृयज्ञश्चेत् सत्रे च न करिष्यते ॥** ' इति ।

**शा**— ( सिद्धान्तमाह– ) ' **नैवं साधारणत्वेऽपि सामानाधिकरण्यतः। कालवाचित्वमेव स्यात् तत्सापेक्षश्च कर्मणि ॥** ' यद्यपि तावत् ( कर्मकालयोः ) साधारणः अमावास्याशब्दः , तथापि अपराह्णसामानाधिकरण्यलिप्सया कालवाचित्वमध्यवसीयते ।

**सोम**— पूर्वत्र ( षट्चितिरित्यत्र ) अर्थवादोपनीतत्वात् फलस्य अस्तु नैमित्तिकत्वम् । प्रकृते तु अत्यन्तानुपस्थितं फलं कल्पनीयं इत्ययुक्तं इति वैषम्येण प्रत्यवस्थानात् **संगतिः । सूत्रार्थस्तु**– अमावास्याशब्दस्य कालवाचित्वेन स्वशब्दाभिहितकालयोगित्वात् पितृयज्ञो

नाङ्गं स्यादिति । **प्रयोजनम्**— पूर्वपक्षे दर्शविकारेषु प्रवृत्तिः, सिद्धान्ते तु न प्रवृत्तिः ।

वि— ' क्रत्वङ्गं स्यान्न वा पिण्डपितृयज्ञः , क्रतौ हि सः । अमावास्योक्तितो, मैवं तत्कालोक्तेः पुमर्थता ॥ '

**भाट्ट**— अनारभ्य श्रुतम् ' अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति ' इति । तत्रायं पिण्डपितृयज्ञो दर्शेष्ट्यङ्गम् , अमावास्यापदेन कर्मवाचिना ' तत्र जयान् जुहुयात् ' इतिवत् वाक्याद्दर्शाङ्गत्वप्रतीतेः । यद्यपि चायं कालेऽपि मुख्यः, तथापि फलकल्पनाभियाऽत्र कर्मपरत्वमेव युक्तम् । वस्तुतस्तु यद्यपि काल एव मुख्यः कर्मणि तद्योगान्निरूढलक्षणा, प्रकृते च कालपर एव, अपराह्णसामानाधिकरण्यात्, तथापि ' तस्मात् पितृभ्यः पूर्वेद्युः क्रियते ' इति वाक्ये दर्शेष्टिपूर्वेद्युःकालश्रवणात् वैमृधन्यायेन दर्शेष्टेरुपस्थितत्वात्तदङ्गत्वम् । **इति प्राप्ते**, अमावास्याशब्दस्य कर्मवाचित्वं भवतैव निराकृतम् । लक्षणा तु प्रमाणाभावात् कालसामानाधिकरण्यविरोधाच्च दूरतोऽपास्तैव । पूर्वेद्युर्वाक्यमपि इष्टेरनुपस्थितत्वान्न तत्प्रतियोगिककालं विधत्ते, अपि तु तिथिद्वैधे पूर्वेद्युःकालम् ' ययाऽस्तं सविता याति पितरस्तामुपासते ' इति प्राप्तमनूद्य देवतामात्रम् । के चित्तु द्वैधे चन्द्रदर्शनात् पूर्वेद्युरिति व्याख्याय खण्डपर्वणि परेद्युः पितृयज्ञमनुतिष्ठन्ति । सर्वथा न दर्शाङ्गं पितृयज्ञः । एवं च ' पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्याम्, हत्वा भ्रातृव्यममावास्यया यजेत, पिण्डपितृयज्ञेनैवामावास्यायां प्रीणाति ' इति दर्शेष्ट्यभावेऽपि पिण्डपितृयज्ञदर्शनं संगच्छते । एतद्बलेनैव च ' पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुते ' इत्यादिपिण्डपितृयज्ञार्थवादे यज्ञोपस्थितावपि न क्षतिः ।

यत्तु ' न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः । ' इति मनुवचनम् ( मनु. ३।२८२ ), तत् श्राद्धं कृष्णपक्षश्राद्धं दर्शन अमावास्यया विना आहिताग्नेर्न भवति अनाहिताग्नेरिव तिथ्यन्तरेष्विति व्याख्येयम् । न तु दर्शेन दर्शेष्टिं विना श्राद्ध पितृयज्ञो न भवतीत्येवं व्याख्येयम् , दर्शपदे लक्षणायां प्रमाणाभावात् । तेनायं स्वर्गार्थ इति **मूलानुयायिनः** । वस्तुतस्तु अकरणे ससहोतृहोमरूपप्रायश्चित्तस्य आपस्तम्बादिभिः स्मरणात् ज्योतिष्टोमादिक्रतुमिस्तुल्यवद्गणनाच्च नित्य एवायम् । **प्रयोजनं** दर्शाभावेऽपि करणम्, तद्विकारेषु च नातिदेशः । यत्तु भाष्यकारेण पौर्णमास्यामाधाने कृते अग्रिमामावास्यायां दर्शेष्ट्यभावात् पूर्वपक्षे अकरणमित्युक्तम् , तत् द्वादशरात्रिषु पवमानेष्टिपक्षे आधानोत्तरदिने पौर्णमासकालाभावे च बोध्यम् । यदा तु तदुत्तरदिने कालसत्त्वं पौर्णमासस्य, तदा आधानदिने एव सेष्टि सान्वारम्भणीयं पौर्णमासस्यान्वाधानं कृत्वा श्वोभूते पौर्णमासेनेष्ट्वा अग्रिमदर्शेष्ट्यङ्गतयैव पितृयज्ञानुष्ठाने न कश्चिद्विरोधः ।

**मण्डन**— ' दशयजेन गुणः पितृयज्ञः । '

**शंकर**— ' पितृयज्ञो न दर्शाङ्गम् । '

* **पिण्डपितृयज्ञन्यायः** । ' अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति ' इत्यत्रानारभ्याधीतवाक्ये श्रुतः पिण्डपितृयज्ञः क्रत्वर्थः पुरुषार्थो वा इति संशये कर्मवाच्यमावास्याशब्दसमभिव्याहारात् तदङ्गत्वम् । यद्यपि कालस्यापि साधारणोऽयं शब्दः, तथापि फलकल्पनापरिहाराय कर्मवाच्येव । अतः क्रत्वर्थः । इति प्राप्ते, सिद्धान्तः । कालकर्मसाधारणोऽपि अमावास्याशब्दः अपराह्णशब्दसमानाधिकृतः इति कालपर एव । न च साधारण्यम्, काले रूढत्वात् , कर्मणि च तत्संबन्धेन लाक्षणिकत्वात् । तस्मात् स्वर्गफलः पिण्डपितृयज्ञः । **कल्पतरु. १।१।४ पृ. ११२ ब्रसू.**

* **पिण्डपितृयज्ञबर्हिषि** दर्शपूर्णमासबर्हिर्धर्मा न भवन्ति । **भा. ३।७।१।३–४.**

**पिण्डपितृयज्ञहोमो दक्षिणाग्नौ, नाहवनीये ॥**

पितृयज्ञे एव दक्षिणाग्नौ श्रपितस्यापि हविषः आहवनीये एव होमः, गार्हपत्ये श्रपितस्यापि तथा दर्शनात् । 'यदाहवनीये जुहोति ' इति वाक्यस्य बाधे मानाभावात् ' दक्षिणाग्नेरेकोल्मुकं धूपायत् उद्धरति ' इति वचनान्तरेण प्रणीताग्नेरपि सत्त्वात् , तस्य च पशौ अतिप्रणीतवत् दृष्टार्थत्वाय तत्रैव वा होमः । इति प्राप्ते, ' यस्मिन् श्रपयति तस्मिन् जुहोति ' इति वचनेनैव सिद्धान्तः , प्रणीतस्य तु आयतनाद्बहिर्निःसारणेन ततो भिन्नत्वात् । अत एव तस्यादृष्टार्थत्वमपि न दुष्यति, ' ये रूपाणि

प्रतिमुञ्चमानाः ' इति मन्त्रे तस्य रक्षोपहननार्थत्वश्रवणात् । संकर्ष. १।२।११.

🕮 **पिण्याकयाचनार्थं गतस्य खारिकातैलदातृत्वाभ्युपगम इति न्यायः** । सर्वदर्शनसंग्रहे पूर्णप्रज्ञनये अयं न्यायः । साहस्री. ७०९.

* **पिता पितामहः सोमं न पिबेत् इति (भाष्यम्)** । पितुः पितामहस्य वा असोमपत्वं व्रात्यपशोर्निमित्तत्वेनोच्यमानं साहित्याविवक्षया सिद्धम् । वा. ३।१।६।१२ पृ. ६९६. * पिता वार्धके पुत्रमुपजीवति । तथा च ' वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥ ' इति स्मृतिः । के. * 'पित्रा पितरं वा संजानीते' इयं कर्मणि तृतीया कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । बाल. पृ. ४४.

🕮 **पित्रनुसृतस्तनन्धयन्यायः** । पिता यथा स्तनन्धयं बालमनुसृत्य वर्तते, तथा विदुषा अज्ञो जनोऽनुसर्तव्यः । संग्रहः.

* **पित्रादीनामदेयता विश्वजिति सर्वस्वदाने** । नहि पित्रादीनां शक्यते स्वत्वं परित्यक्तुम् । न चैतत् न्याय्यं यत् पित्रादीनां परिचारकत्वम् । भा. ६।७।१। १–२.

* **पितृधने** पुत्राणां लोके समविभागो दृष्टः । वि. १०।३।१३.

* **पितापुत्रन्यायः** । तद्यथा स एव कं चित्प्रति पिता भवति, कं चित्प्रति पुत्रो भवति । एवं प्रकृतेऽपि बोध्यमिति ' तस्मिन्निति निर्दिष्टे पूर्वस्य ' ( पा० १।१। ६६ ) इति सूत्रभाष्ये स्पष्टम् । साहस्री. ६०७.

* **पितृमातृमातुलादयः** तत्तत्संबन्धविशेषवाचकशब्देन यथा तुष्यन्ति न तथा स्वनामग्रहणेन, प्रत्युत कुप्यन्त एव । वि. १०।४।१४.

🕮 **पितृयज्ञः स्वकालत्वादनङ्गं स्यात्** । ४।४। ८।१९ ॥

' अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति ' इति श्रुतम् । अयं पिण्डपितृयज्ञः किं आमावास्यस्य कर्मणः अङ्गम्, उत नेति विचारे अमावास्यायागाङ्गं पिण्डपितृयज्ञः इति उत्सूत्रे पूर्वपक्षे सिद्धान्तयति । पितृयज्ञः पिण्डपितृयज्ञः अमावास्यायागस्य अनङ्गम्, न अङ्गं स्यात् । स्वकालत्वात् । स्वः स्वीयः कालो यस्यासौ स्वकालः, स्वकालत्वात् । अमावास्यैव अस्य स्वः कालः । तत्रायं विहितः । अमावास्यायागकालोऽपि यद्यपि सैव तिथिः, तथापि एकस्मिन् काले द्वे एते कर्मणी परस्परेण असंबद्धे । तस्मादनङ्गम् ।

**तुल्यवच्च प्रसंख्यानात्** । २० ॥

पिण्डपितृयज्ञः स्वप्रधान एव, न अमावास्याया अङ्गं इति सिद्धान्ते हेत्वन्तरपरं सूत्रम् । इतरैर्महायज्ञैः तुल्यमिव पिण्डपितृयज्ञस्य प्रसंख्यानं परिगणनं कृतम् ' चत्वारो वै महायज्ञा अग्निहोत्रम्, दर्शपूर्णमासौ, ज्योतिष्टोमः, पिण्डपितृयज्ञः ' इति । तुल्यता च फलवत्तया स्वप्रधानत्वम् । तस्मात् नाङ्गम् ।

**प्रतिषिद्धे च दर्शनात्** । २१ ॥

पिण्डपितृयज्ञः स्वप्रधान एव नामावास्यायागस्याङ्गं इति सिद्धान्ते तृतीयहेतुप्रतिपादनार्थं सूत्रम् । प्रतिषिद्धेऽपि आमावास्ये कर्मणि पिण्डपितृयज्ञानुष्ठानस्य दर्शनात् पिण्डपितृयज्ञो नामावास्याङ्गम् । किञ्च यदा पौर्णमास्यामाधानं तदा अव्यवहितायाममावास्यायां तिथौ अमावास्यायागो न भवति, पिण्डपितृयज्ञस्तु भवति । तस्मात् नामावास्याङ्गं पितृयज्ञः । के.

* **पितृयज्ञे** अतिदेशप्राप्तस्य होतृवरणस्य 'न होतारं वृणीते ' इति निषेधः श्रूयते । अत्र नञः पर्युदासार्थत्वेऽपि विकल्पः अपरिहार्यः । तस्यापि पर्युदसनीयप्राप्तिसापेक्षत्वात् । अन्यथा ' न सौम्येऽध्वरे ' इत्यस्यापि पर्युदासत्वापत्तेः । किञ्च अन्यत एव तदन्येषु प्राप्तेः, तदन्यमात्रसंकोचार्थत्वे च पर्युदासोपसंहारयोरभेदापत्तेः न पर्युदासाख्यविध्यन्तरोपपत्तिः । तस्मात् प्रतिषेध एवायम् । ततश्च विहितप्रतिषिद्धत्वात् विकल्पः इति । तत्र प्राप्तिसापेक्षस्यापि सुरापानादिनिषेधवत् विशेषनिष्ठत्वात् बलीयस्त्वं स्यात् इत्याशङ्क्य विशेषनिष्ठेनापि निषेधेन आत्मलाभायोगापत्तेः सामान्यरूपस्यापि विधेः स्वविषयादपनेतुमशक्यत्वात् अनपनीतस्य च शास्त्रस्य अत्यन्तबाधायोगात् विकल्पो दुष्परिहरः इत्युक्तम् ' न तुल्यहेतुत्वादुभयं शब्दलक्षणम् ' ( १०।८।१।३ ) इति ।

सिद्धान्तस्तु कर्तव्यत्वप्रतिपादनात्मकविधिविरोधित्वेन अकर्तव्यत्वप्रतिपादनात्मकनिषेधे जाग्रति विकल्पापत्तेः तत्परिहाराय पर्युदासोऽत्र अङ्गीक्रियते। तस्य विषयसमर्पणेन अनुकूलतया विकल्पानासञ्जकत्वात् तन्मात्रसंकोचनार्थोपसंहारात् तदन्यमात्रसंकोचनार्थस्य पर्युदासस्य स्पष्टं वैलक्षण्यं इति। सु. पृ. ८.

⌛ पित्तं यदि शर्करया शाम्यति, कोऽर्थः पटोलेनेति न्यायः। स्वल्पप्रयत्नेन कार्यसिद्धौ बहुप्रयत्नान्तरं व्यर्थमिति विषयेऽस्य प्रवृत्तिरिति। अत्र पटोलशब्देन पटोलपत्रं गृह्यते, तस्य शीतगुणत्वात्। उक्तं च 'पटोलपत्रं पित्तघ्नं मूलं तस्य विरेचकम्। फलं तस्य त्रिदोषघ्नं नाडी तस्य कफापहा॥' इति। साहस्री. ७९९.

* **पित्तधर्मस्य** पीतत्वस्य चाक्षुषरश्मीनां शङ्खप्राप्तौ रश्मिसंयुक्तानां पित्तावयवानामपि शङ्खप्राप्तेः शङ्खसंयुक्तसमवायनिमित्तारोपदर्शनात् सादृश्यादिना केन चित् संबन्धेन आरोपो भवति। सु. पृ. ५०८.

* **पित्र्याणि** कर्माणि अपरपक्षे अपराह्णे। ६।८।६।२५. * **पित्र्यायां** अग्निः कव्यवाहनः स्विष्टकृद्देवता आवापिकस्विष्टकृति। तत्र उत्तमानूयाजेऽपि 'देवो अग्निः कव्यवाहनः स्विष्टकृत् सुद्रविणा मन्द्रः कविः' इति मन्त्रे ऊहः, त्यागे च तद्देवतोल्लेखः कर्तव्यः। याज्ञिकास्तु एवं न कुर्वन्ति। तत्र मूलं चिन्त्यम्। भाट्ट. १०।४।२०. * पित्र्यायामिष्टौ 'मित्रावरुणौ त्वोत्तरतः' इत्युत्तरपरिधिपरिधानमन्त्रः वाजसनेयिनां कर्कमते 'मित्रावरुणौ त्वा पुरस्तात्' इत्यूह्यते। तथा आहवनीयावेक्षणे 'सूर्यस्त्वा पुरस्तात् पातु' इति प्राकृतो मन्त्रः 'सूर्यस्त्वा दक्षिणतः पातु' इत्यूह्यते। संप्रदायमते तु अत्र मन्त्रद्वयेऽपि ऊहो नास्ति। बाल. पृ. १२७. * पित्र्यायां धानासु हन्तिः पूर्वं कर्तव्या। हन्तिं कृत्वा पाकः कार्यः। १०।२।३४।७५.

* **पित्र्येष्टौ** विधिबलात् कर्मैक्येऽपि अनुवाक्याद्वयम्। सु. पृ. १०६४.

⌛ **पित्र्यकर्मणामपरपक्षादिः कालः॥**

**इतरेषु तु पित्र्याणि। ६।८।६।२५॥**

**भाष्यम्**— श्राद्धादीनि अपरपक्षे अपराह्णे च, स्मृतिरूपान्यार्थदर्शनात्। (भाष्यकारेण न व्याख्यातमिति टुप्टीका, तस्मात् अयं ग्रन्थो न भाष्यकारस्येति भाति)।

**टुप्**— पित्र्याणि (कर्माणि कानि चित्) एतानि— उदकतर्पणमहरहः (कार्यं न दक्षिणायनादिकं कालमपेक्षते)। पिण्डपितृयज्ञः अमावास्यायाम् (सर्वस्याम्)। उभयोः पक्षयोः श्राद्धम् (चन्द्रसूर्योपरागनिमित्तम्। नित्यं च द्रव्यदेशब्राह्मणसंनिधानवशाच्च विहितम्)। पित्र्या चातुर्मास्यकाला (महापितृयज्ञाख्या साकमेधकाले) पौर्णमास्याम्। (नात्र अपरपक्षकालसंभवः)। तानि न नियोगतः इतरेषु (दैवकालेतरेषु। यथासंभवं तु इतरेषु तेषु वा कर्तव्यानि)।

(**वि**— इदमधिकरणं नास्त्येव। **भाट्ट**— इदमधिकरणं पूर्वाधिकरणे एवान्तर्भावितम्।)

**मण्डन**— 'पित्र्यं कर्माथापराह्णादिकाले।'

**शंकर**— 'पित्र्यं कृष्णेऽपरायणे।'

⌛ **पिपीलिकाभिर्मन्थानगिरिविलेपनन्यायः।** यथा आहुः— 'श्रद्धत्स्व मन्थानगिरिं पर्यलिम्पन्पिपीलिकाः' इति। अश्रद्धेयस्योपन्यासे अयं प्रवर्तते। साहस्री. ८७९.

⌛ **पिपीलिकागतिन्यायः।** यथा पिपीलिका वृक्षशिरःस्थितमधुरफलरसास्वादने झटित्यशक्ता सत्यपि बह्वायासेन गच्छन्ती कालान्तरे तद्रसमवश्यमास्वादते, तथैव अज्ञानी पुरुषः श्रुतिस्मृतिपुराणविहितकर्मोपासनादिमार्गसंजातशुद्धान्तःकरणतया जन्मान्तरेषु कदा चित् प्राप्तपूर्णज्ञानोऽवश्यं ब्रह्मानन्दमनुभवतीति। साहस्री. ५१५.

* **पिपीलिकमध्या** अनुष्टुप्। पादेषु अक्षराणि १२।८।१२। उदा० 'पर्यूषु प्रधन्व' (ऋसं. ९।११०।१)। के. * पिपीलिकमध्या उष्णिक्। पादेषु अक्षराणि ११।६।११। उदा० 'हरी यस्य सुयुजा' (ऋसं. १०।१०५।२)। के. * पिपीलिकमध्या बृहती।

विध्यापत्तेः त्रीणि स्तोत्राणि क्रियेरन् । यद्यपि च स्तोत्राणामुत्पत्तौ एकत्वं निरधारि, तथापि आवृत्त्या इयं त्रित्वसंख्या संपाद्येत, स्तोत्रावृत्तिश्च न ऋगावृत्तिं विना उपपद्यते इति ऋगावृत्तिरेव स्यात् न तिस्र ऋचः । तस्मात् यादृशी ऋग्गता त्रित्वसंख्या समासात् प्रतीयते, तादृश्येव विधीयते, संख्यामात्रपरश्च विधिर्भवति । एवं पूषवाक्येऽपि भागः त्याज्यं हविरिति यावत् । ततश्च समासावगतं हविर्गतमेव पेषणं पूषोद्देशेन विधीयते पेषणमात्रपरश्च विधिर्भवति । न च हविर्गतं पेषणं अदेवताभूते पूष्णि हविरभावात् शक्यं कर्तुं इति पूष्णो देवतात्वाक्षेपेण देवताभूते एव पूष्णि पेषणं विधीयते इति न विशिष्टानुवाददोषः, न च समासवैरूप्यदोषः इति सर्वं सुस्थम् । इति पूषाधिकरणसिद्धान्ताक्षेपपरिहारः । बाल. पृ. १०१ –१०२.

**ॐ पूषानुमन्त्रणमन्त्रन्यायः ॥**

**संस्कारकत्वादचोदिते न स्यात् । ३।२।१।२ ॥**

**भाष्यम्**— अथ यदुक्तं पूषानुमन्त्रणादीनामुत्कर्षो न भविष्यतीति, युक्तस्तेषामुत्कर्षः । संस्कारको हि मन्त्रः । सः असति संस्कार्ये अनर्थकः इति यत्रार्थवान् तत्र नाययिष्यते । न च कश्चिद्दोषो भविष्यति ।

**वा**— अचोदिते पूषादौ दर्शपूर्णमासयोः यन्मन्त्रा न विनियुज्यन्ते, युक्तमेव तत् । संस्कारस्य संस्कार्यपरत्वात् लिङ्गेन च प्रकरणबाधात् । कथं पुनः एषामुत्कृष्टानां वैदिकैः कर्मभिर्योगः, कथं वा क्रत्वङ्गसामान्यविनियोगमन्तरेण लिङ्गं देवतायामेव केवलायां विनियोजकमिति, तदुच्यते– '**यागानुमन्त्रणानीति समाख्या क्रतुयोजिनी । तस्माच्छक्त्यनुरोधेन प्राप्तिस्तद्देवते क्रतौ ॥**' यागानुमन्त्रणसमाख्या हि एषां यागसंबन्धादृते अनुपपद्यमाना यागसामान्याङ्गत्वं गमयति । '**अतो विशेषचिन्तायामशक्येष्वनियोजनात् । शक्यार्थविनियोगाय लिङ्गव्यापारसंभवः ॥**'

**कुतूहलम्**— 'पूष्णोऽहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीय' इति मन्त्रो हि पूष्णो देवतायाः प्रकाशनलक्षणसंस्कारजनकः । स च यत्र संस्कार्यस्तत्र गच्छति । दर्शपूर्णमासयोस्तु न पूषा देवतात्वेन चोदितः । ......अतः पूषानुमन्त्रणमन्त्रस्य विकृतौ उत्कर्षो युक्तः ।

* उपवीतं सामिधेन्यङ्गं तदवान्तरप्रकरणात् ( तच्च संदंशेन ज्ञायते ) इति प्राप्ते, निविद्भिर्व्यवधानात् नोपवीतस्य सामिधेन्यङ्गता । न च **पूषानुमन्त्रणमन्त्रन्यायः** ( ३।२।१।२ ), यत्र हि उत्तरकालं बहूनि वाचनिकाङ्गानि, तत्र एकस्य पूषानुमन्त्रणमन्त्रादेः परप्रकरणस्थत्वकल्पना । यत्र तु विच्छेदकानि बहूनि उत्तरकालं च वाचनिकाङ्गं स्वल्पम् , तत्र वाचनिकाङ्गस्य एव अनारभ्याधीतन्यायेन अङ्गत्वोपपत्तेः न प्रकरणानुवृत्तिकल्पना । भाट्ट.३।१।११.

* **पूषाद्यनुमन्त्रणानि** दर्शपूर्णमासप्रकरणे असंबद्धान्यपि न पुरस्तात् प्रकरणं विच्छिन्दन्ति । वा. ३।१।११। २१ पृ. ७३३, * पूषाद्यनुमन्त्रणानि लिङ्गप्रकरणविरोधे उदाहर्तव्यानि । यावत् प्रकरणेनैकवाक्यत्वं कल्प्यते, तावत् लिङ्गेन श्रुतिः । तथा यावदितरत्र प्रकृताग्न्यादिप्रकाशनसामर्थ्यम् , तावदिह विनियोगः इति बाधः । ३।३।७। १४ पृ. ८३६, * **पूषाद्यनुमन्त्रणेषु** अपकर्षः एवमादीनां ( देवतादिवाचिशब्दानाम् ) । ३।२।६।१७.

* यत्तु यज्ञावचरग्रहणं तत् प्रकृतयज्ञाभावात् अनारभ्यवादरूपेण सर्वत्र विदधाति । तच्चैतत् **पूषाद्यनुमन्त्रणन्यायेनैव** सेत्स्यति इति नार्थोऽधिकरणेन । वा. ३।१।१२।२२ पृ. ७३८.

* **पूषादिपदानां** गुणत्वाभावात् , तद्व्यतिरेकेण इतरपदानां प्रकृतोपयोग्यर्थप्रतिपादकत्वाभावाच्च विकृतौ उत्कर्षः । भाट्ट. ९।३।५ .

* **पूषशब्दः** 'अदन्तको हि सः' इत्यादिवाक्यशेषेण वैदिकप्रसिद्ध्या चार्थविशेषे रूढः , न तु पुष्णाति इति व्युत्पत्त्या अग्न्याद्यभिधायी । मीन्या.

* '**पृणीयादिन्नाधमानाय तव्यान्**' । ऋसं. १०। ११७।५ । भोज्यान् पदार्थान् याचमानाय दद्यात् इति विधिः । सु. पृ. ६७३.

* '**पृथक्** चितिं समारुह्य न विप्रा गन्तुमर्हति' इत्यनेन 'मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात्' इति सामान्यप्रतिषेधस्य उपसंहारः । बाल. पृ. ३४.

* ‘ **पृथक्त्वेनाभिधानयोर्निवेशः** ’ ४।४।११। ३४ । अत्रत्यन्यायस्वरूपं तु ‘ तद्( समुदाय )द्वित्वानुसारिणौ दर्शपूर्णमासशब्दौ तद्विषयौ भवतः ’ इति । **वा.** २।२।३।३ पृ.४८१ । **सुधा**— पौर्णमास्यमावास्याशब्दोक्तसमुदायद्वित्वानुसारित्वाद्दर्शपूर्णमासशब्दयोः समुदायविषयत्वमिति । पृ. ७३२. * ‘ पृथक्त्वेनाभिधानयोर्निवेशः ’। यागविशेषाणां फलवत्त्वात् फलवत्त्वस्यैव प्राधान्यापरपर्यायमुख्यलक्षणत्वात् संनिहितस्य फलासंयुक्तस्य अङ्गत्वकारणभागित्वात् अश्रुतान्यफलान्वयकल्पने च गौरवापत्तेः आघारादीनां अङ्गतैव युक्ता इति सूत्रार्थः । सु. पृ. ७२३.

* **पृथक्त्वनिमित्ता** हि ‘अयाज्या वै निगदा ऋचैव यजन्तीति ’ व्यपदेशा भवन्ति । **भा.** २।१।१३। ४५.

**पृथक्त्वनिवेशात् संख्यया कर्मभेदः स्यात् ॥ २।२।७।२१ ॥**

अस्ति वाजपेयः ‘ वाजपेयेन स्वाराज्यकामो यजेत ’ इति । तत्र प्राजापत्याः पशवः ‘ सप्तदश प्राजापत्यान् पशूनालभते, सप्तदशो वै प्रजापतिः, प्रजापतेराप्त्यै, श्यामास्तूपरा एकरूपा भवन्ति, एवमेव हि प्रजापतिः समृद्ध्यै ’ इति । तत्र संदिह्यते किं सप्तदशैतानि कर्माणि, अथवा सप्तदशपशुकमेकमेव कर्म इति । सपरिकरमभ्यासप्रमाणं प्रतिपाद्य इदानीं संख्यानिबन्धनः कर्मभेदो निरूप्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः—— प्राजापत्यानित्यत्र द्वेधा विग्रहवाक्यं प्रतिभाति । प्राजापत्यश्च प्राजापत्यश्चेति तद्धितान्तानामयमेकशेषः । अथ पशुश्च पशुश्च पशुश्च पशवः, प्रजापतिर्देवता एषां ताः प्राजापत्या इति कृतैकशेषाणां प्रजापतिदेवतासंबन्धः । तदुक्तम् ‘ **किं न्वयं तद्धितान्तानामेकशेषः कृतो भवेत् । किं वा कृतैकशेषाणां पश्चात्तद्धितसंगतिः ॥** ’ इति । ( वा. २।२।७।२१ पृ. ५२३ ) । तदत्र कृतैकशेषाणामेव तद्धितसंगतिरिति युक्तम् । येन हि तद्धितान्तस्यैकशेषः क्रियते, तेन प्रजापतिपशुरूपयोः प्रकृतिप्रत्ययार्थयोर्द्वयोरेव करणीयः, न च तत्र प्रमाणमस्ति । बहुवचनं हि प्रमाणमेकशेषे । तच्च विशेष्यभूतप्रत्ययार्थगतमेव प्रत्यक्षमुपलभ्यते, न तु विशेषणीभूतप्रकृत्यर्थगतम् । तेन प्रत्ययार्थभूतानां पशूनामेकशेषः प्रतीयते इति सप्तदशानां पशूनां एकप्रजापतिदेवतासंबन्धात् सप्तदशपशुद्रव्यकमेकं कर्मेति । तदुक्तम्— ‘ **प्रत्ययार्थबहुत्वं हि प्रत्यक्षमुपलभ्यते । तत्कृतं चैकशेषत्वमिति न प्रकृतौ भवेत् ॥** ’ इति । ( वा. २।२।७।२१ पृ. ५२३ ) । एवं च सति कर्मैकत्वात् कल्पनालाघवं भवति । ननु एकयागपरत्वे अतिदेशात् एकदैव एकादशावदानगणः प्राप्यते । तस्य च सप्तदशसु पशुषु यदि एकस्य अवदानगणस्य संबन्धः, तदा षट्सु न स्यात् । अथ मिलितस्य, तदा षोडशसु पशुषु न स्यादिति कथमेककर्मत्वम् । मैवम् । एवं हि मन्यते, नायं साक्षात् यागधर्मः, किन्तु यागसाधनभूतपशुधर्मोऽयं पशुद्वारेण यागोपकारकः । तदत्र यागेनापि स्वसाधनीभूतपशुद्वारेण आकाङ्क्ष्यमाणः प्रतिपशु भेदेनैव अवदानगणः संबध्यते इति सप्तदशपशुद्रव्यकः एक एव याग इति । **एवं प्राप्ते, अभिधीयते** । भवेदेवं यदि कृतैकशेषाणां तद्धितसंबन्धो भवेत् । किं तर्हि ? तद्धितान्तानामेवायमेकशेषः । **न च** बहुवचनसंबन्धात् प्रत्ययार्थस्य पशोरेव एकशेषो न प्रकृत्यर्थस्य प्रजापतेः, बहुवचनसंबन्धाभावादिति **वाच्यम्** । यतो बहुवचनसंबन्धयोग्यस्य हि तदभावेन एकार्थपरत्वाभावं गमयति । न चोपसर्जनभूतायाः प्रकृतेः बहुवचनसंबन्धयोग्यता समस्ति । तेनात्र बहुवचनसंबन्धाभावस्य अनिर्णायकत्वात् अयमत्र संदेहः किं कृत्स्नस्यैव प्राजापत्यशब्दस्यायमेकशेषः, अथवा प्रत्ययार्थभूतपशुशब्दस्य इति । तत्र वाक्यशेषगतप्रकृतिशब्दवशादेव निर्णयो भवति । प्रकृतौ हि एकपशुगतस्य एकादशावदानगणस्य एकयागसाधनत्वमेवावगतम् । तदत्र प्रत्येकं सप्तदशपशुगतस्य एकादशावदानगणस्य एकयागसाधनत्वे सति न संभवतीति प्रतिपशु यागभेदोऽवगम्यते । स च तद्धितान्तानामेकशेषपक्षे भवतीति तद्धितान्तानामेकशेषः इति निर्णीयते । यथोक्तम्- पशुधर्मोऽयमेकादशावदानगणो न यागधर्मः । स च यागैकत्वे सति अतिदेशात् प्रतिपशु संभन्त्स्यते । तदयुक्तम्, तत्र एकादशावदानगणशब्दे नैकादशावद्यतिक्रियागणो-

ऽभिप्रेतः। किं तर्हि? अवदीयते इति व्युत्पत्त्या एकादशावदेयप्रदेयद्रव्यगणः। न चासौ पशुधर्मः, पशुसंस्कारत्वाभावात्, किन्तु यागसाधनत्वात् यागधर्मः। अतश्च एकयागत्वे सति एकपशुसंबद्धैकादशावदेयगणसंबद्धः, न तु एकपशुसंबद्धः। तथा सति एकपशुगतस्य एकादशावदानगणस्य एकयागसाधनत्वप्रतिपादकातिदेशबाधप्रसङ्गात्। तेन सप्तदशपशूनां यागसाधनत्वसंपत्तये सप्तदशैव एते यागा इति सिद्धम्।

एतत्तु भाष्यकारेण द्रव्यगताऽपि संख्या कर्मभेदिका इति प्रतिपादयितुमुक्तम्। कर्मगतसंख्या सकृत् श्रुतात् आख्यातपदात् एकभावनाविधानात् कृतार्था, न भावनाभेदमापादयतीति भावनाभेदे प्रमाणाभावात् एकैव भावना विधीयते। ननु होमभेदादेव भावनाभेदो भविष्यति। होमभेदश्च 'तिस्र आहुतीः' इति पृथङ्निवेशित्वसंख्यासंबन्धादेव प्रतीयते। तत्कथं भावनैकत्वमिति? मैवम्, प्रथमं तावत् स्वपदे एकैव होमभावना प्रतीयते। पश्चात्तु पदान्तरसंबन्धावगम्यमानः संख्याभेदः प्रथमावगतैकत्वसंख्यावरोधेन 'एकादश प्रयाजान् यजति' इतिवत् अभ्यासेनैव उपपन्नत्वान्न भावनास्वरूपभेदमापादयितुमलमित्येकैव भावनेति। एवं प्राप्ते, अभिधीयते। भवेदेवं यदि उत्पत्तिगतेयं संख्या न भवेत्। तथाहि, 'तिस्र आहुतीर्जुहोति' इत्येतेन वाक्येन त्रित्वविशिष्टो होमो विधीयते। न तु विहिते होमे प्रत्ययात् संख्यावत् वाक्यान्तरेण अत्र संख्याविधानम्। याऽपि जुहोतीतिपदात् एकत्वसंख्या प्रतीयते, साऽपि न होमस्य, अपि तर्हि कर्तुरिति कर्तृसमानाधिकरणे स्थास्यति। तेन उत्पत्तिशिष्टत्रित्वसंबन्धास्त्रयो होमाः। तत्र तेषां भेदात् तदनुबन्धास्तिस्रो भावना विधीयन्ते इति सिद्धम्।

**प्रयोजनम्**— पूर्वपक्षे सप्तदशपशूनामेकयागसाधनत्वे असक्तत्वात् साधनाभावस्य पदार्थानुष्ठानसमापने सप्तदशसु पशुषु धर्मानुष्ठानम्। तद्वत् संस्कृते एकस्मिन् पशौ विनष्टे व्यासङ्गिसाधनत्वस्यापि नष्टत्वात् पश्वन्तरमुपादाय प्रथमतः पशुधर्मः कर्तव्यः। सिद्धान्ते तु यागभेदे प्रतिपशु साधनताभेदात् एकस्मिन् पशौ नष्टे तन्मात्रस्यैव धर्मावृत्तिर्नेतरेषामिति।

सूत्रं तु— पृथक्त्वेन सह संख्यया एकार्थनिवेशात् उत्पत्तिशिष्टया संख्यया कर्मभेदो भवेदित्यर्थः। **तौता.**

**⌛ पृथक्त्वनिवेशात् संख्यया कर्मभेदः स्यात्। २।२।७।२१॥**

शब्दान्तरेण अभ्यासेन च कर्मभेद उक्तः। इदानीं संख्यया कर्मभेद उच्यते। 'सप्तदश प्राजापत्यान् पशूनालभते' इति वाजपेये श्रुतम्। तत्र किं सप्तदश एतानि कर्माणि, उत सप्तदशगुणकमेतत् कर्मेति विचारे सिद्धान्तमाह। संख्यया कर्मणां भेदः स्यात्। संख्यया सह पृथक्त्वस्य निवेशात्पृथक्त्वैकार्थनिवेशात्। यत्र उत्पत्तिवाक्ये 'तिस्र आहुतीर्जुहोति' इत्यादौ कर्मसमानाधिकरणा, देवताविशिष्टद्रव्यसमानाधिकरणा 'सप्तदश प्राजापत्यान् पशून्' इत्यादौ वा संख्या श्रूयते, तत्र 'स्वाश्रयसमवेतत्वसंबन्धेन स्वाश्रयावधिकं पृथक्त्वम्' इति नियमात् कर्मणो भेदः स्यात्। तस्मात् सप्तदश यागा एते इति सिद्धान्तः। **के.**

* **पृथक्त्वनिवेशिनी** हि संख्या असति पृथक्त्वे अभ्यासेन कल्प्येत। यावति असंभवो भेदस्य तावत्येव अभ्यस्येत। **भा.** ५।३।१।१२.

* '**पृथक्त्वनिवेशित्वात्** संख्यया कर्मभेदः स्यात्' इति वक्ष्यमाणन्यायेन संख्यया कर्मभेदः निश्चितः। **कु.** २।२।२।१२ पृ. १५९. * यदि 'पृष्ठैः स्तुवते' इत्युत्पत्तिः स्यात् तत उत्पत्तिगतया बहुत्वसंख्यया बहूनि पृष्ठानि स्युः। **शा.** ९।२।१५। '**पृथक्त्वनिवेशित्वात्**' इति न्यायेन इति भावः। **सोम.** ९।२।१५.

* '**पृथिव्यै स्वाहा**' इति पृथिव्यै इत्यनेन देवतोच्यते। तदर्थं 'वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नाद्यं प्रदीयते' इतीदं आम्नानम्। तत्र स्वाहाकारो नियम्यते वषट्कारनिवृत्त्यर्थम्। **टुप्.** १०।८।१०।२०.

* 'न **पृथिव्यामग्निश्चेतव्यः**' इति पृथिवीनिषेधः हिरण्यनिधानस्तुत्यर्थः, न प्रतिषेधमात्रफलः। **वा.** १।२।१।१८.

**पृथिव्योषधिन्यायः ।** यथा पृथिव्यामोषधयः संभवन्तीति, तथा प्रकृतेऽपि । **साहस्री.** ७६८.

* यदेतत् मृदारब्धं द्रव्यान्तरं **पृथिवीगोलकं** नाम, (सैषा महाभूमिः) विश्वजिति सर्वस्वदाने न देया । **भा.** ६।७।२।३, * क्षेत्राणामीशितारो मनुष्या दृश्यन्ते, न कृत्स्नस्य **पृथिवीगोलकस्य** । ६।७।२।३.

* **पृथिवीगोलकत्रैलोक्यभ्रमणादिना** वा पुराणोक्तेन केनापि गुणवादेन भूमिष्ठानामेव सतां दृष्टिवशात् यथव वयमुपरि देवान् पश्यामः एवमधोदेशस्य उपरिवर्तनात् अयमपि लोको देवैरुपरि दृश्यते इति ('उत्ताना वै देवगवा वहन्ति' इति) उत्तानवहनदृष्टिः । **वा.** १।३।९।३० पृ. २९३.

* यत्तु **पृथिवीविभागकथनं** इतिहासपुराणयोः, तत् धर्माधर्मसाधनफलोपभोगप्रदेशविवेकाय, किञ्चिद्दर्शनपूर्वकं किञ्चिद्वेदमूलम् । **वा.** १।३।१।२ पृ. १६६.

**पृथुपाजवत्यौ धाय्ये, अनुपदावाज्यभागौ इत्यनारभ्यवादाः विकृतौ उत्कर्षणीयाः ॥**

'पृथुपाजवत्यौ धाय्ये भवतः, अनुपदावाज्यभागौ' इत्यादयः अनारभ्यवादाः प्रकृतौ निविशेरन् । **इति प्राप्ते,** पञ्चदशसंख्याऽक्षरसंख्याऽऽदिविरोधात् वार्त्रघ्नीवृधन्वत्यवरोधाच्च विकृतौ उत्कृष्येरन् । **संकर्ष.** ४।४।१.

**पृथुश्लक्ष्णे वाऽनपूपत्वात् । १०।१।१७।५८॥**

'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति' इति पृथुत्वं प्रथनम्, 'सं ते तन्वा तनूः सृज्यताम्, इति त्रिः परिमार्ष्टि' इति श्लक्ष्णत्वं च पुरोडाशे क्रियते सौर्ये चरौ तु ते पृथुश्लक्ष्णे न कर्तव्ये । अनपूपत्वात् चरोः अपूपत्वाभावात् । इति सिद्धान्तः । **के.**

* **पृश्निः** अल्पतनुः, 'मारुतीं पृश्निमालभते' इत्यत्र । **वि.** ४।४।१.

**पृश्निप्राणग्रहाः अपि ग्रहा एव ॥**

वेदे तत्र व्यवह्रियमाणाः प्राणग्रहाः पृश्निग्रहाश्च नव ग्रहा भवेयुः । प्राणलिङ्गकैर्मन्त्रैर्गृह्यमाणानां इष्टकानां पञ्चशारदीये उपादीयमानानां सप्तदशानां उक्ष्णां च पृश्निवर्णवत्त्वेन तथा व्यपदेशोपपत्तेः । **इति प्राप्ते,** ग्रहपदसामानाधिकरण्येन रूढ्या योगापहारात् तेऽपि ग्रहविशेषा एव । **संकर्ष.** ३।३।१७.

**पृश्निप्राणग्रहाणां अनारभ्याधीतानामपि द्वादशाहे प्रायणीयोदयनीययोः दशमेऽहनि च निवेशः ॥**

अनारभ्याधीतानां पृश्निप्राणग्रहाणामंश्वदाभ्यादीनामिव प्रकृतौ निवेशे **प्राप्ते,** 'प्रायणीयोदयनीययोः दशमेऽहनि च गृह्यन्ते' इति वचनात् मानैः 'पृश्निप्राणग्रहान् व्यतिषजति' इति तत्प्रकरणे पाठाच्च द्वादशोपसत्त्वस्येव ग्रहाणामुत्कर्ष एवेति । **संकर्ष.** ३।३।२०.

**पृश्निप्राणग्रहमन्त्राः न यागार्थाः किन्तु सोममानार्थाः ॥**

द्वादशाहे 'पृश्निप्राणग्रहान् व्यतिषजति' इति श्रुतम् । तत्र पृश्निग्रहाणां प्राणग्रहाणां च प्रदानकाले सोमरसग्रहणकाले वा 'वायुरसि' इत्यादिपृश्निमन्त्रदशकस्य 'अयं पुरो भुवः' इत्यादिप्राणदशकस्य परस्परसांकर्यण प्रयोगः । **इति प्राप्ते,** जुहोतेरश्रवणाद्देवतानां चाभावेन नैते यागाः । ग्रहशब्दप्रयोगस्तु 'उभावाज्यग्रहान् जपतः' इत्यादाविव तन्मन्त्रेषु गौणः । व्यतिषङ्गोऽपि 'मानैर्व्यतिषजति' इति वचनान्तरात् अभिषवार्थं अंशुग्रहणरूपे माने क्रयकाले इव 'इन्द्राय त्वा' इत्यादिभिः प्राकृतैः पञ्चभिर्मन्त्रैः सह वैकृतानां विंशतेः सांकर्यम्, न पुनः प्रदाने एव सांकर्यमित्यत्र मानमस्ति । अत एव व्यतिषङ्गविशदीकरणं कल्पसूत्रेषु 'एकः प्राकृतप्रथममन्त्रः दश पृश्नयः प्रथमे माने । द्वितीयः प्राकृत एकः, दश प्राणग्रहा इति द्वितीयम् । ततः तृतीयपञ्चमयोः पृश्नय एव, चतुर्थे प्राणा एवेत्याकारकः एकः' । अन्योऽपि प्रकारस्तत्रैव द्रष्टव्यः । **संकर्ष.** ३।३।१९.

* **पृषत्त्वं** नाम चित्रता । सा च आज्यगतो गुणः । स च दधिमेलनेन निष्पद्यते । 'पृषदाज्येनानुयाजान् यजति' इत्यत्र ('पृषदाज्यं सदध्याज्ये' इत्यमरः) । **वि.** १०।४।२७.

* **पृषच्छब्दः** चित्रस्य वाचकः । तद्यथा पृषद्रज्जुः, पृषन्मणिः, पृषन्मृगः इति । **भा.** १०।४।२५।५९.

* 'पृषदाज्येन अनुयाजान् यजति' इति पृषत्ता गुणो विधीयमानः प्रत्यनुयाजं भिद्यते। भा. १०।६। १७।६४, * पृषदाज्येनापि इज्यमाना अनुयाजाः आज्येनेष्टा भवन्ति। नहि पृषत्त्वं आज्यत्वं नाशयति। १२।१।१।४, * पृषदाज्येन चातुर्मास्येषु अनुयाजान् यजति। १०।४।२५।५०, * पृषदाज्येन वनस्पतिं यजति पशौ। १०।४।१६।३२, * 'पृषदाज्ये समुचयात् ग्रहणस्य गुणार्थत्वम्।' पृषत्तासंपादनार्थं दधि। आज्येन च समुचयः। १०।७।१९।६९.

**पृषदाज्याधिकरणम्**। चातुर्मास्येषु अनुयाजीयदेवताप्रकाशनार्थाज्यपनिगमेषु आज्यपशब्दस्यैव प्रयोगः न पृषदाज्यपशब्दस्य॥

**उभयपानात् पृषदाज्ये दध्नः स्यादुपलक्षणं, निगमेषु पातव्यस्योपलक्षणात्।१०।४।२५।५१॥**

**भाष्यम्**— सन्ति चातुर्मास्यानि, 'चातुर्मास्यैः स्वर्गकामो यजेत' इति। तत्रानुयाजान् प्रकृत्य समामनन्ति 'पृषदाज्येनानुयाजान् यजति' इति। अस्ति तु प्रकृतावावाहनम् 'देवानाज्यपानावह' इति। तदिह चोदकेन प्राप्तम्। तत्र संशयः, किमविकारेणाऽऽवाहनं कर्तव्यमुत ऊहेनेति। यदा ऊहेन, तदा किं आज्यपान् दधिपानिति कर्तव्यमुत दधिपानिति, अथवा पृषदाज्यपानिति। किं प्राप्तम्? दध्नोऽप्युपलक्षणं स्यादाज्यस्यापि। कस्मात्? उभयपानात्। उभयं हि तत् देवतामुद्दिश्य त्यज्यते। यच्च त्यज्यते, तत् पीयते इति मन्त्रेणोक्तम्। यच्च पातव्यं तदुपलक्षितं प्रकृतौ आज्यपानिति। इह आज्यस्याथ दधिसर्पिषी श्रूयेते 'अथ पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्चैव दधि च, द्वन्द्वं वै मिथुनं प्रजननम्, मिथुनमेवैतत्प्रजननं क्रियते' इति। तुल्यं दधि आज्येनोचार्यते। तस्मादुभयमप्युपलक्षयितव्यम्, दधि च आज्यं चेति।

**न वा, परार्थत्वाद् यज्ञपतिवत्। ५२॥**

**भाष्यम्**— न वैतदेवं दध्युपलक्षयितव्यमिति। कुतः? परार्थत्वात्। परार्थं हि पातव्यं द्रव्यं पातॄणामुपलक्षणम्। तत्र आज्येन चेदुपलक्ष्यते, कृतोऽर्थ इति न पुनर्दध्नोपलक्षयितव्यम्। यज्ञपतिवत्। यथा 'य इमं यज्ञमवान् ये च यज्ञपतिं वर्धान्' इति। यज्ञपतिर्मनुष्याणां होतॄणां प्रशंसार्थः, न स्वार्थे कीर्त्यते इत्यविकारेण प्रयुज्यते। न सर्वान् यजमानान् प्रति आदरः। एवमिहापि पातव्यं पातुर्लक्षणार्थं प्रयुज्यते, न स्वार्थम्। तत्रैकेनापि येनकेनचिल्लक्षिताः पातार इति कृत्वा, न द्वितीयः प्रयोक्तव्य इति।

**स्याद् वाऽऽवाहनस्य तादर्थ्यात्। ५३॥**

**भाष्यम्**— स्याद्दध्न उपलक्षणम्। न यज्ञपतिवत् स्यात्। यज्ञपतिशब्दो हि न स्वार्थमुच्चार्यते, इडास्तुत्यर्थेन स उच्यते। आवाहनं पुनः स्मरणार्थम्। तत्र पाताऽपि स्मर्तव्यः, पेयमपि। तस्माच्चोदकानुग्रहाय पेयान्तरमुपलक्षयितव्यमिति।

**न वा, संस्कारशब्दत्वात्। ५४॥**

**भाष्यम्**— न वा दध्युपलक्षयितव्यम्। संस्कारशब्दोऽत्र विद्यते आज्यस्य, 'पृषदाज्येनानुयाजान् यजति' इति। पृषदाज्येन चित्रेणेत्यर्थः। संस्कारेण हि मिश्रणे संस्कृतं चित्रमाज्यं भवति। तां च चित्रतामस्य प्रत्यक्षतो दध्युत्पादयति। तस्मात् परार्थं चित्रतासंजननार्थं न पातव्यम्। अतो नोपलक्षयितव्यमिति।

**स्याद् वा, द्रव्याभिधानात्। ५५॥**

**भाष्यम्**— स्याद्वा दध्युपलक्षणम्। द्रव्यं हि दधि तुल्यमाज्येन प्रधानभूतमुपदिश्यते इत्युक्तमस्माभिः। 'अथ पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्चैव दधि च, द्वन्द्वं वै मिथुनं प्रजननम्, मिथुनमेवैतत्प्रजननं क्रियते' इति। किम्? पृषदाज्यं गृह्यते, सर्पिश्चैव दधि चेति। सर्पिषा दध्ना च यागः कर्तव्य इत्यर्थः। पृषदाज्यमिति न द्रव्यान्तरमुच्यते। तस्मात् दधि उपलक्षयितव्यमिति।

**दध्नस्तु गुणभूतत्वादाज्यपानिगमाः स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात्। ५६॥**

**भाष्यम्**— न चैतदस्ति तुल्यं दधि आज्येन प्रधानभूतमिति। ग्रहणे हि तत् तुल्यमाज्येन, न यागे। यागो हि आज्येन चित्रेण श्रूयते। तस्मात् श्रुतेराज्यप्रधानत्वात् यागं प्रति गुणभूतं दधि स्यात्। नहि ग्रहणे श्रूयमाणं यागे श्रुतं भवतीति। दधिग्रहणे श्रूयमाणं न यागार्थं भवति। तत्र श्रुत्या आज्यं करणम्, दधि

वाक्येनेति। किमर्थं तर्हि तत्र दधिग्रहणम्? गृह्यमाणेन प्रत्यक्षतश्चित्रमाज्यं भवतीति। तस्मादाज्यपानिगमाः स्युः। न दध्न उपलक्षणं कर्तव्यमिति।

**दधि वा स्यात् प्रधानमाज्ये प्रथमान्त्यसंयोगात्। ५७॥**

**भाष्यम्**— न चैतदस्ति, आज्यपानिगमा भवेयुरिति, न दध्न उपलक्षणं कर्तव्यमिति। दधिपानित्येव कर्तव्यम्, दध्येवात्र प्रधानम्। कुतः? आज्ये प्रथमान्त्यसंयोगात्। प्रथमसंयोगः उपस्तरणम्। अन्त्यसंयोगोऽभिघारणम्। 'यदि वसन्ते यजेत, द्विरुपस्तृणीयात् सकृदभिघारयेत्, ओषधयो वै प्रियङ्गवः, ओषधिष्वेव पशून् प्रतिष्ठापयतीति। यदि प्रावृषि यजेत, सकृदुपस्तृणीयात् द्विरभिघारयेत्, वृष्ट्यैव पशूनभिजिघर्ति' इति। उपस्तरणं अन्यत्तत्र निधापयितुं क्रियते। परार्थेनैष तत्र शब्दार्थो न ग्रहणमात्रम्। ग्रहणेन अन्यस्याधिकरणसंस्कारे उपस्तृणातीति शब्दो वर्तते, तथा अभिघारयतीति, न ग्रहणमात्रमभिघारणम्। अन्यस्य आभिमुख्येन अभिघारयतीति गम्यते सोऽन्यः आज्यसंयुक्तः कथं स्यादिति। तत् उपस्तरणाभिघारणशब्दाभ्यां दधि प्रधानभूतं गम्यते। आज्यमपि तस्य गुणभूतम्। तस्माद्दध्न एवोपलक्षणं कर्तव्यम्, नाऽऽज्यस्येति।

**अपिवाऽऽज्यप्रधानत्वाद् गुणार्थे व्यपदेशे भक्त्या संस्कारशब्दः स्यात्। ५८॥**

**भाष्यम्**— अपिवा नैतदेवं दधि प्रधानं तदुपलक्षयितव्यमिति। आज्यमेव प्रधानम्, तद्धि प्रयोजनवत्, यागसंबन्धात् 'पृषदाज्येनानुयाजान् यजति' इति। यत्तेनोपस्तीर्यते, तत्र द्वयं निष्पद्यते, तच्चैवावत्तं भवति दधि चोपस्तीर्णम्। तत्र शब्दात् आधेयस्य आधारसंस्कारोऽवगम्यते दधिसंस्कारः, न तु संस्कृतस्य प्रयोजनं दध्नः। प्रत्यक्षा तु चित्रता निर्वर्त्यमाना लक्ष्यते। तया च प्रयोजनम्। पृषद्धि तदाज्यं श्रूयते। न च यागे दधि करणं भवितुमर्हति वाक्यप्राप्तम्, आज्ये श्रुतिप्राप्ते प्रत्यर्थिनि। तस्मादुपस्तरणमाज्यग्रहणार्थमेव। ततो दधिग्रहणं भविष्यतीति। अर्थादाधेयाधारसंबन्धे उपस्तरणमिव तद्भवतीति भाक्त उपस्तृणातिः प्रयुक्तः। तथा अभिघारयतिः। तस्मात् सकृद् द्विरित्येतस्य गुणस्यार्थे व्यपदेशे भक्त्यैष संस्कारशब्दः 'उपस्तृणाति, अभिघारयति, ओषधिष्वेव पशून् प्रतिष्ठापयति, वृष्ट्यैव पशूनभिजिघर्ति' इति च। तस्मात्, आज्यपानिगमा एव भवेयुरिति।

**अपिवाऽऽख्याविकारत्वात् तेन स्यादुपलक्षणम्। ५९॥**

**भाष्यम्**— अपिवेति पक्षव्यावृत्तिः। न आज्यपानिगमा भवेयुः, पृषदाज्यपानिति वक्तव्यम्। कुतः? आख्याविकार एव भवति। दधिसर्पिषोरत्र संसर्गः क्रियते। तत्र यो गुण उपजायते, तद्गुणयुक्तस्य संसृष्टस्य आख्याविशेषो भवति पृषदाज्यमिति। यथा 'रागः खाडवः सुरा' इति। तत्र ह्युपचरितमेकं शब्दमुपलक्षयामः। उपचारात् च अभिधानाभिधेयसंबन्धो गम्यते। तेन च यागनिर्वृत्तिः श्रूयते 'पृषदाज्येनानुयाजान् यजति' इति। तस्मादेवमुपलक्षयितव्यं पृषदाज्यपानिति।

**न वा स्याद्, गुणशास्त्रत्वात्। ६०॥**

**भाष्यम्**— नैतदेवं स्यात् संसृष्टस्य रागवत् पृषदाज्यशब्दो वाचकः उपचारादिति। सत्यमुपचरितोऽयं तत्र, स तूपचारो लोकादेवावगतः। स गुणः आज्ये भवतीति गम्यते। कुतः? आज्यशब्दः सर्पिषो वाचकः। पृषच्छब्दश्चित्रस्य। तद्यथा पृषद्रज्जुः, पृषन्मणिः, पृषन्मृगः इति। तयोरुच्चरितयोः चित्राज्याभिधानं गम्यते। तस्मात्तत्रैव स उपचार उपपन्नः। अतश्च आज्यस्यैवोपलक्षणम्, चित्रमचित्रं वा आज्यम्। आज्यशब्देनाभिधीयते एवेति।

**सोम**— स्तुतशस्त्रयोः स्तुत्यर्थत्वेन देवताभिधानपरत्वाभावात् अनूहेऽपि निगमानां देवताऽभिधानपरत्वेन सति ऊहे प्राकृताज्यपशब्दस्य बाधः इत्युत्थानात् संगतिः। **सूत्रार्थस्तु**— पृषदाज्ये हविषि सति निगमेषु दध्नोऽपि उपलक्षणं स्यात्, प्रकृतौ पातव्यस्याज्यस्य उपलक्षणत्वात्, इह आज्यदध्नोः उभयोरपि पृषत्त्वेन पानावगमात् इति। २६.

वि— 'चातुर्मास्यातिदिष्टेषु निगमेष्वाज्यपानिति । विक्रियेत न वाऽऽद्येऽपि किं स्याद् दध्याज्यपानिति ॥ दधिपानिति वा यद्वेत्येवं स्यात् पृषदाज्यपान् । , द्रव्यद्वयोक्तेराद्यः स्याद् दधिमात्रहविष्ट्वतः ॥ द्वितीयः स्यात् तृतीयोऽस्तु द्रव्यान्तरविधानतः । , गुणो दध्ना चित्रताऽऽज्ये ततो विक्रियते नहि ॥ ' तस्मात् आज्यस्यैव द्रव्यत्वात् आज्यपशब्दोपेता एव निगमाः पठितव्याः । २७.

भाट्ट— पश्वादौ 'पृषदाज्येनानूयाजान् यजति' इति श्रुतं पृषदाज्यं प्राकृतस्य द्रव्यस्य तद्गतनैरपेक्ष्यस्य वा निवर्तकं न वेति चिन्तायाम् , पृषदाज्यशब्दस्याज्यदधिभ्यां आरब्धे द्रव्यान्तरे एव शक्तेः अनूयाजोद्देशेन विधीयमानं द्रव्यान्तरं प्राकृताज्यस्य निवर्तकम् , ततश्चावाहनादिमन्त्रेषु 'देवानाज्यपानावह' इत्यादिषु 'देवानाज्यपृषदाज्यपानावह' इत्यूहोऽपि । अथवा पृषदाज्यशब्दस्य क्लृप्तावयवयोगेनोपपत्तौ द्रव्यान्तरस्य, तत्र चातिरिक्तपदशक्तेश्च कल्पनायां प्रमाणाभावात् , पृषत्पदस्य पृषद्रज्जुरित्यादिप्रयोगानुसारेण चित्रत्वे एव शक्तिः , आज्यपदस्य त्वाज्ये एव । तथापि तु 'द्विरुपस्तृणाति, द्विरभिघारयति, बर्हिषी अन्तर्धाय दधि गृह्णाति' इति पृषदाज्यग्रहणे आज्यस्य दधिसंस्कारकोपस्तरणाभिघारणार्थत्वेन श्रवणात् विधावपि पृषदाज्यपदं लक्षणया दध्येव विधत्ते, इति प्रदानार्थस्य प्राकृताज्यस्य निवर्तकम् । ततश्च 'देवान् आज्यदधिपान्' इत्यूहः । पक्षद्वयेऽपि आज्यशब्दः प्रयाजाद्यर्थाज्यपर इति । अथवा 'पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्च दधि च' इति वाक्यशेषानुसारात् विधिस्थपृषत्पदस्यैव दधिलक्षणावगतेः एकवचनस्यापि समाहाराभिप्रायत्वेनोपपत्तेः उपस्तरणाभिघारणवादस्य चोपस्तरणाभिघारणसंबन्धिप्रथमोत्तमस्थानविधिपरत्वेन संस्कारविधिपरत्वाभावादाज्यं दधि चोभयमनूयाजाङ्गम् । ततश्च प्राकृतस्यापि आज्यगतनैरपेक्ष्यस्यैव बाधः, न त्वाज्यस्य । ऊहश्च अनन्तरोक्तपक्षवदेव । न चास्मिन् पक्षे यज्ञपतिशब्दवत् एकेनैव द्रव्येणोपलक्षणसंभवे दधिपदप्रयोगे प्रमाणाभावः, अस्य मन्त्रस्य देवताप्रकाशनार्थत्ववत् द्रव्यप्रकाशनार्थत्वस्यापि अविशेषेण तद्वदिह पारार्थ्याभावात् । आज्यधर्माश्च पक्षद्वयेऽपि दध्नि अविशिष्टाः । प्रथमपक्षे पृषदाज्ये उत्पवनादय इति विशेषः । इति प्राप्ते, पृषच्छब्दस्य चित्रत्ववाचिनो दधिलक्षणाऽऽपत्तेः समाहारलक्षणाविधेयानेकत्वकृतगौरवापादकपक्षाङ्गीकरणं न युक्तम् । अतः आज्योद्देशेन पृषत्तामात्रं विधीयते । एकप्रसरताभङ्गभिया वा पृषत्ताविशिष्टाज्यस्यैव अतिदेशप्रवृत्तितः पूर्वप्रवृत्तौ पृषत्तामात्रफलको विधिः । पृषत्ता चोक्तवाक्यशेषानुरोधेन दध्ना, इति न क्वापि लक्षणा । उपस्तरणाभिघारणवादस्तु उपर्यधोभावमात्रेण नानुपपन्नः । नहि उपस्तरणादिशब्दः संस्कारकक्रियाया एव वाचकः इत्यत्र प्रमाणमस्ति, अवघातादिवत् संस्कारकत्वस्य प्रमाणाधीनत्वात् , प्रकृते च तदभावात् । अतो लौकिकस्यैव दध्नः संस्कारकमात्रत्वादाज्यमेव हविरिति न कस्यापि बाधः ऊहो वा ।

मण्डन— 'निगमाश्चाज्यपानिति । ' २८.

शंकर— 'आज्यपान् स्यात् पृषदाज्यके । ' २८.

* पृषदाज्यग्रहणमाज्यकाले एव कर्तव्यम् । शा. ५।२।७.

* पृषदाज्यधारणार्थं पृथक् पात्रं आज्यस्य च पृथक् अग्नीषोमीये पशौ । के. ५।२।८।१६.

* पृषदाज्यशब्दः चित्राज्यवाची । न हि पृषदाज्यं नाम द्रव्यान्तरं किञ्चिदस्ति । मीन्या.

**पृष्टाकोटिन्यायः** । अयं न्यायो यत्र धर्मादिविषये यन्मात्रं पृच्छ्यते तन्मात्रं सर्वमेव वक्तुमसमर्थत्वेऽपि तत्र यत्किञ्चिदुपयोगि तत्कथ्यते, तद्विषये प्रवर्तते । उक्तं च धर्मनिबन्धे 'अथ सिद्धे दुरिते का तत्संख्येति प्रायश्चित्तकदम्बाद्युक्तगणना लिख्यते । सा च पृष्टाकोटिन्यायेन वक्तुमशक्याऽपि स्थूलोपाधिविषयत्वेनोच्यते ' इति । साहस्री ५८७. (वस्तुतस्तु 'पृष्टाकोटन्यायः' एव अयं स्यादिति प्रतिभाति । तथा च भाष्यादिषु पाठः टीकादिषु च विवरणमुपलभ्यते । 'पृष्टाकोट 'शब्दे वार्तिककृद्भिः सुधाकृद्भिश्च कृतं विवरणं द्रष्टव्यम् । ततश्च विशेषतः अभिधाने यत्र गौरवं अशक्यत्वं च तत्र अस्य प्रयोगः । यथा भाष्ये 'न शक्यं पृष्टाकोटेन तत्र तत्र उपदेष्टुमिति लक्षणमुक्तम्' । साहस्रीकृद्विवरणमयुक्तमेव प्रतिभाति ।)

* **पृष्ठं** ज्योतिष्टोमे एकेन साम्ना साधितम् । विकृतौ ( गवामयने पृष्ठ्ये षडहे ) अपि एकेन साधितव्यं चोदकानुग्रहाय । भा. १०।६।३।५, * बृहद्रथंतरे **पृष्ठे** ( प्रथमाद्विवचनम् ) प्रकरणस्य तुल्यत्वात् समानधर्मणी । १०।५।२४।७९. * **पृष्ठानि** इति 'पृष्ठैः स्तुवते' इतिविहितकर्मनामधेयं अवयवप्रसिद्ध्या, स्पर्शनात् पृष्ठानि । भा. १।४।२।३ । 'तासां वायुः पृष्ठे व्यवर्तत' इति यस्मादपां पृष्ठे स्पृष्टे रथंतरादीनि जातानि, तस्मात्तानि पृष्ठानि इत्यर्थवादात् विज्ञातम् । तत्प्रकृतित्वाच्च वामदेव्यादिषु पृष्ठशब्दप्रसिद्धिः । वा. पृ. ३३१-३३२. * पृष्ठानि माहेन्द्रस्तोत्रादीनि चत्वार्येव ज्योतिष्टोमे, न सर्वाणि षडपि । भा. ७।३।३।६, * पृष्ठानि विश्वजिति पवमाने रथंतरम्, आर्भवे बृहत्, वैरूपं होतुः, वैराजं मैत्रावरुणस्य, रैवतं ब्राह्मणाच्छंसिनः, शाक्वरमच्छावाकस्य । ७।३।३।८, * '**पृष्ठैरुपतिष्ठते**' इति चयने श्रूयते । तत्र पृथिवीसमुद्रादिध्यानादयो हिंकारादयो वा पृष्ठधर्मा न कर्तव्याः, किन्तु तैर्मन्त्रैरुपस्थानं कर्तव्यम् । पृष्ठशब्दोऽत्र तदीयमन्त्रपरः । ७।३।१४।३५-३६. * 'पृष्ठैरुपतिष्ठते' इति पृष्ठशब्दः ऋग्द्रव्यवाचकः । ७।३।१४. **मीको.** पृ. ३८ 'अग्निचयने पृष्ठैरुपतिष्ठते' इत्यत्र द्रष्टव्यम् । * 'पृष्ठैरुपतिष्ठते' । ऐन्द्यधिकरणस्थकौस्तुभोक्तन्यायेन लक्षणया अभिधानमेव प्रकृताग्निकर्मकं धातुना विधीयते तत्रैव पृष्ठपदार्थस्य करणत्वम् । ( कौस्तुभोक्तमेव 'लक्षणया अभिधानमेव' इत्यादिना अत्रत्यग्रन्थेन प्रतिपादितम् । उदाहरणान्तरत्वात्तु वर्णानुपूर्वीभेदमात्रम् । इति न कौस्तुभदर्शने मनः खेदनीयम् । **के.**) । भाट्ट. ७।३।१२. * 'पृष्ठैः स्तुवते' इत्युपक्रम्य षट् ऋचः आम्नाताः । 'अभि त्वा शूर नोनुमः' इति आद्या, तत्र रथंतरं साम । 'त्वामिद्धि हवामहे' इति द्वितीया, तत्र बृहत् । 'कया नश्चित्र आभुवत्' इति तृतीया, तत्र वामदेव्यम् । 'तं वो दस्ममृतीषहम्' इति चतुर्थी, तत्र नौधसम् । 'अभि प्र वः सुराधसम्' इति पञ्चमी, तत्र श्यैतम् । 'तरोभिर्वो विदद्वसुम्' इति षष्ठी, तत्र कालेयम् । तत्र बृहद्रथंतरयोर्विकल्पः । एवं नौधसश्यैतयोरपि विकल्पः । स च रथंतरपक्षे नौधसम्, बृहत्पक्षे श्यैतं इति व्यवस्थितः । तदेवं ज्योतिष्टोमे नियतानि चत्वारि पृष्ठस्तोत्राणि । 'सप्तदशानि पृष्ठानि' ( प्रकृतौ ), 'एकविंशं होतुः पृष्ठम्' 'त्रिणवं मैत्रावरुणस्य' 'सप्तदशं ब्राह्मणाच्छंसिनः' 'पञ्चदशमच्छावाकस्य' (विकृतौ) । कौ. १।४।३।३ पृ. १८९-१९०. * 'पृष्ठैः स्तुवते' इति स्तोत्रं प्रधानकर्म, न गुणकर्म । भा. २।१।५।१३-२९, * **पृष्ठस्य** एकस्य पृष्ठकार्ये निवेशः अन्येषां परिसामकार्ये । विश्वजिति सर्वपृष्ठे । १०।६।५।१३-१४, * **पृष्ठानां** षण्णां षाडहिकानां विश्वजिति सर्वपृष्ठेऽतिदेशः । ७।३।३।६-११. * **पृष्ठे** ( होतुः ) बृहतो नियमः क्वचित् विकृतौ । भा. १०।७।१६।५१-५७. 'वाजपेयादिविकृतौ वैकल्पिकानां०' इत्यत्र द्रष्टव्यम् ।

**⌛ पृष्ठार्थेऽन्यद् रथंतरात् तद्योनिपूर्वत्वात् स्यादचां प्रविभक्तत्वात् । १०।४।२२।४४ ॥**

वैरूपस्तोमे 'कण्वरथंतरं पृष्ठं भवति' इति श्रूयते । तत् कण्वरथंतरं कस्यां योनौ गेयं इति विचारे पूर्वपक्षमाह । पृष्ठार्थे पृष्ठस्तोत्रार्थं यत् रथंतरादन्यत् कण्वरथंतरं श्रूयते तत् 'अभि त्वा शूर' इति रथंतरयोनौ स्यात्, तद्योनिपूर्वकत्वात् ज्योतिष्टोमे या रथंतरयोनिर्भवति सैव योनिः कण्वरथंतरस्य इति तद्योनिपूर्वकत्वं कण्वरथंतरस्य । ननु वैरूपस्तोमस्य ज्योतिष्टोमपूर्वकत्वात् बृहतो योनावपि कण्वरथंतरं स्यात् । न । बृहत्साम्नः ऋग्भ्यः कण्वरथंतरस्य ऋचां प्रविभक्तत्वात् भिन्नत्वात् । कण्वरथंतरे रथंतरशब्दो धर्मनिमित्तः । तस्मात् वैरूपस्तोमे कण्वरथंतरं साम रथंतरयोनौ गेयं इति पूर्वः पक्षः ।

**स्वयोनौ वा, सर्वाख्यत्वात् । ४५ ॥**

पूर्वपक्षं सूत्रप्राप्तं वाशब्देन परिहरन् सिद्धान्तमाह । कण्वरथंतरं स्वयोनौ गेयम् । ( पुनानः सोमयोरथ इत्यस्यां इति कु. ) सर्वाख्यत्वात्, सर्वविशेषणविशिष्टस्य हि कण्वरथंतरशब्दो वाचकः । प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनवतः सर्वस्य सस्तोभस्वरकालाभ्यासस्य कण्वरथंतरमित्याख्या भवति । तत्र योनिरपि विशेषणम् । तस्मात् स्वयोनौ गेयम् । इति सिद्धान्तः ।

यूपवदिति चेत् । ४६ ॥

कण्वरथंतरे रथंतरशब्दः रथंतरधर्मेषु सत्सु यूपवत् उपपद्यते । यथा यस्मिन् काष्ठे यूपधर्माः सन्ति तस्मिन् यूपशब्दः प्रवर्तते तद्वत् । इति चेत् पूर्वपक्षी ब्रूयात् ।

न, कर्मसंयोगात् । ४७ ॥

कण्वरथंतरशब्दः यूपशब्दवत् कर्मसंयोगात् न प्रवृत्तः । यूपशब्दो हि संस्कारयोगात् प्रवृत्तः । कण्वरथंतरशब्दस्तु न तथा किन्तु रूढोऽयं शब्दः । अतः स्वयोनौ कण्वरथंतरं गातव्यमिति सिद्धान्तः । के.

* 'उक्थ्यो वैरूपसामा, षोडशी वैराजसामा' इत्यादिषु 'पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात्' (१०।६।६।१६) इत्यनेन न्यायेन वैरूपादेः पृष्ठसाधनत्वद्योतनार्थत्वेन साम्नः पृष्ठलक्षणार्थत्वात् दूरापास्ता सामान्तरापेक्षा । सु. पृ. ८९४.

* **पृष्ठाकोटः** । धरणिगतानेकद्रव्यप्रत्येकनिरीक्षणे पुनः पुनः पृष्ठं कुटिलीक्रियते इति तत्सामान्येन पृष्ठाकोटाभिधानम् । (साहस्त्यां तु पृष्ठाकोटिशब्दः, अर्थोऽपि भिन्नः) । वा. २।१।७।३२. * पृष्ठाकोटः पृष्ठस्य आकोटः वक्रत्वं अस्मिन् व्यापारे स पृष्ठाकोटः । सु. पृ. ६७०.

* कः पुनः **पृष्ठदेशः** ? ऊर्ध्वं माध्यंदिनपवमानात् प्राक् मैत्रावरुणसाम्नः, इदमन्तरालं पृष्ठदेशः । भा. १०।६।५।१३.

* **पृष्ठधर्माः** सामान्यधर्मा हिंकारादयः, विशेषधर्माः 'रथंतरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेत्, बृहति समुद्रम्' इत्येवमादयः । भा. ७।३।३।३५.

* **पृष्ठप्रतिपदौ**: उपवत्यग्नियवत्योः (उपास्मै, प्रयुजो वाचो) प्राकृतयोः नैमित्तिकयोः संसवादिविकृतौ नानुष्ठानम् । १०।५।१६।५९–६१.

* **पृष्ठशब्दः** अग्निचयनगतो रथंतरादिसामोपेतमन्त्रोपलक्षकः, न स्तोत्रधर्मान् अतिदिशति । 'पृष्ठैरुपतिष्ठते' इति । ७।३।१४. * पृष्ठशब्दः ज्योतिष्टोमे माध्यंदिनसवनगतस्तोत्रविशेषाणां नामधेयम् । वि. १।४।३. * पृष्ठशब्दः 'पृष्ठैरुपतिष्ठते' इति ऋग्द्रव्यवाचकः । ७।३।१४. * पृष्ठशब्दः स्तोत्रपर एव, न सामपरः । सोम. ७।३।३. * पृष्ठशब्दः स्तोत्रविशेषवाचकः । प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम् । 'पृष्ठैः स्तुवते' इत्यत्र । वि. २।१।५. * सप्तदशानि (सप्तदशस्तोमकानि) पृष्ठानि इति पृष्ठशब्दः नामधेयम्, न गुणविधिः । भा. १।४।२।३.

* **पृष्ठशमनीयः** ज्योतिष्टोमविकृतिभूतः 'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्' । अयं न सत्राङ्गम् । तत्र सहस्रदक्षिणाऽपि लोपं नार्हति । १०।२।१२. * पृष्ठशमनीयः (उदवसानीयः) सत्रसमाप्त्युत्तरं सत्रिणामेकैकेनैव ऋत्विगन्तरसंपादनेन कर्तव्यः, न संहत्य । १०।२।१३–१४।४१–४३. * **पृष्ठशमनीयेन** यागेन सत्रसमाप्तिः । सु. पृ. १५३९. * **पृष्ठशमनीये** ऋत्विग्भ्यो दक्षिणादानं परिक्रयार्थम् । १०।२।१२।४०-४१. * पृष्ठशमनीये कर्तृत्वं न सत्रिणामेव यजमानत्वेन, किन्तु अयजमाना ऋत्विजः कर्तारः । तत्र सत्रिणामपि ऋत्विक्त्वेन केवलेन परिक्रये न दोषः । के. (वि. १०।२।१३.)

⌛ **पृष्ठशमनीये सत्रिभ्योऽन्ये ऋत्विजः, न तु ते एव ॥**

**तत्रान्यानृत्विजो वृणीरन् ।१०।२।१४।४३॥**

**भाष्यम्**— अन्तरा चिन्तान्तरस्य सूत्रं तावत् वर्णयिष्यामः । अस्मिन्नेवोदाहरणे एषोऽर्थः सांशयिकः किं ते एव सत्रिणः ऋत्विजः, उतान्ये वा वरीतव्या इति । किं प्राप्तम् ? ते एव । कुतः ? समानकर्तृकता हि गम्यते 'उदवसाय यजेरन्' इति । ये एव उदवसातारः, ते एव यष्टारः इति भवति प्रत्ययः । यथैव वचनप्रामाण्यात् चोदकप्राप्तामेककर्तृकतां बाधित्वा बहुकर्तृकता भवति, एवं चोदकप्राप्तानन्यान् ऋत्विजो बाधित्वा वचनप्रामाण्यात् ते एव भवितुमर्हन्तीति । एवं प्राप्ते, ब्रूमः । तत्रान्यान् ऋत्विजो वृणीरन् इति । नहि पृष्ठशमनीये ये सत्रादुदवसातारः, ते कर्तारो विधीयन्ते । न तेषामुपादेयत्वेन चोदनेत्युक्तम् । न चाविहितमङ्गं भवति । न चानङ्गे हीने विगुणता का चित् भवति । सन्ति च चोदकप्राप्ता अन्ये ऋत्विजः । अपि चात्र यावति कर्त्रभिप्रायं क्रियाफलम्, तावति ते एव कर्तारः ।

तदेतत् उपग्रहविशेषादवगम्यते । न च ऋत्विजः प्रति यागस्य कर्त्रभिप्रायं क्रियाफलम् । तस्मात् नार्त्विज्ये ते एव कर्तारः । प्रधानयागे तावत् कर्तॄनवगच्छामः । ऋत्विजः पुनरन्ये वरीतव्या इति ।

**टुप्**— ये एव उदवसाने कर्तारः, ते एव उदवसानीये विधीयन्ते । ( यदि तु अन्येऽपि कर्तारः पृष्ठशमनीयस्य भवेयुः, ततः ) सामानाधिकरण्यं न स्यात् । ( **इति प्राप्ते,** ) उच्यते । प्रधानमात्रे हि ( समानकर्तृकत्व– ) वचनं ( भवति 'यजेरन्' इति ) नहि विशेषणं श्रूयते साङ्गस्तैः पृष्ठशमनीयः कार्यः इति । वचनाभावात् किमिति चोदकबाधो भवतीति । प्रधानकर्तृत्वेऽपि ( प्रधानभूतयजमानव्यापारकर्तृत्वेऽपि ) सामानाधिकरण्यमुपपद्यते एव । ( तस्मात् अन्ये ऋत्विजो वरीतव्याः इति । )

**वि**— 'तत्रर्त्विजः सत्रिणः किमन्ये वा स्युर्, त्स्यैबुक्तितः । त एव, यष्टृभेदेऽपि क्रीतत्वादृत्विजः परे ॥'

**भाट्ट**— अनङ्गत्वे अङ्गत्वेऽपि वा उदवसानसमानकर्तृकत्वानुरोधात् यजमानैरेव आर्त्विज्यं कर्तव्यम् । न च तस्य प्रधानमात्राभिप्रायत्वेन उपपत्तिः, साङ्गे समानकर्तृकत्वश्रवणेन 'अप्सु अवभृथेन चरन्ति' इत्यादौ अद्भिः आहवनीयादेरिव औपदेशिकेन यजमानकर्तृकत्वेन अङ्गेष्वपि ऋत्विक्कर्तृकत्वबाधात्, दक्षिणादानस्य अदृष्टार्थत्वेनापि उपपत्तेश्च । **इति प्राप्ते,** प्रयोजककर्तृत्वेनापि प्रकृताविव यजमानकर्तृकत्वोपपत्तेः अङ्गत्वे अनङ्गत्वेऽपि वा सौर्यादाविव अतिदेशप्राप्तऋत्विग्बाधे प्रमाणाभावः । एवं च दक्षिणाश्रुतिः आञ्जस्येन उपपद्यते । १०।२।१३.

**मण्डन**— 'ततोऽन्ये स्युरिहर्त्विजः ।'

**शंकर**— '( तत्राधिकारः प्रत्येकं– ) चेत् सहत्वं तदर्त्विजः ।'

* 'सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्' इत्यत्र हि उदवसानसमानकर्तृकत्वबलेनैव **पृष्ठशमनीये** बहुत्वादेः प्राप्तत्वात् युक्ता साहित्याविवक्षा । भाट्ट.५।२।२.

**पृष्ठशमनीयन्यायः ।** उदवसानीयस्य ऋत्विगन्तरसंपादनेन प्रत्येकं कर्तृत्वम् ॥

**तेषां तु वचनाद् द्वियज्ञवत् सहप्रयोगः स्यात् । १०।२।१३।४२॥**

**भाष्यम्**— इदमेवोदाहरणम् 'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्' इति । तत्रैषोऽर्थः समधिगतः न सत्राङ्गं पृष्ठशमनीयः इति । अथेदानीमिदं संदिह्यते किं संहत्य तैस्तत् कर्तव्यम्, उत एकैकेनेति । किं प्राप्तम्? संहत्येति । कुतः? उपादेयत्वेन यागे चोद्यमानस्य बहुत्वस्य श्रवणात् । स चेदेकेन क्रियेत, बहुत्वसंयुक्तः प्रयोगो न स्यात् । द्वियज्ञवत् । यथा 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति । यद्यपि राजपुरोहितौ लक्षणत्वेन श्रूयेते, एवमपि यजेयातामिति यागः उपादेयत्वेन । यागे चैतत् कर्तृद्वित्वं श्रूयते, यजेयातामिति । तद्वत् पृष्ठशमनीयेन यजेरन्निति । तस्मात् संहत्य पृष्ठशमनीयं प्रयुञ्जीरन्निति । एवं स्थितं तावत् अपर्यवसितम् ।

**टुप्**— ( पृष्ठशमनीयेन ) यजेरन् इत्युपादेयत्वेन श्रुतत्वात् बहुवचनस्य विवक्षा । ननु ( इतरेतर– ) निरपेक्षाः उदवसाने ( कर्तारः ) । तथैव स्थितानां च ( उदवसानीय– ) यागो विधीयते ( अतः ) स ( अपि परस्पर– ) निरपेक्षाणामेव । सत्यम् । यद्यपि उदवसाने निरपेक्षाः, तथापि यागे सापेक्षाः ( भवन्ति ) द्वियज्ञवत् । ( यथा ) राजपुरोहितौ फलं प्रति प्रधानभूतौ ( परस्परनिरपेक्षौ ) यागं प्रति ( तु ) गुणभूतौ (सापेक्षौ)। कथम्? ( उत्तरम्– ) यागो हि विधीयमानः कर्तारमाकाङ्क्षति । तत्र ( यागे ) संख्या श्रूयते स्वपदगता ( यजेयातां इति । ततश्च सापेक्षाः कर्तारः । ) सैव (संख्या यागाङ्गत्वेन ) विधीयते ( न तु कर्ता । कथं तर्हि अनुष्ठानमत आह– ) कर्तृगामिनि ( उपग्रहविशेषात् ) क्रियाफले, अर्थात् क्रियां करिष्यति । ईदृश्यामवस्थायां द्विवचनं विवक्ष्यते । यदि च राजपुरोहितौ द्विवचनविशेषणार्थमुच्चाययाताम्, तथा सति यागं प्रधानभूतं न कश्चित् कुर्यात् । अतस्तयोर्यागः ( अङ्गत्वेन ) विधीयते, यथा 'मलिनः स्नायात्' इति । अपिच पदवेलायां

( अवसाय इति पदमनपेक्ष्य यजेरन् इति पदालोचन-वेलायाम् ) बहुवचनं विधीयते। तादृशं च पदान्तरेण संबध्यते । तस्मात् विवक्षितं ( यागे ) बहुत्वम्। ( तद्दशेन च ) सापेक्षाश्च कर्तारः ( यागे उदवसाने कर्तारो भवन्ति ) ।

**एकैकशस्त्वविप्रतिषेधात् प्रकृतेश्चैकसंयोगात्। ४४ ॥**

**भाष्यम्**— स्थितादुत्तरम्। तुशब्दः पक्षं व्यावर्तयति। न पृष्ठशमनीयं संहत्य प्रयुञ्जीरन्। किं तर्हि ? एकैकशः। कुतः ? अविप्रतिषेधात्। उदवसानेन हि पुरुषा लक्ष्यन्ते। ये सत्रादुदवस्यन्तीति । तत्र नैकोऽपि उदवसाता भवति। ये च उदवसानलक्षितास्तेषां याग इत्येकैकस्यापि यागो विहितो भवति। न च केन चित् प्रतिषिध्यते। तस्मादेकैकोऽपि यजेत। ननु बहूनां प्रयोग उच्यते। तेन एकैकस्य न भवति। नैष दोषः। एकैकस्यापि न वार्यते। तेन चोदकसामर्थ्यादेकैकशः एव यजेतेति। **आह**। बहुसंयुक्तः प्रयोगः एकैकेन न शक्यते कर्तुमिति। एवमपि न दोषः। नात्र बहुवचनं विधीयते। ये सत्रादुदवसातारस्तेषामेव यागः। ते च बहवः। तेषां बहूनामत्र प्राप्तानामयमनुवादः। एकैकश्येनापि च ते उदवसातारः। तस्मात्तेषां तथैव यागो भविष्यति । यथैवोदवसाने तेषामसंहतानां बहुवचनम्, एवं यागेऽपि असंहतानामेव भविष्यति। **अत्रोच्यते**। न बहुवचनमनुवादः, अप्राप्तत्वात्। नहि बहुवचनं यागे प्राप्तम्, यदनूद्येत। नन्विदानीमेवोक्तमुदवसातॄणां यागः, ते च बहव इति। उच्यते। बहुत्वं तेषामुदवसाने, न यागे ।

ननु वाक्यसामर्थ्यात् यागेऽपि भविष्यति। नेत्याह। परिपूर्णं हि पदं पदान्तरमाकाङ्क्षति, ततो वाक्यं भवति। अयं च यागः प्रागेव बहुवचनेन संबद्धः। न तस्यामवस्थायां वाक्येन उदवसातारः प्राप्ताः। उपादत्ते तु तदा बहुत्वम्। ततो बहुवचनसंयुक्तः पदान्तरगतान् उदवसातॄनपेक्षते । तस्माद्बहुत्वसंयुक्तः प्रयोगः कर्तव्यः । यथा द्वियज्ञे सत्रेषु चेति। **आह**। नैतदेवम्। यत्र केन चित् प्रकारेणानुवादः संभवति, तत्रानुवादो वा स्यात्, विधिर्वेति । यद्यपि अपूर्वत्वादन्यत्र विधिर्ज्यायाननुवादात्, तथाऽपि अत्रानुवाद एव बहुत्वस्य भवितुमर्हति । तथाहि यागसंबन्धो बहूनां न कुतो भवति। तत्र दृष्टमेव प्रयोजनम्, इतरस्मिन् पक्षे बहुत्वस्य यागसंबन्धेऽदृष्टं कल्पनीयं स्यात्। तस्मादनुवाद इति। ( स एव ब्रूते आहेति— ) आह। द्वियज्ञेऽपि तर्ह्येवमेव प्राप्नोति, सत्रेषु चेति। **अत्रोच्यते**। अस्त्यत्र विशेषः। उदवसाय यजेरन्निति। 'राजपुरोहितौ यजेयाताम्' 'ऋद्धिकामाः सत्रमासीरन्' इति । यत्र क्त्वाऽन्तः शब्दो भवति, तत्र द्वौ प्रयोगौ गम्येते। समानाश्च कर्तारः श्रवणादेव । तत्रोत्तरप्रयोगवचनेन केवलो धात्वर्थो विधीयते। तदाश्रयः प्रयोगः, कर्तारश्च, तद्गता च संख्या, एवं सर्वमेतद्धात्वथ विधीयमाने प्राप्तमेवानूद्यते । द्वियज्ञे सत्रेषु च धात्वर्थो विधीयते, प्रयोगोऽपि, कर्तारः, तद्गता च संख्येति, सर्वमेव तत्राप्राप्तम्। नहि राजपुरोहितौ इत्येष शक्नोति प्रयोगं वदितुम्, तत्र च कर्तृत्वम्, तद्गतां संख्याम्। तथा ऋद्धिकामा इति। तस्मादेवंजातीयकेषु संख्या उपादेयत्वेन श्रूयते। अतो द्वियज्ञादिषु नानुवादः। तेषु बहुत्वसंयुक्तः प्रयोगः कर्तव्यः। इह तु न तथा। तस्मादेकैकः पृष्ठशमनीयेन यजेतेति।

**टुप्**— इतरेतरनिरपेक्षा उदवसाने कर्तारः, अर्थप्राप्तत्वात् उदवसानस्य, अभाव्यत्वाच्च। यादृशाश्चोदवसाने ( कर्तारः ), तादृशा एव पृष्ठशमनीये। तस्मात् ( तत्रापि ) विवक्षितं बहुवचनम्। ननु राजपुरोहितवत् ( एकत्र निरपेक्षाः इतरत्र सापेक्षा भवन्ति ) इत्युक्तम्। यजेरन् इति च श्रुत्यैव ( पदान्तरमनपेक्ष्य ) बहुत्वं गम्यते। सत्यं गम्यते, न तु विधीयते । कथम् ? प्राप्तत्वात् ( संख्यायाः )। कुतः प्राप्तिः ? क्त्वाश्रवणात् द्वौ प्रयोगौ गम्येते। ये च पूर्वस्मिन् प्रयोगे कर्तारः, त एवोत्तरस्मिन् ( इत्यपि तत एव गम्यते )। पूर्वस्मिंश्च त्यागे ( सत्रत्यागप्रयोगे उदवसानाख्ये ) इतरेतरनिरपेक्षाः ( ते ) तादृशा एव उत्तरस्मिन् ( प्रयोगे। किं तर्हि विधीयते इत्यत आह— ) क्रियाविशेषः अप्राप्तः स एव विधीयते ( न संख्या। बहुत्वं तु उदवसातॄणामनुवादः इति )।

**सोम**— ऋत्विग्गबाधवत् एककर्तृकत्वस्यापि अबाधः इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**— तेषां सत्रिणां सहप्रयोगः स्यात्, यजेरन् इति बहुत्ववचनात् । यथा 'राजपुरोहितौ यजेयाताम्' इति द्वित्ववचनात् द्वियज्ञे सहप्रयोगः, तद्वत् इति ।

**वि**— 'संभूयैकैकशो वाऽत्र यष्टृता, ऽऽद्यो बहूक्तितः ।, द्वियागवद् बहुत्वस्य प्राप्तेरन्त्योऽस्तु सोमवत् ॥' सोमे ऋत्विग्बहुत्ववत् । १४.

**भाट्ट**— अनङ्गत्वेऽपि संहत्यैव करणम्, आख्यातोपात्तस्य बहुत्वस्य उपादेयकर्तृगामित्वेन सत्रवाक्ये इव विवक्षितत्वात् । कथञ्चित् प्राप्तत्वेऽपि संहत्य प्रयोगसिद्ध्यर्थं 'सृष्टीरुपदधाति' 'सोमेन यजेत' इत्यादिवत् विशिष्टविध्यङ्गीकारेण प्रयोजनसिद्ध्यर्थं विध्युपपत्तेश्च । ( स्थितं तावदपर्यवसितम् । ... स्थितादुत्तरम् ) न पृष्ठशमनीये संहत्य प्रयोगः, बहुत्वस्य प्राप्तत्वेन अविधेयत्वात् । उदवसाने हि अनेकेषां सत्रकर्तॄणां कर्तृत्वं प्राप्तमेव । अतः तत्समानकर्तृकत्वादेव पृष्ठशमनीयेऽपि तत्प्राप्तिः । अतोऽयं तावदनुवादः । क्त्वाप्रत्ययस्य हि पूर्वकालत्ववत् समानकर्तृकत्वमपि अनुशासनबलात् वाच्यम् । **न च** अव्ययकृत्त्वेन अस्य ( क्त्वः ) भावशक्तत्वात् क्त्वाप्रकृत्यर्थभूतक्रियायाः उत्तरक्रियायामन्वये पूर्वकालत्वसमानकर्तृकत्वयोः संसर्गत्वेनैव बोधोपपत्तेः न तयोः तस्यातिरिक्ता शक्तिः इति **वाच्यम्** । पदार्थानुशासनप्रवृत्तपाणिन्यादेः संसर्गानुशासकत्वविरोधात् ।

किञ्च क्त्वाप्रकृतिभूतधात्वर्थस्यैव उत्तरक्रियासंबन्धः क्त्वा च संसर्गतात्पर्यग्राहकः इत्युच्यते, अथवा क्त्वाऽर्थभाव एव निरुक्तोभयसंसर्गेण उत्तरक्रियायामन्वेति, इति विवेक्तव्यम् । तत्र **न तावत्** आद्यः, क्त्वाज्ञानत्वेनैव तात्पर्यग्राहकत्वे अगृहीतसंकेतस्यापि तात्पर्यग्रहापत्तेः, तात्पर्यग्राहकत्वप्रकारकज्ञानत्वेन तत्त्वे आत्माश्रयापत्तेः, एकत्वादिशक्तद्वितीयाऽऽदेः कर्मत्वादिसंसर्गतात्पर्यग्राहकत्वेनैव उपपत्तौ प्रातिपदिकार्थस्यैव कर्मतादिसंसर्गेण क्रियायामन्वयापत्तेः कर्मत्वादौ द्वितीयाऽऽदेः शक्त्यनापत्तेश्च । अत एव नान्त्यः, संख्याया एव स्वसमानाधिकरणकर्मत्वादिसंसर्गेण क्रियाऽन्वयापत्तेः । अतोऽनुशासनबलात् कर्मत्वादिवदेव पूर्वकालत्वादेरपि वाच्यत्वम् । अस्तु वा तत्, तथापि न दोषः । अतः तत् तावदनुवादः । एकेन पदेन अनेकेषामुपादाने प्रतीयमानकर्तृसाहित्यमपि न तावत् उदवसाने विवक्षितम्, निमित्तविशेषणत्वात्, सत्रे संहत्य कर्तृत्वेऽपि तत्त्यागे साहित्यं विनैव कर्तृत्वाच्च । यो हि संयोगादिरूपो व्यासज्यवृत्तिधर्मः, तदभावः प्रत्येकवृत्तिरेव, किमुत यदा सत्रे बहुवचनानुरोधात् प्रत्येकमेव कर्तृत्वम्, कर्तॄणां परं समुच्चयः, तदा तत्त्यागे साहित्याभावे कः संदेहः ? आख्यातोपात्तबहुत्वावगतसाहित्यं तु बहुत्वस्याविवक्षितत्वे अविवक्षितमेव । उदवसाने हि यादृशा निरपेक्षाः कर्तारः, तादृशा एव समानकर्तृकत्वबलेन पृष्ठशमनीये अवगम्यन्ते । अतः प्रथमावगतनैरपेक्ष्यबलेन न साहित्यविवक्षा । न च नैरपेक्ष्यानङ्गीकारेऽपि ल्यबन्तोपात्तसमानकर्तृकत्वाविरोधात् बहुत्वस्य तदवगतसाहित्यस्य च विवक्षोपपत्तिः, विशिष्टविधिगौरवभयेन संभवत्प्राप्तिकस्य बहुत्वस्य अनुवादाङ्गीकारात् । अत एव पृष्ठशमनीयमात्रविधानात् विधेर्लाघवम् । **न च** संस्कारविध्यन्यथाऽनुपपत्त्यादिना संभवत्प्राप्तिकस्यापि सोमादेः सक्तुन्यावृत्त्यादिरूपप्रयोजनसिद्ध्यर्थं विशिष्टविध्याश्रयणवत् इहापि साहित्यसिद्ध्यर्थं बहुत्वविध्याश्रयणमिति **वाच्यम्** । सोमादिपदवैयर्थ्यभिया तत्र तथा आश्रयणेऽपि प्रकृते बहुवचनस्य अवर्जनीयतया अनुवादत्वोपपत्तेः । अतः एकैकश्येनैव पृष्ठशमनीयः कार्यः, इति न तत्र प्राकृतकर्त्रैकत्वबाधः ।

**मण्डन**— 'तमेकैकः प्रकुर्वीत ।' तं उत्तरं यज्ञिं उदवसानीयम् ।

**शंकर**— 'तत्राधिकारः प्रत्येकम् ।' तत्र उदवसाने.

* नैमित्तिकस्य च तावत्त्वबहुत्वादेः ( 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतः' इत्यत्र ) **पृष्ठशमनीयन्यायेन** अनुवाद्यगतत्वेनाविवक्षितत्वम्— इति वार्तिके । **भाट्ट**. ५।२।२.

* **पृष्ठसामानि**, पृष्ठस्तोत्रेषु गीयमानानि सामानि । **वि.** १०।६।५. * **पृष्ठसामभिः** षड्भिः पृष्ठ्यः षडहः संपद्यते । **के.** ( वि. १०।६।५ )

* पृष्ठस्तुतौ हि साम विनियुज्यते रथंतरं पृष्ठं भवतीति । भा. १०।६।३।५.

* पृष्ठस्तोत्रमुक्थ्ये वैरूपमेकमेव । तच्च महेन्द्रस्तोत्रस्थाने षोडशिनि च वैराजम् । 'उक्थ्यो वैरूपसामा एकविंशः, षोडशी वैराजसामा' । वि. १०।६।६, * पृष्ठस्तोत्रं वैश्यस्तोमे कण्वरथंतरं नाम । प्रकृतौ पृष्ठस्तोत्रे विकल्पितयोर्बृहद्रथंतरयोर्धर्माः, वैश्यस्तोमे विरुद्धा विकल्पेन, अविरुद्धाश्च समुच्चयेन ग्राह्या इति भाष्यम् । उभये धर्मा विकल्पेनैवेति वार्तिकम् । ९।२।१६, * पृष्ठस्तोत्राणि चत्वारि सप्तदशस्तोमकानि माध्यंदिने सवने पवमानानन्तरम् । तत्र रथंतरम् 'अभि त्वा शूर' इति प्रगाथरूपं प्रथमं सूक्तम् । तत्र पूर्वा बृहती उत्तरा पङ्क्तिः (सतःपङ्क्तिः)। वामदेव्यं 'कया नश्चित्र' इति द्वितीयम् । तत्र तिस्रो गायत्र्यः । नौधसं 'तं वो दस्ममृतीषहम्' इति तृतीयं प्रगाथरूपम् । तत्र बृहतीपङ्क्त्यौ (बृहतीसतःपङ्क्त्यौ)। कालेयं 'तरोभिर्वो विदद्वसुं' इति प्रगाथरूपं चतुर्थम् । तत्रापि बृहतीपङ्क्त्यौ (बृहतीसतःपङ्क्त्यौ)। तत्र प्रगाथेषु प्रग्रथनेन तृचत्वसंपादनम् । ९।२।६ वर्णकम् २. * पृष्ठस्तोत्रे एव (होतुः) बृहद्रथंतरयोः समुच्चित्य निवेशः संसवे अपचितौ च यागे । १०।६।८।२४–२६. * पृष्ठस्तोत्रे 'गोसवे उभे कुर्यात्' इति बृहद्रथंतरसामद्वयसाध्यता । तत्र च स्तोत्रस्यैकत्वेऽपि साम्नोर्भेदात् धर्मव्यवस्था । ९।२।१७. * पृष्ठस्तोत्रेषु ज्योतिष्टोमे बृहत् रथंतरं च विकल्पितं परन्तु उभयधर्माः व्यवस्थिताः कर्तव्याः, न संकरः । बृहद्धर्माः 'उच्चैर्गेयम्', 'बलवद्गेयम्', 'बृहति स्तूयमाने मनसा समुद्रं ध्यायेत्' इति । रथंतरधर्माः 'नोच्चैर्गेयम्, न बलवद्गेयम्', 'रथंतरे प्रस्तूयमाने संमीलयेत्' इति । वि. ९।२।१५, * पृष्ठस्तोत्रेषु सप्तदशस्तोमः, तस्य विष्टुतिः तिसृभिः एकया एकया इति प्रथमावृत्तौ, एकया तिसृभिः एकया इति द्वितीयावृत्तौ, एकया तिसृभिः तिसृभिः इति तृतीयावृत्तौ इति । ३।४।३.

* पृष्ठस्तोत्रसाधनतया वैश्यस्तोमे विहितस्य कण्वरथंतरस्य स्वयोनौ 'पुनानः सोम' इत्यत्र गानम् । १०।४।२२।४४–४७, उत्तरयोरपि स्वयोन्युत्तरयोरेव, न रथंतराद्युत्तरयोः । १०।४।२३।४८–४९.

* पृष्ठ्यः षडहः इति नामधेयेनैव षडहसंबन्धिनी अहाग्रता प्राप्नोति गवामयने । टुप्. १०।५।२५।८९ पृ. १९८०. * पृष्ठ्यः षडहः गवामयने प्रतिमासं सव्यवधानः आवर्तते । अतः तस्मिन्नावर्तमाने संस्थानिमित्तं रसभोजनमपि प्रतिमासमावर्तते । १०।६।११। ३१. * 'पृष्ठ्यः षडहः, द्वौ स्वरसामानौ' इत्यत्र (अष्टरात्रे) स्वरसाम्नोः गवामयनगतस्वरसामधर्मातिदेशः स्वरसामनाम्ना । स्वरसामैककपालामिक्षाधिकरणम् । ७।३।१०।२७. * पृष्ठ्यः षडहः द्वादशाहे द्वितीयादीनि षट् अहानि । वि. ८।२।५, * पृष्ठ्यः षडहः द्वादशाहगतः प्रकृतिः, गवामयनगतश्च पृष्ठ्यः षडहो विकृतिः । १०।६।३, * पृष्ठ्यः षडहः द्विविधः, त्रयस्त्रिंशान्तः त्रयस्त्रिंशादिश्चेति । त्रिवृत्-पञ्चदश-सप्तदश-एकविंश-त्रिणव-त्रयस्त्रिंशैः स्तोमैर्युक्तानि षडहानि इति त्रयस्त्रिंशान्तः । विपरीतक्रमेण तु त्रयस्त्रिंशादिः । तत्राद्यो द्वादशाहे गवामयने पूर्वे पक्षसि च । अन्त्यस्तु गवामयने उत्तरे पक्षसि पृष्ठ्ये षडहे । १०।६।९.

**पृष्ठ्यस्य युगपद्विधेरेकाहवद् द्विसामत्वम् । १०।६।३।४ ॥**

'पृष्ठ्यः षडहो बृहद्रथंतरसामा' इति श्रूयते । अनेन पृष्ठ्ये षडहे द्वे सामनी उक्ते । बृहच्च रथंतरं च सामनी यस्मिन् इति द्वन्द्वगर्भो बहुव्रीहिः । एवं च द्वयोः साम्नोः युगपत् विधेः पृष्ठ्यस्य षडहस्य प्रत्यहं द्विसामत्वं स्यात् । एकाहवत् यथा संसवे गोसवे इत्यादौ एकाहे क्रतौ द्विसामत्वं भवति तद्वत् । इति पूर्वः पक्षः ।

**विभक्ते वाऽसमस्तविधानात् तद्विभागेऽविप्रतिषिद्धम् । ५ ॥**

पूर्वपक्षनिरासार्थो वाशब्दः । न प्रत्यहं उभयसामत्वं किन्तु विभक्ते सामनी स्याताम् । केषु चिदहःसु रथंतरम्, केषु चिदहःसु च बृहत् । असमस्तविधानात् न समस्तयोः साम्नोः विधानम् । 'पृष्ठ्यः षडहो बृहद्रथंतरसामा' इत्यत्र बृहत् रथंतरं साम यस्मिन् सः इति

त्रिपदो बहुव्रीहिः, न तु द्वन्द्वगर्भो बहुव्रीहिः। तद्विभागे तयोः बृहद्रथंतरयोः अहर्भेदेन विभागेऽपि बृहद्रथंतरसामा इति शब्दः अविप्रतिषिद्धः न विरुद्धः। यथा 'मासं घृततैलाभ्यां देवदत्तो भोजयितव्यः। इत्युक्ते अर्धमासं घृतेन, अर्धमासं तैलेन एवमपि शब्दोऽवकल्पते तद्वत्। किञ्च चोदकमपि एवं अविप्रतिषिद्धम्। एवं विभागे स्वीकृते चोदकानुग्रहोऽपि स्यादित्यर्थः। तस्मात् प्रत्यहं एकैकसामत्वमेवेति सिद्धान्तः। के.

**पृष्ठ्ये रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात् तदानन्तर्यात् प्रकृतिवत्। १०।६।९।२७॥**

द्वादशाहे त्रिवृदादिः त्रयस्त्रिंशान्तः षडहो भवति। तत्र 'संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् घृतं वा' इति श्रूयते। अथ गवामयने आनुलोम्येन प्रवृत्ते पूर्वे पक्षसि न विचार्यता। प्रातिलोम्येन प्रवृत्ते उत्तरे पक्षसि तु आवृत्ते पृष्ठ्ये षडहे त्रयस्त्रिंशेऽहनि संस्थिते समाप्ते, तद्दिने एव रसभोजनं मधुभोजनं स्यात्। तदानन्तर्यात् प्रकृतौ त्रयस्त्रिंशानन्तरं रसभोजनं वृत्तम्। प्रकृतिवदिहापि। तस्मात् त्रयस्त्रिंशेऽहनि अनुष्ठानोत्तरं रसभोजनं कार्यं इति पूर्वः पक्षः।

**अन्ते वा, कृतकालत्वात्। २८॥**

पूर्वपक्षं वाशब्देन व्यावर्तयन् सिद्धान्तमाह— न चैतदस्ति त्रयस्त्रिंशानन्तरं रसभोजनमिति। किन्तु षडहस्य अन्ते स्यात्। रसभोजनस्य कृतकालत्वात् 'संस्थिते षडहे मध्वाशयेत्' इति वचनेन कृतः विहितः निश्चितः कालो यस्य तादृशत्वात्। षडहान्तकालोऽस्य निश्चितः। प्रातिलोम्येन प्रवृत्ते च त्रयस्त्रिंशादिः त्रिवृदन्तः षडहः। तस्मिन् संस्थिते रसभोजनं स्यात् न त्रयस्त्रिंशान्ते। तस्मात् त्रिवृदन्ते षडहे समाप्ते मध्वादिभोजनं इति सिद्धान्तः। के.

* **पृष्ठ्ये षडहे** अग्न्यतिग्राह्यस्य अतिदेशः। १०।८।११।२३-२८. * पृष्ठ्ये षडहे उपदिष्टेन मध्वशनेन अतिदिष्टस्य पयोव्रतादेः समुच्चयः। भा. १०।४।१।१-२ वर्णकम् १. * पृष्ठ्ये षडहे गवामयनगते पूर्वे पक्षसि प्रथमे तृतीये पञ्चमे चाहनि रथंतरं गातव्यम्, द्वितीये चतुर्थे षष्ठे चाहनि बृहत् गातव्यम्। उत्तरे पक्षसि च प्रथमतृतीयपञ्चमेषु बृहत्, द्वितीयचतुर्थषष्ठेषु रथंतरमिति। सोम. १०।६।३. * पृष्ठ्ये षडहे गवामयनगते बृहद्रथंतरयोः प्रत्यहमेकैकस्यैव अनुष्ठानम्। १०।६।३. मीको. पृ. १५५० 'गवामयने पृष्ठ्ये०' इत्यत्र द्रष्टव्यम्। * पृष्ठ्ये षडहे गवामयनगते सलोमे विलोमे वा अन्ते मध्वशनम्। १०।६।९. * पृष्ठ्ये षडहे चयनाग्निः कर्तुं शक्यते। भा. १०।८।११।२३-२८. * पृष्ठ्ये षडहे त्रयस्त्रिंशारम्भणे अन्ते (संस्थिते) मध्वशनं घृताशनं वा न तु त्रयस्त्रिंशेऽहनि संस्थिते। गवामयने उत्तरे पक्षसि। १०।६।९।२७-२८. * पृष्ठ्ये षडहे द्वादशाहगते द्वितीयेऽहनि विवृद्धस्तोमके पञ्चदशे बहिष्पवमाने वृषण्वत्तृचागमः। कालश्च तस्य चोदकप्राप्तानुरूपपर्यासयोर्मध्यम्। वि. ५।३।४. * पृष्ठ्ये षडहे द्वादशाहगते षट्सु अहःसु क्रमेण रथंतर-बृहत्-वैरूप-वैराज-शाक्वर-रैवतानि सामानि गातव्यानि। शा. १०।६।३. * पृष्ठ्ये षडहे द्वादशाहसत्रगते संस्थिते दीक्षितानां ब्रह्मचारिणामपि मध्वशनं क्रत्वर्थत्वात् कर्तव्यम्। १०।६।१२. * पृष्ठ्ये षडहे प्रत्यहमेकैकं इति षट् सामानि- रथंतरम्, बृहत्, वैरूपम्, वैराजम्, शाक्वरम्, रैवतं चेति। तैर्निष्पाद्यानि षट् पृष्ठस्तोत्राणि। वि. ७।३।३. * पृष्ठ्य षडहे प्रत्यहं बृहद्रथंतरयोरेकैकस्यैव अनुष्ठानं गवामयने। १०।६।३। ४-५. * यदपि **पृष्ठ्ये षडहे** श्रूयते 'संस्थिते षडहे मध्वाशयेत्' इति विहितमध्वशनेन प्राकृतपयोव्रतस्य तस्मिन्नहनि निवृत्तिमाशङ्क्य अदृष्टार्थत्वात् एव समुच्चय इत्युक्तम् (भाष्ये), तत् मध्वशनस्य देहवृत्त्यनर्हत्वेन पयोव्रतकार्यकारित्वानुपपत्तेः पूर्वपक्षोत्थानाभावात्सुत्यायां पयोव्रताभावाच्च उपेक्षितम्। अस्तु वा तदपि इहोदाहरणम्। भाट्ट. १०।४।१.

* **पृष्ठ्यगतेषु** उक्थ्येषु अतिग्राह्याणां विकल्पः, न पर्युदासः। संकर्ष. ३।३।४. मीको. पृ. १८९. 'अतिग्राह्याणां पार्ष्ठिकोक्थ्येषु०' इत्यत्र द्रष्टव्यम्।

* **पृष्ठ्यषडहस्य** कर्मान्तरव्यवधानेनावृत्तौ मध्वशनादेरप्यावृत्तिर्गवामयने। १०।६।११।३१. * पृष्ठ्यषडहस्य विजातीयषडहव्यवधानेन आवृत्तौ मध्वशना-

देरपि आवृत्तिर्गवामयने । १०।६।११. मीको. पृ. १५५३ ' गवामयने विजातीय०. ' इत्यत्र द्रष्टव्यम् ।

* पृष्ठ्यषडहान्ते गवामयनगते वैकल्पिकमध्वशनघृताशनयोरनुष्ठानम् । १०।६।९. मीको. पृ. १५५२ ' गवामयने पृष्ठ्यषडहान्ते० ' इत्यत्र द्रष्टव्यम् ।

* पृष्ठ्यषडहावृत्तौ सर्वषडहान्ते सकृदेव मध्वाद्यशनम्, न तु प्रतिषडहान्ते गवामयने । १०।६।१०। २९–३०. मीको. पृ. १५५४ ' गवामयनादौ पृष्ठ्यषडहावृत्तौ० ' इत्यत्र द्रष्टव्यम् ।

* पृष्ठ्यषडहगतरथंतरादिसाम्नां मध्ये वैरूपस्यैव होतुः पृष्ठे निवेशो विश्वजिति । १०।६।५।१३–१४.

* पेटिका । १०।२।१–७ इति सप्तसु अधिकरणेषु कृष्णलचरुविषयको विचारः कृतः इति सप्ताधिकरणरत्नानि अस्यां पेटिकायां भवन्तीति रसायनकारेणेयं कृष्णलपेटिका इत्युक्तम् । यद्यपि ८।१।८ इत्यत्र १०।१।१ इत्यत्रापि च कृष्णलविचार एव तथापि भिन्नदेशत्वात् न पेटिकायामन्तर्भवतः ।

अथ क्त्वापेटिका । ४।३।१२–१५ इति चतुर्षु अधिकरणेषु क्त्वाप्रत्ययेन अङ्गत्वं वा बोध्यते कालो वा इति विचारितत्वात् सेयं क्त्वापेटिका नाम ।

अथ तत्सिद्धिपेटिका । १।४।१२।२३ सूत्रस्य खण्डषट्कं कृत्वा गौणवृत्तिनिमित्तानि विवेचितानि इति सेयं षडधिकरणात्मिका तत्सिद्धिपेटिका नाम ।

अथ ६।३।४–२० इति षोडशसु अधिकरणेषु प्रतिनिधेरेव विचारः कृतः इति सेयं प्रतिनिधिपेटिका महती ।

अथ ३।२।९–१८ इति दशसु अधिकरणेषु सोमशेषभक्षविषयक एव विचारः इति सेयं दशाधिकरणी भक्षपेटिका इति भण्यते ।

अथ ३।३।७ इत्यस्मिन् अधिकरणे श्रुतिलिङ्गादीनां विनियोजकप्रमाणानां भूयानेव विचारः कृतः इति सेयं श्रुत्यादिपेटिका इत्युच्यते । सूत्रैकत्वेऽपि अवान्तराणि भूयांस्येवाधिकरणानि इति ।

अथ १०।५।९–१४ इति षट्सु अधिकरणेषु षोडशिग्रहविषयक एव विचारः इति सेयं षडधिकरणी षोडशिग्रहपेटिका इति प्रचक्षते । यद्यपि च ५।१।१८, १०।६।६ इत्यधिकरणयोरपि षोडशिन एव विचारस्तथापि भिन्नदेशत्वात् तयोर्नास्यां पेटिकायामन्तर्भावं मन्यन्ते ।

ननु तर्हि प्रथमोऽध्यायः प्रमाणपेटिका, द्वितीयः कर्मभेदपेटिका, तृतीयः शेषत्वपेटिका, चतुर्थः प्रयुक्तिपेटिका, पञ्चमः क्रमपेटिका, षष्ठः अधिकारपेटिका, सप्तमाष्टमौ अतिदेशपेटिका, नवमः ऊहपेटिका, दशमो बाधपेटिका, एकादशः तन्त्रावापपेटिका, द्वादशः प्रसङ्गपेटिका, एवं संकर्षेऽपि परिचिन्तनीयम् । इति चेत्, सत्यम्, सर्वा द्वादशलक्षणी षोडशलक्षणी वा धर्मपेटिका इति वक्तव्यं स्यात् । किं बहुना विंशतिलक्षणी सर्वा मीमांसैव कर्मज्ञानपेटिका इति वाच्यं स्यात् । न चैतत् मनोरममिति पूर्वोक्तमेव युक्तमिति । के.

* पेषणं गुणकर्म, तण्डुलाः संस्कार्याः । वि. २।१।४. * पेषणं द्विदेवत्ये दर्शयति ' अर्धं पिष्टं भवति अर्धमपिष्टं द्विदेवत्यत्वाय ' इति । वचनमिदमप्राप्ते भवति । (सोमापौष्णे चराविदम् ) । भा. ३।३।१५।४६. * पेषणं नापूर्वजनकं दृष्टफलकत्वात् । नियमांशे तु अपूर्वम् । तेन च विधेयता । वि. २।१।३. * पेषणं पुरोडाशार्थं तण्डुलानां कर्तव्यम्, चरौ तु न कर्तव्यम् । पेषणेन हि पिष्टकं वा यवागूर्वा स्यात् खलिर्वा न चरुः । के. ( भा. १०।१।१२।५० ). * पेषणं पौष्णं विकृतौ निवेशनीयम् । ३।३।१३, तदपि चरावेव । १४, तत्रापि पूषैकदेवत्ये एव । १५. * महापितृयज्ञे प्रथमं श्रपणेन धानाः संपाद्य पश्चात् सक्तुभावाय पेषणं कार्यम् । वि. १०।२।३४, * पेषणाय दृषदि तण्डुलावापे ' धान्यमसि धिनुहि देवान् ' इति मन्त्रो विहितः । शाक्यानामयने तु दृषदि पेषणाय मांसमावपन् ' मांसमसि ' ( तरसमसि इति युक्तम् । के. ) इति मन्त्रमूहेत् । ९।१।१३ वर्णकम् २. * पेषणस्य आपिष्टनिर्वृत्तेरभ्यासः । भा. ११।१।५।२७, * पेषणस्य ' तण्डुलान् पिनष्टि ' इति नियमविधिः, नानुवादः ( दर्शपूर्णमासयोरिदम् ) । ४।२। ११।२६. * पेषणस्य बाधः सौर्ये चरौ । १०।१।१२। ५२–५३. ' सौर्ये चरौ पेषणस्य बाधः ' इत्यत्र द्रष्टव्यम् ।

* पेषणस्य मन्थे न बाधो महापितृयज्ञे । वि. १०।२। ३४ वर्णकम् २, 'महापितृयज्ञे धानासु०' इत्यत्र द्रष्टव्यम् । * पेषणे दृषदुपलयोः समुच्चयः, परस्परसापेक्षत्वात् । १२।३।४.

* पेषणान्तेन कृष्णाजिनास्तरणादिना एकपदार्थेन अनुसमयः राजसूये नानाबीजेष्टौ । भाट्ट. ५।२।७.

* अक्षरग्रहणादीनां पेषणादिन्यायेन (पेषणावघातन्यायेन ९।१।३ इत्यर्थः) अवान्तरव्यापारमात्रत्वात् अध्ययनफलत्वं निराकृतम् । ... विहितस्याध्ययनस्य पुरोडाशार्थावघातवत् वाक्यार्थज्ञानार्थत्वावधारणात् तदन्तरालवर्तिनामक्षरग्रहणादीनां पेषणादिन्यायेन अवान्तरव्यापारत्वमात्रं युक्तम् । सु. पृ. २३.

* कृष्णलचरौ श्रपणमात्राङ्गभूतस्य गार्हपत्यादेरपि पेषणादिप्रतिप्रसवान्तरविधिन्यायेन प्राप्तौ न किञ्चित् बाधकम् । भाट्ट. १०।२।१.

* पेषणजन्यमपूर्वं नास्ति, किन्तु तेन द्रव्यसंस्कारो दृष्टः । पेषणनियमजन्यं तु अपूर्वं स्यात् । वि. २।१।३.

* पेषणन्यायेन (९।१।३) कृष्णलेषु कार्या एव भक्षधर्मा भक्षाश्च (चुच्छुषाकारेण) । भाट्ट. १०।२।३.

* पैठराणां (पिठरपाकवादिनां नैयायिकानां) कार्यद्रव्याण्येव घटादीनि पच्यन्ते । वा. ३।१।६।१२ पृ. ६८२.

* पैतृके कर्मणि (प्रेताग्निहोत्रे) दर्भाणां दक्षिणाग्रत्वम्, दैविके तु कर्मणि प्रागग्रत्वं उदगग्रत्वं वा । वि. ३।४।४.

* पैप्पलादकं शाखान्तरम् । भा. २।४।२।८ पृ. ६३१.

* पैलुकाः (वा. ३।१।६।१२ पृ. ६८३)। पीलुपाकवादिनः वैशेषिकाः । ते हि पीलुवाच्यपरमाणुषु पाकं वदन्ति, न अवयविनि घटकपालादौ । के.

* पैलुदारवेण स्नेहेन माध्यंदिने सवने अभ्यञ्जते (पैतुदारवेण तृतीयसवने इति ताण्ड्यब्राह्मणे) एकोनपञ्चाशद्रात्रे अञ्जनाभ्यञ्जनाख्ये सत्रे सुत्यायाम्, तेन शैत्योत्पत्तिर्भवति । वि. १०।४।७.

* पैष्टीपानं क्षत्रियस्य निषिद्धमेव, मधुसीधुपानं तु न निषिद्धम् । सु. पृ. १९५, * पैष्टीपानं वर्णत्रयस्यापि मनुना निषिद्धम् । पृ. १९५.

* पोता पुनरभ्युन्नीते 'मरुतो यस्य हि क्षये' इति मन्त्रेण मरुतो यजति, ततः सोमो भक्ष्यते । वि. ३।२।१२, * पोता ब्रह्मणः पुरुषः ऋत्विक् । चतुर्थवर्गस्थोऽयम् । अयं पादी चतुर्थांशभाक् तिस्रो गा लभते । 'तमुन्नेता दीक्षयति' । ३।७।१७.

* पोत्रीया इति समाख्यानात् समाख्यातपुरुषेण कर्तव्यमिति ज्ञायते । भा. ३।७।२०।४१.

* पौण्डरीकाणि (सनालपुष्परूपाणि कमलानि) बर्हींषि भवन्ति मौद्गे चरौ । भा. ९।३।२।३, * पौण्डरीकः द्वादशाहप्रकृतिकः, न ज्योतिष्टोमप्रकृतिकः । १०।६।१८।७२. * 'पौण्डरीकेण एकादशरात्रेण स्वाराज्यकामो यजेत' । तत्र 'अयुतं पुण्डरीके दद्यात् अश्वसहस्रमेकादशम्' । सकृदेव सा दक्षिणा दातव्या, न प्रत्यहम् । १०।६।१७. पौण्डरीकस्य अहःक्लृप्तिः । 'अभ्यासङ्ग्यः पञ्चाहः षष्ठस्याहस्त्रयस्त्रिंशे द्वे सवने, षट्त्रिंशमन्त्यम् । (आनन्दाश्रमीये तु 'पञ्चमः षडहः स्यादहस्त्रयस्त्रिंशे द्वे सवने षट्त्रिंशतमन्त्यः' इति मुद्रितः पाठः अशुद्ध एव । पृ. ४८४) । चतुष्टोमोऽग्निष्टोमः त्रयश्छन्दोमाः, विश्वजित् सर्वपृष्ठोऽतिरात्रः' इति सत्याषाढः । १७।८।३६ । भाट्टदीपिकायाम् (१०।६। १७) मानवसूत्रं तु 'अभ्यासङ्ग्यः षडहः, त्रयश्छन्दोमाः, चतुष्टोमोऽग्निष्टोमः, विश्वजिदतिरात्रः' इति। अत्र सत्याषाढमानवसूत्रयोः अग्निष्टोमस्य छन्दोमानां च पौर्वापर्यव्यतिक्रमो भवति । अभ्यासङ्ग्यस्य स्वरूपं तु आश्व.श्रौ.वृत्तौ (१०।३।४) उक्तम्— तथाहि 'अभ्यासक्तस्वरूपमुच्यते । प्रथमस्याह्नो द्वे सवने त्रिवृत्स्तोमे भवतः, पञ्चदशं तृतीयसवनम् । द्वितीयस्य पञ्चदशे द्वे सवने, सप्तदशं तृतीयसवनम् । तृतीयस्य सप्तदशे द्वे सवने, एकविंशं तृतीयसवनम् । एवमुत्तरेष्वपि योज्यम् । एवमभ्यासक्तो भवति ।' इति । तथा च चतुर्थस्य एकविंशे द्वे सवने, त्रिणवं तृतीयसवनम् । पञ्चमस्य त्रिणवे द्वे सवने, त्रयस्त्रिंशं तृतीय-

सवनम् । षष्ठस्य तु त्रयस्त्रिंशे द्वे सवने षट्त्रिंशं तृतीयसवनमिति । के. * पौण्डरीके अश्वसहस्रं इति तु प्रत्यक्षोपदेशात् सामान्यप्राप्तनिषेधबाधात् न दोषो विज्ञायते ( तेन तत्र न वारुणेष्टिः दातुः ) । वा. ३।४। १०।२८ पृ. ९६१. * पौण्डरीके अश्वसहस्रं सत्याषाढमतेन एकादशेऽहनि, भाष्टोक्तमानवसूत्रानुसारेण वा दशमेऽहनि अग्निष्टोमे, अवशिष्टेषु अहःसु च गवां दश सहस्राणि इति विभज्य दक्षिणा दातव्या । तथा च सत्याषाढः 'अन्वहं दश सहस्राणि दद्यात् । अश्वसहस्रमुत्तमेऽहनि' इति ( १७।८।३६ ) । मानवं च 'अन्वहं विहृतानि सहस्राणि ददाति, चतुष्टोमेऽश्वसहस्रम्' इति । मानवे सूत्रान्तरे च चतुष्टोमोऽग्निष्टोमः पाठक्रमेण दशम उक्तः । के.

**⌛ पौण्डरीके गवायुतस्य अश्वसहस्रस्य च दक्षिणायाः प्रत्यहं विभज्य वेद्योर्मध्येन उत्तरस्यां दिशि नयनम् ॥**

**प्रत्यहं सर्वसंस्कारः, प्रकृतिवत्, सर्वासां सर्वशेषत्वात् । १०।६।१८।६९ ॥**

**भाष्यम्**— पौण्डरीकः एवोदाहरणम् । तत्रैतत् समधिगतं सकृदेव परिक्रय इति । अस्ति तु प्रकृतौ 'माध्यंदिने सवने दक्षिणा नीयन्ते' इति । तत्र संशयः किं सर्वासां कात्स्न्र्येन प्रत्यहं नयनम्, उत सकृन्नयनम्, अथवा प्रविभज्य नयनमिति । किं प्राप्तम् ? प्रत्यहं सर्वासां संस्कारः स्यात् । कुतः ? प्रकृतिवत् । प्रकृतौ हि सकला दक्षिणास्तस्मिन् काले संस्कृताः । इहापि तद्वदेव सकलाः संस्कर्तव्या इति । कथम् ? अह्नां प्राधान्यात् । तद्गुणभावाच्च दक्षिणानाम् । सर्वा एताः सर्वेषामह्नां शेषभूताः । शेषभूतस्य चार्थस्य यः संस्कारः, स तेनतेनाह्ना प्रयुज्यते इति । तस्मात् प्रत्यहं सर्वसंस्कारः ।

**एकार्थत्वान्नेति चेत् । ७० ॥**

**भाष्यम्**— न चैतदस्ति, प्रत्यहं सर्वसंस्कार इति । किं तर्हि ? सकृदेव संस्कारः स्यात् । कुतः ? एकार्थत्वाद्दक्षिणानाम् । एकं कार्यमानमनम् । तासां च नयनादिसंस्कारसंस्कृतानां प्रत्यर्पणं कार्यम् । एकस्मिन्नपि चाहनि तत्संस्कारसंस्कृतासु दीयमानासु कृतश्चोदनार्थ इति भूयः संस्कारेण प्रयोजनं नास्ति । तस्मात् सकृत् संस्क्रियेरन् इति ।

**स्यादुत्पत्तौ कालभेदात् । ७१ ॥**

**भाष्यम्**— न चैतदस्ति, सकृत्संस्कार इति । किं तर्हि ? प्रत्यहम् । कुतः ? उत्पत्तौ कालभेदात् । उत्पत्तौ दक्षिणानां विशिष्टकालसंबन्धः श्रूयते 'तस्मात्त्रिष्टुभो लोके माध्यंदिने सवने दक्षिणा नीयन्ते' इति । सर्वाश्चैताः सर्वेषामह्नां शेषभूताः । तेषां चाह्नां माध्यंदिनानि सवनानि भिद्यन्ते । तत्र च अगम्यमानविशेषत्वाद्यस्य माध्यंदिने सवने न संस्क्रियेरन्, तस्यैव संस्कारलोपः स्यात्, प्रयोगभेदात् । न चान्यत्र संस्क्रियमाणा अन्यत्र संस्कृता भवन्ति । तस्माद्भेदेन संस्क्रियेरन्निति ।

**विभज्य तु संस्कारो वचनाद् द्वादशाहवत् । ७२ ॥**

**भाष्यम्**— न चैतदस्ति, समस्तानां प्रत्यहं संस्कार इति । किं तर्हि ? विभज्य संस्क्रियेरन् । कुतः ? वचनात् । द्वादशाहे प्रत्यहं नयनादिसंस्कारो वचनात् क्रियते । 'अन्वहं द्वादशशतं ददाति' इति । पौण्डरीकश्च द्वादशाहप्रकृतिः, न ज्योतिष्टोमप्रकृतिः । तस्मात् परिक्रयैकत्वेऽपि सति वचनात् भेदेन संस्कार इति ।

**शा**— प्रकृतौ माध्यंदिने सवने दक्षिणानयनं श्रुतम् । पौण्डरीके च अयुतं गवां अश्वसहस्रं च माध्यंदिने सवने प्रत्यहं नेतव्यम्, उत एकस्मिन्नहनि, अथवा विभज्य प्रत्यहं गवां सहस्रं नेतव्यं अश्वसहस्रं तु एकादशे अहनि नेयमिति संशयः । विभज्य नयनमिति सिद्धान्तः ।

**सोम**— पूर्ववत् प्रत्यहं कृत्स्ननयनं न बाधनीयमित्युत्थानात् **संगतिः** । **सूत्रार्थस्तु**— प्रत्यहं सर्वासां नयनं स्यात्, सर्वेष्वहःसु कृत्स्नदक्षिणायाः शेषत्वात्, मूलप्रकृतौ ज्योतिष्टोमे माध्यंदिने कृत्स्नदक्षिणायाः नयनस्य दृष्टत्वात् इति ।

**वि**— 'सकृत् किं प्रत्यहं वाऽस्य नयनं तत्र चोत्तमे । सर्वस्य वा विभक्तस्य, सकृत् संस्कारसिद्धितः ॥ प्रतिमाध्यंदिनं चोदकप्राप्तेः प्रत्यहं तदा । सर्वं नेयं तदेकत्वाद्, विभज्य द्वादशाहवत् ॥' पौण्डरीके अश्व

दक्षिणाद्रव्यस्य किं सकृत् नयनं प्रत्यहं वा नयनं इत्येकः संशयः। तत्र च उत्तमे द्वितीये पक्षे प्रत्यहं सर्वस्य नयनं विभक्तस्य वा नयनं इति द्वितीयः संशयः। संस्कार-सिद्धितः सकृत् नयनं इत्येकः पूर्वपक्षः। चोदकप्राप्तेः प्रत्यहं नयनम्, तदाऽपि प्रतिमाध्यंदिनं तदेकत्वात् सर्वं मेयं इति द्वितीयः पक्षः। द्वादशाहवत् प्रत्यहं विभज्य नयनं इति सिद्धान्तः।

[ भाट्टे इदमधिकरणं सप्तदशे एवान्तर्भावितं इति 'पौण्डरीके गवायुतस्य अश्वसहस्रस्य च सकृत् दानम्' इत्यत्र द्रष्टव्यम्। ]

**मण्डन**— 'विभज्य नयनं तस्याः।' १९.

**शंकर**— 'विभज्य प्रत्यहं नेया।' १९.

## पौण्डरीके गवायुतस्य अश्वसहस्रस्य च सकृत् दानम्॥

**अहीने दक्षिणाशास्त्रं गुणत्वात्प्रत्यहं कर्म, भेदः स्यात्। १०।६।१७।६२॥**

**भाष्यम्**— अस्ति पौण्डरीक एकादशरात्रः 'पौण्डरीकेणैकादशरात्रेण स्वाराज्यकामो यजेत' इति। तत्र श्रूयते 'अयुतं पौण्डरीके दद्यादश्वसहस्रमेकादशम्' इति। तत्र संदिह्यते किं प्रत्यहमयुतमश्वसहस्रं च दातव्यम्, उतैकमेवायुतं अश्वसहस्रं च सकृदिति। किं प्राप्तम्? अहीने दक्षिणाशास्त्रं प्रत्यहं भिद्येत। कुतः? गुणत्वाद्दक्षिणायाः प्रधानत्वाच्च अह्नाम्। समुदायशब्देन समुदायीन्यह्नानि उपलक्ष्य दक्षिणा गुणो विधीयमानः प्रतिप्रधानं भिद्येत। यथा गणाय स्नानं उपलेपनं वा विधीयमानं गणिनां भवति। एवमत्रापि द्रष्टव्यम्। प्रतिकर्मावसायी च चोदक एवमनुग्रहीष्यते। दक्षिणाभूयस्त्वाच्च फलभूयस्त्वं भविष्यति। अतोऽवगम्यते भेद इति।

**सर्वस्य वैककर्म्यात्। ६३॥**

**भाष्यम्**— न चैतदस्ति, प्रत्यहं दक्षिणाभेद इति। एकमेवायुतं सहस्रं च दीयते। कुतः? ऐककर्म्यात्। एकं हि दक्षिणानां कार्यं ऋत्विगानमनम्। आनतिश्च साङ्गक्रतुनिर्वृत्तये कृतेति, अन्तरा न तया प्रयोजनमस्तीति न भूयः क्रियते। यत्तु अङ्गभूयस्त्वेन फलभूयस्त्वमिति, तत् अङ्गत्वे प्रज्ञाते भवति, नान्यथा। समुदायाङ्गं च दक्षिणा, नावयवाङ्गमित्युक्तम्। अथ यदुक्तं प्रतिकर्मावसायी चोदकः प्रतिकर्म प्रापयतीति, प्रत्यक्षवचनात् समुदायाङ्गीकरणेन च दक्षिणानां विधानमिति चोदको बाधित इति न दोषः।

**पृषदाज्यवद् वाऽह्नां गुणशास्त्रं स्यात्। ६४॥**

**भाष्यम्**— न चैतत् सकृदेव दातव्यमिति। किं तर्हि? भेदेन। कुतः? प्रत्यहं दक्षिणानां प्राप्तानामयं विशेष उच्यमानः प्रत्यहमेव भवितुमर्हतीति। पृषदाज्यवत् यथा 'पृषदाज्येनानुयाजान् यजति' इति पृषत्ता गुणो विधीयमानः प्रत्यनुयाजं भिद्यते, एवमत्रापि द्रष्टव्यमिति।

**ज्यौतिष्टोम्यस्तु दक्षिणाः, सर्वासामेककर्मत्वात्, प्रकृतिवत्, तस्मात् तासां विकारः स्यात्। ६५॥**

**भाष्यम्**— न चैतदस्ति, भेद इति। किं तर्हि? तन्त्रेण सकृदेव। कथम्? ज्यौतिष्टोम्यो हि दक्षिणाः साङ्गं कर्मराशिमङ्गीकृत्य दीयन्ते। तथाभूतानां तासां च समुदायानत्यर्थानां प्राप्तानामयं विशेष उच्यते। सहस्रमयुतमिति विशेष उच्यमानो या इह दक्षिणा दीयन्ते तासामयं विकार इति गमयति, एकत्वमानतेर्न वारयति। तस्मात् सकृद्दातव्यमिति। यत्तु अनुयाजवदिति, युक्तम्, यदनुयाजेषु द्रव्यस्य भेद इति। यागे हि द्रव्यं गुणभूतं चोद्यते। तद्यागानां भेदादन्यस्य क्रियमाणं नान्यस्योपकरोतीति भिद्यते। इह तु एका आनतिरित्युक्तम्। तस्माद्विषमो दृष्टान्त इति।

**द्वादशाहे तु वचनात् प्रत्यहं दक्षिणाभेदस्तत्प्रकृतित्वात्, परेषु तासां संख्याविकारः स्यात्। ६६॥**

**भाष्यम्**— न चैतदस्ति, सकृद्दातव्यमिति। प्रत्यहमयं विशेषो भिद्यते। कुतः? द्वादशाहे हि प्रत्यक्षं वचनम्, 'अन्वहं द्वादशशतं ददाति' इति। पौण्डरीकश्च द्वादशाहप्रकृतिः। तस्मात् पौण्डरीके प्रत्यहं चोदकप्राप्त्या प्रसक्तानां दक्षिणानामयं विशेष उच्यमानस्तथैव कर्मावयवसंबद्धानां विकार इति गम्यते। ततो भेदेन दक्षिणानां विशेष इति।

**परिक्रयाविभागाद्वा समस्तस्य विकारः स्यात् । ६७ ॥**

**भाष्यम्**— न चैतदस्ति, दक्षिणाभेद इति । किं तर्हि ? सकृदेव दक्षिणा दीयेतेति । कुतः ? परिक्रयाविभागात् समस्ता दक्षिणा विक्रियेरन् । कृत्स्नं हि क्रतुमङ्गीकृत्य दक्षिणा विधीयन्ते । कथम् ? तावतः पुरुषार्थत्वात् । यत् फलवत्, तत् पुरुषस्य चिकीर्षितम् । तच्च कुर्वाणस्य सहायानुपाददानस्यायं विशेष उच्यते परिक्रयः । न चावयवः फलवान्, समुदायात् फलनिष्पत्तेः । समुदायं चाङ्गीकृत्य परिक्रयः क्रियमाण आसमुदायनिर्वृत्तेः परिक्रयः कृत इत्यन्तरा न भूयः क्रियते । अपि च, पौण्डरीकशब्दसंयोगेन परिक्रयविशेष उच्यमानस्तच्छब्दवाच्यस्यैव भवतीति गम्यते । समुदायश्च पौण्डरीकशब्दवाच्यो नावयवः । स हि समुदायशब्देन लक्ष्यते । तत्र लक्षणैव दोषः । असंभवे हि लक्षणा आश्रीयते । न चेहासंभवः । अतः समुदायमङ्गीकृत्य सकृदेव ऋत्विजो व्रियेरन्निति । तस्मात् सकृत्परिक्रय इति । सकृद्दाने च प्रयोगवचनानुग्रहः । प्रयोगप्राशुभावाच्च महाविषयता शास्त्रस्येति । तस्मादप्येतदेव न्याय्यमिति ।

**भेदस्तु, गुणसंयोगात् । ६८ ॥**

**भाष्यम्**— यदुक्तं द्वादशाहप्रकृतित्वात्पौण्डरीकस्य, तत्र च द्वादशाहे दक्षिणाभेदात् तथाभूताया एवेह विशेष उच्यते इति, तत् परिहर्तव्यम् । अत्रोच्यते । तत्राप्येकत्वात् क्रतोरेक एव परिक्रयः । भेदस्तु वचनात् सुत्यासंबन्धप्रयोजनो दक्षिणासंस्कारप्रयोजनश्च, न तस्मिन् भिद्यमाने परिक्रयैकत्वं भिद्यते इति ।

**शा**— तत्र ( पूर्वः पक्षः ) **'दक्षिणा ह्यहरङ्गत्वात् प्रत्यहं भेदमर्हति । ( उत्तरस्तु— ) एकप्रयोगपातात्तु तन्त्रेणैका प्रतीयते ॥'**

**सोम**— सत्रात् भिन्ने अहीने अर्थात् अन्यकर्तृके सिद्धे तत्र दक्षिणायाः प्रतिप्रधानं भेदेनानुष्ठानबाधचिन्तनात् **संगतिः । सूत्रार्थस्तु**— अहीने पौण्डरीकादौ प्रत्यहं प्रधानभेदात् दक्षिणाया अपि भेदः स्यात्, तस्याः गुणत्वादिति । अहीने इति सामान्योक्त्या पौण्डरीकोदाहरणप्रदर्शनार्थमित्याहुः ।

**वि**— 'अयुतादि प्रत्यहं स्यात् सकृद्वा, ऽङ्गयनुसारतः । आद्यो भवेत्, प्रयोगोऽङ्गी तदैक्येन सकृद् भवेत् ॥' अतः सकृदेव दानम् ।

**भाट्ट**— ( भाष्यस्थे १७–१८ अधिकरणे एकीकृत्य व्याख्या द्रष्टव्या ) । पौण्डरीको नामाहीनः एकादशरात्रः । तत्र 'अयुतं दक्षिणा अश्वसहस्रमेकादशम्' इति श्रुतम् । तत्र किं प्रत्यहमश्वसहस्रं गवां चायुतं देयम्, उतैकमेव विभज्य देयं इति चिन्तायाम्, सत्यपि ज्योतिष्टोमे दक्षिणायाः प्रयोगाङ्गत्वे अहीनात्मके द्वादशाहे तथैव प्राप्तावपि च तत्र 'अन्वहं द्वादशशतं ददाति' इत्यनेन तत्तदहरङ्गत्वेन द्वादशशतविधानान्नात्र दक्षिणायाः कृत्स्नप्रयोगाङ्गत्वम्, अतश्च तत्तत्प्रधानाङ्गभूतैव इयं दक्षिणा अङ्गेषु प्रसङ्गादुपकरोतीति न ततोऽन्या दीयते । अतश्च पौण्डरीकेऽपि प्रतिसुत्यमतिदेशेन भेदेनैव दक्षिणाप्राप्तौ अश्वसहस्रमयुतं च विधीयमानं भेदेनैव द्वादशशतबाधेन प्राप्नोति । वस्तुतस्तु ज्योतिष्टोमेऽपि प्रयोगाङ्गकर्त्रानत्यर्थतया साङ्गप्रधानार्थत्वेन प्राप्ताया अपि दक्षिणायाः 'दक्षिणा सोमस्य' इति वचनेन प्रधानमात्रार्थत्वावसायात् द्वादशाहेऽपि प्रतिकर्मावसायिभिश्चोदकैर्भेदेनैव गृह्यमाणविशेषणतया सवनीयादिवत्प्रधानमात्रार्थे दक्षिणाप्राप्तेः 'अन्वहं द्वादशशतं ददाति' इत्ययं विधिर्न प्रधानार्थत्वबोधकः, किन्तु द्वादशशतातिरिक्ताश्वादिपरिसंख्यार्थ एव । अन्वहमिति तु अतिदेशप्राप्तप्रधानार्थत्वानुवादः । अतश्च पूर्ववदेव प्रकृतितोऽपि प्रतिसुत्यं भेदेनैव दक्षिणाप्राप्तेः तत्राश्वसहस्रादि विधीयमानं भेदेनैव प्राप्नोति । इति प्राप्ते, ज्योतिष्टोमे प्रधानमात्रार्थाया अपि दक्षिणायाः प्रधानप्रयोगीयकर्त्रानतिद्वारैव प्रधानार्थत्वम्, न तु साक्षात् । अत एव नाङ्गेषु पृथक् तस्याः करणम् । एवं सत्यपि प्रधानमात्रार्थविधेः प्रयोजनं अङ्गविकारेष्वनतिदेशः । अतश्च द्वादशाहेऽपि प्रतिकर्मावसायिभिः चोदकैस्तत्तदहर्मात्राङ्गत्वेन प्राप्यमाणमपि द्वादशशतं तत्तदहःप्रयोगीयकर्त्रानतिद्वारैव प्राप्यते । अतश्चाङ्गेष्विव प्रधानान्तरेष्वपि न पृथक्करणं प्राप्नोति । अतश्च विनिगमनाविरहादेकमेव द्वादशशतमादावन्ते वा दीयमानं सर्वप्रधानाङ्गं संपद्यते । अतश्च 'अन्वहं द्वादश-

शतम्' इत्यनेन प्राप्ताया दक्षिणायाः पुनस्तदङ्गत्वेन विधौ वैयर्थ्यापत्तेः, सकृत्क्रियमाणत्वेन प्रसक्तायाः 'अन्वहम्' इत्यनेन आवृत्तिविधिः। इतरथा अश्वादिपरिसंख्यार्थत्वे अन्वहं इत्यस्य आनर्थक्यापत्तेः। सा चावृत्तिः न द्वादशशतस्य, तत्तत्सुत्यामात्रोपकारकतया एकस्मिन्नप्यहनि दीयमानस्य तस्य प्रयोगैक्येन सुत्यान्तरोपकारकत्वावश्यम्भावात्। अपितु तत्तत्प्रयोगीयकर्त्रानतिरूपव्यापारबाधाय द्वादशशतरूपसाधनस्यैव तत्पृष्ठभावेन प्राप्तस्य बाधमङ्गीकृत्य सुत्यासमसंख्यद्वादशशतसमुदायस्यैव दक्षिणात्वकल्पनया। साऽपि च दक्षिणा सर्वेषामेवाह्नां तत्तत्प्रयोगीयकर्त्रानतिद्वारा अङ्गं सत् तन्त्रेण सर्वेषामुपकारिका। प्रत्यहं तु तदवयवरूपं द्वादशशतं विभज्य वचनाद्दीयते इति विभागोऽपि तदङ्गं प्रकृतौ। तदिह पौण्डरीकेऽपि तत्स्थाने विहितमयुतमश्वसहस्रमपि तत्तदह्नां तत्तत्प्रयोगीयकर्त्रानतिद्वारा तन्त्रेणैवाङ्गम्। अतिदेशप्राप्तावयवविभागवशाच्च अवयवशो विभज्य प्रत्यहं देयम्। अत एव 'संपूर्णमयुतमश्वसहस्रं च प्रत्यहं माध्यंदिनसवने नेतव्यम्, अथवा एकस्मिन् कस्मिंश्चिदहनि' इति पूर्वपक्षद्वयं मूलोक्तं (१८।६९ सूत्रभाष्ये) उपेक्षितम्, अतिदेशप्राप्तविभागबाधे प्रमाणाभावात्। तदर्थमधिकरणान्तररचना तु वृथैव। (१७। ६२–६८, १८।६९–७२ इति भाष्ये)। स च विभागः न (तन्त्ररत्ने) पार्थसारथिरीत्या 'प्रत्यहं गवां सहस्रं अश्वसहस्रं त्वेकादशेऽहनि' इत्येवंरूपः। **मानवसूत्रे** 'अन्वहं विहृतानि सहस्राणि ददाति चतुष्टोमेऽश्वसहस्रम्' इति अश्वसहस्रस्य दशमेऽहनि विधानात्। एवं हि पौण्डरीके अहःक्लृप्तिः तेनोक्ता, 'एकादशरात्रेण पौण्डरीकेण यजेत पारमेष्ठ्यकामोऽभ्यासङ्ग्यः षडहः त्रयश्छन्दोमाश्चतुष्टोमोऽग्निष्टोमो विश्वजिदतिरात्रः' इति। अतो दशमेऽहनि अश्वसहस्रं दत्वा अवशिष्टेषु गवां सहस्राणीति विभागः।

**मण्डन**— 'दक्षिणा सकृदश्रुतेः।'

**शंकर**— 'एका। पौण्डरीकस्य दक्षिणा।' १८.

* **पौण्डरीकवर्हिषि** 'पुण्डरीकैः स्तृणीत रक्तैः' इत्यूहः कर्तव्यो मौद्गे चरौ। ९।३।२।३. **मीको.** पृ. १२२६ 'ऊहः रक्तपदस्य०' इत्यत्र द्रष्टव्यम्।

* **'पौरुषेयं** कथं वस्तु विदध्यात् शाश्वतो विधिः।' **वा.** १।३।८।२४ पृ. २७२. * पौरुषेयं वाक्यं यतो लिङ्गभूतम्, अत एव प्रत्ययितस्य नियमेन प्रमाणान्तरपूर्वकार्थाभिधायिनो वचनं सत्यम्। तथा श्रोतुः इन्द्रियविषयं अप्रत्ययितवचनमपि सत्यम्। यत्पुनः अप्रत्ययितवचनं श्रोतुश्च न प्रमाणान्तरपूर्वकम्, न तत् सत्यम्। **ऋजु.** पृ. २१. * **पौरुषेयः** ऊहग्रन्थश्छन्दोगानाम्। ९।२।१ वर्णकम् २. * **पौरुषेयेण** वचसा न सर्वत्र साक्षादर्थ एव प्रतीयते, पुरुषेच्छापरतन्त्रत्वात्। असत्यपि अर्थे पुरुषा वाक्यानि प्रयुञ्जाना दृश्यन्ते। तेन अर्थं प्रति नियमाभावात् तेभ्यः न अर्थसिद्धिः। वक्तुरभिप्रायं तु स्वकारणं सूचयेयुः। स चाभिप्रायः प्रमाणपूर्वकश्चेत्, ततः तस्य प्रमाणस्य प्रमाऽविनाभावात् तन्मुखेन वाक्यार्थे निश्चयानुमानमेव, तेन अनुमानस्यायं बाधः। अनुमानावसेयं प्रमाणान्तरदर्शनमत्र बाध्यते, न पुनः बाह्यं वस्तु हस्तियूथशतरूपं इति तत्र वचनस्य अव्यापारात्। यत्र विषये यत् प्रमाणं प्रवृत्तम्, तत्र तस्य बाधो भवति, न वचनस्य बाह्येऽप्यर्थे प्रवृत्तिः, तत्र तस्य प्रवृत्तिनियमाभावात्। **ऋजु.** पृ. २१. * **पौरुषेयाद्वचनात्** 'एवमयं पुरुषो वेद' इति भवति प्रत्ययः, न तु 'एवमयमर्थः' इति। (वैदिकात्तु वचनात् एवमयमर्थ इति भवति प्रत्ययः)। विप्लवते हि खल्वपि कश्चित् पुरुषकृतात् वचनात् प्रत्ययः। न तु वेदवचनस्य मिथ्यात्वे किञ्चन प्रमाणमस्ति। **भा.** १।१।२।२ पृ. १७. * **पौरुषेये** वाक्ये वाक्यभेदापत्तिरदोषः। **ऋजु.** पृ. ७०, * पौरुषेये हि वाक्ये प्रमाणान्तरापेक्षमेव शाब्दम्। पृ. ३४. * **पौरुषेयेषु** वाक्येषु परिग्रहापरिग्रहौ विवक्षाविवक्षयोः फलत्वेन प्रज्ञातौ। **वा.** ३।१।७।१३ पृ. ७००.

* **पौरुषेयत्वमापद्येत** (वेदे यथाश्रुतादीषदप्यन्यथात्वे कल्पिते, अत्यन्तातीन्द्रियत्वात्। **वा.** १।२। १।७ पृ. ११२ तलपङ्क्तौ. * पौरुषेयत्वं न तावत् स्वतन्त्रपुरुषप्रणीतत्वम्, भारते अव्याप्तेः। नापि शाब्दा-

जन्यवाक्यार्थगोचरयथार्थज्ञानजन्यजातीयत्वम्, भारतादौ असंभवात्। किन्तु तदुच्चारणेच्छाजन्यवाक्यत्वं तदर्थधीजन्यवाक्यत्वं सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वं वा। स्मृतिपुराणादिषु अव्याप्तिवारणाय सजातीयेति। मणि. पृ. ७-८. * पौरुषेयत्वं पुरुषोत्प्रेक्षाप्रभवत्वम्। सु. पृ. ५३२. * पौरुषेयत्वं वाक्यस्य नाम प्रमाणान्तरापेक्षस्वार्थप्रतीतार्थप्रत्यायनपरतया प्रयोगः, न वर्णादिकार्यता। ऋजु. पृ. ३४.

* **पौरुषेयवचसां** प्रमाणान्तरप्रतीतार्थप्रत्यायनपरत्वेन प्रमाणान्तरवशात् वाक्यभेदादयो दोषा एव न भवन्ति। ऋजु. पृ. ३२.

* **पौरुषेयवाक्यानां** द्विविधः स्वभावः। तत्रैको वक्तरि उच्यमानवाक्यार्थज्ञानवत्त्वावधारणसामर्थ्यात्मकः। यथा आप्तवाक्येषु (पूर्वपूर्व-)वक्तृज्ञानद्वारा अर्थनिश्चयः। अनाप्तवाक्ये तु मूलभूतवक्तृज्ञाने सम्यक्ज्ञानत्वं दुर्घटं भवति तत्र अप्रामाण्यमेव इत्यपरः स्वभावः। **वैद्यनाथः**. १।१।२।२ पृ १६-१७, * **पौरुषेयवाक्येषु** अर्थनिश्चयप्रतिष्ठा मूलावधारणद्वारैव। १।१।२।२ पृ. १६.

* **पौरोडाशिकमिति** समस्तमेव दर्शपूर्णमासकाण्डमभिधीयते। वा. ३।३।७।१४ पृ. ८५५. * पौरोडाशिकमिति समाख्याते काण्डे सांनाय्यक्रमे 'शुन्धध्वं दैव्याय कर्मणे' इति शुन्धनार्थो मन्त्रः समाम्नातः। स क्रमस्य बलीयस्त्वात् सांनाय्यपात्राणां शुन्धने विनियोक्तव्यः, न तु समाख्यानेन पुरोडाशपात्राणां शुन्धने। भा. ३।३।७।१४ पृ. ८५५. * पौरोडाशिकमिति समाख्याते दर्शपूर्णमासकाण्डे पठितो मन्त्रः साधारणे प्रकरणे वर्तमानः क्रमेण च अनुन्मीलितलिङ्गेन अविनियुज्यमानः पुरोडाशस्यैव वा प्राथम्यात् प्राप्नुवन् श्रुत्या सांनाय्यार्थशाखाऽङ्गत्वेन विधीयते 'इषे त्वेति शाखां छिनत्ति' इति। (तेन श्रुतिः समाख्याया बलवती)। वा. ३।३।७।१४ पृ. ८३६. * **पौरोडाशिकानां** प्रोक्षणादीनां सौमिकपदार्थपूर्वभावित्वं ज्योतिष्टोमे सुत्यायाम्। ५।१।१३।२५-२६.

**पौरोडाशिकाज्यभागन्यायः**। आज्यभागन्यायः। आज्यभागादयः अन्यतोऽलब्धोपकाराः पशुपुरोडाशे कर्तव्याः॥

**जैमिनेः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात्। १२।१।२।७॥**

**भाष्यम्**— तस्मिन्नेव पशुपुरोडाशे चिन्ता। किमाज्यभागौ कर्तव्यौ, उत नेति। आह। तत एतत् परीक्ष्यम्, किं प्रसङ्गेन चोदको बाध्यते, उत प्रयोगवचन इति। यदि चोदको बाध्यते, ततो न कर्तव्यौ। अथ प्रयोगवचनः, ततः कर्तव्याविति। किं पुनरत्र युक्तम्? चोदको बाध्यत इति। किं कारणम्? आनुमानिकश्चोदकः, प्रत्यक्षः प्रयोगवचनः, प्रत्यक्षं चानुमानाद्बलीयः। दुर्बलस्य च बाधो न्याय्यो न च बलीयसः। एवं चेन्न कर्तव्यौ। चोदकेन हि तौ प्राप्येयाताम्, स चेह बाधितत्वान्नास्तीति। एवं प्राप्ते, **उच्यते**। जैमिनेराचार्यस्य मतं कर्तव्यौ आज्यभागाविति। कुतः? यतः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात्। यस्य स्वस्य तन्त्रस्य कार्ये परतन्त्रमापद्यते, तस्य प्रतिषेधः स्यात्। यथा पौरोडाशिकानां पाशुकम्। यस्य तु न किञ्चित्परकीयं कार्यमापद्यते, तत्प्रतिषेधो न युक्तः। यथा देवदत्ते यज्ञदत्तयानमारूढे देवदत्तयानं निवर्तते, न वस्त्रालङ्कारः। न चेह आज्यभागयोः कार्ये किञ्चित् पाशुकमङ्गमापद्यते। तस्य प्रतिषेधो न युक्तः। तस्मात्तयोरनिवृत्तिः। यत्तु प्रत्यक्षः प्रयोगवचन इति। नैवात्र प्रयोगवचनस्य प्रवृत्तिः। स हि अङ्गान्युपगृह्णीयात्। पाशुकैरेव चाङ्गैः पुरोडाशोऽङ्गवान्। प्रत्यक्षोऽपि ह्ययं नाज्यभागौ गृह्णाति। प्रकरणसंनिहितमङ्गं प्रयोगवचनेन गृह्यते। न च पशावाज्यभागौ विद्येते, प्रतिषिद्धत्वात्। 'तौ न सौम्येऽध्वरे न पशौ' इति। अपि चोक्तमेतत्, प्रयोगवचनः उत्पन्नानामङ्गानां ग्राहकः। चोदकस्तूत्पादको ग्राहकश्च। तस्मात् स बलवान्।

**टुप्**— जैमिनेः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात्। (भाष्यकारीयमुदाहरणं प्रदर्शनार्थमिति दर्शयन्नाह-) अस्यैव (पशुपुरोडाशस्य यत् पशौ अविद्यमानम्) आज्यभागनिर्वापप्रोक्षणादि (तत्) कर्तव्यं न

चेति संशयः । ततः ( तत्सिद्ध्यर्थम् ) इदमाह ( भाष्यम् ) किं प्रयोगवचनेन चोदको बाध्यते, उत प्रयोगवचनश्चोदकेनेति ( नेमे कर्तरि तृतीये, किन्तु सह-प्रयोगे, किं प्रयोगवचनेन सहित एव पुरोडाशयागः, न तु स लुप्यते चोदकस्तु लुप्यते, अथवा विपर्यय इति )। चोदकबाधे ( अवघातादेः ) अकरणम् । प्रयोगवचन-बाधे ( तु ) करणम् । तत्र आनुमानिकत्वात् चोदको बाध्यते, न तु प्रयोगवचनः, तस्य प्रत्यक्षत्वात् । इति पूर्वः पक्षः । सिद्धान्तस्तु ( पाशुकेन प्रयोगवचनेन पौरो-डाशिकस्य ) प्रयोगवचनस्य एकदेशो बाध्यते ( न समस्तस्य बाधः ) । कतरोऽसौ ( एकदेशः ) ? उच्यते । ( उपसंग्रहः प्रयोगवचनः । तत्र ) उपशब्दः समीप-वचनः, सम्–शब्दः साकल्यवचनः, ग्रहशब्दो गृह्णाति-वचनः ( अनुष्ठानवचनः ) । एवं त्र्यंशः प्रयोगवचनः । तत्रायं ( प्रयोगवचनः ) ग्रहणात्मकस्वरूपः । इतरे तु ( द्विवचनमिदम् ) अस्य समीपकरणसाकल्ये ( मुद्रिते रत्ने च पाठः, समीपकरणसाकल्यकरणे इति लिखित-टुप्–पाठः ) विशेषणे । ताभ्यां सः ( प्रयोगवचनः ) विशिष्टः सर्वत्रोपलभ्यते । ( तत्र बाध्यमंशं दर्शयति– ) विशेषणं च अन्यथाऽनुपपत्त्या गृह्यते । इतरथा 'अहं ( प्रयोगवचनः ) साकल्यसामीप्यविशिष्टो न भवामि' इति ( इत्येवमर्थात् ) सामीप्यं साकल्यं च करोति ( न श्रुत्या ) । इह च पाशुकेन प्रयोगवचनेन केषां चित् ( प्रयाजादीनाम् ) अङ्गानां सामीप्यं कृतम् । ( अतः ) तेषामन्यथाऽनुपपत्तिः क्षीणा । येषां तु आज्य-भागनिर्वापप्रोक्षणावहननादीनां न कृतं ( पशुना सामी-प्यम्, ) तेषामन्यथाऽनुपपत्त्या सामीप्यं करोत्येव । तस्मात् ( प्रयाजादिविषयः ) सामीप्यकरणैकदेशो बाध्यते प्रसङ्गेन तस्य ( प्रयोगवचनस्य ) ।

अथ यदुक्तम्, आनुमानिकत्वात् चोदकस्य ( दुर्बलस्य ) बाधः इति, तन्न । ( नहि चोदको दुर्बलः । कुतः ? ) यदि चोदकः उत्पत्तिप्राप्ती न करोति, ( ततः ) कस्य सामीप्यकरणम्, कस्य वा साकल्येनोपसंग्रहः । तस्मात् प्रत्यक्षोऽपि प्रयोगवचनः चोदकात् दुर्बलः, उत्तर-कालत्वात् ( तस्मात् प्रयोगवचनस्यैव बाधः ) अपिच सति चोदके प्रसङ्गः ( आत्मानं लभते । तथाहि, ) यदि चोदकः आघारादीनि पत्नीसंयाजान्तानि ( अङ्गानि ) पशुपुरोडाशस्य कल्पयति संबन्धित्वेन ( आघारादिजन्या-नुपकारानित्यर्थः ) तत उत्तरकालं प्रयोगवचनः समीपे करोति । तच्च समीपकरणं पाशुकेन ( प्रयोगवचनेन ) कृतम्, इति ( कृत्वा न स्वयं करोति इति– ) प्रसङ्गस्य आत्मलाभः ( भवेत् नान्यथा । कथमित्यत आह– ) यदि च तस्य (पुरोडाशस्य) अङ्गानामुत्पत्तिप्राप्ती न स्तः, तथा सति अनुत्पन्नानां (अङ्गत्वाभावात् पाशुकेन चोदकेन पुरोडाशाङ्गत्वासिद्धेः ) प्रयोगवचनस्य समीपकरणशक्ति-रेव नास्ति । समीपकरणाभावात् ( च ) अन्येन कृतं सामीप्यमिति नैवोपपद्यते अनाकाङ्क्षितत्वात् ।

शा— **'तत्र प्रयोगवचनः प्रत्यक्षत्वान्न बाध्यते। चोदकस्त्वनुमेयत्वाद् दुर्बलो बाधमर्हति ॥'** ( इति पूर्वपक्षन्यायः । ) इति प्राप्ते, ब्रूमः । **'चोदकेना-ङ्गकार्याणां पुरोडाशान्वये सति । प्रयोगवचनः पश्चात् तद्विशिष्टं विधास्यति ॥'** तेन प्रयोगवचनैक-देशो यः प्रयाजादिविषयः, स बाध्यते, अङ्गान्तरेषु तु सोऽपि न बाध्यते ।

**सोम**— पूर्वोक्तप्रसङ्गोपजीवनात् **संगतिः** । प्राभा-करास्तु आज्यभागादाविव प्रयाजादिष्वपि पौरोडाशिक-प्रयोगवचनस्य व्यापारमङ्गीकृत्य तदंशेऽपि प्रयोजकत्वान्न बाधः, प्रयोजकैकस्वभावत्वात् विधेः परकीयतन्त्रमध्ये विधानमात्रेण तस्य तत्स्वभावानपायात् स्वयंप्रयोजकोऽपि विधिः तन्त्रमध्ये विधानात् परप्रयुक्तिमुपजीवति इति न पृथगनुष्ठानम् । न तु एतावता विधेः प्रयोजकत्वाभावः, तथा सति प्रसङ्गिनः पुरोडाशादिविधेः अप्रयोजकस्य वाजिनादिविधेश्च विशेषो न स्यात् इत्याहुः । **सूत्रा-र्थस्तु**– जैमिनेराचार्यस्य मते कर्तव्यमाज्यभागादि यतः यस्य स्वतन्त्रस्य स्थाने परतन्त्रमापद्यते, तस्यैव प्रतिषेधः । आज्यभागादेस्तु स्थाने न किञ्चित् पाशुकमापतति इति ।

**वि**— 'आज्यभागौ पुरोडाशे न स्तः स्तो वा, ऽस्य चोदकः । लुप्तस्ततो न तौ, मैवं प्रयोगांशस्य लोपनात् ॥'

**भाट्ट**— यानि त्वङ्गानि आज्यभागावघातादीनि पशौ न विद्यन्ते, तानि किं पुरोडाशे कर्तव्यानि न वेति चिन्तायाम्, पुरोडाशभावनायाः इतिकर्तव्यतापेक्षायां संनिहितपाशुकचोदकप्रापिताङ्गजन्योपकाराणामेव उपस्थितत्वेन स्वापूर्वजननानुकूलयोग्यताजनकत्वमात्रकल्पनया इतिकर्तव्यताकाङ्क्षाशान्तेः न पुरोडाशविधिना स्वतन्त्रातिदेशकल्पनं गौरवात्। अतश्च यथैव गृहमेधीये क्लृप्तोपकाराज्यभागाभ्यामेव निराकाङ्क्षत्वान्नातिदेशकल्पनम्, तथा प्रकृतेऽपि क्लृप्तैरेव उपकारात् निराकाङ्क्षत्वात् अतिदेशकल्पनानुपपत्तेः, नाज्यभागादीनामङ्गत्वे प्रमाणमस्ति। अत एव प्रयोज्यवर्गाभावात् पुरोडाशप्रयोगविधेरपि प्रधानमात्रे एव व्यापारः, न तु अङ्गांशे, तज्जन्योपकारांशे वा, इत्यपि लाघवम्। न च एवमपि एकादशकपालसंपादकसंनिपत्योपकारकाङ्गापेक्षयैव अतिदेशकल्पनम्, तथात्वे गृहमेधीयेऽपि तदापत्तेः। वस्तुतस्तु अनोवासोऽधिकरणन्यायेन (७।३।११।२९) लोकसिद्धैकादशकपालस्यैव ग्रहणात् न प्रयोगमध्ये तत्करणावश्यकता। गृहमेधीयचरोस्तु वाचनिकानामेव कतिपयानां संनिपत्योपकारकाणां पाठात् प्रयोगमध्ये करणं इति विशेषः। अतश्च नाज्यभागादीनां पुरोडाशार्थं करणम्। इति प्राप्ते, पाशुकाङ्गोपकाराणां पुरोडाशापूर्वजननानुकूलयोग्यतां प्रति तत्तद्विजातीयापूर्वत्वेनैव वस्तुतो जनकत्वेऽपि तत्कार्यकारणभावबोधकपदकल्पनायां न तावत् पुरोडाशयागप्रधानीभूतपश्वपूर्वसंबन्ध्यङ्गजन्योपकारैः योग्यतां भावयेत् इत्येवंविधा कल्पना, तथात्वे अपूर्वाणामपि उपयाजादिजन्यापूर्वाणां एतद्योग्यताजनकत्वापत्तेः। न चेष्टापत्तिः। ज्यौतिष्टोमिकाङ्गजन्यापूर्वाणामपि सवनीयोपकारजनकत्वापत्त्या तत्रापि दैक्षातिदेशानापत्तेः। पश्वपूर्वसंबन्ध्यङ्गजन्योपकारकत्वस्य पुरोडाशजन्यापूर्वे बाधिततया यूपादिजन्योपकारे च अतिप्रसक्तत्वेन तादृशपदस्य कल्पयितुमशक्यत्वाच्च। अतः अवश्यं स्वप्रधानीभूतपशुयागसादृश्योपस्थितसांनाय्यसंबन्ध्यङ्गजन्याम्नापितोपकारैः निरुक्तयोग्यतां भावयेत् इत्येव कल्पना वाच्या, तद् वरं स्वसादृश्योपस्थिताग्नीषोमीयपुरोडाशयागसंबन्ध्यङ्गजन्योपकारैः निरुक्तयोग्यतां भावयेत् इत्येव कल्पना। अतश्च युक्त एव पुरोडाशे ऐष्टिकधर्मातिदेशः। तेन च सर्वोपकारेषु प्राप्तेषु तत्पृष्ठभावेन पदार्थातिदेशवेलायां य एवोपकारो नान्यतो लभ्यते तदंशे पदार्थातिदेशस्य तत्प्रयोगविधेश्च आवश्यकत्वात् युक्तमेव आज्यभागादीनां करणम्। ये तूपकारा अन्यतो लब्धाः, तद्विषये अतिदेशप्रयोजनाभावात् नातिदेशः। पदार्थानामुपकारांशे त्वस्त्येव सः। यद्यपि च नोपकारस्य पृथगतिदेशो गौरवात्, अतिदेशलक्षणस्य अव्याप्तेश्च, तथापि एकेनैवातिदेशेन प्राकृतोपकारद्वारा पदार्थानां विकृत्यङ्गत्वं बोधयता उपकारस्यापि विकृतिसंबन्धावगमात् सिध्यति तस्यापि अतिदेशविषयत्वम्। एवं च प्रसङ्गस्थले अतिदेशेन प्राकृतोपकारद्वारा अन्यत उपकारालाभे एव पदार्थविधानात् तल्लाभे उपकारसंबन्धसिद्धावपि पदार्थविधायकाभावात् नातिदेशः। पदार्थानां अनुष्ठेयत्वाभावाच्च न प्रयोगविधिरपि। अत एव सर्वत्र प्रकृतौ विकृतौ वा अङ्गविधिषु एवं वाक्यार्थः— 'अन्यत उपकारालाभे अनेनाङ्गेन योग्यतां संपादयेत्' इति। अत एव प्रकृतेरपि दैवात् विततविकृतिप्रयोगमध्येऽनुष्ठाने प्रसङ्गेन उपकारलाभात् न प्रयाजाद्यनुष्ठाम्। पशुपुरोडाशेऽपि च दैक्षे नित्यतया यथाशक्ति एकादशप्रयाजाद्यननुष्ठानेनापि क्रियमाणे, पुरोडाशार्थमेव पञ्चप्रयाजाद्यनुष्ठानम्, तदा च पशोरपि प्रसङ्गित्वम्, अन्यत उपकारलाभस्याविशिष्टत्वात्। अत एव तन्त्रमध्यपातादिकमपि उपकारलाभोपलक्षणमेव। अतो यत्र अन्यत उपकारलाभः, तज्जनकपदार्थांशे न वा अतिदेशः, न वा प्रयोगविधिः, इतरांशे तु उभयं इति सिद्धम्। न चैवं अप्रयोज्येऽपि प्रयोगविध्यभावात् प्रसङ्गे ततो विशेषानापत्तिः, अन्यत उपकारालाभे प्रसङ्गस्थले प्रयोगविधिसत्त्वेन ततो भेदात्। वस्तुतस्तु चतुर्थोक्तप्रयोज्यत्वाभावे एव अप्रयोज्यत्वम्, तद्भिन्नमेव उक्तविधप्रसङ्गत्वं इति नाभेदशङ्का। अप्रयोज्यत्वव्याप्यमेव तु प्रसङ्गत्वं इति ध्येयम्। यत्तु चोदकप्रयोगविध्योः उभयोः सत्त्वेऽपि प्रयोजनाभावात् अननुष्ठानमिति **प्राभाकरमतम्**, तत् विधिना विहितस्य गुणविशेषविशिष्टस्य प्रयाजादेः अननुष्ठाने विहितगुणाभावेन प्रयोजनलाभानुपपत्तेः उपेक्षितम्। अस्मन्मते तु

गुणविधानाभावादेव न वैगुण्यमिति विशेषः। यत्तु अस्मिन्नधिकरणे **मूले** प्रयोगविधिमङ्गीकृत्य चोदकलोपेन पूर्वपक्षकरणम्, चोदकाङ्गीकारेण प्रयोगविधिमात्रलोपेन च सिद्धान्तकरणम्, **तत्** निर्युक्तिकत्वात् प्रयोजनाभावाच्च उपेक्षितम्।

**मण्डन**— 'तत्राज्यभागाद्यधिकं च किंचन।' तत्र पशुपुरोडाशे।

**शंकर**— 'पुरोडाशे त्वसन्न तु।' ३. प्रकृतौ असत् न प्रयुज्यते, सत् तु प्रयुज्यते एव।

* यदा तु निमित्तनिश्चयः चतुर्धाकरणकाले तदा देवताऽऽवाहनं **पौरोडाशिकाज्यभागन्यायेन** (१२।१।२।७) कर्तव्यमित्युक्तं तन्त्ररत्ने। **सोम.** १०।१।१ वर्णकं ३.

* **पौरोडाशिककर्मार्थे** हविष्कृदाह्वाने वाग्विसर्गः कर्तव्यः अग्नीषोमीये पशौ। ११।३।८. **मीको.** पृ. १२२ 'अग्नीषोमीये पशौ वाग्विसर्गः०' इत्यत्र द्रष्टव्यम्।

* **पौरोडाशिकशब्दः** मन्त्रब्राह्मणयोः अपठितत्वात् अवैदिकः न अङ्गाङ्गिभावः। स च शब्दस्य अवैदिकत्वेऽपि अनादिसंबन्धत्वात् विद्यमानस्मृतिमूलत्वाच्च प्रमाणम्। पौरोडाशिकशब्दोऽस्य वाचक इति नैतदतीन्द्रियम्। **वा.** ३।३।७।१४ पृ. ८५७.

* **पौरोडाशिकसमाख्यात**ब्राह्मणाम्नातानां प्रयाजादीनां समाख्यया पुरोडाशमात्रार्थत्वे प्राप्ते प्रकरणात् सांनाय्योपांशुयाजार्थत्वमपि सिद्धम्। प्रकरणं समाख्याया बलवत्। **वा.** ३।३।७।१४ पृ. ८३७–८३८.

* **पौरोडाशिकहविष्कृदाह्वानकाले** पाशुकवाग्यमस्य विसर्गः। ११।३।८।१८.

* **पौर्णमासेष्टिगताग्नीषोमीयहविष** एव उत्कर्षो ब्राह्मणस्य। आधानीयेष्टिपूर्वत्वसोमपूर्वत्वयोस्तु विकल्प एव ब्राह्मणस्यापि। **रत्न.** ५।४।५।१५–१६.

* **पौर्णमासहविःशब्देन** अग्नीषोमीयपुरोडाशस्यैव ग्रहणं तस्यैव ब्राह्मणस्य सोमादुत्कर्षः। उपांशुयाजाज्यमपि अग्नीषोमीयं ब्राह्मणेन सोमात् प्राङ्न कर्तव्यम्। परन्तु प्राजापत्यं वैष्णवं वा कर्तव्यमेवेति न तस्योत्कर्षः। **भा.** ५।४।६।१९–२१.

* **पौर्णमासी** आग्नेयोपांशुयाजाग्नीषोमीयाणां त्रयाणां यागानां समुदायः। अमावास्या आग्नेयः, ऐन्द्रं दधि, ऐन्द्रं पयः इति त्रयाणां यागानां समुदायः। **वि.** २।२।३. * पौर्णमासी न दर्शविकारः, न वा दर्शः पौर्णमासीविकारः। ५।१।१६. * **पौर्णमासी** सोमादूर्ध्वं द्विपुरोडाशा प्राक् सोमादेकपुरोडाशा। **भा.** १०।८।१८।६२. * पौर्णमासी सोमात् प्राक् अग्नीषोमीयपुरोडाशरहिता केवलाग्नेयपुरोडाशयुक्ता भवति। तत्र च उपांशुयाजोऽपि वैष्णवः प्राजापत्यो वा कर्तव्यः। १०।८।१८.

## पौर्णमासीमित्यत्र पौर्णमासीसमुदायविधिः॥

('अग्नीषोमीयेण यजेत पौर्णमासीम्' 'अमावास्याममिचरन्' इति प्राकरणिकं वाक्यद्वयम्) प्रथमवाक्ये तु प्रकृत एव अग्नीषोमीयो यागः अवेष्टिवत् पृथक्कृत्य फलाय विधीयते, द्वितीयविधिप्रकारे अतीवलाघवात्। तथा चैन्द्रवायवाग्रतावत् नित्यकाम्योऽयम्। **इति प्राप्ते**, समुदायवाचिपौर्णमासीपदवैयर्थ्यापत्तेः उक्तरीत्या चतुर्थ एव विधिप्रकारो युक्तः। **संकर्ष.** १।२।१७.

* 'पौर्णमासीं यजते' 'अमावास्यां यजते' इत्येतौ शब्दौ प्रकृतानां कर्मणामनुवादितारौ। नापूर्वयोर्विधातारौ। २।२।३।३–८. * **पौर्णमास्याः** माघ्याः पुरस्ताच्चतुरहे गवामयनस्य दीक्षा। ६।५।९।३०–३७. * **पौर्णमास्यां** अग्नौ प्रहरणार्थं शाखा नोत्पादयितव्या। **भा.** ४।२।४।१०–१३. * पौर्णमास्यामग्निसहितस्य (सोमस्य) चोदितत्वात् केवलस्य (सोमस्य) प्रकाशनं महेन्द्राधिकरणे निराकृतम्। **वा.** ३।१।१३।२३.

## पौर्णमास्यामनियमोऽविशेषात्। ६।५।९।३०॥

'पुरस्तात् पौर्णमास्याश्चतुरहे दीक्षेरन्' इति गवामयने सत्रे श्रुता या पौर्णमासी सा कस्य मासस्य इत्यत्र अनियमः। पौर्णमास्यां कस्यां चित् ग्रहीतव्यायामनियमः स्यात्। अविशेषात् विशेषस्य अनुक्तत्वात् इति एकः पूर्वपक्षः।

**आनन्तर्यात्तु चैत्री स्यात् । ३१ ॥**

प्रथमपूर्वपक्षनिराकरणाय तुशब्दः । न अनियमः किन्तु चैत्री पौर्णमासी स्यात् चित्रानक्षत्रयुक्ता चैत्रमासगता । कुतः ? आनन्तर्यात् । उक्तवाक्यादनन्तरं 'ऋतुमुखं वैषा पौर्णमासी संवत्सरस्य, या चैत्री पौर्णमासी' इति श्रूयते । संदिग्धेषु वाक्यशेषात् इति न्यायेन सा पौर्णमासी चैत्रीति निश्चीयते इति द्वितीयः पूर्वपक्षः ।

**माघी वैकाष्टकाश्रुतेः । ३२ ॥**

पूर्वपक्षद्वयं प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । सा पौर्णमासी माघी माघमासस्य स्यात् । कुतः ? एकाष्टकाश्रुतेः । सोमक्रये हि एकाष्टकाश्रुतिर्भवति । 'तेषामेकाष्टकायां क्रयः संपद्यते' इति । माघ्याः पौर्णमास्याः पुरस्तात् चतुरहे दीक्षितस्य एकाष्टकायां माघकृष्णाष्टम्यां क्रयः शक्यते कर्तुम् । तस्मात् माघी पौर्णमासी इति सिद्धान्तः ।

**अन्या अपीति चेत् । ३३ ॥**

पूर्वपक्षी शङ्कते । अन्या अपि अष्टम्यः सर्वाः एकाष्टका एव । द्वादश एकाष्टकाः । तथा च एकाष्टकायां कृष्णाष्टम्यां सोमक्रयसंपादनार्थं पौर्णमासीशब्देन या काचित् पौर्णमासी ग्राह्या अनियमेन । न चैत्री एव, न वा माघी एव । इति चेत् ।

**न, भाक्तत्वादेषा हि लोके । ३४ ॥**

सर्वा एव कृष्णाष्टम्यः अष्टकाः इति पूर्वपक्षोक्तं निरस्यति । न सर्वाः कृष्णाष्टम्यः अष्टका वस्तुतो भवन्ति । तासु अष्टकाशब्दस्य भाक्तत्वात् । एषा हि एषा एव माघी कृष्णाष्टमी लोके मुख्या । मुख्यगौणयोश्च मुख्ये संप्रत्ययः । तस्मात् माघकृष्णाष्टमी एव अष्टका स्यात् । मीमांसादर्शने तु भक्तित्वादिति पाठः स्वीकृतः । 'य' लिखितपुस्तके तु भाक्तत्वात् इत्येव पाठः ।

**दीक्षाऽपराधे चानुग्रहात् । ३५ ॥**

गवामयनस्य दीक्षा एकाष्टकायां यदि क्रियेत तदा तस्याः संमानः स्यात् । परन्तु 'चतुरहे पुरस्तात् पौर्णमास्याः' इति वचनेन दीक्षा अन्यदा एव उक्ता । तेन दीक्षायाः अपराधः अन्यथाभावः अष्टकया असंबन्धः उक्तः । एतादृशे दीक्षापराधे सति अष्टकायाः अनुग्रहोऽप्युक्तः । 'तेषामेकाष्टकायां क्रयः संपद्यते, तेन एकाष्टकां न छंबट् कुर्वन्ति' इति वचनेन एकाष्टकायां सोमक्रयः कर्तव्यो भवति, तेन च दीक्षाया एकाष्टकायाश्च संमान एव भवति, छंबट् न कुर्वन्ति व्यर्थतां न कुर्वन्ति इत्युक्तम् । अस्मात् अनुग्रहवचनात् एकाष्टकायाः प्राक्तनी पौर्णमासी 'चतुरहे पुरस्तात् पौर्णमास्याः' इति पौर्णमासीशब्देन ग्राह्या इति सिध्यति । सा च माघी पौर्णमासी एव नान्या इति ।

**उत्थाने चानुप्ररोहात् । ३६ ॥**

'चतुरहे पुरस्तात् पौर्णमास्या दीक्षेरन्, तेषामेकाष्टकायां क्रयः संपद्यते' इत्युक्ता पौर्णमासी माघी एव न चैत्री इत्यत्र हेत्वन्तरमाह सिद्धान्ती । एकाष्टकायां नाम माघकृष्णाष्टम्यां सोमक्रयं कृत्वा समारब्धं गवामयनं नाम सत्रं समाप्य यत् उत्थानम्, तत् माघान्ते स्यात् । ततो नातिदूरं वसन्तस्यारम्भः, 'मीनमेषौ वसन्तः' इति पद्धतेः स्वीकारात् । चैत्रपौर्णमास्याः समनन्तरगामिन्यां कृष्णाष्टम्यां सोमक्रये तु चैत्रान्ते उत्थानं स्यात्, स च वसन्तसमाप्तिकालः । उत्थानविषयकस्तु अर्थवाद इत्थं 'तानुत्तिष्ठत ओषधयो वनस्पतयोऽनूत्तिष्ठन्ति' इति । अत्र सत्रिणामुत्थाने सति तदनु ओषधिवनस्पतीनामुत्थानमुक्तम् । ओषधिवनस्पतीनामुत्थानं नाम प्ररोहः । स च प्ररोहः वसन्तादौ भवति न वसन्तान्ते । एतस्मात् ओषध्यादिप्ररोहार्थवादात् ज्ञायते माघान्ते एव गवामयनसमाप्तिरिति । अर्थात् गवामयनारम्भः माघे एव स्यात् । तेन 'पुरस्तात् चतुरहे पौर्णमास्याः' इति पौर्णमासीशब्देन माघी एव पौर्णमासी ग्राह्या न चैत्री इति निश्चीयते । तदिदमुक्तं सूत्रेण । उत्थाने, गवामयनात् सत्रिणां उत्थाने सति, अनु तस्मादनन्तरम्, प्ररोहात् ओषधीनां वनस्पतीनां च उत्थानात् उत्थानप्रतिपादनात् पौर्णमासी माघी एवेति ।

**अस्यां च सर्वलिङ्गानि । ३७ ॥**

सिद्धान्ते हेत्वन्तरपरं सूत्रम् । चकारः समुच्चये । अस्यां माघ्यां पौर्णमास्यां सर्वाणि लिङ्गानि युज्यन्ते न चैत्र्याम् । तथाहि, 'आर्तं वा एते संवत्सरस्याभि दीक्षन्ते, य एकाष्टकायां दीक्षन्ते' इति । आर्तां

यस्मिन् काले भवन्ति सत्रिणः स आर्तः कालः । शीतेन च आर्ता भवन्ति । शीतं च माघे, न चैत्रे । तथा 'व्यस्तं वा एते संवत्सरस्याभिदीक्षन्ते, य एकाष्टकायां दीक्षन्ते' इति । अयनपरिवृत्तिः व्यस्तशब्देन उच्यते । अयनपरिवृत्तिश्च माघफाल्गुनयोः, न चैत्रे । तथा 'अपो नामिनन्दन्तोऽवभृथमभ्यवयन्ति' इति । माघान्ते शैत्ये सति अवभृथगमने अपामभिनन्दनं न स्यात् । चैत्रे तु अभिनन्दन्तः अवभृथमभ्यवेयुः । एतेभ्यो लिङ्गेभ्यो ज्ञायते माघ्याः पौर्णमास्याः पुरस्ताच्चतुरहे गवामयनस्य दीक्षा, न चैत्र्याः पौर्णमास्याः पुरस्तात् इति । **के.**

* पौर्णमास्याममावास्यायां वा ऐन्द्राग्नादयो विकृतयः कर्तव्याः, 'य इष्ट्या पशुना सोमेन वा यक्ष्यमाणः स पौर्णमास्याममावास्यायां वा यजेत' इति वचनात् । **भा.** ५।४।७।२२–२४. * पौर्णमास्यां आग्नेयादिषु देशकालकर्तॄणामेकत्वादङ्गानां तन्त्रेणानुष्ठानम् । ११।१।१०. * पौर्णमास्यामेकपुरोडाशायामपि उपांशुयाजः । १०।८।१८।६२–७१. **मीको.** पृ. ११९५ 'उपांशुयाजः एकपुरोडाशायाम्' इत्यत्र द्रष्टव्यम् । * पौर्णमास्यामेव उपांशुयाजः । तत्र च प्रजापतिः विष्णुः अग्नीषोमौ च विकल्पेन देवता । १०।८।१७।५१–६१. * पौर्णमास्यां चतुर्दश आहुतयो हूयन्ते, त्रयोदश अमावास्यायाम् । (पञ्च प्रयाजाः द्वौ आज्यभागौ आग्नेयाग्नीषोमीयौ पुरोडाशौ उपांशुयाजः स्विष्टकृत् त्रयोऽनूयाजा इति चतुर्दश । अमावास्यायामुपांशुयाजाभावात् आग्नेयः ऐन्द्रं सांनाय्यं इति त्रयोदश)। **भा.** ४।१।४।१०. * पौर्णमास्यां चतुर्होत्रा हविरभिमर्शनम् । 'पृथिवी होता' इत्यादिको मन्त्रश्चतुर्होता । **वि.** ३।७।४. * 'पौर्णमास्यां पौर्णमास्या यजेत' इति कालस्य नियमविधिः, नानुवादः । **भा.** ४।२।९।२३-२४. * 'पौर्णमास्यां पौर्णमास्या यजेत' इति कालविधानेन अनेकेषां प्रधानानां साङ्गानां साहित्यावगमात् तन्निर्वाहाय पदार्थानुसमयः । **सोम.** ५।२।१. * पौर्णमास्यां प्रणयनकाले ब्रह्मवरणम्, अमावास्यायां पूर्वेद्युः । **भा.** १२।१।१८।३९. * 'पौर्णमास्यां यजेत' इत्यादिना दर्शपूर्णमासकर्मणा सह कालस्य संबन्धो विधीयते, न कर्मान्तरम् । **वि.** २।३।१३, * पौर्णमास्यां वत्सापाकरणार्थायाः शाखाया अभावात् उपवेषाय शाखाच्छेदो न कर्तव्यः । अङ्गारेषु कपालोपधानार्थं कस्य चित् काष्ठस्योपादानं कार्यम् । ४।२।३. * पौर्णमास्यां सूक्तवाकस्य प्रयोगे पूर्णमासीदेवतानां निष्कर्षे अमावास्यादेवतानामनन्वयः । इतरत्र चेतरासाम् । (तथा च इतरत्र इतरदेवतानां संकीर्तनमर्थलुप्तम्) । **भा.** ११।३।१६।५३. * पौर्णमास्यां सोमात् प्राक् एकपुरोडाशायां सत्यामपि उपांशुयाजः स्यादेव । १०।८।१८. * पौर्णमास्यां हविरभिवासनोत्तरं वेदिकरणम् । **बाल.** पृ. १९.

* **पौर्णमास्यतिपाते** प्रायश्चित्तं कृत्वा यत्र केवलं दर्शोऽनुष्ठीयते, तत्र दर्शाङ्गतया वैमृधो न कार्यः । **सोम.** ४।३।१४.

* **पौर्णमास्यधिकरणम्** । पौर्णमासीन्यायः । २।२।३।३–८. * पौर्णमास्यधिकरणं विना इज्याधिकरणस्य (४।४।११) पूर्वपक्ष एव स्यात् इति इज्याधिकरणस्य पौर्णमास्यधिकरणप्रयोजनत्वेन आरम्भः । **सु.** पृ. ७३२. * वार्त्रघ्न्यधिकरणस्य **पौर्णमास्यधिकरणेनापौनरुक्त्यम्**, विद्वद्वाक्ये कर्मान्तरत्वावेदकप्रमाणाभावात् तत्र मन्त्रविनियोजकत्वानुपपत्तावपि आग्नेयादिषु तदुपपत्तेः नानयोः (वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायां) व्यवस्थाऽर्थत्वं इत्यधिकाशङ्कोत्थानात् । **कौ.** ३।१।१३।२३ पृ. २११. * पौर्णमास्यधिकरणेन अभ्यासापवादः करिष्यते समुदायानुवादत्वात् । **पौर्णमास्यधिकरणस्य** च उपांशुयाज– (२।२।४) आघाराग्निहोत्र– (२।२।५), पशुसोमाधिकरणानि (२।२।६) अपवादः । **वा.** २।१।१।१ पृ. ३७१. * **पौर्णमास्यधिकरणे** अनेकगुणोपादानलक्षणस्य पूर्वकर्मसंयोगहेतोर्व्युत्पादनं कृतम् । **सु.** पृ. ८२७. * पौर्णमास्यधिकरणे (२।२।३) अनेकगुणविधाने वाक्यभेदापत्तेः समुदायानुवादकत्वसिद्धिराश्रीयते । **वाक्यार्थ.** पृ. २०. * पौर्णमास्यधिकरणे एव प्राप्ते कर्मणि अनेकगुणविधानासंभवेन गुणनिमित्तकभेदो व्युत्पादितः । **सोम.** २।२।९. * पौर्णमास्यधिकरणे 'गुणस्तु श्रुतिसंयोगात्' 'चोदना वा गुणानां युगपच्छास्त्रात्' इति सूत्राभ्यां प्रमाणान्तरप्राप्तकर्मणि अनेकगुणविधानं प्रसङ्गान्निराकृतम् ।

कु. २।२।९।२३. * आग्नेयवाक्ये आग्नेयद्वयं पौर्णमास्यमावास्याकालमित्युक्तं कौस्तुभे **पौर्णमास्यधिकरणे** । **भाट्ट.** ८।१।६. * आमिक्षावाक्ये तावत् प्राप्तकर्मानुवादेन द्रव्यदेवतारूपानेकगुणविधानात् वाक्यभेदापत्तेः पौर्णमास्यधिकरणे प्रसङ्गादुक्तेन वाक्यभेदापादकेन गुणेनैव कर्मविधित्वमविवादम् । **कौ.** २।२।९।२२ पृ. २५६. * दर्शपूर्णमासनाम्नः प्रसिद्धार्थकत्वं उपपादितं पौर्णमास्यधिकरणे । **भाट्ट.** ४।४।११. * न केवलं अबाधपक्षपातितयैव वाक्येन तयोः ( लिङ्गक्रमयोः ) अबाधः, अपितु नियमविधिलाघवानुरोधेनापि इत्युक्तं पौर्णमास्यधिकरणे । **कौ.** ३।१।१३।२३ पृ. २१२, * 'य इष्ट्या' इत्यादौ यत्र प्रयोगोऽपि प्राप्तस्तत्र कर्मानुवादेन कालांशे विनियोगविधिरेव इत्युक्तं पौर्णमास्यधिकरणे । २।३।१३।२६ पृ. ९३, * यत्रानेकार्थविधिव्यापारं विना विशेषणवैशिष्ट्यस्यासिद्धिः , तत्र विशेषणविशेष्यसंबन्धसिद्ध्यर्थं विशिष्टविधानार्थं च विधायकप्रत्ययस्य व्यापारभेदात् विध्यावृत्त्या वाक्यभेदः, यथा पौर्णमास्यधिकरणे विद्वद्वाक्यविहितकर्मणि आग्नेयादिवाक्यैर्गुणविधिपक्षे । **कु.** २।२।१२।२७. * यत्रापूर्वभावनाविधिः तत्र विधिफलस्य विशेष्ये एवैकस्मिन् सत्त्वात् आर्थिकेन च विध्यन्तरेण विशेषणानां विधानात् नावृत्तिः इति स्पष्टं पौर्णमास्यधिकरणे । **कौ.** २।२।५।१६ पृ. १९९, * यत्र तु कारकत्वसंबन्धेन वृत्तिः यथा आग्नेयः इत्यादौ तत्र प्राथमिकक्रियाऽन्वयं विना कारकत्वायोगात् वृत्तेश्च पार्ष्ठिकसंबन्धेनापि निर्वाहोपपत्तेः नादावेव अष्टाकपालसंबन्धः । अपितु भावनासंबन्धद्वारक एवासौ । विवरिष्यते चैतत् पौर्णमास्यधिकरणे वाक्यभेदोपपादनार्थम् । २।१।२।५ पृ. ३८, * वार्त्रघ्नीवृधन्वत्योः कालकृतव्यवस्थापक्षः पौर्णमास्यधिकरणे एव निराकृतः । ३।१।१३।२३ पृ. २११, * वार्त्रघ्नीवृधन्वतीमन्त्राणां व्यवस्था च कर्मकृता ( न तु कालकृता ) इत्युक्तमेव पौर्णमास्यधिकरणे । ३।१।१३।२३ पृ. २१२. * ( दर्शपूर्णमास- ) समुदाययोश्च फलसाधनत्वाभ्युपगमे पौर्णमास्यधिकरणे तन्निरासादरोऽपि विरुध्यते । **सु.** पृ. ६११.

* अभ्यासनिमित्तभेदापवादभूता समुदायानुवादचिन्ता ( विद्वद्वाक्ये ) **पौर्णमास्यधिकरणकृता** । **सु.** पृ. ८०७.

* **पौर्णमास्यधिकरणगुणसूत्रोक्तन्यायः** । (२।२।३।६ ) । 'वाक्यान्तरेण चोदिते कर्मणि गुणानां कर्मार्थत्वात् परस्परार्थत्वाभावेन परस्परवैशिष्ट्याभावे सति एकगुणविशिष्टगुणान्तरविध्यसंभवात् तस्यतस्य गुणस्य कर्तव्यत्वमुपदिश्यते ' इति । **सोम.** ६।२।२.

* दर्शे पूर्णमासे च त्रिकस्यत्रिकस्य एकप्रयोगतासिद्धिः एकादशोक्ता **पौर्णमास्यधिकरणवार्तिकोपपादिता** उपपन्ना । **बाल.** पृ. १३.

* **पौर्णमास्यमावास्याधिकरणम्** । पौर्णमासीन्यायः । २।२।३।३-८.

* **पौर्णमास्यमावास्याशब्दौ** कर्मवाचिनौ, न तु हविर्वाचिनौ । **वि.** ३।७।४.

* **पौर्णमास्यमावास्याशब्दन्यायेन** ( पौर्णमासीन्यायेन २।२।३ ) आघाराग्निहोत्रशब्दयोः प्रत्येकरूपवाचित्वावधारणात् प्रत्येकरूपस्यैव कर्मत्वं वाच्यम् । तच्च विरुद्धम् । **सु.** पृ. ७६२.

* **पौर्णमास्यादिपर्वणो**ऽप्यनादरः सोमाधानपक्षे सोमकालबाधे इति केचित् । तत्त्वं तु ऋतुनक्षत्रयोरेवानादरो नञ्द्वयबलात् ( ' नर्तुं पृच्छेन्न नक्षत्रम् ' ) । पर्वपञ्चाहत्वाद्यादरस्तु कर्तव्य एव । **भाट्ट.** ५।४।५.

* **पौर्णमास्यादिसमुदायप्रयुक्तं** नाभिमर्शनम्, किन्तु अपूर्वप्रयुक्तं दर्शपूर्णमासयोः । **भा.** ९।१।५।११-१९.

* **पौर्णमासीकालः** वैकल्पिकी विष्ण्वादिः देवता च उपांशुयाजे । १०।८।१७।५१-६१.

* **पौर्णमासीगताग्नीषोमीयस्य** हविषः ब्राह्मणस्य सोमादूर्ध्वमुत्कर्षः । पौर्णमासेष्टेरेवोत्कर्ष इत्येकदेशिमतम् । **भा.** ५।४।४।१०-१४.

**पौर्णमासीन्यायः** । विद्वद्वाक्यद्वयं समुदायद्वयानुवादः ॥

**प्रकरणं तु पौर्णमास्यां रूपावचनात् । २।२।३।३ ॥**

**भाष्यम्**— एवं हि समामनन्ति 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन् इति, ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत्, ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्यायाम्' इति। तथा 'आघारमाघारयति' 'आज्यभागौ यजति' 'स्विष्टकृते समवद्यति' 'पत्नीसंयाजान् यजति' 'समिष्टयजुर्जुहोति'। तथा 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इति। तत्र संदेहः सर्वाण्येतानि समप्रधानानि उत आग्नेयादीनि पयोऽन्तानि प्रधानानि, आघारादीनि आरादुपकारकाण्यङ्गानि। तथा य एवं विद्वानित्येवं संयुक्तौ प्रकृतानां कर्मणामनुवदितारौ अथवा 'य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजते' इत्यपूर्वयोः कर्मणोर्विधातारौ, तत्रेतरे गुणविधयः इति। किं प्राप्तम्? शब्दान्तरत्वादभ्यासाच्च समप्रधानानि। **इति प्राप्ते, ब्रूमः।** प्रकरणं तु पौर्णमास्याम्, प्रकृतानामाग्नेयादीनां अनुवदितारौ पौर्णमास्यमावास्यासंयुक्तौ। कुतः? रूपावचनात्। य एवं विद्वान् पौर्णमासीसंज्ञकं यागं यजते इति न सर्वे यागा उच्यन्ते। यः पौर्णमासीसंज्ञकः स विधीयते। न चैतदेवमवगच्छामः कीदृशमेवंसंज्ञकस्य यागस्य रूपमिति। तेन न किञ्चित् प्रतिपद्येमहि। अतो ब्रूमो यद्यपूर्वस्य विधातारौ अनर्थकाविति। अथ नु प्रकृतानामनुवदितारौ, ततः संनिहिताः पौर्णमास्यमावास्यासंयुक्ता यागा इति गम्यते रूपम्। तत्रार्थवत्ता वचनस्य। कथं पुनरेकवचनान्तो बहूनां वाचको भविष्यतीति यद्युच्यते, समुदायशब्दतया अवकल्पिष्यते। रूपवन्तो हि पूर्वप्रकृता यागाः। तेषां च प्रचयशिष्टः समुदायोऽप्यस्ति। तदपेक्षोऽयमरूपशब्दः। तस्मादेकवचनान्तता न दोषः। भवति हि बहूनामेकवचनान्तः शब्दः समुदायापेक्षो यथा यूथं वनं कुलं परिषदिति। यदा आग्नेयादीनां समुदायवचनावेतौ, तदा दर्शपूर्णमासशब्देनैते एवाभिधीयन्ते। तत एषां फलसंबन्धः, फलवत्संनिधेस्तु आघारादीनि आरादुपकारकाणीति।

**वा**— समस्तान् दर्शपूर्णमासप्रकरणयागविधीनुदाहृत्य किं सर्वेषां प्रधानत्वम्, उत केषांचिदेव इति भाष्यकारेण विचारः प्रस्तुतः। तत्राभिधीयते '**अङ्गप्रधानचिन्तेयं चतुर्थाध्यायगोचरः। केन नाम प्रसङ्गेन प्रस्तुता भेदलक्षणे॥**' अभ्यासलक्षणभेदानन्तरमिदानीं संख्यानिमित्तं भेदमविचार्यैव कथमयं लक्षणानौपयिकोऽर्थः चिन्त्यते? **केचिदाहुः**, अयमपि लक्षणार्थ एव 'अनन्तरं प्रधानाप्रधानानि परीक्षिष्यन्ते' इति (भाष्य-) वचनात् (भा. २।१।१।१ पृ. ३७१)। तत्तु अयुक्तम्। तत्रैव पर्यनुयुज्य वचनस्य अन्यथैव व्याख्यानात्। अपूर्वभेदप्रतीत्यर्थो हि स तृतीयसिद्धोऽर्थः अत्रोपन्यस्तः इत्युक्तम्। अयं तु कर्मणामङ्गाङ्गिभावो न कथञ्चित् संबध्यते। महता प्रयत्नेन अयं चतुर्थे साधयिष्यते 'दर्शपूर्णमासयोरिज्याः प्रधानानि' इत्यत्राधिकरणे। स्फुटत्वाच्च नान्यथा तत् नेतुं शक्यते। तस्मादिह अविचारणीयमेतत्। 'य एवं विद्वान्' इत्येवं संयुक्तौ प्रकृतानुवादौ, अथवा अपूर्वकर्मविधी 'तत्रेतरे गुणविधयः' इत्यपि सर्वं (भाष्योक्तम्) यथोपन्यस्तेनापि अधिकरणार्थेन न संगच्छते। अथ तु एतदेव विचार्यते, ततः पूर्वं नोपन्यसितव्यम्। अपिच '**भेदे च दृष्टसामर्थ्यौ समप्राधान्यसिद्धये। कथं शब्दान्तराभ्यासौ हेतुत्वेनोपवर्णितौ॥**' 'शब्दान्तरादभ्यासाच्च भेदस्तावदुच्यते, समप्रधानत्वमपि एताभ्यामेव प्रतिपाद्यते' इत्यपूर्वा युक्तिः। न वा अधिकरणद्वयशरीरस्य विविक्ताः पक्षहेतवो दृश्यन्ते, येन तन्त्रेण विचारद्वयमिदं प्रस्तुतं इत्यध्यवस्येम।

तस्मादेवं समर्थयितव्यम्। इह अभ्यासलक्षणभेदातिप्रसङ्गापवादार्थं अधिकरणे आरभ्यमाणे यथोदाहृतानां मध्ये द्वे एवोदाहरणे 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इति। तत्र संदेहः किमेतौ यजतिशब्दौ अपूर्वयोः कर्मणोर्विधायकौ, उत पौर्णमास्यमावास्याशब्दाभ्यां स्वाभिधेयकालविशेषयुक्तकर्मप्रतिपादकाभ्यां विशेष्यमाणौ प्रकृतानेव कांश्चित् यागान् अनुवदतः इति। तत्र इतरेषामाग्नेयादीनां गुणात्, प्रयाजादीनामभ्यासात्, आघारादीनां शब्दान्तरत्वात् सिद्धे भेदे अधिकरणपक्षद्वयप्रयोजनभूतसमप्रधान-

भावाङ्गाङ्गिभावविषयत्वेन उपन्यासो नाधिकरणशरीरविषयत्वेन । नहि समप्रधानत्वमङ्गाङ्गिभावश्च अधिकरणपक्षौ इत्युक्तम् । तदिह पौर्णमास्यमावास्यासंयुक्तयोर्विधातृत्वम्, तदभिधेयकर्मभेदः, समस्ताघारादीनां समप्राधान्यम्, इत्येतत् त्रयं उत्तरोत्तरफलत्वेन अविनाभावसंबन्धात् एकः पक्षः । तथा तयोरनुवादत्वम्, तद्वाच्यकर्माभेदः, आग्नेयादीन् प्रति आघारादीनामङ्गत्वम्, इति तेनैव प्रकारेण अपरः त्रिकः । त्रितयस्यत्रितयस्य च स्वांशाविनाभावात् एकसिद्धयैव इतरद्वयसिद्धिर्भवति इति पक्षद्वयेऽपि यदेव साधितम्, तेनैव इष्टसिद्धिं मत्वा फलभूतस्तृतीयः तृतीयोंऽश उपन्यस्तः । तत्र चार्थगृहीतावपि भेदाभेदौ विस्पष्टीकरणार्थं पुनरन्ते दर्शितौ । किमर्थं पुनरादौ व्यवहितयोः समप्रधानाङ्गाङ्गिभावद्वारेण भेदाभेदयोरुपन्यासः कृतः ? एषा हि आचार्यस्य शैली इति केचित् ( फलद्वारा उपन्यासो भाष्यकृत्प्रक्रिया इति )। तथाहि पूर्वाधिकरणयोरपि अपूर्वभेदमेव उपन्यस्तवान् । ( स्वमतेन लिङ्गदर्शनानुसारेण एवं कृतमिति परिहरति– ) अथवा यत् लिङ्गदर्शनं वक्ष्यति 'विकृतौ प्रयाजादयो दृश्यन्ते' इति (चतुर्थसूत्रे), तत् साक्षात् भेदनिराकरणाय असमर्थं समप्रधानभावं निराकरिष्यति । तन्निराकरणे च सति अविनाभावात् विधिभेदावपि निराकृतावेव भवतः, इति तदुपजीवनाय इत्थमुपन्यासः । केवलभेदोपन्यासे तु तदसंबद्धमेव स्यात् ।

तत्र द्वेधा पूर्वपक्षो भविष्यति । एकः समप्राधान्यद्वारेण आग्नेयादीनां कर्मविधित्वे सत्येव पौर्णमास्यमावास्यासंयुक्तयोः तद्व्यतिरिक्तकर्मविधानात्, अपरः पुनः तयोरेव कर्मविधित्वं इतरेषां तु गुणविधानार्थत्वं इत्येवम् । प्रथमं तावत् व्यतिरेकपक्षं परिगृह्णाति 'शब्दान्तरत्वात् अभ्यासाच्च समप्रधानानि' इति । यद्यपि चैतौ हेतू साक्षात् समप्रधानत्वेन न संगच्छेते, तथापि तत्प्रतिज्ञानेन योऽर्थात् भेदः प्रतिज्ञातः, तेन संबन्धादेकवाक्यत्वम् । एतदुक्तं भवति– 'अयागेभ्यः शब्दान्तरत्वात्, यागेभ्यश्च अभ्यासात् भेदः, ततश्च समप्रधानानि' इति । न च समस्तानुवादस्य किञ्चित् प्रयोजनमस्ति । न च गुणफलनिमित्तानां किञ्चित् श्रूयते, यत्र विधिव्यापारतः कर्मस्वरूपविधानमुपेक्षेत । न च एषा संज्ञा केषु चित् प्रकृतेषु प्रसिद्धा । वर्तमानापदेशेऽपि च सति प्रयोगवचनार्थवादपञ्चमलकारादीनामन्यतमेन 'समिधो यजति' इत्यादिवत् विधिः । सत्यपि च यच्छब्दोपबन्धे 'यदाग्नेयोऽष्टाकपालः' इत्यादिवत् विधिशक्त्यनवलोपः । न च शाखाऽन्तरीयवत् विधिविकल्पः, शाखाऽन्तराणां पुरुषान्तरं प्रति प्रतिपादनेन अर्थवत्त्वात् । न तु इह कर्मान्तरकल्पनादन्यत् प्रयोजनमस्ति । न च कस्य चिदन्यस्य विधेः स्तुतिः संभवति, एकवाक्यत्वाभावात् । किं पुनरनयोः कर्मणोर्द्रव्यदेवतम् ? तदुच्यते । '**ध्रौवं साधारणं द्रव्यं, देवता मान्त्रवर्णिकी । रूपवन्तावतो यागौ विधीयेते पृथक्तया ॥**' 'सर्वस्मै वा एतद् यज्ञाय गृह्यते' इति सर्वार्थत्वात् यथैव उपांशुयाजस्य ध्रौवाज्यद्रव्यकत्वम्, एवमनयोरपि यागयोः । तथा आज्यभागयोः क्रमे चतस्रोऽनुवाक्याः पठ्यन्ते द्वे आग्नेय्यौ, द्वे सौम्यौ । ते बलीयसा वाक्येन अवच्छिद्य अनयोः कर्मणोर्विधीयेते 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्' इति । नहि पौर्णमास्यमावास्याशब्दाभ्यां एतत्कर्मव्यतिरिक्तं अन्यदिहोच्यते । ननु कालवचनावेतौ इह प्रयुज्येते । ( परिहरति- ) किं ( हि ) कालस्य मन्त्रसंबन्धेन । दृष्टश्च सप्तमीनिर्दिष्टानां कर्मणां प्रधानभावः । तद्यथा 'येन कर्मणेर्त्सेत्, तत्र जयान् जुहुयात्' इति । तेन अनुवाक्याद्वयस्य तुल्यार्थतया विकल्प्यमानस्य अनुरूपा याज्याऽपि कल्पयितव्या । ( आग्नेय्यनुवाक्यापक्षे याज्याऽपि आग्नेयी, सौमीपक्षे सौमी कल्प्या इति एकः परिहारः ) । अथवा युगपद्विधानात् समुच्चये सति द्विदेवत्यकर्माध्यवसायात् द्वेद्वे याज्ये अपि कल्पयितव्ये । ( इतरेतरयोर्विहितद्वन्द्वापवादत्वेन एकशेषस्यापि इतरेतरयोगवाचित्वात् अनुवाक्याद्वयस्य समुच्चयप्रतीतेस्तद्वशेन अग्नीषोमयोर्देवतात्वकल्पनात् द्वयोरर्थवत्त्वम्, याज्या च तदानुरूप्येणैव आग्नेयी सौमी चान्या कल्प्या इति द्वितीयः प्रकारः । कल्पनालाघवेऽपि एकैव द्विदेवत्या याज्या इति तृतीयं प्रकारमाह- ) यद्वा एकैव अग्नीषोमदेवत्या । ( एकस्मिन् कर्मणि अनुवाक्याद्वयानर्थक्यात्,

याज्याऽनुवाक्यात्वेऽपि च इतरेतरयोगोपपत्तौ अनुशब्दस्य च याज्यायामपि प्रैषपश्चाद्भावेन अविरोधात्, समुच्चितयोश्च अङ्गत्वेन अग्नीषोमदेवत्यकर्माध्यवसानात्, मनोतान्यायेन एकदेशद्वारा तत्प्रकाशनेन उभयोः संवादोपपत्तेः, अश्रुतकल्पनापरिहाराच्च श्रुतयोरेव मध्ये अनुवाक्या एका, याज्या एका। इति चतुर्थं प्रकारमाह- ) अथवा वार्त्रघ्न्योरेव एका याज्या कर्तव्या, तथा वृधन्वत्योः । अतश्च श्रुतिविहितमन्त्रकर्मसंबन्धान्यथाऽनुपपत्त्या अग्नीषोमौ देवता उभयत्राध्यवसीयते। आज्यभागयोस्तु पुराकल्पसरूपेण वाक्येन देवता तावत् प्राप्तैव, 'यस्यै कस्यै चिद् देवतायै हविर्निर्वपन् आज्यस्यैव नौ पुरस्ताद् यजन्' इति। याज्याप्राप्तिश्चाबाधितैव अनुवाक्याऽऽगमश्च दाशतयीभ्यः कर्तव्यः इति न किञ्चित् विरुद्धम्। तस्मादस्ति कर्मान्तरत्वेऽपि रूपमिति भेदः। अतश्च समप्रधानानि। ( आशङ्कते- ) भेद इति गृह्णीमः, समप्रधानत्वं तु न मृष्यामहे। कुतः ?

**'निवेशः केषु चित् त्वेव पृथक्त्वेनाभिधानयोः। फलं च तद्विशिष्टेभ्य इति साम्यं न युज्यते ॥'**

( श्लोकं व्याचष्टे- ) दर्शपूर्णमासाभिधाने हि विशिष्टयागवाचिनी, तेन तन्मात्रस्यैव फलत्वात् इतरेषां तत्संनिधानात् अङ्गत्वेन भवितव्यम्। ( आशङ्कां निराकरोति पूर्वपक्षी- ) अत्राभिधीयते । **'प्रसिद्धेनाप्रसिद्धस्य नित्यमिष्टं विशेषणम्। तस्माद् यज्यनुरोधेन नामार्थोऽत्र निरूप्यते ॥'** सर्वत्र नामयुक्तकर्मविधाने सामानाधिकरण्यात् कदाचित् यज्यर्थविशेषो नाम्ना निरूप्यते, कदाचित् नामार्थो यजिना। यो यत्र पूर्वतरप्रसिद्धार्थो भवति, स इतरं स्वविषये स्थापयति, यथा 'ज्योतिष्टोमेन' इत्यत्र ज्योतिर्भिः त्रिवृदादिभिः स्तोमैर्योगात् प्रसिद्धार्थेन नाम्ना दीक्षणीयाऽऽदिभ्यो यजिः निवर्त्य सोमयागे स्थाप्यते। तथा 'राजसूयेन' इत्यत्र नाम यागायागविषयत्वेन उपप्लवमानं प्रकृतयागप्रसिद्धेन यजिना स्वविषयं नीयते। तदिह प्रातिपदिकद्वयसमासद्विवचनार्थानां दर्शपूर्णमासपदोपात्तानां न क्वचित्प्रसिद्धिरस्ति, यया यजेः तद्विषयत्वं विज्ञायेत। यजिः पुनर्यागमात्रे प्रसक्तः सन् अधिकारेण प्रकृतेषु स्थापितः शक्नोति अप्रसिद्धं दर्शपूर्णमासशब्दं स्वविषये नियन्तुम्। ततश्च 'दर्शपूर्णमासाभ्याम्' इति अविवक्षितावयवसमासार्थद्वित्वं वर्णलोलीभावमात्ररूपेण ( वर्णपङ्क्तिमात्ररूपत्वेन इति रूढिता उक्ता ) केवलकरणसंवादिप्रकृताशेषयागनामत्वं राजसूयशब्दवत् प्रतिपद्यते। 'सुपां सुपो भवन्ति' इति बहुवचनस्य स्थाने द्विवचनं समस्तसमुदायगतैकवचनस्य वा। कथं पुनः 'दर्शपूर्णमासाभ्याम्' इत्यप्रसिद्धम् ? ( उत्तरम्- ) यदा तावत् **'वाच्यकालयुजो यागाः प्रकृताः सन्ति के चन। द्विसंख्योत्पत्तियुक्ताश्च प्रसिद्धिर्येषु विद्यते ॥'** तन्नाम अशेषस्वार्थपरित्यागेन अत्यन्तपरानुरोधिवृत्तिं भजते, यत्र कश्चिदपि अंशः अप्रसिद्धः। इह तु दर्शन कालेन पौर्णमासेन च संयुक्ता आग्नेयादियागा विद्यन्ते। द्वित्वयुक्ताश्च आज्यभागादयः, तेषामयुक्तः परित्याग इति। ( स्वार्थासमाप्तस्य वाक्यस्य वाक्यान्तरानन्वयवत् पदस्यापि स्वार्थसमाप्तस्य पदान्तरानन्वयात् नैकैकांशप्रसिद्धिमात्रेण यजिविशेषकता युक्ता इति परिहरति- ) तदुच्यते । **'प्रकृतिप्रत्ययौ पूर्णौ विशेष्टुं यजतिं क्षमौ। आग्नेयाद्याज्यभागादावेकत्रैकार्थशून्यता ॥'** यद्यपि आग्नेयादिषु स्वाभिधेयकालयोगात् प्रातिपदिकं वर्तेत, तथापि तेषां बहुत्वात् द्वित्वानुपपत्तेः असमर्थं पदम्, यत्रापि द्वित्वमस्ति आघारयोराज्यभागयोर्वा, तत्रापि प्रातिपदिकस्य अत्यन्तमशक्तिः। न च अर्थप्रकरणशब्दान्तरैः विस्पष्टं सामानाधिकरण्यमस्ति, येन केनचित् वर्णसामान्यात् आख्याविकारन्यायेन ( आख्याविकारन्यायशब्दे द्रष्टव्यम् ) गौणत्वेन वा तद्विषयत्वमध्यवसीयेत।

कस्मात् पुनः इमावेव अपूर्वौ पूर्ण- ( पौर्ण- ) मास्यमावास्यासंज्ञकौ द्वौ यागौ फलाय न विधीयेते। तथाहि, **'सिद्धान्तेऽपि तु यादृग्भ्यां शब्दाभ्यामनुकीर्तितौ। तावेव समुदायौ द्वौ विधास्येते फलं प्रति ॥'** यदि कश्चित् 'दर्शपूर्णमासशब्दयोः पौर्णमास्यमावास्याशब्दयोश्च वैलक्षण्यात् न पूर्वकर्मप्रत्यभिज्ञानं फलवाक्ये अस्ति' इति ब्रूयात्, स वक्तव्यः 'तुल्यत्वे दोषोऽयम्' इति। तत्रापि हि पौर्णमास्यमावास्यासंज्ञकावेव समुदायौ फलवन्तौ इष्टौ, न च तयोः प्रयोगवाक्ये अस्ति

शब्दत्वात् प्रत्यभिज्ञानम्। अथ तत्र विनाऽपि संज्ञाऽनुसारेण काल्योगात् वृत्तिरिष्यते, स ममापि अस्त्येव कालयोगः 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति। नैतदेवम्। एवमपि हि '**षण्णामग्न्यादियागानामनयोश्च** (दर्शपूर्णमासयागयोः) **द्वयोरयम्। समानः कालसंयोग इति नेष्टावधारणा॥**' नहि अष्टानां कालसंयोगे सति अवधारणे हेतुरस्ति, येन अनयोरेव फलसंबन्धः स्यात्। स्यादेतत् एतेषां मध्ये ययोः कयोश्चित् फलसंबन्ध इति, तदयुक्तम्। '**विशेषहेत्वभावे हि ग्रहणं निष्प्रमाणकम्। पक्षे वाऽङ्गप्रधानत्वं विरोधान्न विकल्पते॥**' विना विशेषहेतुना यागत्वकालसंबन्धसाम्ये सति यावेव गृहीतौ तत्रैव इतरेषां प्राधान्यप्रामाण्यभाजां सतां अङ्गत्वापादनाद्विरुद्धता स्यात्। अथ विकल्पेन सर्वेषां पाक्षिकोऽनुग्रहः कल्प्येत, तत्रापि तस्यैव कदा चित् प्रधानत्वम्, कदा चिदङ्गत्वमिति विप्रतिषिद्धम्। उभयात्मनां चाङ्गतया प्रवृत्तेः, प्रधानत्वेन च निवृत्तेः आग्नेयादीनां विकृतिगमने यावज्जीवं संशयप्रसङ्गः। सर्वसंख्याश्च केन चित् अवान्तरसामान्यावच्छेदेन संख्येयेषु वर्तन्ते। न वा अपूर्वयोः आग्नेयादीनां वा समस्तानामेकदेशे वा किञ्चिदवान्तरसामान्यं दृश्यते, येन द्वित्वमवधार्येत। य एव हि गृहीतस्तस्यैव यागान्तरापेक्षया उद्भूतेन बहुत्वेन केवलात्मापेक्षेण चैकत्वेन द्वित्वं बाध्यते। ततश्च द्विवचनस्याप्रसिद्धिः। सिद्धान्ते तु शब्दद्वयेन समुदायद्वयापादनात् असमुदायीकृतयागवैलक्षण्यात् अवान्तरधर्मयोगात् संभवति द्वित्वयोगः। तद्वशेन च काल्योगात् कथञ्चित् दर्शपूर्णमासप्रातिपदिकयोरपि वृत्तिसिद्धिः, इत्युपपद्यते यागविशेषणत्वम्, न तु पूर्वपक्षे समुदायत्वापादनाभावात् संख्यावृत्तिः इति प्रकृतयागमात्रे एव फलसंबन्धः। (शङ्कते-) अथ कस्मात् अष्टावेव यागाः पौर्णमास्यमावास्याकालगतद्वित्वापेक्षया लब्धविशेषणाः सन्तो न विधीयन्ते, यथा सिद्धान्ते समुदायगतद्वित्वापेक्षया षट् विधास्यन्ते। (परिहरति-) न ईदृशेन अस्फुटेन प्रकृतयागमात्रावलम्बि आख्यातं शक्यं निवर्तयितुम्। न च अत्यन्तव्यतिरेकात् कालगता संख्या यागसामानाधिकरण्यनिर्देशार्हा भवति। समुदायसमुदायिनोस्तु अव्यतिरेकात् अविरुद्धः संख्यासंबन्धः सिद्धान्ते। (पूर्वपक्षप्रयोजनमुपपादितमुपसंहरति-) तस्मात् पूर्वपक्षे यजिवशेनैव नामपदवृत्तेः अविशेषेण सर्वे यागाः समप्रधानाः। [वस्तुतः पूर्वपक्षोपसंहार एवायम्]।

(सूत्रं द्वेधा योजयन् तत्सिद्धान्तमाह-) **तथा प्राप्ते, अभिधीयते**। प्रकरणं पौर्णमास्यमावास्यासंयुक्तयोः आलम्बनं स्यात्। प्रक्रियते इति प्रकरणम्। अथवा प्रकरणं तयोः सहकारि भवेत्। ततश्च तन्मात्रप्रतिपाद्यः अर्थः ग्रहीतव्यः। (पौर्णमासीशब्देन उदाहरणीभूतविद्वद्वाक्ययोः उपलक्षणम्। प्रकरणशब्दस्य कर्मव्युत्पत्तौ आलम्बनपदाध्याहारः, भावव्युत्पत्तौ च सहकारिपदाध्याहारः)। कुतः? '**विधायको नियुङ्क्ते हि सर्वोऽसाधारणे यजौ। न च तत्र प्रवृत्तिः स्यादज्ञातद्रव्यदेवते॥**' नहि अनेन यजिना पौर्णमास्यमावास्यापदाभ्यां वा यागमात्रे बुद्धिः क्रियते। न च प्रकृतकर्मग्रहणं त्वत्पक्षेऽस्ति। तत्र अज्ञातरूपे सति अपूर्वे कर्मणि न कथञ्चित् प्रवर्तेत, ततश्च वाक्यमेव अनर्थकं भवेत्। प्रकृतग्रहणे तु तेषां द्रव्यदेवतायोगात् एतत्कालवर्तित्वाच्च रूपज्ञानादर्थवत्त्वम्। ननु उक्तं मत्पक्षेऽपि अस्ति द्रव्यदेवतमिति, सत्यम् '**यथाकथञ्चिल्लभ्येत द्रव्यं साधारणं स्थितम्। तथापि देवता नास्तीत्यरूपत्वान्न मुच्यते॥**' नहि मान्त्रवर्णिकी देवता संभवति, मन्त्राणां क्रमविशेषेण आज्यभागार्थत्वात्। न च अस्य वाक्येन बाधः, विरोधाभावात्। सर्वत्र हि अविरोधेन वाक्ये निविशमाने विरोधपक्षस्त्यक्तव्यः। इह च ('वार्त्रघ्नी पौर्णमास्याम्, वृधन्वती अमावास्यायाम्' इति वाक्ययोः) पौर्णमास्यमावास्याशब्दौ यदि कर्मवचनावेव स्याताम्, ततो न विरोधः परिह्रियेत। कालवचनत्वे तु अनयोरविरोधः। साधारण्याच्च अविरोधपक्ष एव समर्थनीयः।

किञ्च। '**प्रथमं काल एवाभ्यां शब्दाभ्यां प्रतिपाद्यते। पश्चात् तत् कर्म तद्योगादतः कालोऽत्र गृह्यते॥**' यदि हि सर्वलोकप्रसिद्धः कालः अत्र न समवेयात्, ततः तदतिक्रमेण कर्मणी गृह्ये-

याताम् । अपिच उपपन्नतरा कालवचनत्वे सप्तमी । तस्य सर्वत्रैव कालस्य अधिकरणत्वात् न कर्मणः । अधिकरणत्वानुपपत्तेः यथाकथञ्चित् कल्पनीयं स्यात् । यत्तु किं कालस्य मन्त्रसंबन्धेन इति, यदि तादर्थ्यलक्षण एवैकः संबन्धो भवेत्, स चात्र अस्माभिरुच्येत, तत एवं युज्यते वक्तुम् । इह तु आज्यभागौ प्रति तादर्थ्ये व्यवस्थिते, संकरे च प्राप्ते कालभेदेन प्रयुज्यमानयोर्मन्त्रयोः व्यवस्थामात्रं क्रियते 'वार्त्रघ्नी पौर्णमासीस्थयोराज्यभागयोः, वृधन्वती अमावास्यास्थयोः' इति । किञ्च, '**प्रज्ञातदेवतत्वाच्च दृष्टार्थाऽल्पविधानता । मत्पक्षे, भवतस्त्वत्र प्रसक्ता बहुकल्पना ॥**' सर्वत्रैव आकाङ्क्षापूर्वकः संबन्धो भवति । आज्यभागौ च प्रज्ञाताग्नीषोमदेवत्यौ तदभिधानसमर्थमन्त्राकाङ्क्षित्वादयत्नेन मन्त्रान् गृह्णीतः । त्वत्पक्षे तु अपूर्वयोः कर्मणोः अज्ञातदेवतत्वात् न मन्त्रापेक्षा । ततश्च मन्त्रतद्विशेषद्वित्वादिकल्पनात् अनपेक्षितानेकार्थविधिप्रसङ्गः । पुनश्च मान्त्रवर्णिकानेकदेवताकल्पना । नहि एकस्य कर्मणः अनेकया देवतया, अनेकया अनुवाक्यया (च) कार्यमस्ति । पुनश्च अश्रुतयाज्याकल्पनाश्रयणम्, आज्यभागयोश्च अश्रुतपुरोऽनुवाक्याकल्पनम् । यच्च 'एका याज्या एका चानुवाक्या भविष्यति' इति, न तत्, अनुवाक्यासमाख्याबाधात् । अपिच त्वत्पक्षे लिङ्गस्य अविनियोजकत्वात् वाक्ये च करणत्वेन आश्रयणात् 'वैष्णवीमनूच्य' इत्यादिवत् अदृष्टार्थप्रसक्तेः न प्रकाशकता, प्रकाश्येन अनपेक्षितत्वात् । मान्त्रवर्णिकदेवताकल्पनातश्च वरमारादुपकारकत्वम् । आज्यभागयोः पुनर्द्वित्वात् प्रज्ञातद्विदेवतत्वाच्च प्रकाश्याकाङ्क्षिताः प्रकाशका मन्त्राः लिङ्गक्रमविनियुक्ताः सन्तः एकान्तेन दृष्टार्थतां प्रतिपद्यन्ते । तत्र च मन्त्रतद्विशेषद्वित्वादिषु प्राप्तेषु कालद्वारेण व्यवस्थामात्रविधानात् लाघवं वाक्यस्य, न चानर्थक्यम् ( सुधापाठः पृ. ७२८ ) । नहि संनिधानात् व्यवस्था सिद्धा । ( मान्त्रवर्णिकदेवताप्राप्त्यभावमुपसंहरति– ) तस्मान्न दैवताविधिः असंबन्धात् । ( सूत्रार्थमुपसंहरति– ) अतश्च अरूपत्वात् अकर्मान्तरता । ( आनर्थक्यापरया अनुवादत्वानुपपत्तिमाशङ्कते– ) किं पुनः समस्तानुवादस्य प्रयोजनम् ? ( आनर्थक्यमुपपादयति– ) पश्य '**पदतद्भागवाक्यार्थविधिशून्या हि चोदना । धर्मं प्रत्युपयोगित्वं न कथञ्चित् प्रपद्यते ॥**' ( 'दध्ना जुहोति' इति करणत्वेन दधिविधानात् पदार्थचोदना । 'दण्डी प्रैषानन्वाह' इति दण्डप्रातिपदिकार्थविधानात् तद्भागार्थचोदना । 'सोमेन यजेत' इति विशिष्टविधानात् वाक्यार्थचोदना इति । विद्वद्वाक्ययोरपि प्रयोगवचनाङ्गत्वात् धर्मप्रमोपयोगो भविष्यति इति परिहरति– ) उच्यते '**यथैवोत्पत्तिवाक्यानां प्रयोगवचनाङ्गता । तथैव तदुपादानाद् द्वित्वसिद्ध्याऽनयोरपि ॥**' ( तदुपादानात् द्वित्वस्योपादानात् ) । वाक्यद्वयेन हि समुदायद्वये कल्पिते 'दर्शपूर्णमासाभ्याम्' इति द्विवचनं सिध्यति इत्यर्थवत्त्वम् । नहि विधिरेवैकः प्रयोजनवान् इति कश्चित् नियमहेतुरस्ति, अविधेरपि विधिशेषत्वेन अर्थवत्त्वात् । न चात्र विप्रकीर्णानामाग्नेयादीनां एतद्वाक्यद्वयमन्तरेण द्वित्वसंख्यायोगित्वं संभवति । एतदेव चाभिप्रेत्य अस्य पक्षस्य प्रयोजनमेव गुणप्रधानत्वं आदित उपन्यस्तम् ( भाष्ये ) । इतरथा हि 'अविशेषादनर्थकं हि स्यात्' ( २।२।२।२ ) इत्यस्योत्तरमपरिकल्प्य अनुवादपक्षो दुरुपन्यास एव स्यात् । ( अनुवादानर्थक्यपरिहारमुपसंहरति– ) तस्मात् अस्ति प्रयोजनं समस्तवाक्यानुवादेऽपि इत्यदोषः ।

कथं पुनः अत्यन्तभिन्नानां कर्मणां समुदायीकरणं शक्यम् ? शक्यमिति ब्रूमः । '**एककालाभिसंयोगाद् भिन्नानामपि कर्मणाम् । समुदायार्पणं शक्यमेकदेशस्थवृक्षवत् ॥**' यथैव हि एकदेशस्थितान् वृक्षानालोच्य 'वनम्' इति समुदायबुद्धिर्भवति, एवं एककालयुक्तकर्मसमुदायनामधेयबुद्धिः । तद्गतैकत्वावधारणाच्च 'पौर्णमासीम्' इत्येकवचननिर्देशः । समुदायिवचनावेव चैतौ तल्लक्षितसमुदायगतसंख्याद्वारेण एकवचनान्तत्वं बिभ्राते, न समुदाययोरेव नामधेये भवतः । तथाहि, '**सामानाधिकरण्येन यागनामत्वनिश्चयः । समुदाये च यागत्वं नाग्नेयादिष्ववस्थितम् ॥**' ( नञं पूर्वेण संबध्य 'किन्तु' इत्यध्याहारेण उत्तरावयवो योज्यः ) । 'पौर्णमासीं यजते' इति यजि-

सामानाधिकरण्यात् यागनामधेयमेतत् इति गम्यते। न च आग्नेयादीनां समुदाये यागत्वं समवेतम्। किं तर्हि? प्रत्येकमाग्नेयादिषु। तस्मात् यथैव एतेषु प्रत्येकं यजिः, एवं नामधेयमपि। न च समुदायोत्पत्तिः एकेन कालेन युक्ता, आग्नेयादीनामुत्पत्तिकाले परस्परानपेक्षत्वेन समुदायत्वानुपजननात्। ततः कालवशेनापि प्रत्येकं नामधेयं इति शक्यं वक्तुम्। यदि च समुदायिनैरपेक्ष्येण समुदाययोः एते नामनी स्याताम्, ततः प्रयोगवाक्येनापि समुदायौ फले विधीयेयाताम्, ततः अवयवानां असाधनत्वात् समुदायादेकमपूर्वम्। अतश्च प्रत्येकापूर्वाणामभावात् कर्मभेदवैयर्थ्यप्रसङ्गः, सर्वधर्माणां च एकापूर्वनिबन्धनत्वात् संकीर्णवृत्तित्वं स्यात्। न च प्रत्येकमितिकर्तव्यतया आग्नेयादयः संबध्येरन्। ततश्च तद्गततन्त्रावृत्तिप्रयोगादिविचारासंबद्धत्वं भवेत्। न च प्रत्येकविकारे सौर्यादौ समस्तेतिकर्तव्यताऽतिदेशः स्यात् सहस्रादिशब्दवच्च अवयववृत्त्यभावात् एकपुरोडाशा पौर्णमासी, सांनाय्यरहिता अमावास्या इत्येवमादिव्यवहारोच्छेदप्रसङ्गः। 'संघातस्य अचोदितत्वात्' (९।१।६।२५), 'संघातस्य गुणत्वात्' (७।४।३।१७) इत्येवमादिषु स्पष्टं एवंप्रकाराणां समुदायिवचनत्वमभ्युपगतम्। इतरथा हि स एव शब्दाभिहितत्वात् चोद्येत, फलसंबन्धाच्च प्रधानं भवेत्। तस्मादुपसर्जनीभूतसमुदायाः समुदायिन एवाभिधीयन्ते। तेषां तु बहुत्वात् बहुवचनप्रसङ्गेन लक्षणया एकवचनयोगः इत्यभिप्रेत्य समुदायशब्दतया अवकल्पिष्यते इत्याह (भाष्यम्)। तथा च भवति हि बहूनामेकवचनान्तः (शब्दः) समुदायापेक्षः इति। अपेक्षामात्रमेव समुदायस्य ब्रवीति, नाभिधेयत्वम्। यूथवनशब्दौ अपि यदा समुदायोपसर्जनसमुदायिवचनौ, तदा साकल्येन दृष्टान्तौ, यदा तु समुदायमेव ब्रूतः, तदा तन्निमित्तैकवचनलाभमात्रेण दृष्टान्तत्वम्। एतेन दर्शपूर्णमासशब्दौ एतत्पर्यायौ व्याख्यातौ। तस्मादस्ति समुदायद्वित्वापेक्षानिमित्तैकत्वद्वयप्रत्ययसिद्धिः समुदायानुवादप्रयोजनम्। [इदमेकं इदमेकं इति एकत्वद्वयस्य यः प्रत्ययः समुदायद्वित्वापेक्षानिमित्तभूतः, तस्य सिद्धिः अनुवादप्रयोजनमित्यर्थः] यथा वक्ष्यति 'पृथक्त्वेनाभिधानयोर्निवेशः' (पृथक्त्वे त्वभिधानयोः इति भासूत्रपाठः। ४।४।११।३४) इत्यत्र। (एवं सिद्धान्तसूत्रावयवं पठित्वा न्यायमभिधत्ते-) तद्द्वित्वानुसारिणौ हि दर्शपूर्णमासशब्दौ तद्विषयौ भवतः (इति)। (पौर्णमास्यमावास्याशब्दोक्तसमुदायद्वित्वानुसारित्वात् दर्शपूर्णमासशब्दयोः समुदायविषयत्वं इति न्यायः)। अस्ति च पौर्णमासीपूर्णमासशब्दयोर्बहु सारूप्यम्। तत्साहचर्याच्च दर्शशब्दस्य अमावास्याविषयत्वम्। विपर्ययहेतुत्वेन वा लघीयस्येव प्रतिपत्तिः यथा काण इति चक्षुष्मान् [काणः चक्षुष्मान् इति इत्यन्वयः। यथाश्रुतोऽप्यन्वयः संभवत्येव, उद्देश्यविधेयभावस्तु विपरीतः]। तथा च वक्ष्यति (४।४।११।३४ सूत्रे भाष्यकारः) शक्यते च चन्द्रमसः अदर्शनात् (अमावास्या) दर्शः इति वक्तुम् (लक्षयितुम्)। तथा अन्वारम्भणीयावाक्यशेषे अमावास्यादर्शशब्दौ समानाधिकरणौ दर्शयिष्यति। ('दर्शो वा एतयोः पूर्वः' इत्युपक्रम्य 'अमावास्या वै सरस्वती' इत्युपसंहारात् दर्शामावास्ययोः सामानाधिकरण्यावगतिः। (भाष्यं व्याचष्टे-) तेन समुदायद्वयोपलक्षितानां फलवत्त्वात् इतरेषामङ्गत्वम्। ननु च एवं सति अनेनैव गतत्वात् चतुर्थे अधिकरणं नारब्धव्यम्, नैष दोषः। स्थिते हि एतस्मिन् प्रकृतयजतिमात्रग्रहणात्तत्र पूर्वः पक्षः, सिद्धान्तस्तु एतदधिकरणप्रसादात् भविष्यति। इतरथा तस्य पूर्वपक्ष एव स्यात् इति प्रयोजनत्वेनाभिधानम्। इदमपरं समुदायानुवादप्रयोजनम् 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति कालसंयोगः। तत्र एतत् स्यात्। एतदपि वाक्यमनर्थकम्, उत्पत्तिवाक्यादेव कालसंयोगसिद्धेरिति। उच्यते। '**अन्यथैव ह्ययं कालः करणांशेन युज्यते। अन्यथोत्पत्तिवाक्यस्थो निरपेक्षैः परस्परम्॥**' उत्पत्तिवाक्ये हि अन्योन्यनिरपेक्षाणामाग्नेयादीनां निरङ्गानां च कालसंयोगः, तद्रूपत्वेन उपादानात्। अयं पुनः तृतीयासंयोगात् करणभूतानाम्। तेषां च करणत्वं प्रयोगवाक्यादितरेतरयुक्तानामङ्गसहितानां चावगतम्, इति तादृशानां तदनुपादेयम्, कालं प्रति उपादीयमानत्वात्। समस्तरूपविवक्षावशेन साङ्ग-

त्रिकः परस्परसहितश्चैकपौर्णमास्या युक्तः एकया चामावास्ययेति । यस्मिन् क्षणे एको यागः आरभ्य क्रियमाणः समाप्तिमनुभवति, तस्मिन्नेव इतरौ, इत्यवधारणात् त्रिकस्यत्रिकस्य तन्त्रेण प्रयोगः सिद्धो भवति । औत्पत्तिककालानुरोधे तु भेदेन अङ्गवियुक्तानां च प्रयोगः स्यात्, इत्यस्ति विशेषः । ननु च एवं सति समुदायद्वयस्य इतरेतरयुक्तस्य करणत्वात् नाङ्गसाहित्यवत् न परस्परतद्विवक्षाऽपि ( परस्परतद्विवक्षा न इति न इति द्वौ नञौ प्रकृतमर्थं द्रढयतः ) इति यथैव अङ्गानां तत्कालविज्ञानम्, एवं पौर्णमास्या अमावास्या आक्षिप्ता, अमावास्यया च पौर्णमासी इत्युभयोरुभयत्र प्रसङ्गः, न वा उत्पत्तिवाक्यशिष्टकालविरोधः, तत्राप्यनुष्ठानात् । नहि यः पौर्णमास्यां अमावास्यां करोति, तेन अमावास्यायाममावास्या न कृता भवति, तथा पौर्णमासी । न च उत्पत्तिवाक्येन कालान्तरं निषिद्धम्, स्वकालप्रतिपादनमात्रोपक्षयात् । अत्रोच्यते । **'कालो यस्य न विज्ञातः स्वरूपं च न नश्यति । तस्य कालः परोपाधिरुच्यमानो न दुष्यति ॥'** अमावास्या हि उत्पत्तिकालनिराकाङ्क्षा पौर्णमासीसाहित्यलभ्यं पौर्णमासीकालं न प्रतीच्छति, एवं पौर्णमासी अमावास्याकालम्, इति एतयोः समुदाययोः कालान्तरकरणे सति औत्पत्तिकरूपविसंवादात् अदर्शत्वमपूर्णमासत्वं च स्यात् । अङ्गानां तु अनिर्ज्ञातकालत्वेन साकाङ्क्षत्वात् उत्पत्तिविसंवादाभावाच्च अविरुद्धः साहित्यापेक्षलभ्यः कालः । आह– **' अङ्गानां मुख्यकालत्वाद् वाक्याद्दस्माद्विनाऽप्ययम् । कालोऽस्त्येवेति नैतस्य वचसोऽत्र निमित्तता ॥'** उच्यते । **'मुख्यकालत्वमङ्गानां न स्थितं मान्त्रवर्णिकम् । इदमेव हि तद्वाक्यम्, यद्बलेनैतदुच्यते ॥'** ननु दूरस्थानि उपकर्तुं न शक्नुवन्ति । ( अपर आह– ) संनिकृष्टस्यैरूपकर्तव्यं इत्येतद्वा कुतः ? सर्वत्र वचनानुसारेण उपकारानुपकारांशौ विज्ञायेते । तत्र संनिकर्षवचनाभावे विप्रकृष्टं नोपकरोति इति न किंचित् प्रमाणम् । ननु च अन्येनैव वाक्येन एष तन्त्रप्रयोगः सिध्यति ' य इष्ट्या पशुना सोमेन ' इत्यादीनां तत्रापि करणविभक्तिनिर्देशात् इष्टेः स्वसमुदायिस्वाङ्गसहितायाः कालं प्रति उपादानात् ईदृशी विवक्षा लभ्यते । सत्यं लभ्यते, न तु इष्टः प्रयोगः सिध्यति । तथाहि, **' इष्टिशब्दः समस्तं वा प्रत्येकं वाऽवलम्बते । न तावत् त्रिकमित्येकमन्यादृक् चेष्टितं भवेत् ॥'** न तावत् त्रिकस्य इष्टिशब्देन ग्रहणमित्यवधार्यते । तत्र प्रत्येकं यागत्वेन इष्टिशब्दप्रवृत्तेः एकैकस्याममावास्यायां पौर्णमास्यां वा प्रयोगः, इति न सम्यक्प्रयोगसिद्धिः । अथ समस्तानामाग्नेयादीनां कथञ्चित् रूढेः 'प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः' इतिवत् ग्रहणम्, एवमपि प्रयोगवचनैकत्वात् समुदायद्वयस्यापि पौर्णमास्याममावास्यायां वा अनुष्ठानं स्यात्, तत्र स एव उत्पत्तिशिष्टकालविरोधः । तदनुरोधेन व्यवस्थितविकल्पाश्रयणमिति चेत्, एवमपि यथोत्पत्त्यनुरोधात्प्रत्येकानुष्ठानप्रसङ्गः । तथा अङ्गानां भेदेन पौर्णमास्यमावास्ये प्रति उपादानाभावात् यत्रक्वचन एकत्र प्रदेशे अनुष्ठानं स्यात् । तस्मात् न ( य इष्ट्या इति– ) एतद्वाक्यं ताभ्यां ( पौर्णमास्यमावास्यावाक्याभ्यां ) तुल्यार्थमिति प्रकृतौ अकिञ्चित्करत्वात् विकृतीरेव सद्यस्कालतायै गच्छति । ननु अनेन तन्त्रप्रयोगः सिध्येत् ' समे दर्शपूर्णमासाभ्यां यजेत ' इति देशस्यानुपादेयत्वात्साहित्यविवक्षोपपत्तेः । तत्रोच्यते । **' समस्य केवला चैव तन्त्रता प्रतिपाद्यते । तेन सर्वैरसावेको ग्राह्यो, न बहवः समाः ॥ '** भेदेनापि हि प्रयुज्यमानानामनन्यदेशगमनमात्रेण देशतन्त्रत्वसिद्धिः । अथ इतरेतरयोगवशात् यदैव एकः समेन यागो युज्यते, तदैव इतरोऽपि इति तन्त्रत्वमुच्यते । तथा सति षण्णामपि युगपदुपादानात् तथैव प्रयोगप्रसक्तेः स एव विरोधः । यदि पुनः उत्पत्तिवाक्यानुरोधेन प्रवर्तते, ततः प्रत्येकं कालसंयुक्तानां समं प्रति साहित्यं संपादनीयं इति षट्स्वेव पौर्णमास्यमावास्यासु प्रयोगः समाप्येत । अङ्गानि च तावतः कालात् अनुत्कृष्यमाणानि प्रयोक्तव्यानि इति यत्रक्वचन अन्तराले क्रियेरन् । अथवा प्रतिप्रधानावृत्तेर्न्याय्यत्वादेकैकं प्रधानं साङ्गमपवृज्येत । अथ तु यावता उत्पत्तिकालो विरुध्यते, तावन्मात्रं परिहाय यौगपद्येन

समसंबन्धः कर्तव्यः इत्यवधार्येत, तत एकस्यामेव पौर्णमास्याममावास्यायां वा त्रिकयोः प्रयुज्यमानयोः यस्यकस्यचित् समीपे अङ्गानि प्रयुज्येरन् । अथवा तदर्धमासान्तराले यत्रक्वचन अहनि । सर्वो हि असौ प्रधानकालः, प्रधानकालबहिर्भावश्च संभावयितव्यो नात्यन्तसामीप्यम्, अशक्यत्वात् । तस्मात् नैतेनापि अभिप्रेतप्रयोगसिद्धिः । अनेनैव फलवाक्यमपि प्रत्युक्तम्, फलस्यापि देशवदेव अनुपादेयत्वात् । सर्वान् इतरेतरयुक्तान् साङ्गान् प्रति तन्त्रत्वे सिद्धे न प्रयोगतन्त्रत्वसिद्धिः, विप्रकृष्टकालैरेव हि एकं फलं साध्यते । अथोच्येत, फलं भवत् भावयेदेतैः इत्थं इति साङ्गानि प्रधानानि युगपत्फलभवनकालेऽनुष्ठातव्यानि श्रूयन्ते, ततश्च न विप्रकृष्टानीति । तत्रापि समुदायद्वयस्य युगपत्प्रयोगापत्तिर्दोषः । उत्पत्तिवाक्यानुरोधेन वा पूर्ववदेव प्रत्येकं प्रयोगादियोजना । न च फलभवनकालः अस्मत्प्रत्यक्षः । सोऽपि हि प्रधानेतिकर्तव्यताकालेनैव परिच्छिद्यते । ततश्च उत्पत्तिकालालोचनेन यावन्तं प्रयोगकालं अङ्गप्रधानानि व्याप्नुवन्ति तावानेव फलभवनकालः, तादृगेव तद्विषयं यौगपद्यम्, इति सर्वथा षट्सु पौर्णमास्यमावास्यासु द्वयोर्वा साङ्गानां चापवर्गः । एकसमुदायसमीपे वा अङ्गप्रयोगः अर्धमासान्तराले वा यत्रक्वचित् इति प्रसङ्गात् नैतद्वाक्यलभ्यः त्रिकस्यत्रिकस्य साङ्गस्य स्वकाले प्रयोगः वाक्यान्तरात् सिध्यतीति । तस्मादर्थवान् 'पौर्णमास्यां पौर्णमास्या यजेत' इति कालविधिः । ननु एवं सति उत्पत्तौ कालयोगः अनर्थकः । कथमनर्थकः ? पश्य,

**'यद्युत्पत्तौ न विद्येत यागानां कालसंगतिः ।**
**समुदायानुवादत्वं निर्निमित्तं न लभ्यते ॥'**

पौर्णमास्यमावास्याशब्दौ स्वाभिधेयकालयुक्तयागानुवादौ इष्येते । तदभावे तु नैव ज्ञायेत का पौर्णमासी का अमावास्येति । तदज्ञानात् अलब्धार्थदर्शपूर्णमासपदाविशेषितप्रकृतयागमात्रग्रहणात् सर्वाणि समप्रधानानि इत्येतदेव स्यात् । तस्मात् अवश्यं भवितव्यं प्रथमं कालसंयोगेन । अत एव वा उपांशुयाजस्य अनुत्पत्तिवाक्यमपि सत् पौर्णमासीसंयुक्तमुदाहृतम् ।

**विशेषदर्शनाच्च पूर्वेषां समेषु ह्यप्रवृत्तिः स्यात् । ४ ॥**

**भाष्यम्**— यदि च सर्वाणि समप्रधानान्यभविष्यन् न विकृतौ प्रयाजा दृश्यन्ताम् । दृश्यन्ते तु 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इति । असति आग्नेयगुणत्वे प्रयाजस्य तन्नोपपद्यते । अतो न सर्वाणि समप्रधानानि ।

**वा**— यदि चैते कर्मान्तरे स्याताम्, तत आघारादीनि समप्रधानानि स्युः । ततश्च 'कर्मणस्त्वप्रवृत्तित्वात् फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात्' इत्यनेन न्यायेन आग्नेयादिवत् प्रयाजादीनां करणांशोपनिपातात् विहितकरणया विकृतिभावनया कथंभावाकाङ्क्षिण्या तत्पूरणासमर्थानामग्रहणात् प्राप्तप्रयाजानुवादेन कृष्णलविधानं नोपपद्येत । तस्मादाग्नेयगुणत्वं प्रयाजादेः कथं स्यादिति समुदायानुवादौ ।

**गुणस्तु श्रुतिसंयोगात् । ५ ॥**

**भाष्यम्**— नैतदस्ति पौर्णमास्यमावास्यासंयुक्तौ समुदायशब्दाविति । किन्तु अपूर्वयोः कर्मणोर्विधातारौ । तथा न लक्षणशब्दो भविष्यति । नन रूपं नास्ति । वाक्यान्तरेण रूपमवगमिष्यामः । पौर्णमास्यामाग्नेयोऽष्टाकपालो भवतीति । यदेतत् पौर्णमासीनाम कर्म, तस्य एतद् रूपमग्निर्देवता, पुरोडाशो द्रव्यमिति । अत आग्नेयादिभिर्गुणो विधीयते इति ।

**वा**— पौर्णमासीमित्येकत्वं प्रातिपदिकार्थगतमेव भविष्यति, न तल्लक्षितसमुदायगतम् । प्रत्यक्षश्रुतश्च यजिर्द्रव्यदेवतासंबन्धात् क्लेशेनानुमातव्यो न भविष्यति । सोऽपि वा अनेकस्तदपूर्वमप्यनेकम्, समुदायानुवादत्वाच्च विधित्वं गुणवत्तरम् । प्रयाजादिदर्शनमपि 'यत्र नित्यानुवादवचनानि स्युः' इत्येवं विशिष्टविधानेन वा प्रकृतिस्थप्रयाजगुणविधिना वा सुपरिहरं मन्यमानः एतावेव कर्मविधी, शेषा गुणविधयः इत्यरूपतापरिहारमाह— अष्टाकपालादिवाक्येषु पौर्णमास्यमावास्याशब्दयोः कर्मवचनत्वात् वाक्यसिद्धमेव रूपवत्त्वमिति ।

**चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात् तस्यतस्योपदिश्येत । ६ ॥**

**भाष्यम्—** कर्मचोदना वा आग्नेयादयः स्युः । कुतः ? गुणानां युगपच्छासनात् । एकेनैव वाक्येनात्रानेको गुणो विधातुमिष्यते भवता । न च शब्दान्तरेण चोदिते कर्मणि अनेको गुणः परस्परसंबन्धे चासति शक्यते विधातुम् । कथम् ? यदि तावत् 'पौर्णमास्यामष्टाकपालो भवति' इति संबन्धो विवक्षितः, न तदा अयमर्थः अष्टाकपालः सत्तया अभिसंबध्यते इति । कर्त्तर्हि ? अष्टाकपालः पौर्णमास्या अभिसंबध्यते इति । तत्र तदा भवतिर्वर्तते । तदानीं 'आग्नेयः' इत्ययं अस्यान्तिकादपि उपनिपतितः भवतिसंबन्धाभावात् नानेन संबन्धुमर्हति 'अष्टाकपाल आग्नेयो भवति' इति । अथ 'आग्नेयः पौर्णमास्यां भवति' इति विवक्ष्यते, तदा आग्नेयपुरोडाशयोः असंबन्ध एव स्यात् । अथ पौर्णमास्यामष्टाकपालस्य आग्नेयता विधीयते, वक्तव्यं केन तस्यामष्टाकपालो विहितः इति । अथ तस्यामाग्नेयस्याष्टाकपालता, तथाप्येष दोषः । अथ पौर्णमासीत्युभाभ्यां संबध्यते, परस्परेण द्रव्यदेवतयोरसंबन्ध एव स्यात् । अथ द्रव्यदेवते परस्परेण विशिष्टे सत्यौ पौर्णमास्या संबध्येयातामित्युच्यते आग्नेयोऽष्टाकपालो यः स पौर्णमास्यां भवतीति । तस्य अप्रसिद्धत्वात् एतदप्ययुक्तम् । अथ केन चिदग्नये संकल्पितः पौर्णमास्यां विधीयते, तथापि देवताया अविधानात् रूपाभावः एव । अथाग्निर्देवता भविष्यतीति कश्चित् ब्रूयात् स वक्तव्यो मिथश्चानर्थसंबन्ध इति, नहि आग्नेयशब्दोऽनुवादो विधिश्च भवतीति । कल्पयिष्यामो देवतामिति चेन्न । असति विधाने देवताया अभावात् । संबन्धिशब्दोऽयं देवतेति । स एवाग्निरष्टाकपालस्य देवता, नान्यस्य । तस्मादवश्यमाग्नेयाष्टाकपालसंबन्धो विधातव्यः, स एष यागो भवतीति । तेन पौर्णमासीयागस्यापरो यागः संबन्धी विधीयते, न द्रव्यं देवता वा । न च यागस्य यागान्तरं रूपं भवति । अतो रूपावचनात् पौर्णमास्यमावास्यासंयुक्तौ नापूर्वयोः कर्मणोर्विधातारौ । यत्तूक्तं पौर्णमास्यमावास्याशब्दौ लक्षणया प्रकृतान् यागाननुवदितुं शक्नुतो नाञ्जस्येनेति । नैष दोषः । यदा आञ्जस्येन शब्दार्थो नावकल्पते, तदा लक्षणयाऽपि कल्प्यमानः साधुर्भवति । यथा अग्नौ तिष्ठति अवटे तिष्ठति, अग्निसमीपे अवटसमीपे तिष्ठतीति भवति संव्यवहारः । लक्षणाऽपि हि लौकिक्येवेति ।

**वा—** नैते अष्टाकपालादयो गुणविधयः । कुतः ? **'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥'** कर्मोत्पत्तिवाक्ये हि प्रत्ययो भावनामप्राप्तत्वात् विधातुमुपक्रमते । सा च (भावना) यावत् धात्वर्थकारकैर्न परिपूर्यते, तावत् अनुष्ठातुमयोग्या इति न विधित्वपर्यवसानम् । तत्र भावना आत्मांशभूतावगतकारकसामान्यान्यथानुपपत्त्या आक्षिप्तविशेषोपलिप्सायां स्ववाक्योच्चारितकारकविभक्त्यन्तपदप्रतीतैर्विशेषैः भावनामात्राकाङ्क्षिभिः वाक्यादेव विशेष्यते । प्रतिपदं च यावत्किञ्चित् द्रव्याश्रितं जातिलिङ्गसंख्यादि, तत् सर्वे एकपदोपादानलक्षणश्रुतिप्रतिलब्धविशेषणविशेष्यभावं अप्रतिपन्नपरस्परशेषशेषित्वं विभक्तिश्रुत्यैव कारकात्मना भावनार्थत्वं प्रतिपद्यते । एवं यावन्ति पदानि संनिकर्षविप्रकर्षस्थानि, तानि सर्वाणि अनुषङ्गाधिकरणोक्तेन मार्गेण अनादृत्य संनिकर्षविप्रकर्षौ युगपत् संनिपतन्ति । ततः सर्वविशेषणविशिष्टां अनुष्ठानयोग्यां भावनामासाद्य विधिः समाप्यते । स च एकेनैव प्रयत्नेन तां विशिष्टां विदधाति इति नानेकशक्तिकल्पनाऽऽपत्तिदोषः । तथाहि, **'श्रौतव्यापारनानात्वे शब्दानामतिगौरवम् । एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते ॥'** विशिष्टायां भावनायामाधाय श्रौतं विधित्वं यदि अन्यत्रापि श्रुत्यैव पुनर्व्याप्रियेत, ततः पुनरुच्चारणदोषं अवैदिकत्वापत्त्या लभेत । अयं पुनः सकृत् विधाय निवृत्तव्यापारः स्वार्थान्यथाऽनुपपत्त्या सर्वविशेषणेषु प्रत्येकनिष्ठानि विध्यन्तराणि आविर्भावयन् समाम्नायावगतैकरूपापरित्यागेनैव असकृदुच्चारणफले वर्तते । **'विशेषणविधिश्चायं पश्चाद्यद्यपि गम्यते । तथापि त्वाकृतिन्यायात् ततः प्रागेव जायते ॥'** विशिष्टनिमित्तत्वात् अर्थापत्तिः पश्चात् भवन्ती यद्यपि विशेषणविधीन् उत्तरकालमवगमयति, तथापि तु आकृत्यधिकरणन्यायेन विशेषणानि अनु-

पादाय विशिष्टव्यापारासंभवात् नूनं पूर्वतरं विशेषणविधयो निष्पन्नाः, यतः तदधीनसिद्धिः विशिष्टप्रत्ययो दृश्यते इति। तेन बहव एवैते विधयः इति प्रत्यक्षार्थापत्तिलब्धाः युगपत् क्रमेण वा व्याप्रियन्ते इति अनेकविध्यन्तरप्रसवसमर्थैकविशिष्टविधिप्रसादेन अनेकगुणविधानं अपूर्वभावनाविधिपक्षे सुलभम्, नेतरत्र। कथम्? '**प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति। अङ्गमाकृष्यमाणं तु नाङ्गान्तरमसंगतेः॥**' यदा हि भावना अन्यतः प्राप्ता भवति, तदा तस्याः पिष्टपेषणवत् प्रतिहतशक्तिर्विधायकः तामविदधानो न तत्संगतार्थानेकविधिव्यापारप्रसवहेतुत्वं प्रतिपद्यते। विशिष्टविधाने हि अर्थापत्त्या विध्यन्तराणि कल्प्यन्ते, न चात्र तत् संभवति, इति अनुपयुक्तश्रौतव्यापारावस्थ एव प्रत्ययः 'आनर्थक्यात् तदङ्गेषु' इत्यनेन न्यायेन भावनातः अवतीर्य तत्संबद्धानि कारकाणि उपसर्पति। तत्र यावन्ति एकपदोपात्तैककारकविशेषणानि जातिलिङ्गद्रव्यसंख्याऽऽदीनि, तानि विशिष्टभावनाविधिन्यायेनैव तत्कारकाक्षेपात् सर्वाणि विधीयन्ते इति प्राप्तायामपि भावनायां अनेकार्थविध्युपपत्तिः। यदा तु अनेकपदोपात्तानेककारकोपनिपातो भवति, तदा कारकाणां परस्परसंबन्धाभावात् तत्तत्पदेष्वपि असंबध्यमानेषु यदि एकत्र विधिर्गच्छति, तदा नेतरत्र गतो भवति, एवमितरगमनेऽपि अन्यगमनानुपपत्तिः, असंबन्धात्। एवं च न भावनावत् एकेन विहितेन इतरत् अर्थादाक्षेप्तुं शक्यते। तत्र अर्थलभ्यविध्यन्तरप्रसूतौ असत्यां एकात्मकः श्रौतो विधिः एकत्रोपक्षीयमाणो यद्यपि अन्यत्रापि अस्तीति कल्प्यते, तत् नासकृदुच्चारणादृते सिध्यति इति पौरुषेयः अनेकोच्चारणप्रसङ्गः। तद्दर्शयति (सूत्रकारः) **चोदिते हि प्राप्ते कर्मणि तदर्थत्वात्** गुणार्थत्वात् **तस्यतस्य** गुणस्य विधेये पुनःपुनः **उपदिश्येत** उच्चार्येत, प्रत्ययः इत्यर्थः। 'परस्परसंबन्धे चासति' इति भाष्यं अर्थापत्तिमूलोच्छेदप्रदर्शनार्थम्। लोकेऽपि च यत् प्रधानं राजप्रभृति क्वचिन्नीयते, तत् आत्मना अविनाभूतानि अमात्यादीनि अङ्गान्यपि अशेषाणि आक्षिपति। यदा तु कश्चित् भृत्यानां क्वचित् गच्छति, तदा तदसंबन्धीनि भृत्यान्तराणि पदमपि न चलन्ति, तत्रावश्यं प्रयत्नान्तरमास्थेयम्। न च तत् एकव्यापारसाध्यमिति अशक्यं सकृत् श्रुतौ उपादातुमिति। एतमेवार्थं प्रपञ्चयति (भाष्यकारः)। यदि हि पौर्णमास्युद्देशेन अष्टाकपालो विधीयते, तदा तत्स्वरूपोत्पत्तिरपि तावदनुक्ता सती क्लेशेन लब्धा किमुत पदार्थान्तरविधानम्। तदाह (भाष्यम्) भवतिसंबन्धाभावात् नानेन संबध्यते। अथाग्नेयः पौर्णमास्यामित्यत्रापि स्वरूपोत्पत्तिक्लेशः पूर्वोक्त एव द्रष्टव्यः इति तमप्रदर्श्यैव अष्टाकपालसंबन्धाभावः प्रदर्शितः।

एवं पौर्णमासीविशिष्टान्यतरानुवादेऽपि अनूद्यमानस्योत्पत्तिः, पौर्णमासीसंबन्धः, विधीयमानस्याप्युत्पत्तिः, इतरेतरसंबन्धश्च, इति अतिगौरवम्। पौर्णमासीपदतन्त्रत्वेऽपि उभयोरुत्पत्तिः कर्तव्या, परस्परं संबन्धश्च इति दोषौ। न च अरुणैकहायनीवत् परस्परनियमसिद्धिः, विशिष्टविधानदोषात्। अतः अष्टाकपालाननुरक्तया पौर्णमास्या आग्नेयः संबध्यते, तदननुरक्तया वा (आग्नेयाननुरक्तया पौर्णमास्या वा इत्यर्थः) अष्टाकपालः इत्यसंबन्धः। एतत्परिहारार्थं परस्परसंबन्धं द्रव्यदेवतयोः प्रथममेव कुर्वन् उभयस्वरूपोत्पत्तिः, अन्यतरस्य च अन्यतरत्र विधानम्, इति युगपद्विधीयमानपरस्परसंबन्धक्लेशमनुभूय पुनः पौर्णमासीसंबन्धक्लेशः। तत्परिहारार्थं अन्यतः सिद्धं देवतासंबन्धमनूद्य केवलकर्मसंबन्धं दर्शयति— 'अथ केन चिदग्नये संकल्पितः' इति। तत्र संकल्पितशब्दवशेन केचिदाहुः 'केनचिदनुष्ठात्रा संकल्पितः' इति। न तु एतत् युक्तमिव 'अन्येन अर्धकर्मणि तदीयस्य हविषो हरणम्' इति। तस्मात् हि णिजन्तः संकल्पितशब्दः केन चित् वाक्येन ('आग्नेयमष्टाकपालं निर्वपेत् रुक्कामः' इत्यनेन) रुक्कामादियुक्तेन विहितः इत्यर्थः। तत्राह अष्टाकपालसंबन्धसिद्ध्यर्थं आग्नेयशब्दे अनूद्यमाने पौर्णमासीगतस्य का देवता इति न ज्ञायते। युगपदुपलक्षणविधिकल्पने वाक्यभेद इति। अनेनैव मार्गेण आकृत्यधिकरणमुखप्रदर्शितैः वचनव्यक्तिप्रकारैः वाक्यभेदानन्त्यं प्रपञ्चयितव्यम्। तेन अवश्यविधातव्योऽत्र द्रव्यदेवतासंबन्धः। न च स पूर्वप्राप्ते कर्मणि संभवति, इति 'गुणश्चापूर्वसंयोगे' इति कर्मान्तरत्वम्। कर्मान्तरत्वे

च सति तदवस्थं रूपावचनं इत्यनुवादता । अतश्च बलात् एकवचनलक्षणादि आश्रयणीयम् । किञ्च '**न वाऽन्यक्रियायोगे वाक्यमेतत् समाप्यते । न च स्वार्थासमाप्तत्वाद्वाक्यान्तरमपेक्षते ॥**' अष्टाकपालो भवति इति नायं पुरुषव्यापारः । न च पुरोडाशव्यापारमात्रं विधातुं शक्यम्, अभावनाविशेषात्मकत्वात् । तत्र अवश्यकल्पनीये पुरुषव्यापारविशेषे यागकल्पना आपतति । तत्र यद्यपि प्रत्यक्षे लभ्यमाने न युक्तं आनुमानिककल्पनम्, तथापि अत्र अपरिपूर्णे वाक्ये वाक्यान्तरानपेक्षिणि पौर्णमास्यमावास्यावाक्यस्थो यजिः असंनिहित एवेति नानुमानं प्रतिबध्नाति । अनुमिते च सति 'य एवं विद्वान्' इति अनुवादसरूपत्वात् अनुवाद एव विज्ञायते । क्रियासामानाधिकरण्याच्च 'यदाग्नेयोऽष्टाकपालः' इत्यादेर्यच्छब्दात् विलक्षणः कर्तृसमानाधिकरणोऽयम् 'य एवं विद्वान्' इत्युपबध्यमानो विधिसामर्थ्यं निरुन्ध्यात् । तथा चोक्तं '**क्रियापदैकयोगित्वे यच्छब्दो न रुजेद् विधिम् । कर्तृयुक्तः स एवान्यप्रापितार्थानुवादकृत् ॥**'

**व्यपदेशश्च तद्वत् । ७ ॥**

**भाष्यम्**— 'उग्राणि ह वा एतानि हवींषि अमावास्यायां संभ्रियन्ते, आग्नेयं प्रथममैन्द्रे उत्तरे' इति समुच्चयं दर्शयति । आग्नेयादीनां गुणत्वे विकल्पः स्यात् । तत्र आग्नेयं प्रथमम्, ऐन्द्रे उत्तरे द्वे इति व्यपदेशो नावकल्पेत । विकल्पे संभारपौर्वापर्यानुपपत्तिरिति ।

**वा**— '**एकेष्टिर्यद्यमावास्या सांनाय्यौषधयोस्ततः । विकल्पे सति संभारपौर्वापर्यं कुतो भवेत् ॥**' कर्मभेदे हि भिन्नविषयत्वात् सांनाय्यपुरोडाशसमुच्चये सति संभ्रियन्ते इति समस्तसंभरणं प्रथमोत्तराभिधानं चावकल्पते नान्यथा, प्रथमपक्षे च चतुर्थमपि अपरमस्तीत्युत्तराणीति स्यात् नोत्तरे इति ।

**लिङ्गदर्शनाच्च । ८ ॥**

**भाष्यम्**— लिङ्गं च दृश्यते, 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्' इति ।

**वा**— कर्मान्तरपक्षे अभ्यधिकत्वात् गुणविधिपक्षे न्यूनत्वात् त्रयोदशचतुर्दशत्वानुवादविरोधः । कुतः ?

'**पौर्णमास्यां यदा तिस्रो द्वे दर्शविषये यदा । प्रधानाहुतयः सन्ति तदा संख्योपपद्यते ॥**' तस्मात् समुदायानुवादौ इति सिद्धम् । आह च— '**अरूपत्वाद्विधेयस्य प्रकृते शब्दशक्तितः । तत्रैव रूपलाभाच्च समुदायानुवादता ॥**'

**शा**— इति प्राप्ते, अभिधीयते । '**कर्मान्तरविधायित्वे स्यात् सर्वेषां प्रधानता । समुदायानुवादौ तु रूपाभावादिमौ मतौ ॥ द्रव्यं कथञ्चिल्लभ्येत देवता तु न लभ्यते । लभ्यते मन्त्रवर्णाच्चेन्नाज्यभागाङ्गता यतः ॥ लिङ्गक्रमाभ्यां मन्त्राणामाज्यभागाङ्गता स्थिता । वचनं तु व्यवस्थाऽर्थमन्यार्थत्वादबाधतः ॥**' इदानीं पूर्वपक्षवादी प्रकारान्तरेण प्रत्यवतिष्ठते '**भवेदेवमरूपत्वे समुदायानुवादता । यदाग्नेयादिवाक्यैस्तु तयो रूपं विधीयते ॥ अत्रोच्यते गुणोऽनेकः प्राप्तकर्मानुवादतः । नैकेन विधिना शक्यो विधातुमसकृच्छ्रुतेः ॥**' ततः समुदायानुवादौ ।

**के**— अपवादः संगतिः ।

**सोम**— **सूत्रार्थस्तु**–पौर्णमास्यां पौर्णमास्युपलक्षितविद्वद्वाक्यद्वये प्रकरणं प्रकृतमेव कर्मजातं स्यात्, कर्मान्तरविधौ रूपप्रापकवचनाभावात् इति ।

**वि**— 'एवं विद्वान् पौर्णमासीममावास्यामितीरितम् । कर्मान्यदुत पूर्वोक्तसमुदायानुवादकम् ॥, कर्मान्तरं स्यादभ्यासाद् ध्रौवं द्रव्यं हि देवता । वार्त्रघ्नीत्यादितो लभ्याऽनुवादस्तु न युज्यते ॥, वार्त्रघ्नीत्याज्यभागाङ्गव्यवस्थोक्तेर्न देवता । पौर्णेत्यनूद्यते पौर्णमासीयुक्तं त्रिकं तथा ॥ अमेत्यपि समूहस्य द्वित्वसिद्धिः प्रयोजनम् । सहस्थितिः पौर्णमास्यामित्युक्तिभ्यां त्रिकेत्रिके ॥ विद्वद्वाक्यविधौ विध्यावृत्तिराग्नेयकादिना । विहितस्य फलित्वेन प्राधान्यमितरे गुणाः ॥' (एतदर्थस्तु, 'य एवं विद्वान् पौर्णमासीम्' 'य एवं विद्वानमावास्याम्' इति वाक्यद्वयमीरितम् । वार्त्रघ्नीत्यादितः 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्' इति मन्त्राभ्यां देवता लभ्या । अनुवादस्तु न युज्यते विधेयान्तरस्य

कस्य चिददर्शनात् । पौर्णेत्यनूद्यते 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यनेन त्रिकमनूद्यते । अमेत्यपि 'अमावास्यायाममावास्यया यजेत' इत्यनेनापि अमावास्यायुक्तं त्रिकमनूद्यते । अनुवादस्य प्रयोजनं तु समूहस्य द्वित्वसिद्धिः । 'पौर्णमास्यां पौर्णमास्या, अमावास्यायाममावास्यया' इत्युक्तिभ्यां तु त्रिकेत्रिके सहस्थितिः सहानुष्ठानं सिध्यति । विद्वद्वाक्ययोः विधौ स्वीकृते तु आग्नेयादिना 'आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इत्यादिना वाक्येनैव विहितत्वात् विधेः आवृत्तिर्दोषः । तस्मात् विद्वद्वाक्ये न विधिः । विहितस्य आग्नेयादियागषट्कस्य फलित्वेन फलवत्त्वेन प्राधान्यं इतरेषां प्रयाजादीनां गुणत्वं च ज्ञेयम् । इति । के. )

**भाट्ट—** तत्रत्य एव 'य एवं विद्वान् पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति, य एवं विद्वानमावास्यां यजते यावदतिरात्रेण' ( तैसं. १।६।९ ) इत्यादिवाक्येऽपि अभ्यासात् कर्मभेदः । न चायं लट्, लेट्त्वेऽपि वा यच्छब्देन विधिप्रतिबन्धात् विधिपुनःश्रुत्यभावः । 'समिधो यजति' ( तैसं. २।६।१ ) इतिवल्लेट्त्वावगतेः । यच्छब्दस्य 'यो दीक्षितः' इतिवत् वेदनक्रियामात्रविधिप्रतिबन्धकत्वात् । अत एव पौर्णमास्यमावास्यापदमपि नामधेयम् । 'पौर्णमास्यां पौर्णमास्या' इति वाक्यद्वयेन एतद्वाक्यविहितकर्मणोरेव कालविधानात् । न च रूपाभावः 'वार्त्रघ्नी पूर्णमासेऽनूच्येते, वृधन्वती अमावास्यायाम्' ( तैसं. २।५।२ ) इति वचनेन आज्यभागक्रमाम्नातानामपि मन्त्राणां क्रमं बाधित्वा एतद्वाक्यविहितकर्माङ्गत्वेन विधानात् । मान्त्रवर्णिकाग्नीषोमदेवतायाः 'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्' ( तैब्रा. ३।३।५ ) इति वचनेन च द्रव्यस्य प्राप्तत्वात् । अथवा, आग्नेयादिवाक्यैरेव पौर्णमास्यमावास्यादिपदोपस्थापितैतद्वाक्यविहितकर्मानुवादेन द्रव्यदेवताविधानात् रूपलाभोपपत्तिः । न चानेकविधानात् वाक्यभेदः । तद्धितेन देवताविशिष्टद्रव्यवाचिना परस्परान्वयस्य व्युत्पन्नत्वेन विशिष्टविध्युपपत्तेः । प्रकारान्तरेण रूपलाभस्तु कौस्तुभे एव द्रष्टव्यः । सर्वथा विद्वद्वाक्ये कर्मान्तरविधिः । एवं च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति फलवाक्येन प्रयाजादिसाधारण्येन सर्वेषामाग्नेयादीनां एतद्वाक्यविहितकर्मणोश्च प्रथमपक्षे फलसंबन्धः । द्वितीये तु तत्साधारण्येन तयोरेव दर्शपूर्णमासप्रातिपदिकस्य कालयोगिषु प्रसिद्धत्वेऽपि द्विवचनस्याप्रसिद्धत्वात्, आज्यभागादिषु तस्य प्रसिद्धत्वेऽपि प्रातिपदिकस्याप्रसिद्धत्वात् । अतः राजसूयन्यायेन नाम्नः संकोचकत्वानुपपत्तेः प्रकरणात् सर्वेषामेव यागानां फलसंबन्धः । पाशाधिकरणन्यायेन द्विवचनस्याप्रसिद्धत्वेऽपि प्रातिपदिकमात्रप्रसिद्ध्या कालयोगिनामेव वा अनयोरेव वा द्वित्वस्यापि कथञ्चिदुपपत्तेः फलसंबन्धः । न तु षण्णामेवाग्नेयादीनाम् । इति प्राप्ते, लिङ्गक्रमाभ्यामाज्यभागाङ्गत्वेन वार्त्रघ्नीवृधन्वतीमन्त्राणां प्राप्तानां अपेक्षितव्यवस्थाविधायकत्वेन वार्त्रघ्नीवाक्यस्योपपत्तौ नानपेक्षितगौरवापादकविद्वद्वाक्यविहितकर्माङ्गताबोधकत्वम् । अत एव कालद्वारेण कर्मद्वारेण वा व्यवस्थापरमेव तदिति वक्ष्यते । अतश्च न तावदनेन देवताप्राप्तिः, नाप्याग्नेयादिवाक्येन, प्राप्तकर्मानुवादेन अनेकगुणविधाने वाक्यभेदात् । विधिफलस्य हि अज्ञातज्ञापनस्य एकविषयत्वमेव सर्वत्र क्लृप्तम् । तस्यानेकविषयत्वे बाधप्रसङ्गः । न च विशिष्टविधानादवाक्यभेदः, विशिष्टस्याव्युत्पन्नत्वात् । उक्तं ह्येतत् कारकतासंबन्धेन यत्र तद्धितादिवृत्तिः, न तत्र परस्परान्वयः, अपि तु यत्र अश्वाभिधानीमित्यादौ तदतिरिक्तसंबन्धेन वृत्तिस्तत्रैव स इति । अतश्च प्रकृते देवतात्वस्य संप्रदानकारकत्वात् परस्परसंबन्धानुपपत्तेः उभयविशिष्टकर्मान्तरविधानमेवावश्यकम् । अतश्च रूपाभावस्तदवस्थ एव । अस्तु वा कथञ्चित् रूपलाभः । तथापि न विद्वद्वाक्ये कर्मविधिः, यच्छब्देन विधिशक्तिप्रतिबन्धेन विधिपुनःश्रवणस्यैवाभावात् । न च तस्य वेदनक्रियामात्रविधिप्रतिबन्धकत्वम्, यच्छब्दादेः तच्छब्दावधिकप्रतिबन्धकत्वस्यैव व्युत्पत्तिसिद्धत्वात् । किञ्च, अन्यपरत्वादपि नाभ्यासस्वरूपसिद्धिः । तथा हि, तत्र विद्वद्वाक्यस्थलडन्तयजिना प्रकृतत्वात् आग्नेयादयस्त्रय एव तत्तत्कालयोगिनः तत्तन्नामधेयवशादनूद्यन्ते । तत्प्रयोजनं च तन्त्रेण यजिना अनेकोपादानात् समुदायसिद्धिः । तस्यापि प्रयोजनं फलवाक्ये षण्णामेव फलसंबन्धसिद्धिः, प्रातिपदिकस्य षट्सु कालयोगेन

प्रसिद्धत्वात्, द्विवचनस्य च स्वशक्याश्रयसमुदायघटकसमुदायिवृत्तित्वसंबन्धेन बहुत्वलक्षणार्थत्वात् । लक्षणातात्पर्यग्राहकमेव च शक्यसंबन्धघटकसमुदायसिद्धिद्वारा विद्वद्वाक्यद्वयम् । अन्यथा हि विद्वद्वाक्याभावे आग्नेयद्वयस्यैव एकवाक्योपादानावगतद्वित्वयोगिनः कालद्वययुक्तस्य च फलसंबन्धापत्तिः । यथा च 'यदाग्नेयोऽष्टाकपालः' इत्यत्र आग्नेयद्वयसिद्धिः तथा कौस्तुभे एव प्रपञ्चितम् । अतः षण्णां फलसंबन्धसिद्धिरेव उक्तविधया विद्वद्वाक्यप्रयोजनं इत्यन्यपरत्वादपि न 'वैश्वदेवेन यजेत' इतिवत् अभ्यासस्वरूपसिद्धिः । न चैवं 'पौर्णमास्यां पौर्णमास्या' इति वाक्यद्वयवैयर्थ्यापत्तिः, तस्य समुदितयागत्रिकप्रयोगविधित्वेन सार्थक्यस्य एकादशे वक्ष्यमाणत्वात् । अन्यथा हि उत्पत्तिवाक्येषु प्रत्येकं कालयोगात् प्रत्येकमेव पूर्वोत्तराङ्गसहितैकप्रधानप्रयोगा भवेयुः । एवं चोत्पत्तिवाक्ये कालश्रवणमपि विद्वद्वाक्याधिकारवाक्यस्थयजिपदसंकोचार्थमेवेति समुदायसिद्ध्यर्थं समुदायिनामनुवादकावेतौ, न कर्मान्तरविधी इति सिद्धम् ।

**मण्डन**—'वाक्यं न कर्म विदधाति य एवमादि ।'

**शंकर**—'विद्वद्वाक्येऽनुवादः स्यात् ।'

* **पौर्णमासीन्यायं** अमावास्यायामपि दर्शयति । 'पूर्वां पौर्णमासीमुपवसेदिति पैङ्ग्यम्, उत्तरामिति कौषीतकम्' । 'या पूर्वा पौर्णमासी सा अनुमतिः, या उत्तरा सा राका' इति पौर्णमासीन्यायः, तस्य अमावास्यायां अतिदेशः 'या पूर्वाऽमावास्या सा सिनीवाली, योत्तरा सा कुहूः' इति । ऐब्रासा. ३२।९।२-३.

* **पौर्णमासीमात्राङ्गता** वैमृधस्य । ४।३।१३। ३२-३५.

* **पौर्णमासीमात्रकालिकत्वमुपांशुयाजस्य** । १०। ८।१७।५१-६१.

**पौर्णमासीवदुपांशुयाजः स्यात् । २।२।४।९ ॥**

'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति' इति । तथा 'विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति । तत्र संदेहः किं विष्ण्वादिगुणकानां प्रकृतानां यागानां समुदायानुवादकम्, उत अपूर्वस्य यागस्य इति । इदानीमधिकरणत्रयेण पौर्णमास्यधिकरणोक्तसमुदायानुवादे कर्तव्ये सर्वात्मना पौर्णमास्यधिकरणसिद्धान्तोपजीवनात् उपांशुयाजपूर्वपक्षस्य अनन्तरमारम्भः । अत्रायं पूर्वपक्षिणोऽभिसंधिः । यथा पौर्णमास्यधिकरणे रूपवतामाग्नेयादीनां संनिधिसमाम्नातस्य विद्वद्वाक्ययुगलस्य रूपाभावात् आग्नेयादिसमुदायानुवादकत्वम्, तथेहापि 'उपांशुयाजमन्तरा यजति' इत्यस्य विष्ण्वादिवाक्यविहितप्रकृतकर्मसमुदायानुवादकत्वम् । तथाहि विष्ण्वादिवाक्यानां तव्यप्रत्ययवशात् विधित्वं तावदसंदिग्धम्, देवता च विष्ण्वादिपदैः प्रतीतैव । द्रव्यमपि ध्रौवाज्यम् । उपांशुयाजवाक्ये वर्तमानसरूपात् विधित्वमेव तावत् संदिग्धम् । यथाकथञ्चित् ध्रौवाज्यप्राप्तावपि न देवता समस्ति । न चोपांशुयाजक्रमसमाम्नातमन्त्रसंबन्धात् देवतालाभः, विष्ण्वादिदेवताप्रकाशका मन्त्रा यागेष्वेव लिङ्गबलेन संबध्यन्ते, नान्तरावाक्ये । न च कर्मानुशिष्टतव्यप्रत्ययेन विष्ण्वादिदेवतानामेव कर्तव्यतावगमात् न यागविधानमिति वाच्यम् । यजतीत्यादौ उपसर्जनस्यापि यागस्य प्राधान्यावगतदेवताविशिष्टस्य अगत्या प्राधान्यविधानात् । न चात्र गत्यन्तरमस्ति, अन्तरालविध्यभावात् रूपाभावाच्च कर्माविधायकत्वस्य उक्तत्वात् । तदुक्तम्—

**'यागान् विष्ण्वादिसंयुक्तैर्विहितान् रूपवत्तया । अरूपमन्तरायुक्तमगत्यैवावलम्बते ॥'** इति (वा. पृ. ४८९) । न च अन्तरालवाक्यस्य अनुपादेयत्वात् तस्यैव कर्मण उपादानात् अनुपादेयत्वेन अन्तरालवाक्ये एव कर्मणो विधेयत्वमिति वाच्यम् । बुद्धिविच्छेदे हि सति अनुपादेयं प्रति उपादानं प्रकरणान्तरन्यायेन कर्मभेदकं भवति । न चात्र बुद्धिविच्छेदोऽस्ति, विष्ण्वादिवाक्योत्पादितस्यैव संनिधानात् । ननु जामितोपक्रमं अजामित्वावसानमेकं वाक्यमवगम्यते, जामित्वाजामित्वयोरेकविषयत्वात् । तच्चैवं संभवति, यदि अन्तरालवाक्यस्य विधायकत्वं विष्ण्वादिवाक्यानां च अर्थवादत्वम् । विष्ण्वादिवाक्यानां विधायकत्वे विधिभेदेन वाक्यभेदात् अवगतैकवाक्यत्वं विहन्यते । एक-

वाक्यसंभवे हि वाक्यभेदो दोष एवेति । अत्र च अन्तरालवाक्यस्य अविधायकत्वस्योक्तत्वात् विष्ण्वादियुक्तानां विधायकत्वम्, तथा सति भिन्नविधिप्रयोजनत्वेन वाक्यभेदस्यैव प्रमाणबलादायातत्वान्न दोषावहत्वम् । यच्च जामित्वाजामित्वयोः एकविषयत्वम्, तद्भिन्नवाक्येऽपि जामित्वे तस्य तु अनुषङ्गकल्पनया अवरुद्धत्वम् । तेन यथा 'तनूः' ( 'तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा' इति मन्त्रः ।) इत्यस्य तन्त्रोच्चारितस्यैव 'रजाशया, हराशया' इत्येतत्संबन्धः, तथा जामित्वस्यापि विष्ण्वादियुक्तवाक्यत्रयेऽपि तन्त्रेण संबन्धः । न च वाक्यसंबन्धिजामितोपक्रमात् तस्यान्तरालवाक्यव्यवहितस्य कथं विष्ण्वादिवाक्यैः संबन्धः, अन्तरालवाक्यस्यापि तदनुवादकत्वेन तद्व्यवधायकत्वाभावात् । ननु भवतु विष्ण्वादिवाक्यानां कर्मविधायकत्वम्, अन्तरालवाक्यस्य तु कथं सर्वानुवादकत्वम्, अन्तरालस्यैव अप्राप्तत्वेन विधानात् । मैवम्, जामितासंकीर्तेः विष्ण्वादिवाक्येऽपि अजामित्वानुवादेन अन्तरालकालस्यापि प्राप्तत्वात् । भवति च अनुवादतोऽपि स्थाननियमः । यथा 'न गिरागिरेति ब्रूयात्' इति गिरापदनिषेधानुवादबलात् इरापदस्थाननिवेशित्वम् । इति न किञ्चिदेतत् । अनुवादप्रयोजनं च 'उपांशुयाजमन्तरा यजति' इत्यनेन विष्ण्वादियुक्तकर्मणां सर्वेषामुपांशुयाजनामत्वं भवति । तथाच सति 'उपांशु पौर्णमास्यां यजन्' इति संज्ञैकदेशेन अनूदितानां पौर्णमासीकालसंबन्धः । ततश्च फलवाक्ये सर्वेषामेवोपादानमिति । अतः पौर्णमासीवत् 'उपांशुयाजमन्तरा यजति' इत्येतदपि वाक्यं समुदायानुवादकमेवेति ।

**चोदना वाऽप्रकृतत्वात् । १० ॥**

एवं प्राप्ते, ब्रूमः । भवेदेवं यदि विष्ण्वादिवाक्यैर्यागविधानं भवेत् । न चैतदस्ति । तथाहि यथा 'वैश्वानरं द्वादशकपालं निर्वपेत्' इत्युपक्रम्य 'यद् द्वादशकपालो भवति' इत्यादिना द्वादशकपालस्यैव स्तुतिदर्शनात् उपक्रमोपसंहारयोरेकविषयत्वे सति तदन्तर्गतानामष्टत्वादीनां न पृथग्विधिविषयत्वम्, तथात्रापि 'जामि वा एतद्यज्ञस्य क्रियते' इत्युपक्रमे पुरोडाशयोर्जामितादोषोपक्रमात् अन्ते च तदपनयनरूपाजामित्वोपसंहारादेकवाक्यत्वम् । तच्च तदैव संभवति, यदि एकस्यैव विधित्वं इतरेषामर्थवादत्वम् । उपक्रमस्थजामित्वदोषश्च अन्तरालसंबन्धिकर्मविधानमेवापेक्षते । तस्यैव जामित्वदोषापनयनहेतुत्वात् । तथाभूतं च 'उपांशुयाजमन्तरा यजति' इति वाक्यम् । ततस्तदेव विधायकम्, विष्ण्वादियुक्तानां चार्थवादत्वमेव निर्णीयते । यत्तूक्तम्, यथा 'तनूः' इति पदस्य तन्त्रोच्चारितस्यैव रजाशयाहराशयावाक्यसंबन्धः, तथा जामित्वस्यापि तन्त्रोच्चारितस्य विष्ण्वादिवाक्यत्रयसंबन्धात् प्रत्येकमेवोपक्रमोपसंहारयोरेकविषयत्वमिति । तदयुक्तम्, तत्र हि एकवाक्यबलेन विष्ण्वादियुक्तानां अन्तरालयुक्तविधिशेषत्वासंभवात् वाक्यभेदे सति अवश्यं कल्पनीयत्वात् पदान्तरसंबन्धस्य अध्याहारात् तन्त्रोच्चारितपदान्तरकल्पनाया एव लघुत्वात् तथा आश्रितमिति जानीमः । इदं तु प्रथमावगतैकवाक्यबलेन विष्ण्वादियुक्तानामन्तरालयुक्तविधिविशेषत्वेनैव वाक्यान्तरत्वासंभवात् नोपक्रमस्य तन्त्रत्वकल्पनायां प्रमाणमस्ति । एवं च सति अर्थवादसंबन्धाद्विधित्वमसंदिग्धम् । न च रूपाभावात् न कर्मविधित्वमिति वाच्यम् । तथाहि, द्रव्यं तावत् साधारणं ध्रौवमेवाज्यमिति । देवताऽपि च मान्त्रवर्णिकी । उपांशुयाजक्रमे हि वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलानि आम्नायन्ते । तैश्च तुल्यार्थतया विकल्प्यमानैर्वैकल्पिक्य एव देवताः प्राप्यन्ते । नहि अन्यथा क्रमावगता मन्त्रा अङ्गभावं प्रतिपद्यन्ते, समवेतार्थप्रकाशनेनैव मन्त्रस्याङ्गत्वात् । न च एकवाक्यानुरोधेन अर्थवादस्यैव देवतासमर्पकत्वमिति वाच्यम् । अर्थवादानां लाक्षणिकस्तुतिपरत्वेन मुख्यार्थस्तुतिपरत्वाभावात् । उभयत्र तात्पर्ये वाक्यभेदप्रसङ्गात् । न च गत्यन्तरं नास्तीति नार्थवादत्वेन संबन्धः । किञ्च 'विष्णुरुपांशु यष्टव्यः' इत्याद्यभिधानात् उपसर्जनीभूतो यागः प्रतीयते, विष्ण्वादयश्च प्रधानतया । यागाभ्युपगमे च विष्णुदेवताको यागः कर्तव्य इति निष्कृष्य रूपभङ्गेन यागे विष्ण्वादयः अप्रधानभूता इत्यर्थात् कल्पनीयम् । न च 'उपांशुयाजमन्तरा यजति' इति यागस्य प्राधान्येन प्रत्यक्षविधौ सति कल्पनामर्हति । 'विष्णुं यजति' इत्यादिषु अगत्या

उपसर्जनार्थविधिपरत्वमपि स्वीकृतम् । अत्र तु अन्तरालवाक्यस्यैव विधित्वेन गतिसंभवाद्वैषम्यम् । अतः अन्तरालवाक्यस्यैव ... विष्ण्वादिवाक्यानां तु अर्थवादत्वम् । तदुक्तम्— '**विष्ण्वादियागसंबन्धे कृते यागोऽर्थतो भवेत् । उपसर्जनभूतश्च श्रौते चैतन्न युज्यते ॥**' इति (वा. पृ. ४९१) । अतः सर्वथा विष्ण्वादिवाक्यानां विधित्वासंभवात् अन्तरावाक्यस्यैव कर्मविधायकत्वम्, न तु अर्थवादत्वमिति सिद्धम् ।

**प्रयोजनम्**— पूर्वपक्षे वैष्णवादिकर्मत्रयानुष्ठानम्, सिद्धान्ते तु एकस्यैवेति । **सूत्रं तु** अन्तरावाक्ये कर्म चोदना विष्ण्वादिवाक्यानामविधायकत्वेन कर्मणामप्रकृतत्वादिति । तदुक्तम्— '**प्रकृतानामसद्भावाद् गम्यते नानुवादता । यागो विष्ण्वादिसंयुक्तैर्न हि वाक्यैर्विधीयते ॥**' इति (वा. पृ. ४९०) । अत्र **केचित्** 'तावब्रूतामग्नीषोमावाज्यस्यैव नाउपांशु पौर्णमास्यां यजन्' इत्येतदेवोपांशुयाजस्य उत्पत्तिवाक्यमिति वदन्ति । अयं च तेषामभिसंधिः— अत्र तावत् द्रव्यदेवताकालोपांशुत्वविशिष्टो यागः प्रतीयते । विधेश्चात्र विध्यन्तरशेषत्वाभावेन अनुवादत्वासंभवात् परेणापि पौर्णमासीकालविधानार्थमवश्यं कल्पनीयः । स चात्र रूपसमानयागलाभसौकर्यात् द्रव्यादिविशिष्टयागविषय एव कल्पनीयः । अन्तरालवाक्ये तु कर्मोत्पत्तौ द्रव्यदेवतादि क्लेशेन कल्पनीयम् । किञ्च पौर्णमासीकालसंबद्धाग्नेयाग्नीषोमीयपुरोडाशद्वयान्तरालक्रियमाणे उपांशुयाजे आग्नेयादौ च पौर्णमासीकालस्य प्राप्तत्वात् 'तावब्रूताम्' इति वाक्यमनर्थकमेव भवेत् । अनेन तु विशिष्टकर्मविधौ अन्तरालस्य अप्राप्तत्वात् तद्विधानेनैव अन्तरालवाक्यमर्थवदिति । तेन 'तावब्रूताम्' इत्येतदेव उपांशुयाजोत्पत्तिवाक्यम् । अन्तरावाक्यं तु अन्तरालविधायकमेवेति । एवं च सति सर्वेषामेव उत्पत्तौ कालसंबन्धत्वाविशेषात् एकरूपतया समुदायानुवादवाक्येन 'य एवं विद्वान्' इत्यादिना ग्रहणमुपपन्नं भविष्यतीति ।

**तदयुक्तम्**, अर्थवादस्वरूपं तावदिदं वाक्यम् । सर्वत्र च अनुवादपूर्वं प्रतीतिहेतुगवेषणमेव प्रथमं प्रमातॄणां भवति । तदलाभे रूपभङ्गेन कल्पितविधिना अनूद्यमानतया प्रतीयमानो विधीयते इति स्थितम् । तत्र पूर्वप्रतीतिहेतुगवेषणे 'उपांशुयाजमन्तरा यजति' इति संनिहिते प्रत्यक्षयागविधिदर्शनात् न तावत् यागविधिः कल्पयितुं शक्यते । तेन विशिष्टयागविधानासंभवात् एक एव गुणो विधातव्यः, प्राप्ते कर्मणि अनेकगुणविधाने वाक्यभेदात् । तत्र आज्यस्यापि ध्रुवावाक्यप्राप्तत्वान्न विधानम् । देवता चात्र प्रतीयते एव । अग्नीषोमसंबन्धे तद्धितचतुर्थ्योः अश्रवणादग्नीषोमौ इति प्रथमाद्विवचनेन प्रातिपदिकार्थमात्रविधानात् सत्यपि वा देवताप्रत्यये मन्त्रवर्णप्राप्तानुवादत्वेनैव उपपत्तौ न विधित्वम् । उपांशुत्वमपि अन्तरावाक्यप्राप्तं न विधेयम् । न च उपांशुयाजपदस्य नामत्वात् नोपांशुत्वमन्यतो लब्धमिति **वाच्यम्** । यतः समभिव्याहारमात्रेण अन्तरालवाक्ये नामत्वं स्फुरति । वस्तुतस्तु तत्प्रख्यशास्त्रान्तराभावात् अर्थवादस्य चाविधायकत्वात् याजशब्देन नानुवादः, उपांशुत्वं च विधीयते एवेति । तदुक्तम्— '**न च तत्प्रख्यरूपेण नामैतदुपपद्यते । विहितं न ह्युपांशुत्वं शास्त्रेणान्येन केन चित् ॥**' इति (वा. पृ. ४९४) । अतः पौर्णमासीकालः एव अप्राप्तत्वात् अत्र विधीयते इति युक्तम् । ननु तस्यापि पुरोडाशद्वयान्तरालविधानेन अर्थप्राप्तत्वात् तद्विधानमपि व्यर्थम् । मैवम्, यदि पौर्णमासीकालविधिर्न स्यात् 'उपांशुयाजमन्तरा यजति' इत्यत्र पुरोडाशद्वयान्तरालाभावात् उपांशुयाजो न भवेत् । यदा तु अन्तरालाक्षेपलभ्येऽपि पौर्णमासीकाले केवलं पौर्णमासीकालविधानम्, तेनैतत् ज्ञायते— अन्तरालापेक्ष एव पौर्णमासीकालः, उपांशुयाजाङ्गान्तरालशब्दस्य च आग्नेयोत्तरकालोपलक्षणत्वमिति । तस्य च कालस्य एकपुरोडाशायामपि पौर्णमास्यां सद्भावाद्युक्तमुपांशुयाजानुष्ठानम् । एतदेव दशमे वक्ष्यति— 'अनपायो हि कालस्य लक्षणं हि पुरोडाशौ' इति । अतो वा नायं कालविधिरिति । एवं वदता न्यायान्तरविरोधोऽपि नाकलितः । एवं हि वक्ष्यति जैमिनिः— 'तद्वच्च देवतायां स्यात्' इति । अनेन सूत्रेण उपांशुयाजे यथा द्रव्ये अनियमः, तथा देवतायामपि अनियमः पूर्वपक्षे प्रतिपाद्यते । तदेतदुभयमपि नोपपद्यते ।

अन्तरालवाक्ये हि कर्मोत्पत्तौ द्रव्यदेवतयोरनियमः संभाव्यते। तत्र द्रव्यदेवतयोरश्रवणात् 'तावब्रूताम्' इत्यत्र उपांशुयाजोत्पत्तौ स्ववाक्ये एव द्रव्यदेवतयोर्लाभात् अनियमाशङ्का कुतः? तथा 'विष्णुर्वा स्याद्धौत्राम्नानसामर्थ्यात्' इति। तथा 'ध्रौवाद्वा सर्वसंयोगात्' इति च। सिद्धान्तेऽपि मान्त्रवर्णिकदेवतालाभो वाक्यान्तरावगतध्रौवाज्यलाभे सति संभवति, न तूत्पत्तिगतद्रव्यदेवतालाभे सति, इति यत्किञ्चिदेतदिति यथावार्तिकं अन्तरालवाक्यमेव उत्पादकमिति साधीय इति। तौता.

**पौर्णमासीवदुपांशुयाजः स्यात्। २।२।४।९॥** 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजति' 'विष्णुरुपांशु यष्टव्योऽजामित्वाय' 'प्रजापतिरुपांशु यष्टव्योऽजामित्वाय' 'अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति श्रूयते। तत्र किं उपांशुयाजशब्दः विष्ण्वादिगुणकानां प्रकृतानां यागानां समुदायस्य वाचकः, किंवा अपूर्वस्य यागस्य इति विचारे पूर्वपक्षमाह। उपांशुयाजः इति शब्दः समुदायवाचकः स्यात् पौर्णमासीवत् विद्वद्वाक्यगतपौर्णमास्यमावास्याशब्दवत्।

**चोदना वाऽप्रकृतत्वात्। १०॥**

पूर्वपक्षं वाशब्देन परिहरन् सिद्धान्तमाह। उपांशुयाज इति शब्दः चोदना कर्मान्तरवाचकः स्यात्। यागानां अप्रकृतत्वात्। 'विष्णुरुपांशु यष्टव्यः' इत्यादयस्तु न विधयः, किन्तु अर्थवादाः। तस्मात् यागान्तरमुपांशुयाजः।

**गुणोपबन्धात्। ११॥**

'उपांशुयाजमन्तरा यजति' इत्युपांशुयाजशब्देन उपांशुत्वगुणस्यैव उपबन्धात् विधानात् विशिष्टविधानाच्च न वाक्यभेदः। किंवा 'उपांशु पौर्णमास्यां यजन्' इति कालसंबन्धपरे वाक्ये उपांशुत्वगुणस्य उपबन्धात् विधानात् तन्निमित्तं उपांशुयाजनामधेयम्। उत्पत्तिवाक्यस्थेन उपांशुयाजशब्देन उपांशुत्वस्य गुणस्य उपबन्धात् उपांशुयाजशब्दार्थज्ञानं भवति। इति अन्तरालवाक्ये एव कर्मचोदना।

**प्राये वचनाच्च। १२॥**

प्राये बहुप्रधानकर्मसमभिव्याहारे 'शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीयः' इत्यर्थवादे उपांशुयाजस्य वचनात् पठनात् उपांशुयाजस्य प्राधान्यावगमात् अन्तरालवाक्ये उपांशुयाजविधिरेव। तस्मात् नोपांशुयाजवाक्यं पौर्णमासीवाक्यवत् समुदायानुवादः इति सिद्धान्तः।

'प्रधानेति भाष्येण (प्रधानप्राये वचनं प्रधानकर्मतामुपोद्बलयति) उपांशुयाजस्य प्रधानप्राये वचनात् प्राधान्यावगतेः विष्ण्वादिवाक्यैश्च विधौ उपांशुयाजभेदे सति अग्नीषोमीयस्यैव उपांशुयाजस्य कालविधिप्रसङ्गात् विद्वद्वाक्यानूदितत्वात् फलवाक्यग्रहणे प्राधान्यात् वैष्णवप्राजापत्ययोरुपांशुयाजयोः गुणत्वापत्तेः उपांशुयाजमात्रप्राधान्यावगतिबाधप्रसङ्गात् नोपांशुयाजवाक्यं पौर्णमासीवाक्यवत् समुदायानुवादः इत्येवं सूत्रं व्याख्यातम्।' इति सुधा. पृ. ७५९। के.

* **पौर्णमासीशब्दः** त्रिषु आग्नेयादिषु यः समुदायः, तत्र (तद्वाचकः इत्यर्थः)। भा. ४।४।११।३४.

* **पौर्णमासीस्थयोः**आज्यभागयोः वार्त्रघ्नी, वृधन्वती अमावास्यास्थयोः इति व्यवस्था। वा. २।२।३।३ पृ. ४७८.

* सर्वत्र हि तुल्यरूपाणां तुल्यधर्माणां विभागे **पौर्वापर्यं** भवति। तद्यथा देवदत्तमनुगच्छतीति। यदि देवदत्तोऽपि गच्छति एवमनुगमनमवकल्पते। तथा अनुयजनमपि। वा. २।३।१०।२१, न चावश्यं तुल्यजातीययोरेव पौर्वापर्यं भवति अतुल्यजातीययोरपि पौर्वापर्यं भवति। तथा पाकमनुभुङ्क्ते इति अविरोधोपपत्तेः। यत्तु देवदत्तो यज्ञदत्तमनुगच्छतीति एतत्तुल्यकर्मत्वं गम्यते इति युक्तम्, तत्र कर्तृमात्रोपादाने सति क्रियाऽन्तरानुपादानात्। २२, * **पौर्वापर्येण** विरोधे पूर्वं परेण बाध्यते। प्राप्तबाधोऽत्र। ३।३।७।१४ पृ. ८६०. * **पौर्वापर्ये** अपच्छेदयोः परनिमित्तकं प्रायश्चित्तं कार्यम्। अपच्छेदन्यायः। ६।५।१९।५४. * 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इत्यपच्छेदाधिकरणन्यायेन उपक्रमगतस्य परेण बाधः, इति चेन्न, परस्य

लब्धात्मकत्वे एव तन्न्यायप्रवृत्तेः । कु. ३।३।१।२. * 'पौर्वापर्ये०' इति न्यायेन काम्यं नित्यस्य बाधकम् । (जातेष्टौ द्वादशकपालस्य अष्टाकपालादिर्बाधकः । पूर्वपक्षे) । सु. पृ. ४८८, * 'पौर्वापर्ये०' इति न्यायेन पश्चाद्भाविविध्यनुरोधेन अर्थवादव्याख्यया उभयोः संप्रतिपन्नार्थत्वात् आनर्थक्यपरिहारः । इति शङ्का । पृ. १५००. * 'पौर्वापर्ये०' इति न्यायेन प्रथमोत्पन्नाया अपि कर्ताभोक्तेत्यादिधियः उत्तरेण ब्रह्मात्मज्ञानेन बाध्यत्वम् । उपदेशसाहस्री पद्य प्र. २ श्लो. ३ रामतीर्थ. * 'पौर्वापर्ये०' इति न्यायेन श्रुतेरेव प्रामाण्यं शास्त्रोपक्रमे उक्तम् । कल्पतरुः . ४।१।२।३ ब्रसू. * ननु 'पौर्वापर्ये०' इत्यनेन (न्यायेन) उत्पन्नमपि अर्थवादात् मुख्यवेदज्ञानं बाधित्वा विध्युद्देशज्ञानमेव गृह्येत । वा. ३।३।१।२ पृ. ८०६, * साक्षात् (आधाने) प्राप्ताङ्गधर्मः (उच्चैस्त्वं) शीघ्रतरमवगम्यते । प्रयोगवचनग्रहणोत्तरकालं तु पश्चात्तन एव प्रधानधर्मः (उपांशुत्वं) 'पौर्वापर्ये०' इत्येवं बाधते । ३।३।२।९ पृ. ८११. * 'पौर्वापर्ये०' इति न्यायस्य अन्योन्यानपेक्षबुद्धिजन्यविषयत्वात् सापेक्षे लिङ्गादौ अप्राप्तिः । सु. पृ. १२२०.

**पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् । ६।५।१९।५४ ॥**

यस्मिन् ज्योतिष्टोमप्रयोगे बहिष्पवमानार्थं पिपीलिकापङ्क्तिवत् अन्वारभ्य गच्छतां ऋत्विजां मध्ये उद्गातुः प्रतिहर्तुश्च अपच्छेदे केन चित् क्रमेण जाते योऽपच्छेदः पूर्वं जातः तन्निमित्तकं प्रायश्चित्तं कर्तव्यम्, नोत्तरनिमित्तकं इति पूर्वपक्षे सिद्धान्तमाह । अपच्छेदयोः पौर्वापर्ये सति पूर्वदौर्बल्यं पूर्वस्य उत्तरापेक्षया दुर्बलत्वं ज्ञेयम् । उत्तरस्य अपच्छेदस्य प्रबलत्वम् । तेन उत्तरापच्छेदनिमित्तकं यत् प्रायश्चित्तं तत् कर्तव्यम् । प्रकृतिवत् प्रकृतिगतं पूर्वं भवति विकृतिगतं च उत्तरम् । तत्र प्रकृतिगतं अबाधित्वा विकृतिगतं प्रवर्तितुं नेष्टे । यथा दर्शः प्रकृतिः पशुर्विकृतिः । दर्शात् पशौ पञ्च प्रयाजाः प्राप्नुवन्ति । पशौ तु एकादश प्रयाजा विहिताः । तत्र वैकृतं एकादशत्वं प्राकृतं पञ्चत्वं बाधित्वैव प्रवर्तते, नान्यथा । तद्वत् अपच्छेदेऽपि उत्तरापच्छेदनिमित्तकमेव प्रायश्चित्तं कर्तव्यं भवति न पूर्वापच्छेदनिमित्तकम् । यत्र पौर्वापर्येण द्वयं प्राप्तं तत्र द्वयोरनुष्ठाने विरोधे सति अयं पौर्वापर्यन्यायः प्रवर्तते । यत्र तु उभयोरनुष्ठाने न विरोधप्रसङ्गः तत्र नायं न्यायः । यथा उत्तराधिकरणे । के.

* 'पौर्वापर्ये पूर्वनिविष्टस्यैव बाधनम् ।' वा. ३।६।३।१० पृ. १०३३.

* नित्यनैमित्तिकयोः, नित्यकाम्ययोः, प्राकृतवैकृतयोश्च पौर्वापर्यनैमित्तिकन्यायेन पूर्वबाधः । टुप्. ६।५।१९।५४.

* **पौर्वापर्यन्यायः** । पौर्वापर्यबलीयस्त्वन्यायः । ६।५।१९।५४. मीको. पृ. ४९५ 'अपच्छेदन्यायः' इत्यत्र द्रष्टव्यम् । * ज्येष्ठप्रमाणस्यापि **पौर्वापर्यन्यायेन** बाधाशङ्का । कल्पतरुः . १।१।१ ब्रसू. पृ. ९.

* आद्ये प्रयोगे केवलोद्गात्रपच्छेदे, द्वितीयप्रयोगे च केवलप्रतिहर्त्रपच्छेदे **पौर्वापर्यन्यायप्रवृत्तिः** । बाल. पृ. ११७.

* **पौर्वापर्यप्रत्यासत्तिक्रमात्** यथासंख्यक्रमः बलीयान् । काम्ये याज्याकाण्डे पौर्वापर्यप्रत्यासत्तिक्रमेण ऐन्द्राग्नमन्त्रयुगलयोः इष्टिद्वयेऽपि अनियमेन प्राप्नुवतोः यथासंख्यक्रमेण अत्यन्तदेशसाम्येन प्रत्यासन्नत्वात् विनियोगो भवति । वा. ३।३।७।१४ पृ. ८४०.

* '**पौर्वापर्यबलीयस्त्वं** तत्र नाम प्रतीयते । अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥' ये हि भिन्नवाक्यगताः परस्परनिरपेक्षाः विरोधिनोऽर्थाः श्रूयन्ते, तेषां पूर्वस्य उत्तरानुपमर्देनैव लब्धात्मकत्वात् उत्तरस्य पूर्वोपमर्देन विना आत्मलाभानुपपत्तेः पौर्वापर्यबलीयस्त्वन्यायो भवति । यत्र तु एकवाक्यतया परस्परापेक्षाणां श्रवणम्, न तत्र एतद्भवति । तत्र हि आकाङ्क्षावशेन एकवाक्यता भवति । पूर्वप्रतीते च उत्तरमात्मानुगुणं अधिकं वा आकाङ्क्षति । अतश्च यत् अनधिकं अननुगुणं वा, तदनपेक्षितत्वात् नैव तस्मिन् वाक्येऽस्ति । न चाविद्यमानेन पूर्वबाधः शक्यते इति पूर्वबलीयस्त्वं भवति । वा. ३।३।१।२ पृ. ८०६.

* श्रुत्यादिकल्पनाद्वाराऽपि लिङ्गादीनां प्रामाण्य-विरोधेऽपि स्मृतिवत् भ्रान्त्यादिचतुष्टयान्यतरमूलत्वायोगेन श्रुत्यादिकल्पनस्य दुर्वारस्य उक्तकल्पनापेक्षत्वेन श्रुत्यादिभ्यः पश्चात् प्रवृत्तेः कल्प्यश्रुत्याद्यपेक्षत्वेऽपि च विरोधिश्रुत्याद्यनपेक्षश्रुतत्वात् **पौर्वापर्यबलीयस्त्वन्यायेन एव** (६।५।१९) वैपरीत्यं युक्तमित्येव। सु. पृ. १२१८.

* **पौष्कलं** नाम साम 'पवस्व मधुमत्तमः' (६९२-९३) इति ककुप्-सतोबृहतीरूपऋग्द्वयात्मके सूक्ते गेयं तृतीये सवने आर्भवपवमाने। (इति पूर्वपक्षे उक्तम्)। पौष्कलं च तृचे न गेयं किंतु एकस्यामेव ऋचि 'ककुभि' इत्येकवचनेन विशेषविधानात् (इति सिद्धान्ते उक्तम्)। वि. ९।२।६ वर्णकं ३.

* **पौष्णं** पेषणं केवलपूषदैवत्ये, न तु सोमापौष्णादौ द्विदैवत्ये। (सोमापौष्णः, ऐन्द्रापौष्णः राजसूये।)। ३।३।१५.

## पौष्णं पेषणं चरावेव ॥

**तत् सर्वार्थमविशेषात्। ३।३।१४।३५॥**

**भाष्यम्**— पौष्णं पेषणं प्रकृतौ श्रूयमाणं विकृतौ इत्युक्तम् (पूर्वाधिकरणे)। तत्र संदेहः किं चरौ, पशौ, पुरोडाशे च, उत चरावेवेति। किं तावत् प्राप्तम्? तत् सर्वत्र स्यात् चरौ पशौ पुरोडाशे च। कुतः? अविशेषात्। न कश्चित् विशेषः आश्रीयते। तस्मात् सर्वत्रेति।

**वा**— तत् सर्वार्थमविशेषात्॥ (सूत्रमात्रं पठितम्, न व्याख्यातम्)।

**चरौ वाऽर्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात् पशौ न स्यात्। ३६॥**

**भाष्यम्**— चरौ पौष्णं पेषणं विनियुज्येत। पुरोडाशे तावत् पेषणमर्थादेव प्राप्नोति। नैवान्यथा पुराडाशो भवति। तदर्थं तावन्न वचनम्। पशौ च न स्यात्। हृदयादिषु पिष्यमाणेषु तेषामाकारविनाशः स्यात्। तत्र को दोषः? 'हृदयस्याग्रेऽवद्यति' इति न हृदयादवदास्यते। तथा अन्यदपि अवदानं न यथाश्रुतादवदास्यते। ननु शक्यते पिष्टेभ्योऽपि हृदयादिभ्योऽवदातुम्। नेति ब्रूमः। आकारा हृदयादयो न मांसानि। उक्तमेतत् आकृतिः शब्दार्थ इति। यद्यपि पुनस्तदाकृतिकः क्रियते, तथापि अस्योत्पादनप्रदेशं प्रति मुह्येयुः। तस्मात् चरौ पौष्णं पेषणं भविष्यतीत्येवमर्थं वचनम्।

**वा**— चरौ वाऽर्थोक्तम्० ॥ यदि कश्चिद्वदेत् लौकिकपिष्टोपादानेनापि पुरोडाशसिद्धेर्नैकान्तेन अर्थक्षिप्त इति, तं प्रति उच्यते। अर्थो नाम प्राकृत उपकारः। तस्य प्रकृतौ पेषणं साधनमासीत् अतस्तेन पूर्वतरप्राप्तेन उक्तं पुरोडाशे पेषणम्। पशौ च प्रधानवैगुण्यं स्यात्। तद्धि हृदयाद्याकृतिकेन ततश्च अवत्तेन साधयितव्यम्। न च पिष्टे तदाकृतिकादवदीयेत। पुनस्तदाकारकरणेऽपि मृद्रवयादिवत् गौणादवदीयमाने वैगुण्यमेव। 'उत्सादनदेशादवद्यति' इति च श्रूयते। न च हृदयादेः पिष्टस्य ज्ञायेत कतरेण प्रदेशेनेदं पशोरुत्कृत्तमिति। तस्मात् चरावप्रतिषिद्धं अनर्थप्राप्तं च पेषणमिति तत्रैव विधीयते। ननु 'अदन्तको हि' इति हेत्वविशेषात् पशुपुरोडाशयोरपि प्राप्तेः द्व्यवदानानि तच्छेषाश्च पिष्ट्वा दास्यन्ते। न च प्राप्तिविप्रतिषेधौ भविष्यतः। उच्यते। द्व्यवदानस्य प्रदानप्रक्रमत्वात् नान्तरा पेषणेन व्यवधानं युक्तम्। हेतुवन्निगदस्य च स्तुतिमात्रार्थत्वं वक्ष्यते। तेन स्वक्रमस्थस्यैव पेषणस्य विधिः। उपनीतमात्रमेव च पेषणं पुरोडाशे अनुवादबुद्ध्या गृह्यते, चरौ च निवर्तमानं प्रतिप्रसवत्वेन, पशौ पुनरत्यन्ताप्राप्तविधित्वेन। न चैतानि एकस्यैव वाक्यस्यैतावन्ति रूपाणि विज्ञायन्ते। तत्रावश्यमैकरूप्ये अभ्युपगन्तव्ये लाघवादर्थवत्त्वाच्च प्रतिप्रसवत्वमेवावधारणीयम्। एवं सिद्धं केवलचरुविषयत्वम्।

**चरावपीति चेत्। ३७॥**

**भाष्यम्**— इति चेत्पश्यति भवान्, अर्थविप्रतिषेधान्न पश्वर्थमिति। ननु चरावपि अर्थविप्रतिषेधः। विशदसिद्धे ओदने चरुशब्दमुपचरन्ति। पिष्यमाणो हि पिष्टकं यवागूर्वा स्यात् खलिर्वा।

**वा**— चरावपीति चेत्॥ (सूत्रपाठमात्रं कृतम्)।

**न, पक्तिनामत्वात्। ३८॥**

**भाष्यम्**— अत्रोच्यते। सत्यं विशदसिद्धे ओदने चरुशब्दः प्रयुज्यते। विशदसिद्धश्चरुर्दीयते इति, न त्वस्य

विशदसिद्धिर्निमित्तम्। यदि विशदसिद्धिर्निमित्तं स्यात्, न पिष्टसिद्धे प्रयुज्येत। तत्रापि हि प्रयुज्यते, 'पिष्टकचरुः साध्यते' इति। अतोऽन्यदेतयोः सामान्यं तन्निमित्तम्। तदेतदुच्यते न पक्तिनामत्वादिति। न चरौ विप्रतिषेधः। कथम्? पक्तिनामत्वात्। पक्तिनामैतत् चरुरिति। अनवस्रावितान्तरूष्मपाकेन अभिनिर्वर्त्यस्य भवति चरुशब्दो वाचकः। तेन पिष्टे ओदने विशदौदने च प्रयोक्तारो भवन्ति चरुरिति। पक्षोक्तमेव प्रयोजनम्। पूर्वपक्षे पशावपि पेषणम्। सिद्धान्ते चरावेव।

**वा**— न, पक्तिनामत्वात्॥ न चरावर्थविप्रतिषेधः। कथम्? **'गतिः सर्वपदार्थानां लौकिकव्यवहारतः। तत्र पाकविशेषश्च चरुत्वेनावधार्यते॥'** ओदनपिष्टकचरुप्रयुक्तस्य चरुशब्दस्य अनेकार्थत्वमन्याय्यमिति उभयसामान्यवचनत्वं विज्ञायते। तयोश्च सामान्यमनवस्रावितान्तरूष्मपक्वत्वम्। तस्मादविप्रतिषेधः। पक्षोक्तं प्रयोजनमिति। मन्दं फलमुक्तम्। एतावान् समाधिः अविशेषेऽपि न पुरोडाशार्थत्वं प्रयोजनम्। किं तर्हि? पश्वर्थत्वमिति।

**शा**— सर्वत्र स्यात् इति प्राप्ते, उच्यते। **'पुरोडाशेऽन्यतः सिद्धम्, पशावाकृतिनाशनम्। पेषणं तेन न तयोर्विधातव्यं चरौ पुनः। अविघातकमप्राप्तमिति तत्र विधीयते॥'**

**सोम**— प्रासङ्गिकी संगतिः।

**वि**— 'चरौ पशौ पुरोडाशे चरावेवोत पेषणम्।, विशेषादर्शनादेतत् सर्वेष्वपि विधीयते॥, प्राप्तत्वान्न पुरोडाशे हृदाद्याकारनाशनात्। न पशौ पारिशेष्येण चरावेव हि पेषणम्॥' १९.

**भाट्ट**— तत् पेषणं पूषदेवत्ये चरौ पशौ पुरोडाशे च स्यात्, उत चरावेवेति चिन्तायाम्, अविशेषाददन्तकत्वहेतुवशाच्च सर्वत्र। इति प्राप्ते, पुरोडाशे तावत् पाकात् पूर्वं पेषणस्य प्राप्तत्वादेव विधानं व्यर्थम्, तदुत्तरं तु पुरोडाशपदवाच्याकृतिविनाशापत्तिः। एवं पशुहृदयादावपि। तेषामपि आकारविशेषविशिष्टमांसवाचित्वात्। न च उभयत्र अवदानोत्तरकालं पेषणविधिः, अत्यन्ताप्राप्तपेषणविधौ गौरवापत्तेः। चरौ अतिदेशेन प्रसक्तस्य प्रयोजनाभावेन निवर्तमानस्य प्रतिप्रसवमात्रकरणे तु लाघवम्। प्रकृतौ हि प्रदेयपुरोडाशसिद्धेः अन्यथोपपादयितुमशक्यत्वात् अर्थप्राप्तमपि पेषणं अध्वर्युकर्तृकत्वादिप्रयोजनसिद्ध्यर्थं सधर्मकं विहितम्। तत् चरौ प्रदेयसिद्धेः तद्व्यतिरेकेण जायमानतया चरुत्वावच्छिन्नं प्रति पेषणस्य अकारणत्वात् निवर्तमानं प्रतिप्रसूयते। अत एव प्रसक्तप्रासिकस्य कारणान्तरेण निवृत्तिप्रसक्तौ विधिः प्रतिप्रसवः। तत्र चोत्पत्तिविनियोगाङ्गसंबन्धादौ यथासंभवं विधेर्व्यापाराभावात् लाघवम्। अत एव पेषणस्य प्रदेयसिद्धिरूपप्राकृतप्रयोजनलोपेन अत्र अदृष्टप्रयोजनान्तरकल्पनेऽपि न प्रतिप्रसवत्वविघातः। धर्माणां तु पेषणस्य कर्मान्तरत्वाभावेन 'प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति' इति न्यायेन प्राकृतपेषणाङ्गतया प्राप्तानां अत्रैवादृष्टरूपकार्यान्तरप्रयुक्तत्वकल्पनं न दोषाय। इष्यते च अयमर्थः अग्निसंस्कारकमन्थनादेः पशुप्रकरणाम्नातस्य वचनात् चातुर्मास्याङ्गत्वेन विनियोगे तद्धर्माणां कार्यान्तरप्रयुक्तत्वकल्पनादौ। वस्तुतस्तु अत्र पेषणस्य न कार्यान्तरकल्पनाऽपि, प्रदेयसिद्ध्यर्थत्वादेव। यद्यपि हि चरुत्वावच्छिन्नं प्रति पेषणस्याकारणत्वम्, तथापि पिष्टकचरावपि चरुशब्दप्रयोगात् पेषणविधिबलेन च 'पौष्णं चरुम्' इत्यत्र सामान्यवाचिनोऽपि चरुशब्दस्य पिष्टकचरुविशेषपरत्वनिश्चयात्, तस्य च प्रदेयस्य पेषणमन्तरेण असिद्धेर्न पेषणस्य कार्यान्तरकल्पनाऽपि। अत एव चरुत्वं नाम अनवस्रावितान्तरूष्मपक्वतण्डुलप्रकृतिकत्वम्। अत्र भक्तव्यावृत्त्यै अनवस्रावितेति। मण्डकव्यावृत्त्यै अन्तरिति। सूपशाकादिव्यावृत्त्यै तण्डुलेति। अत एव पिष्टकचरावपि तत्संभवान्न पेषणस्य विघातकत्वमिति तत्रैव पेषणम्।

**मण्डन**— 'चरावेव पिषिः पौष्णे।' १९.

**शंकर**— 'चरावेव तु सोत्कृष्या।' सा प्रपिष्टता। १९.

**⌛ पौष्णं पेषणं पूषमात्रदेवत्ये चरौ॥**

**एकस्मिन्नेकसंयोगात्। ३।३।१५।३९॥**

**भाष्यम्**— पौष्णं पेषणं विकृतौ भवति चरौ एवे-

त्युक्तम् । अथेदानीं संदिह्यते । किं एकदेवत्ये पौष्णे एतत् भवति, उत द्विदेवत्येऽपीति । किं द्विदेवत्ये उदाहरणम् ? राजसूये उत्तरे त्रिसंयुक्ते 'सौमापौष्ण एकादशकपालः, ऐन्द्रापौष्णश्चरुः (पौष्णश्चरुः) श्यावो (मो ?) दक्षिणा' इति । तत्र ऐन्द्रापौष्ण उदाहरणम् । किं प्राप्तम् ? एकदेवत्यस्यैव पेषणमिति, केवलसंयोगात् यथा चतुर्धाकरणे ।

वा— एकस्मिन्नेकसंयोगात् ॥ इदानीं किमन्यसहिते पूषणि देवतायां ऐन्द्रापौष्णे चरौ पेषणं भवति, उत एकस्मिन्नेव इति संदेहे चतुर्धाकरणेन्द्रपीतन्यायात् सिद्धान्तेनैव तावत् उपक्रमते । पूषा इत्येकसंयोगश्रवणात् तथाभूते एवार्थे स्यादिति ।

**धर्मविप्रतिषेधाच्च । ४० ॥**

**भाष्यम्**— द्विदेवत्ये विप्रतिषिध्येत धर्मः । पूष्णः पेषणं नेतरस्य । तत्र यदि पूष्णो भागः पिष्येत, अपिष्ट इतरस्य स्यात् । तत्र विषमः पाको भवेत् । पाकनिमित्तश्च चरुशब्दः, स विप्रतिषिध्येत । अथाविरोधं मन्यमाना अपरस्यापि भागं पिंष्युः, भागसंमोहः स्यात् । तत्र को दोषः ? अन्यस्य भागोऽन्यस्मै अवदीयेत । तथा अयथाश्रुतं क्रियेत । तस्मादपि एकदेवत्ये पेषणमिति ।

वा— इतश्चैकदेवत्ये । कुतः ? **'पिंष्यादर्धं समस्तं वा द्विदेवत्ये चरौ भवान् । पूर्वस्मिन् पाकवैषम्यं परस्मिन् भागसंकरः ॥'** अर्धपेषणे हि पिष्टोंऽशः शीघ्रतरं सिध्यति, इतरश्चिरेण । तत्र पिष्टपाकानन्तरमुद्वासने सति इतरस्य आमत्वं भवेत् । तत्पाकप्रतीक्षणेऽपि वा पिष्टस्य विलयनात् अचरुत्वं स्यात् । पाकवैशद्येन हि पिष्टकचरुरपि चरुर्भवति । न चैतदस्मिन् पक्षे भवति । अथ तण्डुलान् पूर्वं प्रक्षिप्य पश्चात् पिष्टं निक्षिपेत्, ततो यौगपद्यं गम्यमानं बाध्येत ( पिष्टतण्डुलभागयोर्द्वयोरपि एकयागसाधनत्वेन एकहविष्ट्वात् कृत्स्नस्य च हविषः 'हवींषि श्रपयति' इति युगपच्छ्रपणविधानात् श्रपणार्थनिक्षेपस्यापि यौगपद्यमिह अतिदेशात् गम्यमानं बाध्येत —सु. पृ. १३२९ ) । पूषानुरोधेन तु ऐन्द्रेऽपि भागे पिष्यमाणे भागसंकरात् अन्यदीये भागे अन्यस्मै दीयमाने वैगुण्यं प्राप्नोति । **ननु** चैतत् सर्वं द्विदेवत्येषु भवतोऽपि समानम् । तथाहि, **'चरौ पशौ पुरोडाशे दीयमाने द्विदैवते । पूर्वं हविष एकत्वाज्जायते भागसंकरः ॥'** स चाङ्गीकृतः, मिश्रस्य हविषो मिश्रदेवतोद्देशेन युगपद्दाने विरोधाभावात् । उच्यते । **'यागापूर्वप्रयुक्तेषु धर्मेष्वेवं भवेदिदम् । भवतः पेषणं त्वेतद्देवताधर्मसंमतम् ॥'** अस्मत्पक्षे पुनः पूषदेवत्ययागापूर्वप्रयुक्तं पेषणम् । न च तत् द्विदेवत्ये तथावस्थितं इत्यप्रवृत्तिरेव । हविरन्तरेष्वपि च द्विदेवत्येषु एवंप्रकारत्वमेवेति देवता गुणभूता । न च गुणानुरोधेन प्रधानमावर्तनीयमिति सकृद्दानाभ्युपगमात् सर्वस्मिन् सह क्रियमाणे संकरदोषानाश्रयणम् । भवता पुनरस्मदभ्युपगमेन द्विदेवत्ये पेषणं वक्तुमशक्नुवता अवश्यं देवतानिमित्तत्वमभ्युपगन्तव्यम् । ततश्च देवतयोः प्राधान्यादेकैका स्वभागमसंकीर्णं प्रार्थयते इति तथैव दानमनुष्ठेयम् । आदितश्चैक एव भागः पेषणार्ह इत्यवधारितम् । ततश्च पक्तिदोषः स्यात् । अथ तण्डुलात्मकोऽपि भागः पाकसाम्यार्थं पिष्यते । तत्र ब्रूमः । यावदनुत्पन्नभागविवेकं हविः, तावत् कियान् कस्य भागः इत्यनवधारणात् संकरदोषो न जायते । कल्पिते तु विवेके वचनादृते पुनरेकीकरणानुपपत्तेरसंकीर्णदानं प्राप्नोति । तत्रान्यस्य भागात् अन्यस्मै अवदीयमाने वैगुण्यं भवति । पात्रभेदेन पक्ष्यतीति चेन्न । चरुमिति यागं प्रति उपादीयमानत्वेन विवक्षितैकसंख्यस्य पात्रकृतभेदाश्रयणे शास्त्रबाधप्रसङ्गात् । अतो न कथञ्चिदपि प्रतिषिद्धधर्मकं द्विदेवत्ये पेषणं भवतीति न कर्तव्यम् ।

**अपिवा, सद्वितीये स्याद् देवतानिमित्तत्वात् । ४१ ॥**

**भाष्यम्**— देवतानिमित्तमेतत् पेषणं श्रूयते । पूषा प्रपिष्टभागः कर्तव्य इति । स च द्विदेवत्येऽपि भागे पिष्यमाणे प्रपिष्टभागः कृतो भवति । न यथा चतुर्धाकरणे । तत्र हि तद्धितो निरपेक्षस्य भवति, न सद्वितीयस्य । इन्द्रपीत इति समासोऽपि निरपेक्षस्य, न सद्वितीयस्य । इह तु प्रपिष्टशब्दस्य भागशब्देन सह अन्यपदार्थो बहुव्रीहिः समासः । एषोऽपि समर्थयोरेव,

न तु अत्र द्विदेवत्ये कश्चिदेवंजातीयको दोषः। तस्मादेकदेवत्ये द्विदेवत्येऽपि वा चरौ अस्य भागः पेष्टव्य एव।

वा — सद्वितीयेऽपि वा पूषणि स्यादेव पेषणम्। कुतः? '**हविषो यदि पौष्णस्य तद्यागाङ्गस्य वा भवेत्। अनुक्तत्वाद् द्विदेवत्ये न भवेत् पेषणं ततः॥**' पूषसद्भावनिमित्तमेतत् पेषणं न च तत् विशेषितवस्तुनिमित्तम्। व्यासङ्गित्वाच्च [ व्यासज्यवृत्तित्वाच्च ] देवतात्वस्य द्विदेवत्ये पूषविशिष्टता न स्यात्, न तु पूषा तद्भागो वा नास्तीति। यथा मनोतायां वक्ष्यति (भाष्यं पृ. १९३९) 'तत्राग्निः अदेवता, न तु असमवेतः' इति। तेन असत्यपि अत्र पूष्णो देवतात्वे समवायमात्रेण उपलक्षणत्वात् द्वयोर्देशेनापि च त्यज्यमानस्य 'समं स्यादश्रुतत्वात्' इत्यनेन न्यायेन अर्धं पूष्णो भाग इति गम्यते। तस्य पेषणे क्रियमाणे यदि तावत् कांस्यभोजिन्यायेन अमुख्येऽपि इत्येवं इतरभागपेषणमपि क्रियते, तथापि न किञ्चित् दुष्यति। अथापि किमेतेन अश्रुतेन कृतेन इत्येवं अर्धमात्रपेषणमेव अध्यवसीयते, तथापि केन चित् कौशलेन पाकसंपादनात्, युगपन्निक्षेपपात्रैकत्वयोर्वा गुणत्वात् वरं बाधः। इति निरूप्य ( पाके दोषाभावमुपपाद्येत्यर्थः ) कार्यमेव पेषणमिति। अथ यदुक्तं चतुर्धाकरणेन्द्रपीतवदिति, तत्राभिधीयते। '**समासतद्धितोत्पत्तिर्नासमर्थपदाश्रया। असमर्थत्वमेकस्य द्विदेवत्येषु चेष्यते॥**' तेन आग्नेयेन्द्रपीतशब्दाभ्यां समर्थाग्नीन्द्रग्राहिभ्यां द्विदेवत्याग्रहणं युक्तम्। इह पुनः पूषपदस्य असमासभाक्त्वात् प्रपिष्टभागशब्दयोश्च सापेक्षेऽपि पूषणि सामर्थ्याविघातात् न किञ्चित् दुष्यतीत्युपलक्षणता।

## लिङ्गदर्शनाच्च। ४२॥

**भाष्यम्**— लिङ्गमप्येवं भवति, 'तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि' इति, देवतानिमित्तं पेषणमिति स्तुतिर्दर्शयति। तथा 'सौमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकामः' इति नेमपिष्टतां दर्शयति। तथा 'अर्धं पिष्टमर्धमपिष्टं भवति द्विदेवत्यत्वाय' इति देवतानिमित्तमेव पेषणं दर्शयति।

वा— 'अदन्तको हि' इति हेतुर्देवताधर्मत्वं दर्शयति। न च सद्वितीयस्य पूष्णो दन्ता जायन्ते इति हेतुसाम्यात् युक्तं पेषणम्। तथा च सौमापौष्णे नेमपिष्टतानुवादः अन्यत्र च द्विदेवत्ये 'अर्धं पिष्टमर्धमपिष्टं द्विदेवतत्वाय' इति देवताधर्मत्वदर्शनमवकल्पिष्यते।

## वचनात् सर्वपेषणम्, तं प्रति शास्त्रवत्त्वादर्थाभावाद्धि चरावपेषणं भवति। ४३॥

**भाष्यम्**— इदं पदोत्तरं सूत्रम्, नेमपिष्टं भवतीति कस्मादेतन्न वचनमिति। उच्यते। यदि वचनमेतद्भवेत्, सौमापौष्णमात्रमनूद्य सर्वत्र पेषणं विदध्यात् चरौ पशौ पुरोडाशे च। तत्र सौमापौष्णस्य चरुसंबन्धे नेमपिष्टसंबन्धे च उभयस्मिन् विधीयमाने वाक्यं भिद्येत। तस्मात् योयः सौमापौष्णः तत्रतत्र नेमपिष्टता। तं प्रति सौमापौष्णमात्रं प्रति शास्त्रवत्त्वं अर्धपेषणस्य। पुरोडाशे अर्थात् सर्वपेषणे प्राप्ते अर्थाभावाच्च पशौ चरौ वा अपेषणे प्राप्ते वचनमिदं भवेत्। तत्र चरुशब्दो न विवक्षितस्वार्थः स्यात्। प्रदर्शनार्थः कल्प्येत। पेषणानुवादपक्षे पुनर्नैष विरोधो भवति। तस्मात् भवत्येव लिङ्गम्। ननु अङ्गनाशभयात् पशोरपेषणम्। नेति ब्रूमः। अर्धपेषणे नाङ्गनाशः, अपिष्टादवदास्यते। पेषणं चादृष्टार्थम्।

वा— विधित्वात् नेमपिष्टत्वमलिङ्गं विपर्ययसाधनं च इत्यत आह ( भाष्यम् ) 'यदि एतत् वचनं भवेत्' ततः अनेकार्थविध्यसंभवात् नेमपिष्टत्वं विधीयमानं चरुं वा उद्दिश्य विधीयेत सौमापौष्णं वा। तत्र य एव उद्दिष्टः तस्यैव इतरेण विशेष्टुमशक्यत्वात् सार्वत्रिकत्वप्रतीतेः सर्वपेषणं प्राप्नोति। ततश्च अन्यतरपदानर्थक्यप्रसङ्गः। तत् यदि तावत् 'यश्चरुः, स नेमपिष्टः' इति विधीयते, ततः सर्वचरुविषयावधारणे सति सौमापौष्णशब्दः एकदेशानुवादः अनर्थकः स्यात्। अथ सौमापौष्णमात्रमुद्दिश्यते, ततोऽपि सर्वपेषणमेव, तद्देवत्यहविर्मात्रप्रतीत्या पशुपुरोडाशयोरपि ग्रहणात्। ततश्च पूर्ववत् चरुशब्दानर्थक्यप्रसङ्गः। तं प्रति हि सौमापौष्णमविशेषितं प्रति पेषणस्य शास्त्रवत्त्वं विशेषणार्थाभावात्।

एतस्मिन् पक्षे चरौ अपेषणं भवति । ननु अर्थप्राप्तत्वात् पुरोडाशस्य अवक्तव्यं पशोश्च अर्थविप्रतिषेधात् इत्युक्तम् [ 'चरौ वा, अर्थोक्तं पुरोडाशे, अर्थविप्रतिषेधात् पशौ न स्यात्' ( पेषणं ) इति ३।३।१४।३६ सूत्रे ] इति चेत्, न, अत्र तयोरुभयोरपि अप्रसङ्गात् । सर्वपेषणे हि प्राप्ते पुरोडाशस्य अर्धपेषणं विधीयते, तावतापि च कथञ्चित् पुरोडाशो निष्पद्येत । हृदयादीनामपि उत्सादद्देशैकदेशवर्जं पिष्यमाणानां नार्थविप्रतिषेधो भवति । न चात्यन्ताकृतिर्नश्येत् । न चोत्साददेशमोहः स्यात् । इतरोत्साददेशस्य स्पष्टत्वेन च पिष्टोऽपि सन् पूषभाग उपलक्ष्यते, न सर्वपेषणवन्मुह्येत । अथवा अस्मिन् पक्षे वाचनिकत्वाददृष्टार्थे पेषणे सति अपिष्टादेवावदीयेत । न हि तदैतत् देवतानिमित्तं पेषणं स्यात् । तस्मात् सार्वत्रिकत्वप्रसङ्गान्न परिशेषसिद्धं चरोः पेषणमिति तच्छ्रुतिरनर्थिका प्राप्नोत्येवेति चरुदेवतासंबन्धविधिपरे वाक्ये नेमपिष्टत्वमनूद्यते इत्यवश्यमभ्युपगन्तव्यम् । अतश्च लिङ्गत्वसिद्धिः ।

**एकस्मिन् वाऽर्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् । ४४ ॥**

**भाष्यम्**— एकदेवत्ये वा पौष्णं पेषणं भवितुमर्हति, नैन्द्रापौष्णे । कुतः ? नैष देवताधर्मो विधीयते, पूष्णो भागः पिष्टः उपयोक्तव्य इति । कस्य तर्हि ? अर्थस्य धर्मः । कः पुनरर्थः ? यागः । कथमवगम्यते न देवताधर्म इति ? उच्यते । न हि तस्या भागोऽस्ति । ननु यद् देवतायै दीयते, तत् तस्या भागो भवति । उच्यते । एतद्धि देवतामुद्दिश्य त्यज्यते । न च त्यागमात्रेण देवतास्वत्वं भवति । परिग्रहणेन हि स्वस्वामिसंबन्ध आपद्यते । न च परिगृहीतं देवतयेति किञ्चन प्रमाणमस्ति । यच्च यं भजते, स तस्य भागः । न च हविर्देवता भजते । तस्मान्नास्ति पूष्णो भागः । अथापि कथञ्चिद्भवेत् भागः, तथापि न देवताया धर्मः पेषणं भवितुमर्हति । निष्प्रयोजनो हि तथा स्यात्, अयागधर्मत्वात् । कथं तर्हि प्रकरणान्तरे समाम्नातो यागधर्मो भविष्यतीति । उच्यते । वाक्यसंयोगात् । ननु च देवतयैष संयोगः श्रूयते, न यागेनेति । उच्यते । भागाभावादनर्थकत्वाच्च न देवतासंयोग इत्युक्तम् । तथापि तु यथा यागसंबन्धो भवति, तथा वक्तव्यम् । तदुच्यते । अयमत्र पूष्णो भागो यः पूषणमुद्दिश्य त्यज्यते । यस्य द्रव्यस्य त्यागे पूषा देवता । न चैन्द्रापौष्णे भवति पूषा देवता, न स चरुः पूष्णः स्वत्वेन संबध्यते । तस्मादैन्द्रापौष्णे न कश्चिदस्ति पूष्णश्चरुणा संबन्धः । केवले तु पूषणि देवताभूते तस्मै संकल्पितो भागो भवति । कथम् ? यमुद्दिश्य संकल्पो भवति, स तस्य भाग इति प्रसिद्धिरेषा । तेन यद्यपि पूषा स्वेनोच्चारणेन इन्द्रापूष्णोरुपकारकमुच्चारणं कुर्वन्नुपकारको भवेत्, तथापि न तस्य द्विदेवत्यो भाग इत्युच्यते, असंकल्पनात् । केवले पूषणि देवतायां चरोः पेषणं क्रियते, नैन्द्रापौष्णेषु द्विदेवत्येष्विति ।

**वा**— एकस्मिन्नेव पूषणि देवतायामेतत् पेषणं भवेन्न सद्वितीये । **'न ह्येष देवताधर्मो न तद्भागस्य गम्यते । पूषदेवत्ययागार्थ धर्मस्त्वेष प्रतीयते ॥'** न तावद्देवताया भागोऽस्ति यस्यैष धर्मः कल्प्येत । नहि तदुद्देशत्यागमात्रेण भागो भवति । किं तर्हि ? परिग्रहेण । कर्मसाधनो हि भागशब्दः । भज्यत इति भागः सेव्यते इत्यर्थः । तेन यं यो भजते, स तस्य भागः । न च हविरंशं देवता भजते । भोक्तृत्वस्य नवमे निषेधात् । अथापि भजेत् तथापि तस्याः प्रयोजकत्वं तत्रैव निवारयिष्यते । तेन देवतावत् भागधर्मत्वानुपपत्तेर्यागद्वारा अपूर्वधर्म एवायं नवमाद्यन्यायेन देवताधिकरणन्यायेन च विज्ञायते । भाष्यकारेण तु देवताधर्मत्वनिराकरणपरेण यागधर्मत्वमभिहितमिति द्रष्टव्यम् । 'कथं तर्हि प्रकरणान्तरे समाम्नातो यागधर्मो भविष्यति' इति वाक्यसंयोगस्य देवताविषयत्वात् प्रकरणेन च विना अपूर्वसाधनत्वलक्षणानुपपत्तेर्न कथञ्चिद्यागेनापूर्वेण वा संबन्धः इति मन्यमानस्य प्रश्नः । तत्र 'वाक्यसंयोगात्' इत्युक्ते परेण स्वाभिप्राये विवृते भागशब्देनैव मुख्यार्थासंभवात् यागोपादानमिति दर्शयति । परस्वस्वीकरणात्मकस्य भागरूपस्य अविद्यमानत्वात् यस्तदुद्देशेन त्यज्यमानत्वनामांऽशो विद्यते, तेन यागो लक्ष्यते । स चैकदेवत्ये पूषविशिष्टो भवतीति तद्भागव्यपदेशो घटते । द्विदेवत्ये पुनर्व्यासङ्गी मिश्रः

संकल्पोऽन्यतरेण व्यपदेष्टुमशक्य इति । यथैव ऐन्द्राग्नस्य पुरोडाशस्य ग्रहस्य च आग्नेयेन्द्रपीतशब्दाभ्यामग्रहणम्, तथैन्द्रापौष्णादेः पूषभागत्वेन । यद्यपि च एवंविधशब्दोच्चारणादिह समासोपालम्भो नास्ति, तथाप्यर्थ एव भागशब्दग्राह्यो न विद्यते इत्यप्रवृत्तिः । यद्यपि च द्वयोरर्थयोर्देवतात्वं प्रतिपद्यमानयोः समुदायप्रसिद्धयर्थत्वेन अवयवौ उपयुज्येते, तथापि संकल्पस्य अन्यतरेणाव्यपदेशादनुपलक्षणत्वं सिद्धम् ।

**हेतुमात्रमदन्तत्वम् । ४५ ॥**

**भाष्यम्**—यदुक्तम्, अदन्तको हीति देवताधर्मं दर्शयतीति । अर्थवाद एष इतरस्मिन्नपि पक्षे उपपद्यते ।

**वा**—यत्तु 'अदन्तको हि' इति हेतुनिदर्शनात् देवताधर्मत्वमिति । तत्रोच्यते । हेतुवन्निगदार्थवादत्वादस्य यागधर्मप्रशंसार्थत्वमपि अविरुद्धमित्यकारणता ।

**वचनं परम् । ४६ ॥**

**भाष्यम्**—अथापरं यत्कारणमुक्तम्, नेमपिष्टमिति द्विदेवत्ये पेषणं दर्शयति, 'अर्धं पिष्टं भवत्यर्धमपिष्टं द्विदेवत्यत्वाय' इति देवताधर्मं दर्शयतीति । अत्रोच्यते । एवं सति वचनमिदमप्राप्ते भवतीति । ननु अनेकार्थविधानमेकं वाक्यं प्राप्नोति । उच्यते । सति पक्षान्तरे अनेकार्थविधिः पक्षान्तराश्रयणेन परिह्रियते । असति पुनः पक्षान्तरे उच्चारणानर्थक्यप्रसङ्गपरिजिहीर्षया अनेकार्थं वाक्यमभ्युपगन्तव्यं भवति । तस्मान्न द्विदेवत्ये पेषणमिति सिद्धम् ।

**वा**—नेमपिष्टादिषु प्राप्त्यभावाद्वचनं भविष्यति । विशिष्टविधानाच्च वाक्यभेदाभावः । अरुणैकहायनीवच्च परस्परनियमादसर्वविषयत्वम् । अविशिष्टविधिं चापेक्ष्य विशिष्टविधिर्दुर्बलो भवति न तु अत्रासावस्ति । तस्मादलिङ्गमित्येकदेवताविषयत्वमिति ।

**शा**—'यज्ञप्रकरणाभावाद् वाक्ये चाश्रवणादिदम् । पेषणं देवताधर्मो नापूर्वस्यान्यधर्मवत् ॥ तत् स्वरूपप्रयुक्तं सद् द्विदेवत्येऽपि विद्यते ॥' इति प्राप्ते, अभिधीयते । 'देवता निष्फला नैव पेषणस्य प्रयोजिका । उपादानं च यज्ञस्य भागशब्देन विद्यते ॥ मुख्यार्थासंभवाद् यागलिलक्षयिषयाऽत्र हि । श्रूयते भागशब्दोऽयं नानुपादानमस्त्यतः ॥'

**वि**—'द्विदेवकेऽपि किं पिंष्यादुत पूषैकदेवके ।, द्विदेवकेऽपि तत् पूष्णः सत्त्वात् पेषणभागिनः ॥, देवता विफलत्वेन पेषणं न प्रयोजयेत् । यागस्य तत्त्वे भागोक्तेर्न यागान्तरगामि तत् ॥' २०. तत्त्वे पेषणप्रयोजकत्वे ।

**भाट्ट**—यत्र अन्यसहितः पूषा देवता यथा राजसूये 'ऐन्द्रापौष्णश्चरुः' इति तत्रापि पेषणम्, उत यत्र केवल एव देवता तत्रैव इति चिन्तायाम्, 'अदन्तको हि सः' इत्यर्थवादानुसारात् पेषणस्य पूषस्वरूपप्रयुक्तत्वावगतेः, तत्स्वरूपस्य च अन्यसहितेऽपि सत्त्वात् युक्तमेव पेषणम् । अत एव 'सोमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकामः' इति नेमपदवाच्यार्धपिष्टत्वानुवादोऽपि संगच्छते । यदि तु नवमाद्यन्यायेन पूषस्वरूपे आनर्थक्यात् अपूर्वसाधनत्वलक्षणाया आवश्यकत्वमाशङ्क्येत, तदाऽस्तु पूर्वोक्तविधया पूषप्रपिष्टसंबन्धज्ञानजन्ययागानुमितेरेव तात्पर्यग्राहिकायाः सत्त्वात् साऽपि पूषपदे । परन्तु अर्थवादाद्यनुरोधात् पूषाधिष्ठानकदेवताप्रयोज्यापूर्वीयत्वलक्षणाया एवाङ्गीकारात् द्विदेवत्येऽपि पेषणमर्थस्य । यथा चैवं सति पाकसंपत्तिस्तथा यतितव्यं अन्तरायकरणेन वा क्रमिकनिक्षेपेण वा पात्रभेदेन वा । इति प्राप्ते, आनर्थक्यपरिहाराय अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात्, अधिष्ठानद्वारकत्वकल्पनस्य च पूष्णो देवतात्वोपस्थितिमन्तरेणानुपपत्तेः, तदुपस्थितौ च तद्द्वारकत्वमात्रकल्पनयैव आनर्थक्यपरिहारात्, द्विदेवत्ये च चतुर्धाकरणाद्यधिकरणन्यायेन केवलस्य पूष्णो देवतात्वाभावात्, यत्र केवल एव पूषा तत्रैव पेषणम् । न च अपूर्वसाधनीभूतदेवतात्वस्यैव प्रकारतया पूषपदेन लक्षणेऽपि तस्य पूषोपरि भाने स्वरूपसंबन्धस्यैव संसर्गविधया विवक्षणेन पर्याप्तेरविवक्षणात्, तस्य च द्विदेवत्येऽपि एकस्मिन् पूष्णि सत्त्वेन तस्याप्युद्देश्यत्वोपपत्तेः कथं न पेषणमिति वाच्यम् । व्यासज्यवृत्तिधर्मप्रकारतायां एकमात्रवृत्तिसंबन्धस्य संसर्गत्वानुपपत्तेः । अन्यथा एको द्वित्वसमवायवान् इतिवत् 'एको द्वित्ववान्' 'एको द्वौ' इत्यादिशाब्दबोधापत्तेः । अतो व्यासज्यवृत्तिदेवतात्वस्य पर्याप्तिसंबन्धे-

नैव प्रकारत्वात्, तस्य च पूष्णि केवले बाधात्, पूषमात्रवृत्तिदेवतात्वस्यैव प्रकारत्वेन तत्रैव पेषणादि। अदन्तकत्वं तु अर्थवादमात्रत्वान्न विरुध्यते। नेमपिष्टत्वस्यापि च तत्रैव विधेयत्वाङ्गीकारात् विशिष्टभावनाविधानेन अवाक्यभेदात् अगमकत्वम्।

**मण्डन**— 'नैन्द्रापौष्णेऽस्ति पेषणम्।' २०.

**शंकर**— 'नैन्द्रापौष्णे तु सा मता।' सा प्रपिष्टता। २०.

* पौष्णं पेषणं प्रकृतौ श्रूयमाणमपि विकृतौ। ३।३।१३।३४.

**पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ। ३।३।१३।३४॥**

दर्शपूर्णमासयोः समामनन्ति 'तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि सः' इति। तत्र संदेहः किं पौष्णं पेषणं प्रकृतौ उत विकृतौ इति। अयं च विचारः पूर्वोक्तसंतर्दनन्यायेनैव गतार्थः। यतो न हि दर्शपूर्णमासयोः पूषा नाम देवता समस्ति। न च लक्षणया दर्शपूर्णमासदेवताऽनेन प्रतिपाद्यते, 'अदन्तको हि' इति हेतुवन्निगदसमवायात्। न ह्यग्न्यादीनामदन्तकत्वं वेदे पुराणे वा क्वचित्प्रतीतम्। पूष्णस्त्वदन्तकत्वं वेदे पुराणे च प्रतीयते। अस्ति च विकृतौ तस्य तस्य हविषः पूषा देवता। अतोऽर्थवत्त्वात्तत्रैव वाक्यबलेन पेषणमुत्कृष्यते। तदयं पूर्वन्यायसिद्धोऽप्यर्थ उत्तरविचारद्रढ्यार्थं संकीर्त्यत इति मन्तव्यम्। **सूत्रं तु** पूर्वसंबन्धिपेषणं विकृतावुत्कृष्येत। प्रकृतौ तस्याचोदना अविधानमित्यर्थः। **तौता.**

**पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात् प्रकृतौ। ३।३।१३।३४॥**

दर्शपूर्णमासप्रकरणे 'तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि सः' इति पौष्णं पूषदेवताकं पेषणमभिहितम्। तत् पूषदेवताकविकृतौ प्रतीयेत। विकृतौ उत्कष्टव्यम्। प्रकृतौ पूष्णः अचोदनात् चोदनाभावात्। **के.**

* **पौष्णः** श्यामः ऐकादशिनेषु चतुर्थः पशुः अश्वमेधे ज्योतिष्टोमे च। वि. ८।१।७, * 'पौष्णं श्याममालभेतान्नकामः' इत्यस्य पशोः पुरोडाशे 'पूषा प्रपिष्टभागोऽदन्तको हि' इति पौष्णं पेषणं कर्तव्यम्। ३।३।१९.

**पौष्णपेषणाधिकरणम्।** दर्शपूर्णमासप्रकरणे श्रुतस्य पौष्णपेषणस्य पौष्णे यागे उत्कर्षः॥

**पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात् प्रकृतौ। ३।३।१३।३४॥**

**भाष्यम्**— दर्शपूर्णमासयोः समामनन्ति 'तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि सः' इति। तत्र संदेहः किं पौष्णं पेषणं प्रकृतौ, उत विकृताविति। किं प्राप्तम्? प्रकृताविति। कुतः? प्रकरणात्। ननु प्रकृतौ पूषणं न कस्यचिद्धविषो देवतां समामनन्तीति। उच्यते। प्राकृतीं कां चिद्देवतां पूषशब्दो वक्ष्यति। एवं प्राप्ते, ब्रूमः। यत्र पौष्णं हविरस्ति, तत्र तस्य पेषणं विधातुं शक्यम्। न च प्रकृतौ पूषाऽस्ति। तस्मादुत्कष्टव्यं पेषणमिति। यदुक्तं कां चिद्देवतां पूषशब्दो वक्ष्यतीति। ब्रूयात् यदि अन्यत्रापि मुख्यः पूषा न स्यात्। नन्वन्यत्र क्रियमाणे प्रकरणमुपरुध्येत। उपरुध्यताम्। वाक्यं हि अस्योपरोधकम्। अथवा नैवात्र संदेहः। एवमेव प्राप्तमुच्यते। पौष्णं पेषणं विकृतौ न प्रकृताविति। नास्ति पूष्णः प्रकृतौ चोदनेति। किमर्थं प्राप्तमुच्यते। उत्तरत्र कथा वर्तिष्यते।

**वा**— संतर्दनादिन्यायेनैव वाक्यप्रकरणविरोधे सति विकृत्यर्थत्वं सिद्धमुत्तरविवक्षाऽर्थं प्रारभ्यते।

**सोम**— प्रकरणानुसारेण दर्शपूर्णमासयोर्निवेशः इति पूर्वपक्षस्य मन्दत्वात् नेदमधिकरणान्तरम्, किन्तु किं सर्वत्र निवेशः, उत चरावेव इति करिष्यमाणविचारस्य वाक्यप्रकरणविरोधाविरोधचिन्ताप्रस्तावे साक्षात्संगतत्वाभावात् तस्य प्रासङ्गिकत्वसिद्ध्यर्थं पेषणस्य वाक्येनोत्कर्षः इति प्राप्तिमात्रमनेन सूत्रेण क्रियते।

**वि**— 'प्रपिष्टभागः पूषेति प्रकृतौ विकृतावुत।, इष्टिप्रकरणादेव प्रकृताविति युज्यते॥, संतर्दनादिवद् वाक्याद् विकृतौ पूषसंभवात्। सिद्धस्य पुनरप्युक्तिरधिकस्य विवक्षया॥' १८.

**भाट्ट**— दर्शपूर्णमासप्रकरणे 'पूषा प्रपिष्टभागोऽदन्तको हि सः' इति श्रुतम्। तत्र किं दर्शपूर्णमासयोरेव अङ्गत्वेन कर्मान्तरविधिः, उत पूषदेवत्ययागे पेषण-

मात्रविधिः इति चिन्तायाम्, न तावत् भागशब्दलक्षित-यागोद्देशेन पेषणविधिः, एकप्रसरताभङ्गापत्तेः, पूषपदेन विशेषणे वाक्यभेदाच्च, क्तप्रत्ययार्थद्रव्योपसर्जनस्य पेषणस्य यागान्वयानुपपत्तेश्च। अत एव न पूषपदमेव शक्यार्थस्य लक्षितपूषदेवत्ययागस्य वोद्देश्यतापरम्, पूष्णः अव्यभिचरितक्रतुसंबन्धाभावेन क्रतूपस्थितौ प्रमाणाभावाच्च। अतो गुणात् द्रव्यदेवताविशिष्टकर्मान्तरविधिरेवायम्। इति प्राप्ते, प्रपिष्टभागपदेन तावत् भागो भजनीयं सेव्यमस्येति व्युत्पत्त्या सेवनासंभवेऽपि संबन्धमात्रं देवस्वादिव्यवहारप्रमाणकं प्रपिष्टपूष्णोः प्रतीयते। तच्च यागं विना अनुपपन्नमिति यागमनुमापयति इत्येतावत् उभयोरविवादम्। तत्र च विशेषणमात्रविधिसंभवे विशिष्टविध्यादिकल्पनस्य अन्याय्यत्वात् प्रमाणाभावेन न अपूर्वयागान्तरानुमितिः इत्यपि प्रथमतोऽवगतमेव। अतश्चानुमीयमाने यागे अनुमापकपूषसंबन्धेन प्रसिद्ध-पूषदेवत्ययागत्वोपस्थितिरपि सुलभैव। अतश्च याग-विशेषानुमितेरेव तात्पर्यग्राहकत्वात् पूषपदं विजातीया-पूर्वसाधनीभूतपूषदेवतापरम्। तदुद्देशेनैव च स्वजन्य-यागप्रदेयचरुप्रकृतित्वसंबन्धेन प्रपिष्टद्रव्यकत्वं प्रपिष्टभाग-समासार्थो विधीयते। संभवति च द्रव्योद्देशेन देवताविधिवत् देवतोद्देशेनापि निरुक्तसंबन्धेन द्रव्यविधिर्विशेषण-मात्रविधिफलकः। यद्यपि च प्रकृतिद्रव्यस्यापि अतिदेशेन संभवत्प्रासिकता, तथापि ततः पूर्वं विधानाङ्गीकारान्न एकप्रसरताभङ्गाद्यापत्तिः। पेषणमात्रविधिश्च फलमिति गुणादिप्रमाणाभावान्न कर्मान्तरता। एतेन पूषपदेन तद्देवत्यकर्मलक्षणया तदुद्देशेन प्रपिष्टभागपदलक्षितपेषण-विधिरिति प्रकारोऽपि निषादस्थपत्यधिकरणन्यायेन लक्षणा-पेक्षया कर्मान्तरविधेरेव न्याय्यत्वात् 'वषट्कर्तुः प्रथम-भक्षः' इत्यादौ अतिप्रसङ्गापत्तेश्च उपेक्षितः। तत्र अस्मदुक्तप्रकारस्तु भक्षस्य प्रत्यक्षविधिनैव प्राप्तत्वेन ततः पूर्वप्रवृत्त्यङ्गीकारानुपपत्तेरसंभवी। तदेतत्सर्वं सिद्धमेवो-त्तरविवक्षया स्मार्यते इति प्राञ्चः।

मण्डन – 'विकृतौ पौष्णपेषणम्।' १८.

शंकर – 'पूष्ण्युत्कृष्या प्रपिष्टता।' १८.

* **पौष्ण – सावित्र** – सारस्वत–द्यावापृथिवीयाद्यनु-मन्त्रणानि (दर्शपूर्णमासप्रकरणात् तत्तद्देवत्ये कर्मणि) उत्कृष्यन्ते। **भा.** ९।३।५।१५.

* '**प्रास्मै**' इत्यस्य अग्निप्रैषस्थस्य न विकारो यदा अग्नीषोमीयः सवनीयाश्च समानविधानाः। ९।३। ८।२३. * '**प्रोद्गातॄणाम्**' इत्यत्र विभक्तिस्वारस्याय प्रातिपदिकस्यान्यथानयनम्। न च षष्ठीबहुवचनस्य प्रथमैकवचनवत् अन्यत्राविधानेन तस्यान्यथानयनमसंभवीति बहुवचनानुसारेण प्रातिपदिकस्य प्रस्तोत्रादिच्छन्दोगेषु लक्षणा आश्रिता इति वाच्यम्। 'सक्तून् जुहोति' इत्यत्रेव अन्यत्र नयनस्य संभावितत्वात्। **अद्वैत.** २।२९ (३०)।३७. * '**प्रैतु** होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य' अयं मन्त्रः गुणभूतद्रव्यविधिः। **बाल.** पृ. ६४. * '**प्र णो** देवी सरस्वती' इत्यादिना हौत्रकाण्डे चित्रायागीयचतुर्थपञ्चमहविषोः सारस्वतयोर्मध्ये स्त्रीदेवत्यस्य याज्यानुवाक्ये प्रथमतः पठिते, ततः पुं-देवत्यस्य 'पीपिवांसं सरस्वतः' इत्यादिना। **वि.** ५।१।७. * '**प्र वो** वाजा अभिद्यवः' इति ऋक् दर्शपूर्णमासयोः सामिधेनीषु प्रथमा। क्वचिद् विकृतौ तु अन्याऽपि प्रथमा। यदा या प्रथमा सैव त्रिर्वक्तव्या। (उपसदिष्टौ 'उप-सद्याय मीहळुषे०' (ऋसं. ७।१५।१) इति तिस्र एकैकां त्रिरनवानं ताः सामिधेन्यः' (आश्वश्रौ. ४।८) अत्र 'उपसद्याय' इत्येषा प्रथमा। महापितृयज्ञे तु 'उशन्तस्त्वा' इत्येकैव सामिधेनी।)। **वि.** ९।१।१०.

* **प्र–शब्दः** प्रकर्षे सिद्धः। **भा.** १।१।८।३१.

* **प्रउगं** नाम शस्त्रं होत्रा शंसनीयम्। अग्निष्टोमे प्रातःसवने बहिष्पवमानोत्तरं ऋतुयाजोत्तरं आज्यशस्त्रं भक्षान्तमनुष्ठाय ततः परं प्रउगं शस्यते। **के.** * 'प्रउगं शंसति' इति शस्त्रं प्रधानकर्म, न गुणकर्म। स्तुत-शस्त्राधिकरणम्। २।१।५।१३–२९.

* '**प्रउगचितं** चिन्वीत पशुकामः' इति श्रुतम्। चयनविशेषोऽयम्। अत्र प्रउगं नाम शकटस्य वंश-द्वयम्। यत् एकतः चक्रद्वयच्छिद्रगतकाष्ठमयलोहमया-न्यतरदण्डमध्ये बध्यते, अपरतश्च युगमध्ये बध्यते।

एतादृशप्रयुगाकारं चयनं प्रउगचितम् । तच्च द्विविधं एकतः प्रउगचितं उभयतः प्रउगचितं चेति । के.

* प्रकरणमपि विनियोगे प्रमाणम् । ३।३।४।११. * प्रकरणं अभिधीयमाना आकाङ्क्षा, आकाङ्क्षावती वा भावना । वा. ३।३।७।१४ पृ. ८५२. * प्रकरणं अवान्तरं संदंशोद्भूतिकमेव । तच्च प्रकृतेर्नास्त्येव । प्रकृत्यङ्गस्य तु भवति यथा प्रयाजानामभिक्रमे । बाल. पृ. ११. * प्रकरणं उभयाकाङ्क्षा ( फलाकाङ्क्षाविशिष्टकथम्भावाकाङ्क्षा । वैशिष्ट्यं च स्वाश्रयभावनासंनिहितभावनाऽऽश्रितत्वसंबन्धेन, न तु एकपुरुषावगतत्वादिना । उक्तसंबन्धेन यदीयफलाकाङ्क्षाविशिष्टा अनिर्णीततदनङ्गत्वगता या कथम्भावाकाङ्क्षा, सा तद्विनियोजकं प्रकरणं इति तु निष्कर्षः ) यथा प्रयाजादिषु । तदिदं प्रकरणं क्रियाया एव विनियोजकं न द्रव्यगुणयोः । तयोस्तु क्रियायोगात् विनियोजकम् । मीन्या. पृ. १६९, १७२. * प्रकरणं कथम्भावात्मकं क्रतुधर्ममपेक्षमाणं पुरुषधर्मे विधीयमाने अत्यन्तं बाधितं भवति । वा. २।४।१।१. * प्रकरणं कर्तव्यस्य इतिकर्तव्यताऽऽकाङ्क्षस्य वचनम् । प्रारम्भो हि स तस्याः वचनक्रियायाः । स एष विध्यादिः विध्यन्तापेक्षः । भा. ३।३।७।१४ पृ. ८५१, * प्रकरणं क्रमाद् बलीयः । तेन विदेवनादयो न अभिषेचनीयाङ्गम् । अभिषेचनीयस्य तु मध्ये स्थानं विदेवनादीनाम् । ४।४।२।४. * प्रकरणं क्रमाद्यपेक्षया प्रबलम् । ' अक्षैर्दीव्यति ' ' राजन्यं जिनाति ' ' शौनःशेपमाख्यापयति ' एतेषां राजसूयाङ्गत्वम् । न तु अभिषेचनीयाङ्गत्वम् । वि. ३।३।१०.

**⌛ प्रकरणं तु पौर्णमास्यां रूपावचनात् । २।२। ३।३ ॥**

एवं समामनन्ति ' यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति ' ' तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति ' ' ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत् ' ' ऐन्द्रं दध्यमावास्यायाम् , ऐन्द्रं पयोऽमावास्यायाम् ' इति । तथा ' आघारमाघारयति ' ' आज्यभागौ यजति ' ' स्विष्टकृते समवद्यति ' ' पत्नीः संयाजयति ' ' समिष्टयजूंषि जुहोति ' ' य एवं विद्वान् पौर्णमासीं यजते ' ' य एवं विद्वानमावास्यां यजते ' इति । तत्र संदेहः किं सर्वाण्येतानि समप्रधानानि, उताग्नेयादीनि पयोऽन्तानि प्रधानानि, आघारादीनि उपकाराङ्गानि । तथा 'य एवं विद्वान्' इत्येवं संयुक्तौ प्रकृतानां कर्मणामनुवदितारौ, अथवा पूर्वयोः कर्मणोर्विधातारौ, तत्रेतरे गुणविधय इति । पूर्वाधिकरणेन अभ्यासतो भेदमभिधाय इदानीं तदपवादः क्रियते । अत्र ' य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वान् अमावास्यां यजते ' इति वाक्यद्वयमेव विचारविषयत्वेनोदाहरणम् । यत्तु भाष्यकारेण दर्शपूर्णमासप्रकरणपठितानि बहूनि अङ्गप्रधानवाक्यानि उदाहृत्य किं समप्राधान्यं अङ्गाङ्गिभावो वेति संशयप्रदर्शनं कृतम् , न तद्विचार्यत्वेन, किं तर्हि ? प्रस्तुताधिकरणपूर्वपक्षसिद्धान्तप्रयोजनत्वेनेति मन्तव्यम्, शेषशेषिविचारस्य करिष्यमाणत्वात् । अत्रायं पूर्वपक्षिणोऽभिसंधिः विद्वद्वाक्यद्वयप्रतिपादितयोः कर्मणोः आघारादिभ्यस्तावत् अयागरूपेभ्यः शब्दान्तरादेव भेदः, यागरूपेभ्यः आग्नेयादिभ्यः अभ्यासादेव भेदः । अतः पृथगेवैतत् कर्मद्वयम् । ननु वर्तमानापदेशसरूपत्वात् कर्तृयोगियच्छब्दोपबन्धेनैव विधिरूपतिरस्कारात् नानयोर्विधित्वम्, विध्यभ्यासश्च भेदक इत्युक्तम् , तत् कथमनयोर्विध्यभावात् कर्मभेदप्रतिपादकत्वम् ? न चैवं सति वाक्यद्वयमेतदनर्थकम् , ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इत्यधिकारवाक्यापेक्षितसमुदायद्वयकरणेन अर्थवत्त्वात् । उच्यते । वर्तमानापदेशसरूपत्वेऽपि प्रयोगवचनोपसंग्रहेण पञ्चमलकारनिर्णयादेव अस्य विधित्वम् । तथाहि, प्रयोगवचनसंनिधिसमाम्नानेन तदेकवाक्यतापन्नमिदं वाक्यद्वयम् । तदेकवाक्यत्वं च तदपेक्षितार्थप्रतिपादने भवति । तच्चास्य मन्त्रार्थवादरूपत्वाभावात् कर्मविधित्वेनैव निर्णीयते । न च कर्तृयोगियच्छब्दैवंशब्दाभ्यां विधितिरस्कारः, क्रियाविशेषितकर्तृयोगी हि यच्छब्दो विशेषणीभूतक्रियाविधानपरिपन्थी भवति यथा ' यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इति । अत्र हि दीक्षारूपक्रियाविशेषितकर्तृयोगी यच्छब्दो दीक्षाविधानपरिपन्थी भवति,

न तु पशुद्रव्यकाग्नीषोमदेवतायागविधानपरिपन्थी । एवमिहापि यो विद्वानिति वेदनक्रियाविशेषितकर्तृयोगी यच्छब्दो वेदनक्रियाविधानमेव प्रतिबध्नाति, न यागक्रियाविधानमिति । तथा एवंशब्दोपि एवं विद्वानिति वेदनक्रियापरामर्शक एव, न यागक्रियापरार्शकः इत्यव्याहतमेव विधित्वमिति । न च अधिकारापेक्षितसमुदायकरणेन अनुवादस्यार्थवत्त्वं राजसूयवत् फलवाक्येनैव समुदायकरणसंभवात् । न चैवं सति 'राजसूयेन' इतिवत् 'दर्शपूर्णमासेन' इत्येकवचनप्रयोगप्रसङ्गः । 'सुपां सुपो भवन्ति' इत्येकवचनस्थानप्रयुक्तस्य एकवचनसमानार्थत्वात् । अतः समिदादिवत् विध्यभ्यासादेव पौर्णमास्यमावास्यानामावच्छिन्नमेवैतत् कर्मद्वयं विधीयते । न च प्रवृत्तिनिमित्ताभावात् न नामधेयम् । अग्निहोत्रादीनामिव विधास्यमानदेवसंबन्धनिरीक्षणेन 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति वाक्यद्वयविधास्यमानकालसंबन्धप्रवृत्तिनिमित्तनिरीक्षणेन कर्मद्वये नामधेयत्वोपपत्तेः । न च असिद्धे नाम्नि कथं तदुल्लेखेन कालविधिः, अन्योन्याश्रयादिति वाच्यम् । यतः 'अग्निहोत्रं जुहोति' इतिवत् सामानाधिकरण्येनैव नामत्वे सिद्धे तदुल्लेखेन भाविकालविधिना प्रवृत्तिनिमित्तमात्रं निर्णीयते इति नानुपपन्नम् ।

ननु द्रव्यदेवते हि कर्मणो रूपम् । न चात्र देवताऽस्ति । न च अव्यक्तचोदनात्वसामान्येन सौमिकद्रव्यदेवतालाभेन रूपवत्त्वम्, यतो निरपेक्षो हि विधिः सापेक्षेणोपजीव्यते । अत्र च सोमविधेः दीक्षणीयाद्यङ्गद्वारेण दर्शपूर्णमासविध्युपजीवित्वेन कर्मापेक्षत्वम् । तद्यदि दर्शपूर्णमासविधेरपि तदुपजीवनम्, तदा इतरेतराश्रयापत्तिः । तत् कथं कर्मविधित्वमिति । मैवम्, 'सर्वस्मै वा एतद्यज्ञाय गृह्यते, यद्ध्रुवायामाज्यम्' इति प्रकरणश्रुताज्यद्रव्यस्य ध्रुवावाक्यात् द्रव्यं तावदस्ति । न च एकेनैव वाक्येन आज्यस्य ध्रुवासंबन्धविधाने यागसंबन्धविधाने च वाक्यभेदः, 'यद् ध्रुवायामाज्यम्' इत्यस्य ध्रुवासंबन्धमनूद्य यागसंबन्धमात्रविधानात् । तत् यदि आज्यध्रुवासंबन्धबोधकं वाक्यान्तरं श्रुतमस्ति, तदा तत्प्राप्तानुवादेन अनुवाद एव । अथ नास्ति, तदा एतदर्थवादान्यथाऽनुपपत्तिकल्पितवाक्यलभ्यस्यैवानुवाद इति नानुपपन्नम् । देवताप्राप्तिरपि मान्त्रवर्णिकी । 'वार्त्रघ्नी पूर्णमासेऽनूच्येते, वृधवन्ती अमावास्यायाम्' इत्येतद्वाक्यान्वयेन वार्त्रघ्नीशब्दाभिधेयमृग्द्वयं वृधन्वतीशब्दाभिधेयं च ऋग्द्वयं आज्यभागक्रमपठितमपि वाक्यबलेन क्रमं बाधित्वा एतत्कर्मसंबन्धित्वेन विधीयते । तयोश्च एकाग्नेयी, अपरा सौमी । तत्र च एकैकस्मिन् कर्मणि युगपद्विनियुक्तमन्त्रद्वयेन युगपद्देवताद्वयसमर्पणात् देवतयोः एकैकस्मिन् कर्मणि समुच्चय एव । तथा सति मन्त्रयोरपि समुच्चय एव । एतदनुरूपयाज्याप्राप्तिश्च दाशतयीपाठात् भवतीति नानुपपन्नम् । तेन आज्यभागे एव कालव्यवस्थाऽर्थं वाक्यद्वयं यथासिद्धान्तमेव भविष्यति । पौर्णमास्यां यावाज्यभागौ, तौ वृत्रहपदवन्मन्त्रकौ, अमावास्यायां यावाज्यभागौ, तौ वृधन्वत्पदमन्त्रकाविति । मैवम्, पूर्वपक्षे कालविधायकवाक्यद्वयं विद्वद्वाक्यविधेयकर्मद्वयस्य एककालविधानात् । आज्यभागयोः पौर्णमास्यमावास्याकालप्राप्तौ न तद्व्यवस्थार्थत्वमिति मन्त्रविधायकत्वमेवेति । तदुक्तम्-- '**ध्रौवं साधारणं द्रव्यं देवता मान्त्रवर्णिकी । रूपवन्तावतो यागौ विधीयेते पृथक्तया ॥**' इति (वा. पृ. ४७५) । आज्यभागयोस्तु 'यस्यै कस्यैचिद्देवतायै हविर्निर्वपन् आज्यस्यैव नौ पुरस्ताद्यजन्' इति पुराकल्पसरूपेण वाक्येन अग्नीषोमयोर्लाभात् अत्रापि तयोर्देवतात्वम् । अत्र यद्यपि साक्षादग्नीषोमयोः श्रवणं नास्ति, तथापि 'तावब्रूतामग्नीषोमावाज्यस्यैव नौ' इत्यत्र नौशब्देन तदुपादानव्यवस्थितत्वादत्रापि नौशब्देन तयोरेवोपादानमिति । याज्यानुमन्त्रणक्रमप्राप्तान् अबाधित्वैव अनुवाक्यायुगलमात्रस्य वाक्येन अन्यत्र विनियुक्तत्वात् । अनुवाक्याप्राप्तिश्च दाशतयोपांशुकाण्डादेव इत्येकः पूर्वः पक्षः ।

अथवा आग्नेयादिवाक्यैरेव विद्वद्वाक्योत्पन्नकर्मद्वयसंबन्धेन गुणविधानात् रूपलाभो भविष्यति । न च प्राप्ते कर्मणि अनेकविधानदोषः । 'पुरोडाशं संयुनक्ति' 'पुरोडाशं पर्यग्नि करोति' इत्यादिसंस्कारवाक्यपर्यालोचनेन पुरोडाशादिद्रव्यप्राप्तौ अग्न्यादिदेवतामात्रविधानात् । यद्वा भिन्नपदोपात्तानेकार्थविधाने हि विध्यावृत्तिलक्षणो

वाक्यभेदो भवति । यथा 'वाससा क्रीणाति' इत्यनेन उत्पन्ने क्रये अरुणादिवाक्येन अनेकगुणविधाने । अत्र तु एकेनैव आग्नेयादिपदेन अनावृत्तेन अग्निदेवताविशिष्ट-पुरोडाशादिरूपद्रव्योपस्थानात् प्रत्ययेन च एकदेवता-विधानात् नावृत्तिलक्षणो वाक्यभेदः । यत्र तु पृथक्पदेन द्रव्यदेवतोपादानम्, यथा 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इत्यस्य पुराकल्परूपत्वेन अविधायकत्वात् (?) ।

तदेवं द्विधा पूर्वपक्षः संपद्यते । एकत्र आग्नेयादि-वाक्यविहितानि षट् कर्माणि विद्वद्वाक्ययुगलविहितं च कर्मद्वयं इत्यष्टौ कर्माणि । अपरत्र च आग्नेयादिवाक्ये गुणविधानात् विद्वद्वाक्ययुगलविहितकर्मद्वयमेव । तदेवं पूर्वपक्षद्वयेऽपि दर्शपूर्णमासोपपदस्य कस्मिंश्चित् कर्मणि प्रसिद्धत्वात् यजेस्तु यागमात्रविषयत्वेन प्रसिद्धत्वात् यजिसामानाधिकरण्येन यजिमात्रनामत्वम् । तदुक्तम्—

**'प्रसिद्धेनाप्रसिद्धस्य नित्यमिष्टं विशेषणम् ।**
**तस्माद्यज्यनुरोधेन नामार्थोऽत्र निरूप्यते ॥'**

इति (वा. पृ. ४७६) । तथा सति प्रकृतयागाना-मेव फले विधानात् राजसूयवत् सर्वेषामेव प्रयाजानू-याजानामपि समप्रधानत्वमेवेति । नन्वेवं सति प्रधानस्य अनतिदेशात् कथं विकृतौ प्रयाजातिदेशः ? वचनादि-त्युच्यते 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इत्यादि । अत्र प्रयाजानुवादेन कृष्णलहोमविधानादेव इति नानुपपन्नम् । अथ कस्मादेतावेव विद्वद्वाक्ययुगलविहितौ पौर्णमास्य-मावास्यासंज्ञकौ......जफले तयोरविधानम् ? एवं तर्हि समुदायनामत्वेऽपि तयोरप्रत्यभिज्ञानात् सिद्धान्तेऽपि कथं फले विधानम् ? अथ सिद्धान्ते न संज्ञाद्वारेण समुदाय-द्वयोपस्थापनम्, किं तर्हि ? कालद्वारेण । एवं तर्हि एत-त्कर्मद्वयेऽपि अविशिष्टम्, 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत' इति वाक्य-द्वयेन कालविधानस्योक्तत्वात् । तेन अनयोरेव फल-वाक्येन विनियोगात् कुतः समप्राधान्यमिति । नैतत् । कालसंयोगस्य आग्नेयादीनामपि षण्णामविशिष्टत्वेन कस्य यागद्वयस्य ग्रहणमिति निर्णेतुमशक्यत्वात् । तदुक्तम्—

**'षण्णामग्न्यादियागानामनयोश्च द्वयोरयम् ।**
**समानः कालसंयोग इति नेष्टावधारणा ॥'**

इति (वा. पृ. ४७७) । **न च** वाच्यं द्विकर्मपक्षे तावदयं परिहारो न संभवत्येव । अष्टकर्मपक्षेऽपि एवं सति कालद्वारेण अष्टानामेव कर्मणां फले विनियोगो न भविष्यतीति प्रयाजादिभिः सह समप्राधान्यमिति । **यतः** पूर्वप्रसिद्धं हि स्वयं फलवाक्यमुपादत्ते । न तु फल-संबन्धपरं वाक्यम् । उपपदस्यापि वृत्त्यन्तरेण अर्थान्तर-पदत्वमापादयितुमुत्सहते । तदिहापि कालवचनौ दर्शपूर्ण-मासशब्दौ लक्षितलक्षणया कालयोगिनौ यागान् उपस्थाप-यितुमर्हतः । तेन उपपदस्याप्रसिद्धत्वात् प्रसिद्धार्थयजि-सामानाधिकरण्येन यज्यर्थत्वमेव निर्णीयते । सिद्धान्ते तु समुदायानुवादस्यैव फलवाक्यस्थोपपदप्रसिद्धप्रयोजनत्वात् युक्तं समुदायस्यैव फलविधानम् । न चेह तथा सम-स्तीति पूर्वपक्षद्वयेऽपि समप्राधान्यमेवेति ।

**एवं प्राप्ते, अभिधीयते** । भवेदेवं विध्यभ्यासतः कर्मभेदः, यदि विद्वद्वाक्ययुगलस्य कर्तृयुक्तयच्छब्दस्य एवंशब्दयोगेन अनुवादकत्वं न भवेत् । यत्तु वेदन-कर्तृयोगी यच्छब्दो न यागकर्तृयोगीत्युक्तम् । (तन्न) अव्यभिचारेणैव वेदनकर्तृत्वस्य प्राप्तत्वेन यच्छब्दाविशे-षणीयत्वात् । 'यो दीक्षितः' इत्यत्र तु दीक्षितादीक्षित-योरपि यागकर्तृत्वाविशेषात् 'यो दीक्षितः' इत्यविशेष-णम् । न चेह वेदनरहितस्य अचेतनस्य यागकर्तृत्व-मस्तीति यो वेदनकर्ता स यजेतेति विशेषणवैयर्थ्यात् यागकर्तृविशेषणमेव यच्छब्दः । तत्सहचरितश्च एवं-शब्दोऽपि तथा, तदनुवादकत्वादविधायकत्वमेवेति । तदु-क्तम्— **'क्रियापदैकयोगित्वे यच्छब्दो न रुजे-द्विधिम् । कर्तृयुक्तः स एवान्यप्रापितार्थानुवाद-कृत् ॥'** इति (वा. पृ. ४८८) ।

किञ्च रूपाभावादपि न यागविधायकत्वम् । तत्र भवतु तावत् यथाकथञ्चित् द्रव्यलाभः, देवतालाभस्तु न कथञ्चिदपि संभवति । न च मान्त्रवर्णिकदेवताप्राप्तिः, याज्यानुवाक्यामन्त्रयोः आज्यभागक्रमपठितत्वेन तदर्थत्वा-भावात् । न च वाक्येन क्रमं बाधित्वा कर्मद्वयसंबन्धो मन्त्रस्य क्रियते, 'वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम्' इति मुख्यकालवचनयोः कर्मपरत्वा-

भावात् । तदुक्तम्– '**प्रथमं काल एवाभ्यां शब्दाभ्यां प्रतिपाद्यते । पश्चात्तु कर्म तद्योगादतः कालोऽत्र गृह्यते ॥**' इति ( वा. पृ. ४७८ ) । नापि कालद्वारेण लक्षणया कर्मपरत्वम्, आज्यभागयोरेव पौर्णमास्यमावास्याकालयोगेन मन्त्रव्यवस्थापकतया मुख्यार्थोपपत्तौ क्रमबाधेन लाक्षणिकत्वस्वीकारासंभवात् । न चाज्यभागयोः पौर्णमास्यमावास्याकालस्य प्राप्तत्वात् न मन्त्रव्यवस्थापकत्वं वचनस्येति वाच्यम् । यतः सिद्धान्ते तावत् प्रयोगद्वयेन साङ्गस्यैव पौर्णमास्यमावास्याकालो लब्ध एव । तथा पूर्वपक्षेऽपि सर्वेषां समप्राधान्येन सहचरितानां मध्ये अष्टानां कालसंबन्धस्य श्रुतत्वात् इतरेषामपि कालसंबन्धे कल्प्यमाने प्रयोगविधितः तत्कालस्यैव बुद्धौ विपरिवृत्तेः तत्कालसंबन्धमेव कल्पयति । तत्र पौर्णमास्यमावास्याकालयोः विनिगमनाप्रमाणाभावात् इच्छावशादनुष्ठाने सति भवति व्यवस्थाऽर्थं वचनम् । यदा पौर्णमास्याज्यभागौ तदा वार्त्रघ्नी अनूच्येते, यदा अमावास्याज्यभागौ तदा वृधन्वती अनूच्येते । अतो मान्त्रवर्णिकदेवताया अभावेन अरूपत्वान्न कर्मविधित्वम् । किञ्च नामावच्छिन्नं हि कर्मद्वयमेतत् विधातव्यम् । न च प्रवृत्तिनिमित्ताभावेन पौर्णमास्यमावास्यापदयोर्नामधेयत्वमस्ति । नापि कालविधिपरे वाक्ये विधास्यमानभाविकालसंबन्धनिरीक्षणेन नामधेयत्वमिति वाच्यम् । उत्पत्तौ हि नामप्रवृत्तिनिमित्तत्वं कालस्य । न च कालविधिपरे वाक्यद्वये विद्वद्वाक्यद्वयोत्पन्नं कर्म प्रतीयते । तेन यथाभूतस्य नामसंबन्धो न तथाभूतस्य कालसंबन्धः, यथाभूतस्य कालसंबन्धो न तथाभूतस्य नामसंबन्ध इति । अग्निहोत्रादौ तु यथाभूतस्य उत्पत्तिः तथाभूतस्यैव 'यदग्नये च प्रजापतये च सायं जुहोति' इत्युत्पत्तिवाक्यगतहोमस्वरूपावगमात् वैषम्यादिति नानुपपन्नम् ।

नन्वेवं तर्हि आग्नेयादिवाक्यैरेव देवतामात्रविधानात् रूपभावो भवति । मैवम्, प्राप्ते कर्मणि द्रव्यदेवतारूपानेकगुणविधाने वाक्यभेदप्रसङ्गात् । न च संस्कारवाक्यपर्यालोचनेन द्रव्यप्राप्तौ देवतामात्रविधानान्न वाक्यभेद इति वाच्यम् । द्रव्यविधानमन्तरेण संस्कारत्वासंभवात् । अन्यथा 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः' इति न्यायेन प्रधानकर्मत्वापत्तेः । किञ्च भवतु तावत् द्रव्यप्राप्तिः, तथापि आग्नेयपदोपात्ताग्निविधाने अष्टाकपालपदोपात्ताष्टत्वविधाने च वाक्यभेदः । तेन यदुक्तं तद्विधानैकपदोपात्तदेवताविशिष्टद्रव्यविधानान्न वाक्यभेद इति, तदपि निरस्तम् । अष्टाकपालपदोपात्ताष्टत्वसंख्याविधानस्य आवश्यकत्वेन वाक्यभेदस्य तदवस्थत्वात् । तथा च सूत्रम्– चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात्तस्यतस्योपदिश्येत ॥ इति ।

ननु सिद्धान्ते च एकेन वाक्येन द्रव्यदेवतासंबन्धकालयागानां विधाने वाक्यभेदः समान एव । न सकलविशेषणविशिष्टैकभावनाविधाने भावार्थतः अभावात् । न चैवं सति विशेषणानामविधानम्, विशिष्टविध्यन्यथाऽनुपपत्तिकल्पितविधिभिरेव विशेषणविधानात् । तदुक्तम्– '**श्रौतव्यापारनानात्वे शब्दानामतिगौरवम् । एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते ॥ प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥**' इति ( वा. पृ. ४८५ ) ।

ननु यथा विशिष्टविधिर्विशेषणविधिसापेक्षः तथा विशेषणविधिरपि विशेष्यलाभाय विशिष्टविधिसापेक्ष एव इत्यन्योन्याश्रयात् विशिष्टविधिरपि न संभवति । उच्यते । स्यादेवं यदि विशिष्टविधिः विशेषणविध्यवगमापेक्षप्रवृत्तिर्भवेत् । किं तर्हि ? आकाङ्क्षितसंनिहितयोग्यविशेषमात्रावगमापेक्षप्रवृत्तिः । तानि च विशेषणानि विशिष्टविधिवाक्ये एव पदप्रतिपादितानि, किन्तु विधिप्रतिपादिता विशिष्टविषयिणी कर्तव्यता न विशेषणानां कर्तव्यतामनासाद्य पर्यवस्यतीति विशेषणकर्तव्यतापेक्षायां पूर्वसिद्धा एव विशेषणविधयः श्रुतार्थापत्त्या कल्प्यन्ते । तेन विशिष्टविधौ विशेषणविधयः पूर्वसंबन्धमात्रेणैव उपयुज्यन्ते । यथा जीवतो गृहाभावे बहिर्भावः । यथा वा शब्दार्थव्युत्पत्तौ व्यक्तौ व्यवहारदर्शनात् प्रथमं व्यक्त्यर्थत्वमवगम्यते । तत्र आकृत्यर्थत्वं प्रागनवगतमपि सत्तामात्रोपयोगि पश्चात् तु आनन्त्यव्यभिचाराभ्यां व्यक्तेरवाच्यत्वात् आकृतेर्वाच्यत्वं निश्चीयते, न चेतरेतराश्रयत्वम्, तथेहापि । तदुक्तम् — '**विशेषण-**

विचारोऽयं पश्चाद्यद्यपि गम्यते ( विशेषणविधिश्चायमिति मुद्रितपुस्तकपाठः )। तथापि त्वाकृतिन्यायात् ततः प्रागेव जायते ॥' इति ( वा. पृ. ४८५ )। ततश्च आग्नेयादिवाक्यैर्विशिष्टापूर्वभावनाविधौ न वाक्यभेदः । तेन तद्वाक्यविहितकर्मसमुदायानुवादत्वमेव विद्वद्वाक्ययुगलस्येति। तदुक्तम् ' अपूर्वत्वाद्विधानस्य प्रकृते शब्दशक्तितः ( अरूपत्वादिति मुद्रितपुस्तकपाठः ) । तत्रैव रूपलाभाच्च समुदायानुवादता ॥ ' इति ( वा. पृ. ४८९ )। इदं तु इह वक्तव्यम्। किं पुनः समुदायानुवादस्य प्रयोजनम् ? तदुच्यते। फलवाक्ये हि ' दर्शपूर्णमासाभ्याम् ' इति वचनात् द्वयोः करणत्वमुपजातम्। न च तत् कर्मस्वरूपापेक्षम्, तेषां बहुत्वात्। नापि राजसूयवत् फलापेक्षम्, तथा सति ' राजसूयेन ' इतिवत् एकवचनत्वप्रसङ्गात्। न चोत्पत्तिवाक्यगतकालद्वयापेक्षम्, तथापि अन्तरङ्गत्वेनैव एकवचनत्वप्रसङ्गादेव। यत्तु ' सुपां सुपो भवन्ति ' इति बहुवचनस्थाने एकवचनमेकस्मिन् वाक्ये द्विवचनमित्युक्तम्, अगत्या हि अर्थसाधुत्वासंभवात् प्रयोगसाधुत्वमात्रार्थं तथा आश्रितम्। इह तु विद्वद्वाक्ययुगलापादितसमुदायद्वित्वश्रवणेनैव अर्थसाधुत्वसंभवे सति न प्रयोगसाधुत्वमात्राश्रयणम्। तथाहि, त्रयाणामाग्नेयाग्नीषोमीयोपांशुयाजानां एकपौर्णमासीकालसंबन्धात्, तथा त्रयाणामाग्नेयः ऐन्द्रं दधि ऐन्द्रं पयः इत्येषामेकामावास्याकालसंबन्धात्, त्रयाणांत्रयाणामेकैककालसंबन्धानां विद्वद्वाक्ययुगलेन फलवाक्यापेक्षितद्वित्वसिद्धयर्थं समुदायानुवादः प्रयोजनवानेवेति । तदुक्तम्-- ' यथैवोत्पत्तिवाक्यानां प्रयोगवचनाङ्गता। तथैव तदुपादानात् द्वित्वसिद्ध्याऽनयोरपि ॥ ' इति (वा. पृ. ४७९)। ननु पौर्णमास्यमावास्यानामावच्छिन्नसमुदायस्य कथं दर्शपूर्णमासशब्दाभ्यामुपादानम् ? अत्र पूर्णमासशब्देन तद्विकारः पौर्णमासीशब्दो लक्ष्यते, एवं तर्हि दर्शशब्देन विरुद्धलक्षणयैव अदर्शनात् चन्द्रमसः अमावास्या प्रतिपाद्यते इत्युच्यते। तदा किमपराद्धं ' सुपां सुपो भवन्ति ' इत्यनुशासनबलेन एकवचनस्थाने द्विवचनं बहुवचनस्य वेति। मैवम्। समुदायानुवादवाक्यद्वयस्य अनन्यप्रयोजनसाध्येन विधिना फलवाक्यगतद्विवचनान्तदर्शपूर्णमासपदप्रवृत्तिसिद्ध्यर्थमेव अध्यापितत्वात् क्लेशेनापि तदुपादानं न दोषाय। पूर्वपक्षे तु नैवंविधं किञ्चिदस्ति निमित्तमिति वैषम्यम्। एवं च षण्णामेव फलसंबन्धेन विहितत्वात् इतरेषामाघारादीनां फलवत्संनिधिन्यायेन तदङ्गत्वमेव भवतीति सिद्धान्तस्य प्रयोजनम्।

सूत्रं तु—प्रक्रियते इति प्रकरणम्, तेन आग्नेयादिकर्म अभिधीयते। पौर्णमास्यामित्यनेन पौर्णमासीपदयुक्तविद्वद्वाक्ययुगलमुपलक्षयति । तेनायमर्थः -- अस्मिन् वाक्यद्वये प्रकृतमेव कर्म प्रतिपाद्यम्, न तत्पूर्वकर्मद्वयम् । रूपावचनात् द्रव्यदेवतासंबन्धप्रतिपादकशब्दाभावादित्यर्थः । तौता.

**⌛ प्रकरणं तु पौर्णमास्यां रूपावचनात् । २।२।३।३ ॥**

'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति ' ' तावब्रूतामग्नीषोमौ आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन् ' ' उपांशुयाजमन्तरा यजति ' ' ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत् ' ' ऐन्द्रं दध्यमावास्यायाम्' 'ऐन्द्रं पयोऽमावास्यायाम्' इति कालसंयुक्तानि वाक्यानि श्रूयन्ते। तथा ' आघारमाघारयति ' ' आज्यभागौ यजति ' ' स्विष्टकृतं यजति ' ' पत्नीसंयाजान् यजति ' ' समिष्टयजुर्जुहोति ' इति अकालसंयुक्तानि वाक्यानि। तत्संनिधौ च ' य एवं विद्वान् पौर्णमासीं यजते ' ' य एवं विद्वानमावास्यां यजते ' इति श्रूयते। किं सर्वाण्येतानि समप्रधानानि, उत आग्नेयादीनि पयोऽन्तानि प्रधानानि, आघारादीनि समिष्टयजुरन्तानि आरादुपकारकाणि अङ्गानि इति विचारः। तथा ' य एवं विद्वान् ' इति विद्वद्वाक्यद्वयं प्रकृतानां कर्मणामनुवादकम्, उत अपूर्वयोः कर्मणोर्विधायकम्, इतरे च गुणविधयः इति विचारः। तत्र सिद्धान्तमाह। 'पौर्णमास्याम्' इति अमावास्याया अपि उपलक्षणम्। पौर्णमासीशब्दघटिते अमावास्याशब्दघटिते च विद्वद्वाक्ये प्रकरणं प्रकरणस्थमेव आग्नेयादिकर्मजातं अनूद्यते, न तु अपूर्वं कर्मान्तरं विधीयते। रूपावचनात् रूपस्य यागस्वरूपस्य द्रव्यदेवतस्य अवचनात् अनिरूपणात् अविज्ञानात्। अनुवादपक्षे तु संनिहिता आग्नेयादयो यागाः पौर्णमास्यमावास्यासंयुक्ताः इति

गम्यते रूपम्। तस्मात् समुदायशब्दतया आग्नेयादियागः समुदायौ पौर्णमास्यमावास्याशब्दौ बोधयतः। एतावेव समुदायौ दर्शपूर्णमासशब्दाभ्यां अभिधीयेते, फलसंबन्धश्च बोध्यते स्वर्गकामपदेन। ततश्च फलवत्संनिधौ अफलानि आघारादीनि आरादुपकारकाण्यङ्गानि इति सिद्धान्तः।

**विशेषदर्शनाच्च पूर्वेषां समेषु ह्यप्रवृत्तिः स्यात्। ४॥**

आग्नेयादीनां आघारादीनां च समप्राधान्याभावे सिद्धान्ते साधकान्तरमाह। चशब्दः साधकसमुच्चायकः। हि यस्मात् आग्नेयादीनां प्रयाजादीनां च प्रधानतया समेषु सत्सु पूर्वेषां प्रकृतानां प्रयाजादीनां सौर्यादिविकृतौ अप्रवृत्तिः स्यात् प्रवृत्तिर्न स्यात् प्रधानत्वात्। तच्चानिष्टं विकृतौ 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इति कृष्णलहोमादौ विशेषस्य दर्शनात्। तस्मात् न सर्वेषां समप्राधान्यम्।

**गुणस्तु श्रुतिसंयोगात्। ५॥**

'य एवं विद्वान् पौर्णमासीम्' 'य एवं विद्वान् अमावास्याम्' इति विद्वद्वाक्यद्वयं पूर्वोक्ताग्नेयादीनामनुवादकं इति सिद्धान्ते पूर्वपक्षी शङ्कते। तुशब्दः प्रत्यवस्थाने। आग्नेयादिवाक्ये विद्वद्वाक्यविहितकर्मानुवादेन अग्न्यादिदेवतारूपः पुरोडाशादिद्रव्यरूपश्च गुणः विशिष्टविधिना विधीयते। श्रुतिसंयोगात् विद्वद्वाक्यविहितकर्मानुवादक्षमस्य पौर्णमास्यादिरूपस्य शब्दस्य संयोगात् विद्यमानत्वात्। ततश्च विद्वद्वाक्यं विधायकमेव नानुवादकम्।

**चोदना वा, गुणानां युगपच्छासनाच्चोदिते हि तदर्थत्वात् तस्यतस्योपदिश्येत। ६॥**

'यदाग्नेयोऽष्टाकपालः' इत्यादिवाक्ये द्रव्यदेवतारूपगुणविधिः विद्वद्वाक्यविहितकर्मानुवादेन इति यदुक्तं पूर्वपक्षिणा तन्निरस्यति वाशब्दः। चोदनाः कर्मचोदनाः आग्नेयादयः स्युः न गुणचोदनाः। कुतः? गुणानां युगपत् शासनात् प्राप्ते पौर्णमास्यादिकर्मणि एकेनैव वाक्येन अत्र अनेको गुणो विधातुमिष्यते भवता। न च शब्दान्तरेण चोदिते कर्मणि अनेको गुणः परस्परसंबन्धे असति शक्यते विधातुम्। हि यस्मात् चोदिते प्राप्ते कर्मणि तदर्थत्वात् गुणार्थत्वात् तस्यतस्य गुणस्य विधेये पुनःपुनः उपदिश्येत उच्चार्येत प्रत्ययः। तच्चानिष्टम्। तस्मात् आग्नेयादिवाक्ये न गुणविधिः। किन्तु कर्मचोदना एव इत्याह सिद्धान्ती।

**व्यपदेशश्च तद्वत्। ७॥**

'उग्राणि ह वा एतानि हवींषि अमावास्यायां संभ्रियन्ते आग्नेयं प्रथमम्, ऐन्द्रे (दधिपयसी) उत्तरे' इति त्रयाणां उग्रत्वापरपर्यायप्राधान्यव्यपदेशोऽपि तद्वत् गुणविधिपक्षे वाक्यभेदवत् न युज्येत आग्नेयवाक्ये भवत्पक्षे गुणविधित्वेन आग्नेयस्य प्राधान्याभावात्। तस्मात् विद्वद्वाक्यं आग्नेयादीनामनुवादकमेव।

**लिङ्गदर्शनाच्च। ८॥**

'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायाम्' इति आहवनीयगतवषट्काराहुतिपरिगणनस्य लिङ्गस्य दर्शनादपि आग्नेयादिवाक्यानि कर्मविधायकानि, विद्वद्वाक्यं तु तेषां समुदायत्वेनानुवादः। विद्वद्वाक्ये कर्मान्तरत्वपक्षे अभ्यधिकत्वात् आग्नेयादिवाक्ये गुणविधिपक्षे न्यूनत्वात् त्रयोदशचतुर्दशत्वानुवादविरोधः। सिद्धान्ते तु पञ्च प्रयाजाः द्वावाज्यभागौ स्विष्टकृत् त्रयोऽनूयाजाः पौर्णमास्यां प्रधानाहुतित्रयम्, अमावास्यायां सांनाय्यस्य सहानुष्ठानात् प्रधानाहुतिद्वयम्। इति चतुर्दशत्वत्रयोदशत्वानुवाद उपपन्नः। तस्मात् विद्वद्वाक्यमनुवादकमिति सिद्धम्। के.

* प्रकरणं द्विविधं महाप्रकरणं अवान्तरप्रकरणं चेति। तत्र फलभावनायाः प्रकरणं महाप्रकरणम्। तच्च प्रयाजादीनां ग्राहकम्। तच्च प्रकृतावेव। तत्र च उभयाकाङ्क्षारूपं प्रकरणं संभवति, आकाङ्क्षाऽनुपरमात्। विकृतौ तु न प्रकरणं संभवति। तत्र तु अन्यतराकाङ्क्षारूपस्थानादेव अपूर्वाङ्गग्रहणम्। यत्तु विकृतौ प्राकृताङ्गानुवादेन विधीयते, यथा 'औदुम्बरो यूपो भवति' इति यूपानुवादेन औदुम्बरत्वम्, तत् प्रकरणात् गृह्यते। यत्तु विकृतावपि प्राकृतधर्मानुवादेन विधीयमानयोर्धर्मयोरन्तराले अपूर्वमङ्गं केवलं पठ्यते, तदपि प्रकरणेन विनियुज्यते यथा आमनहोमाः। ते हि प्राकृताङ्गानुवादेन विधीयमानयोरन्तराले विधीयन्ते। अवान्तरप्रकरणं तु फलभावनायाः

अन्तराले यत् अङ्गभावनायाः प्रकरणं तत् । तच्च अभिक्रमणादीनां प्रयाजादिषु विनियोजकम् । तच्च संदंशेन ज्ञायते । तदिदं अवान्तरप्रकरणं महाप्रकरणात् बलीयः । तदिदं स्थानादिप्रमाणात् बलवत् । ( संक्षिप्य गृहीतम् ) । मीन्या. पृ. १७५–१९८. * प्रकरणं धर्माङ्गताबोधकं प्रमाणम् । मणि. पृ. १३. * प्रकरणं न धर्माणां विशेषकम्, किं तर्हि ? विनियोजकम् । 'इदमत्र भवति' इत्येतत् प्रकरणस्य सामर्थ्यम्, न 'अस्य यत् तस्येदम्' इति । भा. ११।२।४।२२.

* **प्रकरणं निरूप्यते** । अथ किं प्रकरणम् ? न तावत् संनिधिपठितत्वम्, सर्वस्यैव यत्किञ्चित्संनिधिपठितत्वेन सर्वाङ्गत्वापत्तेः । न च तत्संनिधिपठितत्वं तद्विनियोजकप्रकरणं इति विशिष्य निर्वचनात् नोक्तदोषः, अङ्गानां प्रधानसंनिधिपठितत्वेन प्रधानाङ्गित्वापत्तेः, दर्शपूर्णमासयोः गोदोहनसंनिधिपठितत्वेन तदङ्गत्वापत्तेश्च । अथ अश्रुतभाव्यकतत्संनिधिपठितत्वं तद्विनियोजकप्रकरणम्, प्रधानानां श्रुतभाव्यकत्वात् नोक्तदोषः, इति चेत्, न, समिद्यागस्य अश्रुतभाव्यकतनूनपाद्यागसंनिधिपठितत्वेन तनूनपाद्यागाङ्गित्वापत्तेः । अथ श्रुतभाव्यकत्वे सति अश्रुतभाव्यकतत्संनिधिपठितत्वं तद्विनियोजकप्रकरणम्, समिद्यागस्य अश्रुतभाव्यकतनूनपाद्यागसंनिधिपठितत्वेऽपि श्रुतफलकत्वाभावात् नोक्तदोषः । गोदोहनस्य दर्शपूर्णमासाङ्गत्ववारणाय अश्रुतभाव्यकेति । इति चेत्, विश्वजितो विकृतित्वेन प्रकरणित्वाभावात् तत्र अव्याप्त्यभावेऽपि पिण्डपितृयज्ञस्य श्रुतफलकत्वाभावेन स्वाङ्गप्रकरणित्वानापत्तेः, प्रयाजादीनां श्रुतभाव्यकप्रोक्षणाङ्गत्वापत्तेश्च । अतः अशक्यनिर्वचनं प्रकरणम् । इति चेत्, न, संनिधिपठितत्वे सति इतिकर्तव्यताऽऽकाङ्क्षायाः एव प्रकरणपदार्थत्वात् । तत्संनिधिपठितत्वविशिष्टकथम्भावाकाङ्क्षा तद्विनियोजकप्रकरणं इति तु निष्कर्षः । अस्ति चेदं प्रयाजादिविनियोजकदर्शपूर्णमासादिकरणकभावनाकथम्भावाकाङ्क्षाऽऽत्मकप्रकरणे, दर्शपूर्णमासादीनां प्रयाजादिसंनिधिपठितत्वात् । दर्शपूर्णमासादिषु दीक्षणीयाऽऽदिप्रकरणित्ववारणाय, विकृतेः प्राकृताङ्गप्रकरणित्ववारणाय च विशिष्टान्तम् । प्रयाजादीनां पुरोडाशादिरूपद्रव्याङ्गत्ववारणाय कथम्भावाकाङ्क्षेति तदुक्तम् 'असंयुक्तं प्रकरणादितिकर्तव्यताऽर्थित्वात्' ( ३।३।४।११ ) इति । प्रमाणान्तरासंयुक्तं इतिकर्तव्यतार्थित्वरूपात् प्रकरणात् अङ्गं इति सूत्रार्थः । अत्र श्रुत्यादिप्रमाणान्तरविनियुक्तस्य प्रोक्षणादेः प्रयोजनाकाङ्क्षारूपसहकारिकारणविरहात् न प्रधानीयकथम्भावाकाङ्क्षारूपप्रकरणात् अङ्गत्वम् । प्रयाजादेरेव प्रयोजनाकाङ्क्षारूपसहकारिकारणवशात् अङ्गत्वं इति प्रकरणविनियोज्यविषयविशेषसूचनाय प्रमाणान्तरासंयुक्तत्वोक्तिः, न तु तस्य लक्षणे निवेशः प्रयोजनाभावात् । प्रधानीयप्रयोजनाकाङ्क्षारूपसहकार्यभावादेव अङ्गानां प्रधानसंनिधिपठितत्वविशिष्टकथम्भावाकाङ्क्षावत्त्वेऽपि न प्रधानानां अङ्गाङ्गत्वम् । न च समिद्यागादेः प्रयोजनाकाङ्क्षारूपसहकारिसत्त्वात् तनूनपाद्यागाङ्गत्वापत्तिः इति वाच्यम् । तनूनपादादेः इतिकर्तव्यताऽऽकाङ्क्षाकाले समिदादेः प्रयोजनाकाङ्क्षाऽभावात् । तनूनपादादेः फलवत्त्वावगमोत्तरं हि इतिकर्तव्यताऽऽकाङ्क्षा तदवगमश्च प्रधानभावनायाः इतिकर्तव्यताऽऽकाङ्क्षया प्रधानभावनान्वये सति भवेत्, प्रधानभावनेतिकर्तव्यताऽऽकाङ्क्षायां च स्वप्रयोजनाकाङ्क्षारूपसहकारिवशात् तनूनपातः इव समिधोऽपि अन्वयानैराकाङ्क्ष्यम्, इति न तनूनपाद्यागाङ्गत्वापत्तिः । अत एव ज्योतिष्टोमाश्रितानाम् 'पशुकाम उक्थ्यं गृह्णीयात्' इत्यादिकाम्यसंस्थानां दीक्षणीयाऽऽदिसंनिहितत्वविशिष्टकथम्भावाकाङ्क्षावत्त्वेऽपि न प्रकरणात् दीक्षणीयाऽऽदीनां संस्थाङ्गत्वम् । अन्यप्रयुक्ताश्रयसापेक्षगुणफलसंबन्धविधेः पूर्वं दीक्षणीयाऽऽद्यङ्गानां आश्रयीभूतज्योतिष्टोमभावनान्वयावश्यकत्वेन प्रयोजनाकाङ्क्षाऽभावात् । अतो गुणभावनायाः इतिकर्तव्यताऽऽकाङ्क्षायां आश्रयतः अतिदेशादेव धर्मप्राप्तिः इति नाश्रयसामानविध्यं इत्युक्तं तृतीये ( भाट्ट. ३।६।१६ ) । प्रयोजनाकाङ्क्षाविरहादेव च न फलार्थगुणस्य आश्रयाङ्गत्वम् । पिण्डपितृयज्ञस्य तु श्रुत्याद्यविनियुक्ताङ्गसत्त्वेऽपि न विनिगमनाविरहात् तदङ्गत्वप्रसक्तिः, कालश्रवणस्यैव प्राधान्ये विनिगमकत्वात् । कालादिश्रवणाद्यविशेषे तु पिण्डपितृयज्ञवत् श्रुत्याद्यविनियुक्तस्यापि फलार्थत्वापत्तेः न परस्पराङ्गत्वापत्तिः ।

विकृतिसंनिधिपठितोपहोमानां तु स्वसंनिधिपठितत्वविशिष्ट-विकृतिभावनाकथम्भावाकाङ्क्षारूपप्रकरणसत्त्वेऽपि न ततः अङ्गत्वम्, उपहोमेभ्यः क्लृप्तोपकारकत्वेन पूर्वान्वितैः प्राकृताङ्गैः कथम्भावाकाङ्क्षायाः शान्तत्वेन उपहोम-विनियोगबोधाव्यवहितपूर्वे निरुक्तप्रकरणाभावात्। अपितु संनिधिरूपस्थानवशात् विकृत्याकाङ्क्षामुत्थाप्य तत एवाङ्गत्वम्। न च एवमुत्थाप्याकाङ्क्षायां प्रकरणलक्षणातिव्याप्तिः, तस्या अपि स्थानकल्प्यप्रकरणत्वेन लक्ष्यत्वात्। उपहोमेषु प्राकरणिकाङ्गत्वव्यवहारापत्तिस्तु लिङ्गविनियोज्यमन्त्रेषु श्रौताङ्गत्वापत्तिवत् क्लृप्तनिरुक्तकथम्भावाकाङ्क्षाया एव तद्व्यवहारनियामकत्वेन निराकार्या इति बोध्यम्।

**नव्यास्तु** अवगतफलसंबन्धसंनिहितवाक्यप्रमितपदार्थ-वृत्ति यत् पूर्वप्रमाणानवगताङ्गताकविषये इतिकर्तव्यतात्वप्रकारकापेक्षणम्, तत् प्रकरणम्। अस्ति च दर्शपूर्णमासादौ प्रयाजादिविषये तत्। समिद्यागस्य प्रकरणात् तनूनपाद्यागाङ्गत्ववारणाय अवगतफलसंबन्धेति पदार्थ-विशेषणम्। प्रयाजादीनां प्रकरणादसंनिहितज्योतिष्टोमाद्यङ्गत्ववारणाय संनिहितवाक्यप्रमितेति तद्विशेषणम्। अङ्गस्य पूर्वप्रमाणानवगताङ्गताकेतिविशेषणाच्च न प्रोक्षणादीनां श्रुतिलिङ्गवाक्यैः अवगतव्रीह्याद्यङ्गभावानां प्रकरणात् दर्शाद्यङ्गत्वापत्तिः। 'वामदेव्यं गायति' इत्यादौ प्रमाणान्तरेण अनवगताङ्गताकसामविषये अवगतफलसंबन्धस्य स्तोत्रस्य स्वसाधनीभूतऋगक्षराभिव्यक्त्यर्थं अपेक्षासत्त्वात् प्रकरणेन अङ्गत्वप्रसक्तौ तद्व्यावृत्त्यर्थं इतिकर्तव्यतात्वेन इति विशेषणम्। तस्य ऋगक्षराभिव्यक्त्यर्थं सामापेक्षायामपि सिद्धसामापेक्षायां इतिकर्तव्यतात्वप्रकारकत्वाभावात् इत्याहुः। अत्र समिद्यागादौ तनूनपाद्यागाङ्गत्वस्य, प्रोक्षणादीनां प्रकरणात् दर्शपूर्णमासाङ्गत्वस्य च उक्तरीत्या वारणसंभवात् अवगतफलसंबन्धेति, पूर्वप्रमाणानवगताङ्गताकेति च विशेषणं सूत्रस्थासंयुक्तत्वरूप-विशेषणवत् विनियोगप्रयोजकप्रकरणशरीरे प्रकरणविनियोज्यविषयविशेषबोधनार्थमेव। अस्तु वा तनूनपादादौ समिद्यागप्रकरणित्वव्यवहाराभावात् व्यवहारप्रयोजकप्रकरण-शरीरे अवगतसंबन्धेति विशेषणम्। दर्शपूर्णमासादौ प्रोक्षणादिप्रकरणित्वव्यवहारस्य तु सर्वानुभवसिद्धत्वात् तद्वारक-विशेषणोपादानं तु अनुचितमेव। अस्तु वा गोदोहनादौ प्रयाजादिप्रकरणित्वव्यवहाराभावात् पूर्वप्रमाणानवगताङ्गताकेति स्वपूर्वप्रवृत्तप्रमाणानवगताङ्गताकेत्यर्थकम्, न तु प्रकरणपूर्वोद्दिष्टश्रुतिलिङ्गवाक्यानवगताङ्गताकेत्यर्थकम्, दर्शपूर्णमासादौ प्रोक्षणादिप्रकरणित्वव्यवहारानापत्तेः। गोदोहनभावनाकथम्भावाकाङ्क्षातः पूर्वप्रवृत्तदर्शपूर्णमास-भावनाकथम्भावाकाङ्क्षारूपप्रकरणेन प्रयाजादीनां अङ्गताऽवगमात्तु न गोदोहनादिषु तत्प्रकरणित्वव्यवहारः। अत इदं व्यवहारप्रयोजकप्रकरणलक्षणम्। विनियोजकप्रकरणलक्षणं तु अस्मदुक्तमेव। तनूनपादादिषु समिदादिविनियोजकप्रकरणसत्त्वेऽपि समिदादीनामुक्तरीत्या तदङ्गत्वस्य वारयितुं शक्यत्वात् इति तत्त्वम्।

**केचित्तु** "उभयाकाङ्क्षा प्रकरणम्"। (**मीन्या.** पृ. १६९) सा च फलाकाङ्क्षाविशिष्टकथम्भावाकाङ्क्षा। वैशिष्ट्यं च स्वाश्रयभावनासंनिहितभावनाश्रितत्वसंबन्धेन, न तु एकपुरुषावगतत्वादिना। तेन न विश्वजिदादेः प्रकरणेन दर्शाङ्गत्वम्। उक्तसंबन्धेन (प्रकरणोक्तसंबन्धेन) यदीयफलाकाङ्क्षाविशिष्टा निर्णीत– (अनिर्णीत–) तदनङ्गत्वकगता (त्वगता) या कथम्भावाकाङ्क्षा, सा तद्विनियोजक– (कं) प्रकरणं इति (तु) निष्कर्षः। उक्तं हि 'असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात्' इति। अत्र पञ्चम्याः (पञ्चम्यन्तयोः) सामानाधिकरण्यात् कथम्भावाकाङ्क्षैव प्रकरणमित्यवसीयते। असंयुक्तपदं च फलाकाङ्क्षोपस्थापकम्, न तु संनिपातिनिवारणम् (न तु संनिपातिनिवारणाद्यर्थं)" इत्याहुः [ **भाट्टालङ्कारः** ]। तदतीव मन्दम्। तथाहि, विनियोगफलोपधायकप्रकरणस्य वा इदं लक्षणं तत्स्वरूपयोग्यस्य वा? **नाद्यः**, स्वाश्रयभावनासंनिहितभावनाऽऽश्रितत्वसंबन्धेन प्रयाजादिभावनीयफलाकाङ्क्षाविशिष्टायां श्रुतभाव्यकत्वेन निर्णीतप्रयाजाद्यनङ्गत्वकप्रोक्षणादि-भावनागतकथम्भावाकाङ्क्षायां प्रयाजविनियोगरूपफलानुपधायकायां अतिव्याप्तेः, प्रधानकथम्भावाकाङ्क्षारूपप्रकरणेन फलवत्त्वे अवगते तनूनपाद्यागीयकथम्भावाकाङ्क्षोदयात् निर्णीतानङ्गत्वकतनूनपाद्यागगतायां तस्यां उक्तसंबन्धेन

समिद्यागीयफलाकाङ्क्षाविशिष्टत्वेन अतिव्याप्तेश्च । न च प्रधानकथम्भावेन तनूनपाद्यागीयफलवत्त्वावगमसमकालमेव समिद्यागस्यापि फलवत्त्वावगमेन फलाकाङ्क्षोपरमात् तदुत्तरकालीनतनूनपाद्यागीयकथम्भावाकाङ्क्षायां न तद्वैशिष्ट्यं इति वाच्यम्। आलोकपरामर्शजन्यानुमितौ सामानाधिकरण्यसंबन्धेन अतीतधूमपरामर्शवैशिष्ट्यस्येव उक्तसंबन्धेन अतीतसमिद्यागीयफलाकाङ्क्षावैशिष्ट्यस्य तनूनपाद्यागीयकथम्भावाकाङ्क्षायां सत्त्वे बाधकाभावात् । यदि तु धूमपरामर्शजन्यताऽवच्छेदककोटौ उक्तदोषवारणाय स्वाव्यवहितोत्तरत्वसंबन्धस्यापि निवेशवत् अत्र समानकालीनतत्संबन्धस्यापि निवेशः इत्युच्यते ततः निर्णीततदनङ्गत्वेति व्यर्थम्, अङ्गकथम्भावाकाङ्क्षायां उक्तसंबन्धेन अतीतप्रधानफलाकाङ्क्षावैशिष्ट्यविरहेण अतिव्याप्त्यभावात्, तस्य तद्वारकत्वेन त्वदभिप्रेतत्वात् । न द्वितीयः अङ्गकथम्भावाकाङ्क्षायाः प्रधानविनियोगस्वरूपयोग्यप्रकरणत्वेऽपि प्रधानफलाकाङ्क्षारूपसहकारिविरहात् तनूनपाद्यागकथम्भावाकाङ्क्षायाः समिद्यागविनियोजकप्रकरणत्वेऽपि समिद्यागफलाकाङ्क्षारूपसहकारिविरहादेव अङ्गत्वप्रसङ्गवारणोपपत्तौ फलाकाङ्क्षावैशिष्ट्यनिवेशस्य, निर्णीततदनङ्गत्वनिवेशस्य च व्यर्थत्वात् । तदुभयनिवेशेऽपि प्रयाजादीनां प्रोक्षणाद्यङ्गत्ववारणाय फलाकाङ्क्षायाः सहकारित्वकल्पनायाः आवश्यकत्वात् इति दिक् ।

एतस्य च प्रकरणस्य आकाङ्क्षारूपत्वेन स्वतः अप्रमाणत्वात् वाक्यकल्पनाद्वारैव प्रामाण्यम् । तथाहि, प्रधानगतेतिकर्तव्यताऽऽकाङ्क्षया प्रयाजादिगतप्रयोजनाकाङ्क्षासहकृतया प्रयाजवाक्यस्य, प्रधानवाक्यस्य च स्वस्वावान्तरवाक्यार्थसमासस्यापि महावाक्यैकदेशत्वरूपपदत्वाक्रान्तस्य संनिधिरूपं वाक्यं कल्प्यते । उक्तपारिभाषिकपदानामपि स्वार्थोपस्थितिद्वारा तन्निष्ठाश्रुतपदान्तरकल्पनाऽनुकूलयोग्यतारूपलिङ्गानुमानद्वारा इतिकर्तव्यतात्ववाचीत्थमित्यादिगौणश्रुतिकल्पकत्वं इति परंपरया प्रकरणस्य अङ्गत्वे प्रामाण्यम् । वाक्यैकवाक्यताकल्पनप्रकारश्च ' समिधो यजति, इत्थं दर्शपूर्णमासाभ्यां यजेत ' इति । अत एव दर्शपूर्णमासप्रकरणाम्नातेन ' संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपेत् ' इत्यनेन विहितवैमृधस्य प्रकरणात् दर्शपूर्णमासोभयाङ्गत्वप्रसक्तौ वाक्यात् पौर्णमास्यङ्गत्वं इत्युक्तं बलाबलाधिकरणे । इति प्रकरणनिरूपणम् । **मुरारि. पृ. ११८१–११८५.**

* प्रकरणं प्रक्रमः । तस्य लोकवेदयोः अर्थज्ञानोपायत्वं प्रसिद्धम् । **सु. पृ.** १११. * प्रकरणं प्रमाणान्तरम् । **वा.** ३।३।७।१४ पृ. ८५२. * प्रकरणं बाधित्वा वाक्येन ( अग्न्याधेयप्रकरणे समाम्नातानि पवमानहवींषि ) अग्नेः ( गुणभूतानि ) भवन्ति । **भा.** ३।१।१२।२२. * प्रकरणं बाधित्वा वाक्येन द्वादशोपसत्ता अहीनस्यैव, न ज्योतिष्टोमस्य । ३।३।८। १५–१६. * प्रकरणम् । महाप्रकरणं प्रधानस्य असंदंशोद्भूतिकं प्रकृतेः, विकृतेस्तु संदंशोद्भूतिकम् । **बाल.** पृ. ११. * प्रकरणं मुख्यस्यैव नाङ्गानाम् । **वि.** ३।७।२. * प्रकरणं यत्र प्राकृताङ्गानुवादेन विधिः संदंशो वा तत्रैव विकृतौ विनियोजकम्, अन्यत्र तु संनिधिरेव । **बाल.** पृ. ११. * प्रकरणं युगपत् सर्वाङ्गग्राहि । **भाट्ट.** १०।७।९ पृ. ८३. * प्रकरणं वाक्येन अविरुद्धं अर्थवद् भवति । **भा.** ३।४।१।९. * प्रकरणं वाक्येन बाध्यते । पशुरग्नीषोमीयो वाक्येन, शकृल्लोहिते पशोः प्रकरणेन भवेताम् । ४।१।१२।२७. * प्रकरणं वाक्यलिङ्गश्रुतीः कल्पयित्वा विनियोजकम् । वाक्यं तु लिङ्गश्रुती द्वे एव कल्पयित्वा विनियोजकं इति शीघ्रोपस्थापकत्वात् वाक्यं प्रकरणाद् बलीयः । **वि.** ३।३।९. * प्रकरणं विनियोजकम् । प्रकरणाधिकरणम् । ३।३।४. * प्रकरणं श्रुतस्य द्रव्यस्य बाधने नहि समर्थम् । **भा.** १।४।१०।१४ पृ. ३४७ । यदा द्रव्यस्य अग्न्यादिसंबन्धो विधीयते, न तदा प्रकरणापेक्षेत्यर्थः । **वा.** * प्रकरणं संनिहितस्य फलवतः अनवगताङ्गताकपदार्थविषये इतिकर्तव्यतात्वेन अपेक्षणम् । ( पदकृत्यं तु प्रकरणाधिकरणबिन्दौ भाट्टे एव द्रष्टव्यम् ) । **भाट्ट.** ३।३।४. * प्रकरणं समाख्यानात् बलवत् । पौरोडाशिकसमाख्यातब्राह्मणाम्नातानां प्रयाजादीनां समाख्याप्राप्तमपि केवलौषधयागाङ्गत्वं दूरीकृत्य प्रकरणेन सांनाय्योपांशुयाजार्थत्वमपि सिध्यति । **मीन्या.** * प्रकरणं साकाङ्क्षफलवत्संनिधिः । **सु.** पृ. १४७७. * प्रकरणं सामान्यम्, निमित्तसंयोगो

विशेषः ( विशेषश्च सामान्यात् बलीयान् ) । भा. ३।६।३।१०. * प्रकरणं स्थानाद् बलीयः । विदेवनादयो धर्मा अभिषेचनीयसंनिधौ पठिता अपि नाभिषेचनीयस्याङ्गं किन्तु प्रकरणात् राजसूयाङ्गम् । मीन्या. * कर्तव्यस्य इतिकर्तव्यताकाङ्क्षस्य वचनं प्रकरणमाचक्षते । कणिका. पृ. ३१६. * ननु प्रकरणं वाक्यस्य श्रुतेर्वा न बाधकम् । सत्यमबाधकम् । फलाभावात्तु भवदीयः पक्षो मुच्यते । तस्मिन् आनर्थक्येनाविवक्षिते प्रकरणवता प्रयोगवचनेन अपरिपन्थि प्रोक्षणादि विधायिष्यते । ( आनर्थक्यप्रतिहतानां विपरीतं बलाबलम् ) । भा. ९।१।५।१३. * नहि उत्पत्तिवाक्ये अस्ति कर्मणां प्रकरणम्, फलसंबन्धोत्तरकालत्वेन कथम्भावात्मकस्य प्रकरणस्य प्रयोगवाक्याधीनप्रसूतत्वात् । वा. २।२।५।१५ पृ. ४९९. * प्रत्यक्षश्रुतिविहिता अग्न्यादयः तेषां यागानाम् ( वैश्वदेवपर्वगतानाम् ), विश्वेदेवा वाक्येन, प्रकरणात् तेनैव नान्येनेति गम्यते । ( प्रकरणात् इदं कल्पनीयं तेनैव आग्नेयादिना यागेन वैश्वदेवेन यजेत नान्येनेति । वा. ) । न चायं विषमशिष्टो विकल्पो भवितुमर्हति । नहि प्रकरणं श्रुतस्य द्रव्यस्य बाधने समर्थम् । भा. १।४।१०।१४, * यत्तु अमावास्यादेवतावाचीनि पदानि न पौर्णमास्यां प्रयुज्यन्ते, न तत्र सूक्तवाकशब्दो बाध्यते, प्रकरणं तत्र लिङ्गेन बाधितम् । ३।२।६।१९ पृ. ७६९, * यस्य च पर्यवसितेऽपि वचने तत्संबद्धमेव अर्थान्तरं प्रक्रमते, न तत्र अननुवृत्तं प्रकरणम् । आगच्छति हि तत्संबद्धाभिधाने हृदयम् । यत्र तु पर्यवसिते वचने तदसंबद्धमेवार्थान्तरं प्रक्रमन्ते न तत्र बुद्धौ पूर्वः पदार्थः संनिधीयते । ३।१।११।२१ पृ. ७३४. * यथा वाक्यद्वयानुसंधानसंपन्नं प्रकरणं पृथक् प्रमाणम् । तथा प्रकरणद्वयानुसंधानसंपन्नः क्रमः कुतो न मानं स्यात् ? न चास्य प्रकरणे अन्तर्भावः, द्वयोर्वाक्ययोरिव प्रकरणयोः एकवाक्यत्वाभावात् । वि. ३।३।५. * यद्यपि प्रकरणं स्थानात् बलवत्, तथापि उपांशुयाजानुमन्त्रणन्यायेन लिङ्गानुगृहीतः क्रम एव बलीयान् विज्ञायते । वा. ३।६।७।२५, * विनाऽपि विशेषणेन विशेषग्रहणप्रमाणं प्रकरणं इति सिद्धान्तवादी मन्यते । ३।२।८।२१ पृ. ७७४. * प्रकरणेन आनन्तर्यं ( क्रमं संनिधिं स्थानम् ) बाधित्वा सिद्धान्तः । क्रमेण पूर्वपक्षः आनन्तर्याधिकरणे । ( ३।१।१४।२४–२५ ) । के. * प्रकरणेन क्रत्वर्थत्वं प्रायेण तृतीयाध्यायस्य चतुर्थपादे प्रतिपाद्यते । सोम. ३।४।१. * प्रकरणेन धर्माः संबध्यन्ते इत्थं कुर्यादिति । भा. ७।१।१।२ पृ. १५२७, * प्रकरणेन पूर्वपक्षः वाक्येन सिद्धान्तः संतर्दनाधिकरणे । ३।३।११।२४–३१. * प्रकरणेन प्रकरणं बाध्यते, यथा 'अभिक्रामं जुहोति' इत्यवान्तरप्रकरणेन महाप्रकरणम् । महाप्रकरणेनापि महाप्रकरणं बाध्यते, यथा ज्योतिष्टोमप्रकरणेन नित्यानित्यसंयोगविरोधसहकृतेन संस्थाप्रकरणम् । बाल. पृ. १३५. * प्रकरणेन प्रमाणेन संनिपत्योपकारका आरादुपकारकाश्च धर्मा अपूर्वार्था इति स्थितम् । टुप्. ९।१।१।१ पृ. १६४०. * प्रकरणेन प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम् । 'समिधो यजति' इत्यादेः अस्त्युपकाराकाङ्क्षा, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यस्यास्ति उपकारकाकाङ्क्षा इति । मीन्या. * प्रकरणेन वषट्कारः प्राप्नोति नारिष्ठहोमेषु, तन्मन्त्रपदैरेकवाक्यत्वात् स्वाहाकारः ( प्राप्नोति ), वाक्यं च प्रकरणात् बलीयः । भा. ८।४।५।१७. * प्रकरणेन वाक्यस्य बाधः । श्येने ' निवीता ऋत्विजः प्रचरन्ति ' इति विहितं निवीतं वाक्यात् अङ्गप्रधानार्थं प्रसक्तं श्येनप्रकरणात् प्रधानमात्रार्थं भवति । बाल. पृ. १४६. * प्रकरणेन विनियोगः । ' अविच्छिन्ने कथम्भावे यत् प्रधानस्य पठ्यते । अनिर्ज्ञातफलं कर्म, तस्य प्रकरणाङ्गता ॥ ' ( प्रकरणेन अङ्गता ) । वा. ३।३।४।११. * प्रकरणेन, ' व्रीहीनवहन्ति ' इत्यत्र व्रीहिमात्रावघातप्रापिका श्रुतिः बाध्यते ' आनर्थक्यप्रतिहतानां ' ( विपरीतं बलाबलम् ) इति रीत्या । बाल. पृ. १४५. * प्रकरणेन श्रुतिभङ्गः । ' आग्नेय्या आग्नीध्रम् ' इति वाक्ये सामान्यसंबन्धबोधकप्रकरणेन प्रकृताप्रकृतसाधारण्यप्रवृत्तश्रुतिस्वारस्यभङ्गः ( आग्नेय्यधिकरणे प्रतिपादितः ) । कु. ३।२।९।२२. * प्रकरणेन संनिधिबाधात् सर्वशेषा देवनादयः ( राजसूयशेषाः, न तु अभिषेचनीयशेषाः ) । वि. ३।३।१०. * प्रकरणेन स्थानं बाधित्वा द्वयोर्दोहयोः ( सायं प्रातश्चेति ) ते धर्माः ( शाखाच्छेदनवत्सापाकरणादयो दोहधर्माः )

अभ्युपेयाः । ३।६।८, * न प्रकरणेन शक्यते पर्वशब्दस्य कालवाचितां बाधितुम् । दुर्बलं हिं लिङ्गात् प्रकरणम् । भा. ९।२।१८।५३. * प्राकृतकार्यापन्नाङ्गसंदंशपतितमसंयुक्तं क्रियारूपं च, तत् विकृतौ प्रकरणेनैव ग्राह्यम् । कौ. ३।३।७।१४ पृ. ३६४, * यदपि असंयुक्तं न प्राकृतकार्यापन्नप्राकृताङ्गसंबन्ध्यङ्गसंदष्टम्, अपितु प्रधानोत्तरं उक्तविधाङ्गात् ( प्राकृतकार्यापन्नाङ्गात् ) पूर्वं समाम्नातम्, तदपि प्रकरणेनैव गृह्यते संनिहितप्रतियोगितेतिकर्तव्यताकाङ्क्षायाः अनिवृत्तत्वात् । ३।३।७।१४ पृ. ३६४. * यत्तु 'रथंतरं भवति' इत्येवंचोदितानामपि प्रकरणेन ग्रहणम्, तत् अतिदेशप्राप्तावान्तरप्राप्तक्रियासंबन्धविज्ञानात् । वा. १।४।२।३ पृ. ३३१, * यत्र हि प्राकृतैरङ्गैः पूर्यमाणायां विकृतौ तन्मध्येऽपि अपूर्वाणि कानि चित् प्रक्षिप्यन्ते, तत्र विकृतौ प्रकरणेन ग्रहणं भवति । ३।६।७।२५, * व्रीह्यादि प्रोक्षणादिभिः संबध्यमानं न तावत् प्रकरणेन विशेष्यते । अथ च आनर्थक्यभयात् विप्रकृष्टफलकल्पनाप्रमाणाभावाच्च क्रतुसाधनत्वेन प्रयोजनवत्त्वाच्च प्रकृतं गृह्यते । ३।४।५।१५ पृ. ९४६. * प्रकरणात् अङ्गता स्यात् वाक्यसंयोगाद्वा प्रत्यक्षोपकारदर्शनाद्वा । भा. १०।६।१०।३०. * प्रकरणात् द्रव्यस्याग्रहणम् । मीन्या. * प्रकरणात् लिङ्गं बलीयः । के.

**⌛ प्रकरणात् वाक्यं बलीय इति न्यायः ।** मीमांसकमते विनियोगविधेः सहकारिभूतेषु षट्सु प्रमाणेषु चतुर्थप्रमाणं 'उभयाकाङ्क्षा प्रकरणम्' इति । अत एव 'इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्' इत्यत्र इन्द्राग्नीपदस्य लिङ्गात् दर्शाङ्गत्वे सिद्धे 'इदं हविः' इत्यादेरपि तदेकवाक्यत्वात् दर्शाङ्गत्वम्, न तत्प्रकरणात् दर्शपूर्णमासाङ्गत्वम्, प्रकरणात् वाक्यस्य बलीयस्त्वादिति प्रोक्तमिति । साहस्री. ८५६.

* प्रकरणात् वाक्यस्यापि अधिकृतापेक्षित्वे दुर्बलतरत्वम् । वा. ३।३।१०।२१, * प्रकरणात् सामान्यसंबन्धः सिध्यति, न तु श्रुतिमकल्पयित्वा । ३।२।८।२२ पृ. ७७९, * अपूर्वसाधनता न वाक्यसामर्थ्येन प्रतीयते इति प्रकरणात् लभ्यते । ३।७।१।१. * 'नानृतं वदेत्' इत्यत्र 'वदेत्' इति वदनमनुतिष्ठेत् इति श्रुत्या गम्यते । तस्य पुरुषसंबन्धः श्रुत्यैव, कर्मसंबन्धः प्रकरणात् । श्रुतिश्च प्रकरणात् बलीयसी । भा. ३।४।४।१२ पृ. ९०७. * न च यागापूर्वसाधनत्वं प्रकरणादृते लक्षयितुं शक्यते इति नवमे ( ९।१।१ ) वक्ष्यामः । वा. ३।६।२।९ पृ. १०३०. * 'वेद्यां हवींष्यासादयति' इति हविर्मात्रं वाक्यात् गम्यते । प्रधानहवींषि प्रकरणात् । वाक्यं च प्रकरणात् बलीयः । भा. ३।७।१।२. * 'व्रीहीन् प्रोक्षति' इति द्वितीयाश्रुत्या व्रीह्यर्थतां प्रोक्षणस्य प्रतिपादयति, अपूर्वसंबन्धः प्रकरणात् स्यात् । श्रुतिश्च प्रकरणात् बलीयसी । टुप्. ९।१।५।११ पृ. १६५७. * संयुक्तं वा (ग्रह–) धर्मैः एवंजातीयकं ( अंशु–अदाभ्यौ ग्रहौ ) स्यात् अप्रकरणस्थमपि । कुतः? यतः प्रकरणात् वाक्यं बलीयः । भा. ३।६।११।३२. * प्रकरणस्य अधिकारलक्षणस्य सिद्धान्तेऽपि विनियोजकत्वं नाभ्युपगम्यते । सु. पृ. ११९३. * प्रकरणस्य अविशेषकत्वे सत्यपि ग्राहकत्वेनैव विशेषरूपेण विनियोजकत्वात् विशेषस्थापनहेतुत्वं इत्युक्तं ( जञ्जभ्यमानाधिकरणे ३।४।५ भाष्यकृद्भिः ) । वा. ३।७।१।१ पृ. १०७४. * प्रकरणस्य इतिकर्तव्यताकाङ्क्षालक्षणत्वम् । सु. पृ. १०५३. * प्रकरणस्य कथम्भावस्य ( इतिकर्तव्यतारूपात् ) इत्थम्भावादन्येन नास्ति संबन्धः । वा. ३।४।५।१५ पृ. ९४६. * प्रकरणस्य क्रमेण बाधः । 'दब्धिर्नामाऽसि' इति मन्त्रं आग्नेयादिष्वपि विनियुञ्जानं प्रकरणं उपांशुयाजमात्रे विनियुञ्जानेन यथासंख्याऽऽम्नानक्रमेण बाध्यते । बाल. पृ. १४६. * प्रकरणस्य क्रमाद्यपेक्षया प्राबल्यम् । वि. ३।३।१०. * प्रकरणस्य युगपत् सर्वाङ्गग्राहिता । सु. पृ. ७१४. * प्रकरणस्य लिङ्गापेक्षया अर्थविप्रकर्षः— यावच्च प्रकरणेन एकवाक्यत्वं कल्प्यते, तावत् लिङ्गेन श्रुतिः । तथा यावत् इतरत्र प्रकृताग्न्यादिप्रकाशनसामर्थ्यम्, तावदिह विनियोगः इति बाधः । पूषानुमन्त्रणादिषु । वा. ३।३।७।१४ पृ. ८३६, * प्रकरणस्य वस्तुनि अक्रियात्मके व्यापाराभावः । २।२।६।१९ पृ. ५१९, * प्रकरणस्य वाक्यं बाधकमिष्टमेव । २।३।११।२४ पृ. ६१३. * प्रकरणस्य वाक्येन न बाधः सामिधेनीसाप्तदश्यपाञ्चदश्यविषये । भा. ३।६।२।९.

* प्रकरणस्य श्रुतिलिङ्गवाक्यैः सह विरोधाविरोधौ संप्रधार्येते ( ३।३।८ इत्यतः ३।६।६ इत्यन्तम् ) । **वा. ३।३।८।१५ पृ. ८६२.** * **प्रकरणयोर्विरोधे** ( शेष्यनेकत्वे ) अभिक्रमणादेः महाप्रकरणात् दर्शपूर्णमासाङ्गत्वप्रसक्तौ प्रयाजाङ्गत्वं अवान्तरप्रकरणात् । शेषानेकत्वे तु यत्रानेकसमुदाये महाप्रकरणात् एकधर्मप्राप्तिः अवान्तरप्रकरणाच्च तद्विरुद्धधर्माणां तादृशस्थलमूह्यम् । **कौ. ३।३।७।१४ पृ. ३६३.** * प्रकरणयोर्विरोधे अवान्तरप्रकरणं महाप्रकरणात् बलीयः । ' अभिक्रामं जुहोति ' इत्युदाहरणम् । महाप्रकरणेन हि अस्य दर्शपूर्णमासार्थता । अवान्तरप्रकरणेन तु प्रयाजार्थता । तच्च बलीयः । तत्र हि प्रत्यासत्तेः अननुभूते महाप्रकरणसंस्पर्शे पूर्वतरं वाक्यस्थानीयः संबन्धोऽवकल्पते । **वा. ३।३।७।१४ पृ. ८४०,** * **प्रकरणानां** उत्पत्तिदेशानतिरेकः । ३।६।७।१८ पृ. १०४३. * **प्रकरणे** अर्थवति संजाते न निराकाङ्क्षाणां आकाङ्क्षा शक्या उपपादयितुम् । **भा. ३।३।७।१४ पृ. ८५३.** * ' प्रकरणे च संभवन्नपकर्षो न कल्प्यते विध्यानर्थक्यं हि तं प्रति ' इति औदुम्बराधिकरणस्थे सूत्रे भाष्यकृता ' यो विदग्धः स नैर्ऋतः ' इति दर्शपूर्णमासप्रकरणाधीतं वाक्यमुदाहृत्य विधिपक्षे तु यत्र नैर्ऋतः तत्र विदग्धता नीयेत, तथा सति प्रकरणं बाध्येत इति क्रियाविधिर्निरस्तः इति क्रियाविधिसरूपोऽयमर्थवादः ' यो विदग्धः स नैर्ऋतः ' इत्यादिः । **बाल. पृ. ५५.** * प्रकरणे हि स्वार्थपरिपूर्णानामङ्गाङ्गिवाक्यानां उपकार्योपकारकत्वाकाङ्क्षामात्रं दृश्यते । वाक्ये तु प्रत्यक्षः संबन्धः । **वा. ३।३।७।१४ पृ. ८३३.**

**प्रकरणाधिकरणम्** । प्रकरणं विनियोजकम् ॥

**असंयुक्तं प्रकरणादितिकर्तव्यताऽर्थित्वात् । ३।३।४।११॥**

**भाष्यम्—** उक्तानि विनियोगकारणानि श्रुतिर्लिङ्गं वाक्यमिति । श्रुतिः ' ऐन्द्या गार्हपत्यम् ' इति द्वितीया विभक्तिः । लिङ्गं मन्त्रेषु वचनसामर्थ्यम् ' बर्हिर्देवसदनं दामि ' इति । वाक्यम् ' अरुणया क्रीणाति ' इति । अथ किमेतावन्त्येव विनियोगकारणानि ? नेत्युच्यते । किमपरं कारणमिति प्रश्नेनैवोपक्रमः । भवति च प्रश्नेनैवोपक्रमः । यथा का नामेयं नदी, को नामायं पर्वतः, किमिदं फलमिति । तदुच्यते । असंयुक्तं प्रकरणादितिकर्तव्यताऽर्थित्वात् । यदसंयुक्तं श्रुत्या लिङ्गेन वाक्येन वा, तत् प्रकरणात्, इतिकर्तव्यताऽर्थित्वात् । यदितिकर्तव्यताऽऽकाङ्क्षिणः संनिधौ पूरणसमर्थमुपनिपतति यत् वचनं तत् तेन प्रकृतेन सहैकवाक्यतां याति । तस्मात् प्रकृते विनियुज्यते । किमिहोदाहरणं किं च प्रयोजनमिति । दर्शपूर्णमासौ प्रकृत्य श्रूयते — ' समिधो यजति ' ' तनूनपातं यजति ' ' इडो यजति ' ' बर्हिर्यजति ' ' स्वाहाकारं यजति ' । तानि तत्रैव प्रकरणसामर्थ्यात् विनियुज्यन्ते, नाग्निहोत्रे ज्योतिष्टोमे वा ।

**वा—** एवं तावत् श्रुतिलिङ्गवाक्यानि प्रधानत्वेन संकीर्णविविक्तविषयाणि प्रत्युदाहरणम् ( उदाहरणे उदाहरणे ) व्याख्यातानि । तत्र विधिविनियोगाभिधानात्मिकायाः श्रुतेः ( विधात्री विनियोक्त्री अभिधात्री इति त्रिरूपायाः श्रुतेः ), विनियोगसामर्थ्यात्मकस्य च लिङ्गस्य, केवलपदप्रयोगाभावात् पदान्तरसंनिधेः अवश्यं भावित्वात् वाक्यं अन्तर्गतप्रायमेव इति न साक्षात् ग्रहणेन सूत्रितम् । अथवा ' वेदो वा प्रायदर्शनात् ' इति उपक्रमोपसंहारवशेनैव वेदधर्मत्वावधारणात् इदमेव वाक्यविनियोगसूत्रं इति न पूर्वान्तर्गतिमात्रेण वाक्यस्य विनियोजकत्वं व्याख्येयम् । यत्तु भाष्यकारेण ' अरुणया ' इत्युदाहृतम्, शक्यं तत्रापि ऐन्द्रीवत् तृतीयाश्रुतिरेव विनियोजिकेति वक्तुम् । अथ क्रियामात्रसंबन्धे श्रुत्या कृते विशेषसंबन्धो वाक्येन इत्यभिप्रायः । स ऐन्द्र्यामपि तुल्यः । तत्रापि हि ऐन्द्र्या इति उपस्थातव्यमात्रापेक्षणात् ' गार्हपत्यम् ' इति च साधनमात्रापेक्षित्वात् विशेषसंबन्धो वाक्येनैव । तस्मात् उभयत्रापि तदन्तर्गतिः शक्या दर्शयितुम्, इति उभयोः श्रुतिवाक्ययोः उभयमुदाहरणम् । इदानीं बलाबलचिन्ता प्रत्यासन्ना, इति उत्तराण्यपि त्रीणि प्रमाणानि स्वरूपेण विनियोगसामर्थ्येन च दर्शयति । तत्र प्रकरणं विनियोगाज्ञानसंशयविपर्ययाणामन्यतमेन उपन्यस्यति स्म । यावच्च अन्यत्र कथ्यते, तावदज्ञानं भवति । अथवा सदपि प्रसङ्गाभावान्नाख्यातं स्यादिति संदेहः । अथवा नैव अक्षरश्रवण-

तत्सामर्थ्यानुसरणकाङ्क्षित–योग्यार्थ–पदान्तरसंनिधानेभ्यः अन्यः शब्दप्रकारोऽस्ति। तस्मान्न प्रकरणादीनि प्रमाणान्तराणि। इति प्राप्ते, अभिधीयते । '**अविच्छिन्ने कथम्भावे यत् प्रधानस्य पठ्यते । अनिर्ज्ञातफलं कर्म, तस्य प्रकरणाङ्गता ॥**' दर्शपूर्णमासाभ्यां स्वर्गं साधयेत्। कथम्? इत्येतस्यामाकाङ्क्षायां अविच्छिन्नायां अश्रुतप्रयोजनानि कर्माणि पठ्यन्ते 'समिधो यजति' 'तनूनपातं यजति' इत्येवमादीनि। ततश्च दर्शपूर्णमासयोः कुतश्चित् अनुग्रहसिद्धया भवितव्यम् । प्रयाजादीनां च केन चित् साध्येन (भवितव्यम्)। न च दर्शपूर्णमासयोः सिद्धमुपकारं स्वपदस्ववाक्यस्वप्रकरणप्रकरणान्तरेषु प्रत्यक्षादिपञ्चकेन (प्रत्यक्षानुमानोपमानशब्दानुपलब्धिभिः) प्रत्यक्षादिपञ्चकावगतेन वा (वैदिक–)शब्देन उपलभामहे। तथा प्रयाजादीनां अवश्यं चोभयेनापि कुतश्चित् भवितव्यम्। यदि तु केन चित्प्रकारेण नावगमिष्यामः, ततो नास्तीत्यवगमिष्यामः। अस्ति च प्रमाणं प्रकरणम्। नहि अत्यन्तसंनिकर्ष एवैकं संबन्धकारणम् । यथायथा हि संनिकृष्टं न लभ्यते, तथा२था विप्रकृष्टे वेदशक्तिः संचरति। तदिह उपकारककल्पनाप्रमाणं संनिकृष्टमलब्ध्वा विप्रकृष्टमपि अनुज्ञातं इत्युभयाकाङ्क्षावशेनैव विज्ञायते 'यं दर्शपूर्णमासौ उपकारमाकाङ्क्षतः, स नूनमेभिः प्रयाजादिभिः क्रियते । यच्च प्रयाजादयः प्रयोजनमपेक्षन्ते, तत् दर्शपूर्णमासोपकारः' इति। नहि उभयोरपि अन्यत् संनिकृष्टतरमस्ति । यच्चान्यत् कल्प्यते, तस्यान्येन सह संबध्य निराकाङ्क्षीभूतस्य नेह संबन्धाकाङ्क्षा विद्यते। तेन न प्रयाजादीनां विश्वजिदादिवत् फलकल्पनम्। नापि दर्शपूर्णमासफलानुषङ्गः । उभयाकाङ्क्षालक्षणसंबन्धाभावे हि अन्यतराकाङ्क्षालक्षणः संबन्धो गृह्यते, न संभवे। तस्मात् नष्टाश्वदग्धरथवदेव परस्परनियमः सिद्धः। असंयुक्तग्रहणं किमर्थम्? श्रुतिलिङ्गवाक्यैः संयुक्तानां द्वित्वबहुत्वयुक्तप्रतिपद्विधानपूषादिशब्दतच्छेषाणां प्रकरणविनियोगनिवृत्त्यर्थम्। प्रकरणविरोधिना वा असंयुक्तमिति द्रष्टव्यम्। अविरोधिसंयुक्तानां 'व्रीहीन् प्रोक्षति' 'बर्हिर्देवसदनं दामि' 'अरुणया क्रीणाति' इत्येवमादीनां प्रकरणस्थव्रीहिबर्हिःक्रयैः संबध्यमानानां प्रकरणसमावेशोपपत्तेः। तत्तु सामर्थ्यसिद्धत्वात् सूत्रकारेण नोक्तम्।

शा–– (ननु 'स्वर्गकामो यजेत' इति वाक्यस्य 'स्वर्गकामस्य यागविषयकं कार्यम्' इत्यर्थः। यागस्य च कार्ये विषयत्वं कार्यविशेषणीभूतकृतिविषयत्वमेव। ततश्च यागविषयैव कृतिः शब्दार्थः, न तु यागकरणिका स्वर्गकृतिः। अतः उक्तरीत्या आकाङ्क्षोपपादनमयुक्तम्, इति प्राभाकरानुसारेण आशङ्क्य निरस्यति–) ननु 'यजेत' इति यागविषयैव कृतिः शब्देनोच्यते। (उत्तरं–) किमिदं विषयत्वम्? साध्यत्वमिति चेत्, न। स्वर्गो ह्यत्र साध्यतया संबध्यते, न यागः। नहि एवं संभवति स्वर्गं कुर्यात् यागमिति। (स्वर्गमिति स्वरीत्योक्तम्। प्राभाकररीत्या तु स्वर्गपदमपूर्वपरम्)। अथ यागविषयया कृत्या स्वर्गं कुर्यादिति, स्यादेवं यदि प्रत्ययेन कृतिद्वयमुपात्तं स्यात्। कुर्यात् इत्येतावत्तु प्रत्ययार्थः। 'कृत्या साधयेत्' इति कृत्यन्तरारोपेण व्याख्यातॄणामर्थकथनमात्रम्। कुर्यात् इत्यस्मिंश्च स्वर्गस्य साध्यत्वात्। न यागस्य साध्यत्वम्। अथ विशेषणत्वं विषयत्वम्, सत्यं विशेषणमेव यागः, केन संबन्धेनेति निरूपयामः। न तावत् नीलोत्पलादिवत् ताद्रूप्येण, यागभावनयोर्भेदात्। अतः कारकत्वेन सोमादिवत् यागस्य क्रियाविशेषणत्वम्। तत्र च साध्यत्वाभावात् साधनतयैव संबन्धः। तेन यागकरणिका स्वर्गकृतिरेव शब्दार्थः, न तु यागानुष्ठानम्। एवं च नाम्ना सामानाधिकरण्यं संभवति, नान्यथा। अतः किंरूपेयं कृतिः इति अस्त्यपेक्षा। तत्र तदाकाङ्क्षाऽनुवृत्तौ 'समिधो जयति' इति वचनात् एवं ज्ञायते 'अयमसौ व्यापारः, येन यागात् स्वर्गो भवति' इति। संभवति च समिदादिक्रियाणां यागविषयत्वमदृष्टद्वारम्, अवघातादीनां तु दृष्टद्वारम्। अननुष्ठितश्च यागः असत्त्वान्न फलं साधयितुं क्षमः, इत्यर्थात् यागानुष्ठानं गम्यते, न शब्दात्। तेनायं वाक्यार्थः 'यागेन स्वर्गं कुर्यात्'। कथं केन प्रकारेण (व्यापारेण) यागात् स्वर्गो भवतीति, तत्राह 'समिधो यजति, व्रीहीनवहन्ति' इत्यादि। तदयमर्थो भवति, समिदादिभिः अदृष्टद्वारम्, अवघातादिभिश्च द्रव्यदेवतासंस्कारद्वारम्, द्रव्यदेवतेन च

स्वरूपसंपादनेन यागे व्याप्रियेत । एवंभूतोऽसौ व्यापारः, येन यागात् स्वर्गो भवति, यागः फलारम्भस्याभिमुखो भवति । कार्यारम्भाभिमुख्यमेवोपकारः, इति समिदादेः क्रतूपकारः फलम् । (प्राभाकरः—) ननु एवं समिदादिभिः अदृष्टं कुर्यात् इत्यत्रापि क्रियाविशेषापरिज्ञानात् आकाङ्क्षा स्यात् । (उत्तरं—) कस्य चैतदनिष्टम् । अत एव अवान्तर-प्रकरणमिष्यते । ननु एवं (प्रयाजादिषु देवताराहित्यात्) सौमिकधर्मातिदेशः स्यात् । (तत्राह—) भवन्मते वा पितृयज्ञस्य साधिकारस्य किमिति सौमिकधर्मातिदेशो न भवति ? वाचनिककालबाधप्रसङ्गात् इति चेत्, इहापि समानम् । अपि च सती अप्याकाङ्क्षा (निवर्तते इत्युत्तरेणान्वयोऽस्य), वाचनिकेन जौहवाज्यादिद्रव्येण तत्संस्कारैश्च, मान्त्रवर्णिकया च देवतया, वेदिबर्हिरग्नी-ध्मादिभिः तत्संस्कारैश्च अङ्गप्रधानसाधारणैः, 'अभि-क्रामं जुहोति' 'समानत्र (समाने प्रदेशे) होतव्याः' इत्यादिभिश्च वाचनिकैरङ्गैः निर्वर्तते । इति न सौमिक-धर्मातिदेशादि आशङ्कनीयम् । सर्वे हि अग्न्यन्वा-धानादयः संनिपातिनः अङ्गप्रधानसाधारणाः, तेन उपांशु-याजवत् प्रयाजादयोऽपि कृत्स्नविधानाः । न च कृत्स्न-विधानेषु अतिदेशोऽस्ति । संनिपत्योपकारकसामग्री तु कृत्स्नविधानता अष्टमे वक्ष्यते ('प्रवृत्तत्वादिष्टेः०' ८।१।३।३) । अत एव हि पितृयज्ञस्य अपूर्वत्वम् । अन्यथा साधिकारत्वात् दुर्वारः सोमधर्मातिदेशः स्यात् । तस्मा-दस्ति इतिकर्तव्यताऽऽकाङ्क्षा । तदनुवृत्तिश्च प्रकरणम् ।

**'अतः प्रधानवाक्यस्य प्रकाराकाङ्क्षतावशात् ।**
**फलाकाङ्क्षं प्रयाजादि तदङ्गत्वं प्रपद्यते ॥'**

**सोम**—सूत्रार्थस्तु—श्रुत्याद्यसंयुक्तमपि प्रकरणात् विनियोज्यम्, प्रधानस्य इतिकर्तव्यताऽऽकाङ्क्षित्वात् प्रकरणसद्भावादिति ।

**वि**— 'न क्रत्वङ्गं प्रयाजादि क्रत्वङ्गं वा, न चाङ्गता । प्रक्रियाया अमानत्वान्नैराकाङ्क्ष्येण वाक्ययोः ॥, प्रयाजादेः फलेऽपेक्षा कथम्भावेऽपि च क्रतोः । तेन प्रकरणाम्नानं तस्मादङ्गाङ्गिता तयोः ॥'

**भाट्ट**—एवं वाक्ये निरूपिते प्रकरणमिदानीं निरूप्यते । ननु किमिदं प्रकरणं नाम ? न तावत् संनिधिमात्रम्, गोदोहनादेरपि दर्शाङ्गत्वापत्तेः । अथ साकाङ्क्षत्वमात्रम्, विकृतेरपि प्राकृताङ्गविषये तदापत्तेः । नापि साकाङ्क्षत्वे सति संनिधिपठितत्वम्, उपहोमादावपि तदापत्तेः । अथ उभयाकाङ्क्षत्वविशिष्टं तत्, सिद्धरूपाणां मन्त्रादीनामपि तदापत्तेः । प्रयाजादीनामनाकाङ्क्षितत्वेन तदनापत्तेश्च । अथ दर्शपूर्णमासयोः प्रकारान्तरेण प्रयाजा-नाकाङ्क्षत्वेऽपि इतिकर्तव्यतात्वेन तदाकाङ्क्षोपपत्तेर्युक्तं प्रकरणमिति चेत्, किमिदं इतिकर्तव्यतात्वं नाम ? न तावत्फले अपूर्वे वा सहकारित्वम्, प्राधान्यापत्तेः, प्रयाजा-दिवदाग्नेयस्यापि विकृतावतिदेशापत्तेश्च । नापि करण-जनकत्वम्, प्रयाजादिषु बाधात् । इति चेन्न । संनि-हितस्य फलवतोऽनवगताङ्गताकपदार्थविषये इतिकर्तव्यता-त्वेनापेक्षणस्यैव प्रकरणपदार्थत्वात् । अत्रासंनिहितज्योति-ष्टोमाङ्गत्वस्य प्रयाजादौ वारणाय आद्यं विशेषणम् । अनु-याजाद्यङ्गत्ववारणाय फलवतः इति द्वितीयम् । प्रोक्षणादेः श्रुत्यादित्रयविनियुक्तस्य प्रकरणविषयत्ववारणाय तृतीयम् । सिद्धरूपस्य लिङ्गाविनियुक्तमन्त्रादेः प्रकरणाविषयत्व-सिद्ध्यर्थं इतिकर्तव्यतात्वेनेति चतुर्थम् । सर्वत्र ह्यशक्तस्य करणत्वायोगात् शक्तिः करणनिष्ठा समस्तीति निर्विवादम् । सा च कारणताऽवच्छेदिका कारणतारूपा वा इत्यन्य-देतत् । तस्याश्च जन्यवृत्तित्वेन जन्यत्वमेवेत्युत्सर्गः । सामग्र्यलाभे परं अनादितेत्यविवादः । तदत्र तत्सामग्र्य-पेक्षैव इतिकर्तव्यतापेक्षा । तया च संनिहितप्रयाजादे-रङ्गत्वबोधः, प्रयाजादेस्तत्सामग्रीत्वात् । सिद्धरूपस्य च द्रव्यादेर्व्यापारावेशं विना तत्सामग्रीत्वासंभवात् तया अग्रहणम् । अत्र च प्रधानगतेतिकर्तव्यताकाङ्क्षायाः प्रयाजादिगत-प्रयोजनाकाङ्क्षासहकृतायाः तत्तद्वाक्यस्य स्वस्वावान्तरवाक्यार्थे समाप्तस्यापि महावाक्यैकदेशत्वरूप-पारिभाषिकपदसंनिध्याख्यवाक्यकल्पनया निरुक्तपदानां च स्वार्थोपस्थितिद्वारा तन्निष्ठाश्रुतपदान्तरकल्पनाऽनुकूल-योग्यतारूपलिङ्गकल्पनया च 'समिधो यजति इत्थं दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेत' इति अश्रुतेतिकर्तव्यता-त्ववाचिपदरूपश्रुतिकल्पनया च इतिकर्तव्यतात्वरूपकृति-कारकत्वे प्रामाण्यम् । संभवति हि प्रयाजादीनामपि

उक्तशक्तिजनकत्वेन भावनायामन्वयः । तस्मात् सिद्धं प्रकरणं नाम चतुर्थं प्रमाणम् ।

यत्तु अत्र **पार्थसारथिना** अननुगृहीतस्यापि कर्मादेः संयोगविभागारम्भकत्वदर्शनात् नेदं प्रकरणम्, अपि तु व्यापारसामान्यस्य आख्यातार्थत्वमङ्गीकृत्य तद्विशेषापेक्षैवेतिकर्तव्यतापेक्षा, तयैव च प्रयाजादीनां तत्त्वेनान्वयः इति, तदेव च प्रकरणमित्युक्तम् । **तन्न** । तथात्वे निरुक्तप्रकरणस्य तदघटिताङ्गत्वबोधकत्वानुपपत्तेः, प्रयाजादेर्भावनात्वे तस्यैव फलसंबन्धापत्तेश्च । अस्मन्मते तु यत्नस्यैव भावनात्वात्तस्य च यागजनकत्वेनैव कृतार्थत्वान्न तदापत्तिरिति वैषम्यम् । किंच एवं प्रधानस्य स्वतो निराकाङ्क्षस्य अन्यतराकाङ्क्षयैव प्रकृतौ प्रयाजाद्यङ्गत्वापत्तिः, विकृतौ च भावनाया विशेषापेक्षायामक्लृप्तोपकारैरपि संनिहितैरुपहोमैरेव निराकाङ्क्षत्वोपपत्तेर्नातिदेशकल्पनाऽऽपत्तिः इत्यादि कौस्तुभे विस्तरः ।

**मण्डन**— ' प्रमा प्रकरणं भवेत् । ' ( प्रमा प्रमाणम् । )

**शंकर**— ' प्रक्रिया विनियोक्त्र्यपि । ' ( प्रक्रिया प्रकरणमपि विनियोक्त्री इत्यन्वयः । ) ।

* व्यापारानाविष्टस्य द्रव्यस्य तद्विशेषत्वायोगात् न तत्त्वेन ग्रहणं इति विशेषोऽपि **प्रकरणाधिकरणे** निरूपयिष्यते । **कौ.** २।१।२।५ पृ. ४३–४४. * श्रुत्यादिसंयुक्तानामपि प्रकरणविनियोज्यत्वं प्रकरणाधिकरणे एवोक्तं तत एवावगन्तव्यम् । **सोम.** ९।१।१.

* भावनायाः स्वजन्यकरणेन फले जन्यमाने अनुग्राहकापेक्षायां **प्रकरणाधिकरणन्यायेन** प्रयाजादि इतिकर्तव्यतात्वेन अन्वीयते । **कौ.** २।१।२।५ पृ. ४३.

* **प्रकरणाधीतेन** अनारभ्याधीतं बाध्यते, अप्राप्तबाधः । **वा.** ३।३।७।१४ पृ. ८६०.

* **प्रकरणाधीतसामिधेनीपाञ्चदश्य**– अनारभ्याधीतसाप्तदश्यबलन्यायः । **वा.** ३।६।२।९.

* गोदोहनेन पशुकामस्य इति षष्ठी संबन्धमात्रवाचिनी, हीषादिन्यायेन सर्वकामवाक्यप्राप्तपशुप्रयोजकप्रणयनजनकत्वसंबन्धेनैव **प्रकरणानुरोधेन** पशूद्देशेन गोदोहनं विधीयते । इति प्राप्ते, दुर्बलप्रकरणानुरोधेन परम्परासंबन्धाङ्गीकारे प्रमाणाभावात् साक्षादेवोद्देश्यत्वं पशूनाम् । **भाट्ट.** ४।१।२ वर्णक ३.

* **प्रकरणान्तरं** अनुपादेयसंनिधिसचिवः असंनिधिः इति केचित् । तन्न ' वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति ' इत्यत्र अव्याप्तेः । किन्तु ' विधेः उपपदार्थसंक्रमासंभवेन सहकृतः असंनिधिः ' इति । नात्र असंनिधिरिव स्वरूपतः अनुपादेयसंनिधिः प्रवेश्यः किन्तु तत्कार्यं विधेः उपपदार्थसंक्रमासंभवः । स च यथा अनुपादेयसंनिधिना भवति, एवं उपादेयद्वयसंनिधिनापि भवति । **बाल.** पृ. ८८, * प्रकरणान्तरं कर्मभेदकं वैदिकोपदेशरूपं शब्दप्रमाणम् । पृ. ८. * प्रकरणान्तरं धर्मभेदे प्रमाणम् । **मणि.** पृ. १३. * प्रकरणान्तरं नित्याग्निहोत्रात् मासाग्निहोत्रस्य भेदे हेतुः । वि. ३।३। ११. * **प्रकरणान्तरस्य** भेदकत्वे फलादि अनुपादेयमपि सहकारि, न तन्निरपेक्षं प्रकरणान्तरं भेदकम् । **सु.** पृ. ९५६. * **प्रकरणान्तरे** प्रयोजनान्यत्वं इत्यधिकरणे कर्मभेदप्रतिपादनम् । **आभरणं.** ३।३।१४।२५ ब्र. सू.

⌛ **प्रकरणान्तरे प्रयोजनान्यत्वम्** । २।३।११। २४ ॥

कुण्डपायिनामयने ' मासमग्निहोत्रं जुहोति ' इति श्रूयते । अत्र नित्येऽग्निहोत्रे मासरूपः कालो विधीयते इति पूर्वपक्षे सिद्धान्तमाह । नित्याग्निहोत्रप्रकरणात् अन्यत् कुण्डपायिनामयनस्य प्रकरणं प्रकरणान्तरम् । तत्र प्रकरणान्तरे पठ्यमाने मासाग्निहोत्रवाक्ये प्रयोजनान्यत्वम् । प्रयुज्यते अनुष्ठीयते इति प्रयोजनं कर्म । प्रयोजनस्य अन्यत्वं प्रयोजनान्यत्वम् । अप्रकृताभिधानात् मासाग्निहोत्रस्य नित्याग्निहोत्रात् कर्मान्तरत्वमिति सिद्धान्तः । मासाग्निहोत्रवाक्ये तु मासविशिष्टं अग्निहोत्रसंज्ञकं कर्मान्तरमेव विधीयते । अथवा पूर्वकर्मासंनिधानापरपर्याये प्रकरणान्तरे सति मासाग्निहोत्रादिविधेः अप्रकृतविषयतया प्रयोजनान्यत्वं कर्मभेदः सिध्यति इत्यर्थः । **के.**

⌛ **प्रकरणान्तरे प्रयोजनान्यत्वम्** । २।३।११। २४ ॥

कौण्डपायिनामयने श्रूयते ' मासमग्निहोत्रं जुहोति ।

मासं दर्शपूर्णमासाभ्यां यजेत' इत्येवमादि। तत्र संदिह्यते अग्निहोत्रे नियतयोश्च दर्शपूर्णमासयोः मासो विधीयते कालः, अथ नियतात् अग्निहोत्रात् नियताभ्यां च दर्शपूर्णमासाभ्यां कर्मान्तरं इति। पञ्चसु भेदप्रमाणेषु पर्यवसितेषु इदानीमवसरप्राप्तः प्रकरणान्तरनिबन्धनः कर्मभेदः प्रतिपाद्यते। अत्रायमभिप्रायः पूर्वपक्षिणः— अग्निहोत्रदर्शपूर्णमासनाम्नोः प्रसिद्धत्वात् समभिव्याहृतस्य जुहोतेर्यजतेश्च तदर्थत्वे सेचनवत् प्रकरणान्तरे श्रुतत्वेन अर्थान्तरविषयत्वम्। लोकप्रसिद्धार्थानां अङ्गदादिशब्दानामपि वेदे अर्थान्तरप्रसङ्गात्। तेन यत्र लोकप्रसिद्धार्थस्य प्रत्यभिज्ञायमानस्य वेदे नार्थान्तरत्वम्, तत्र वेदे एव प्रकरणान्तरमात्रेण अर्थान्तरमिति। कुत एतत्? तदुक्तम् '**अग्निहोत्रादिशब्देन पूर्वं कर्मावबोधितम्। न विप्रकर्षमात्रेण भेदरूपं प्रपद्यते ॥**' इति (वा. पृ. ६१३)। अतः पूर्वस्मिन्नेव कर्मणि जुहोतियजतिभ्यामनूदिते वाक्येन प्रकरणं बाधित्वा मासाख्यो गुणो विधीयते। **न च** यावज्जीवश्रुतिविरोधात् मासरूपः कालो विधातुं न शक्यते इति **वाच्यम्**। काम्यप्रयोगविषयत्वेन अविरोधात्। अथवा यावज्जीवाधिकारेऽपि समर्थासमर्थविषयतयाऽपि व्यवस्थितविकल्पेनैव उपपत्तेः।

अत्रैके सिद्धान्तमेवमुपवर्णयन्ति 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहुति' इति वाक्यमिदम्। अत्र उपसदुत्तरकालत्वं कर्तृबहुत्वं मासश्चेत्यनेके गुणाः श्रूयन्ते। न चैते गुणा नैयमिकाग्निहोत्रे सन्ति। न च प्राप्ते कर्मणि अनेकगुणविधानं संभवतीति अनेकगुणविशिष्टकर्मान्तरविधानमेवैतत्। **न चैवं** सति गुणादेव भेदः, न प्रकरणान्तरादिति **वाच्यम्**। यतः अप्रकृतत्वं हि प्रकरणान्तरत्वम्। अप्रकृतत्वं च बुद्धिविच्छेदलक्षणम्। यदत्र नाम्नो बुद्धिसंनिधापकत्वम्, तत् प्रतिपक्षभूतानेकश्रुतेर्निरस्तम्। निरस्ते च तस्मिन् प्रतिपक्षभूतं प्रकरणान्तरमेव भेदकमिति। **न च** 'मासं दर्शपूर्णमासाभ्याम्' इत्यत्र अनेकगुणाभावात् नायं सिद्धान्तस्तस्यापीति **वाच्यम्**। यतो नात्र पूर्वपक्षसिद्धान्तयोर्मासरूपकालान्वयो होमस्य दर्शपूर्णमासयोर्वा। पूर्वत्र सायंप्रातःकालावरुद्धत्वात् उत्तरत्र पौर्णमास्यमावास्याकालावरुद्धत्वाच्च कालान्तरापेक्षाभावात्। किं तर्हि? उपसदन्वयः। तेन 'मासं दर्शपूर्णमासाभ्याम्' इत्यत्रापि अनुषङ्गेण उपसदन्वयित्वादेवमन्वयः मासमुपसद्भिश्चरित्वाऽग्निहोत्रं जुहुति, मासमुपसद्भिश्चरित्वा दर्शपूर्णमासाभ्यां यजेत इति। तेनोदाहरणद्वयेऽपि प्रकरणान्तरमेव भेदकमिति। न च वाच्यं एवं सति गुणादपि भेदसिद्धेः किं प्रकरणान्तरेणेति। यतो नानधिगतगन्तृ प्रमाणम्, किन्तु अनपेक्षम्। अस्ति चानेकगुणश्रुत्यभावेऽपि 'फलं चाकर्मसंनिधौ' इत्यत्र अप्रकृतत्वमात्रेण कर्मभेददर्शनम्। अतः प्रमाणान्तरं सिद्धमिति।

तदेतद्बालजल्पितम्, एवं सति गुणस्यैव भेदकत्वापत्तेः। तथाहि 'आग्नेयोऽष्टाकपालो भवति' इत्यादिषु प्राप्ते कर्मणि अनेकगुणविधानस्यैव कर्मभेदकत्वं दृष्टम्, न तु बुद्धिविच्छेदकत्वम्। तदत्र प्रतीयमानादृष्टसामर्थ्यपरित्यागेन दृष्टसामर्थ्यकल्पनया बुद्धिविच्छेदमात्रोपक्षीणमनेकगुणविधानं व्यवस्थाप्यमानं अनात्मवतामेव मनसि परं शोभते। किञ्च यत्र प्रकरणसंनिहितेऽपि कर्मणि अनेकगुणविधानस्य भेदकत्वम्, तत्र जघन्यनामधेयमात्रोपनीते कर्मणि गुणस्य बुद्धिविछेदमात्रहेतुत्वं न कर्मभेदकत्वमिति हास्यास्पदमेव। किंच कथं 'मासं दर्शपूर्णमासाभ्यां यजेत' इत्यत्र अनुषङ्गेणोपसत्संबन्धः, आकाङ्क्षाया अभावात्। न चोत्पत्तिशिष्टपौर्णमास्यमावास्याकालनिराकाङ्क्षे कर्मणि मासाख्यकालासंबन्धात् मासपदाकाङ्क्षया संबन्धः, यतस्तिथ्यन्तरनियमः तिथ्यन्तराकाङ्क्षानिवर्तको भवति। ननु मासादितद्विजातीयकालाकाङ्क्षानिवर्तकत्वेन 'मासं दर्शपूर्णमासाभ्यां यजेत' इत्यन्वयोपपत्तेः अनुषङ्गाभावेन अनेकगुणविधानाभावात् नोदाहरणत्वं दर्शपूर्णमासवाक्यस्येति। न च प्रवेशासंभवोऽपि, क्रियाद्वययोगात्, क्त्वाश्रुत्या उपसद्विनियोगात्, जुहोतिना च मासविधानादिति। किञ्च भाष्यकारश्रुतमपि एकगुणफलमनादृत्य 'मासमग्निहोत्रं जुहुति' इत्येतावन्मात्रमुदाहृतत्वात्, तदपि नाकलितं भाष्यं निद्रालुनेति यत्किंञ्चिदेतदिति यथावार्तिकमेव सिद्धान्तोऽभिधीयते।

सर्वत्र द्विविधः खलु कर्मणः संबन्धी गुणो भवति उपादेयोऽनुपादेयश्च। तत्र उपादेयस्य पूर्वावगतयथा-

सिद्धयच्छब्दोपबद्धोद्देश्यकर्मतन्त्रतया विधियोग्यत्वात् दूरस्थकर्मानुवादेनापि यत्र कर्म तत्रायं कर्तव्यः इत्येषा वचनव्यक्तिः। अनुपादेयस्य स्वतन्त्रस्य यथासिद्धस्य इतरसंबन्धार्थं यच्छब्देनोपादानात् उद्देश्यत्वम्। तेनैषा वचनव्यक्तिः यत्रैष, तत्र कर्म कर्तव्यमिति। तदुक्तम्-- 'निमित्तफलसंस्कार्यकालदेशप्रभेदतः। गुणकर्मविधानार्थोऽनुपादेयतया स्मृतः॥' स चायमनुपादेयं प्रति कर्मविधिः देशकालौ प्रति प्रयोज्यत्वेन तयोः प्रयोगावच्छेदकत्वात् प्रयोगावच्छेदकत्वेनैव, यथा संस्कार्ये व्रीह्यादौ अवघातादि विनियुज्यते, यथा वा स्वर्गे दर्शपूर्णमासादि, तयोश्चिकीर्षितत्वेन कर्मण एव तत्र विनियुक्तत्वात्। निमित्तस्य तु विधिमात्रान्वयिनो नियोज्यविशेषणतामात्रम्, न तु कर्मणस्तत्र विनियोगः, कारकत्वेन अनाश्रयणात्, किन्तु तस्मिन् सति कर्तव्यमित्येतावन्मात्रम्। तेन यत्रैष तत्र कर्मेति सप्तम्यपि नाधिकरणपरा, किन्तु उपादेयानुष्ठानस्यानुपादेयतन्त्रतापरैव, फलनिमित्तयोर्व्यभिचारात्। तदेतयोः प्रयोगविनियोगयोः कर्मोत्पत्त्यपेक्षायां यदि तथाभूतस्यैव उत्पत्तिः प्रयोगविनियोगसापेक्षा, तदैकवाक्यता महाप्रकरणे संनिहिता समस्ति, तदा तदेवोत्पन्नं कर्म प्रयुज्यते विनियुज्यते चेत्यकर्मान्तरत्वम्। यथा 'समे दर्शपूर्णमासाभ्यां यजेत, पौर्णमास्यां पौर्णमास्या यजेत' इत्येवमादौ। यदा तु यथाभूतोत्पत्तिः संनिहिता नास्ति, तदा तस्यैवोत्पत्तिपरत्वात् कर्मान्तरत्वम्। न चेह कुण्डपायिनामयने तादृशहोमयागोत्पत्तिः संनिहिता समस्ति, इति कर्मान्तरत्वमेवेति। तदुक्तम्-'**उपादेयो गुणो यत्र भवेत्प्रकरणान्तरे। तत्राकर्मान्तरं युक्तमुद्देश्ये त्वन्यकर्मता॥**' इति (वा. पृ. ६१५)। न च वाच्यं अत्राप्यग्निहोत्रादिनाम्नैव उत्पत्त्युपस्थितेर्न कर्मान्तरत्वमिति। यतो जुहुतीत्यत्र असत्त्वभूतः पूर्वापरीभावापन्नो धात्वर्थः प्रतीयते। नामपदात्तु लिङ्गसंख्यायोग्यः सिद्धरूपः। अतो नानेन उत्पत्तिप्रत्यभिज्ञानम्। तदुक्तम्— '**धात्वर्थोऽपि यथाख्यातेऽसत्त्वभूतः प्रतीयते। सत्त्वाभिधायिना नाम्ना तादृङ्नैवोपनीयते॥**' इति (वा. पृ. ६१६)। न च नामसमभिव्याहृतस्य आख्यातस्य गुणभूतनामपारतन्त्र्यभावः, अनुपादेयकालानुरोधेन प्रकृतानुपस्थापकत्वादिति। किञ्च, नहि एकप्रसरयोर्नामाख्यातयोः एकेनोत्पत्त्युपस्थापनं अपरेण प्रयोगविनियोगयोरन्यतरविधानमिति प्रयोजनभेदः संभवति, किन्त्वेकार्थत्वमेव। तत्रापि हि आख्यातस्य वाक्यार्थीभूतभावनाऽभिधानेन प्राधान्यात् नाम्नस्तत्परतन्त्रत्वमेव। तदत्र विध्याख्यातसमभिव्याहृतस्य नाम्नो यथाविध्येव अर्थस्तावदवश्यं वर्णनीयः। विधेश्च प्रयोगपरत्वान्नाम्नोऽपि प्रयोगार्थत्वम्। न च तस्यैव सकृदुच्चरितस्य उत्पत्त्यर्थत्वमपीति उत्पत्तिविधिकल्पनया कर्मान्तरम्। 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादौ पुनरुत्पत्तेः प्रकरणप्रत्यभिज्ञानात् नामपदस्य प्रयोगैक्यपरत्वेन उभयपरत्वाभावान्नायं दोष इति।

यत्र तु प्रकरणान्तरेऽपि 'अतिरात्रश्चतुर्विंशः, प्रायणीयमहः, चत्वारोऽभिप्लवाः, षडहाः' इत्याद्यभिधाय 'ऋद्धिकामाः सत्रमासीरन्' इति श्रूयते, तत्र अतिरात्रादिशब्दानां पूर्वकर्मोपस्थापकत्वम्। अत्र सर्वत्र सर्वस्य विनियोजकाख्यातैकवाक्यतापन्नस्य पूर्वोपस्थितकर्मणो विनियोजकत्वमित्युपस्थापकविनियोजकशब्दभेदात् कर्मान्तरत्वम्। यदि तु तत्रापि अनुबन्धभूतयजतिधात्वर्थः श्रूयेत, तदा असत्त्वभूतत्वात् तस्यातिरात्रादिनामभिः प्रत्यभिज्ञानाभावात्तत्रापि स्यादेव कर्मान्तरत्वम्। तत्र आसीरन् उपेयुः इत्यत्र अनुतिष्ठेयुरित्यवगम्यमानकर्मान्तरम्, तथापि तु भावनोपस्थापकत्वाभावात् प्रकरणान्तरन्यायेन भावना भिन्नैव। सा च नामोपस्थापितपूर्वकर्मणैव विशेषिता फलसंबन्धिनीति निर्णीयते। तदुक्तम्– '**भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुतेः। नाम्ना हि तदुपादानमासनोपायिचोदिते॥**' इति (वा. पृ. ६१७)। 'सर्वेभ्यो दर्शपूर्णमासौ' 'सर्वेभ्यो ज्योतिष्टोमः' इत्यत्र अनारभ्याधीतत्वेऽपि अनुपादेयं प्रति उपादानेऽपि न कर्मान्तरत्वम्। एवं हि श्रूयते—'एकस्मै वा अन्या इष्टयः कामायाह्रियन्ते, सर्वेभ्यो दर्शपूर्णमासौ, एकस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः' इति। अत्र च अन्यशब्दार्थस्यैव पूर्वावगतप्रतियोग्यन्तरनिरूपणीयत्वात् भाविविनियोगसंदर्शनेन दर्शपूर्णमासज्योतिष्टोमापेक्ष एवायमन्यपदार्थ इति निश्चीयते। न च विनियोगवाक्यगतदर्शपूर्णमासापेक्ष एवायमन्य-

शब्दः, समानरूपस्यैवान्यशब्दार्थप्रतियोगित्वात्। न हि अन्यो ब्राह्मण इत्युक्ते प्रतियोगी शूद्रः प्रकाशते। किं तर्हि ? ब्राह्मण एव। तद्वदत्रापि अन्या इष्टयः अन्ये यज्ञक्रतव इति पूर्वावगतोपादानात्, पूर्वावगतप्रतियोगिनिरूपणीय एवायमन्यपदार्थः। तेन अन्यशब्दबलेनैव दर्शपूर्णमासज्योतिष्टोमोत्पत्तेरुपस्थितत्वात् 'सर्वेभ्यो दर्शपूर्णमासौ' 'सर्वेभ्यो ज्योतिष्टोमः' इत्येतयोः तत्तत्क्रतुफलविनियोगपरत्वेऽपि उत्पत्त्यन्तराक्षेपपरत्वाभावात् न कर्मान्तरत्वमिति। 'य इष्ट्या पशुना सोमेनाग्रयणेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा' इत्यत्रापि यच्छब्दोपबद्धयजिनैव पूर्वोत्पत्त्युपस्थापनादेव अकर्मान्तरत्वम्। 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यत्र तु स्वयमेव वार्तिककारपादैः ज्योतिष्टोमप्रकरणे श्रूयते इत्यभिधानात् प्रकरणान्तरेण भेदो नाशङ्कनीयः (?)। एवंकृते नाख्यातकालीनपूर्वकर्मावगतिः कृताऽपि नामधेयं बाधितुमुत्सहते। तस्मादनुपादेयं प्रति उपादानबुद्धिविच्छेदाभ्यां विशिष्टकर्मोत्पत्तेर्भेदसिद्धिः। अग्निहोत्रादिनामधेयं तु नाम्ना तद्धर्मातिदेशार्थं भाविगुणयोगनिरीक्षणेन गौणमेवाध्ययनविधिना स्वीकृतमिति न किञ्चिदनुपपन्नमिति।

**प्रयोजनम्**— पूर्वपक्षे प्रकृतिभूतस्यैव अग्निहोत्रस्य प्रकृतयोश्च दर्शपूर्णमासयोः मासमनुष्ठानम्। सिद्धान्ते तु शब्दप्रयोगे मासविशिष्टाग्निहोत्रादिकर्मान्तरानुष्ठानमिति। **सूत्रं तु**— प्रकरणान्तरे प्रकरणान्तरनिमित्तकं प्रयोजनान्यत्वं कर्मान्यत्वमित्यर्थः। **तौता.**

* ननु अविपरिवर्तमानक्रत्वन्तरोद्देशेन न कालो विधातुं शक्यते '**प्रकरणान्तरे प्रयोजनान्यत्वम्**' इति न्यायात् सत्यम्, इह तु 'एष वाव प्रथमो यज्ञो यज्ञानाम्' इति यज्ञशब्देन विपरिवर्तमाना यज्ञाः अग्निष्टोमोत्तरकाले विधीयन्ते इत्यदोषः। **रत्न.** ५।३।१४। ३९–४२. * यदि गृहमेधीये दार्शपौर्णमासिको विध्यन्तो न स्यात् तथा सति 'प्रकरणान्तरे०' इत्यनेन न्यायेन कर्मान्तरं स्यात्। **टुप्.** १०।७।९।२७.

* प्रकरणान्तरे श्रूयमाणं वाक्यं यस्य प्रकरणे, तस्य वाचकं भवितुमर्हति। **भा.** २।३।११।२४ पृ. ६१४.

* **प्रकरणान्तराधिकरणम्**। २।३।११।२४. 'प्रकरणान्तरन्यायः' इत्यत्र द्रष्टव्यम्। * **प्रकरणान्तराधिकरणे** 'भावना त्वनुपस्थानाद् भिद्यमाना न वार्यते।' ('भिद्यमानाऽवधार्यते' इति मूले पाठः। २।३।११।२४ पृ. ६१६) इति वार्तिकोक्तरीत्या भावनाभेदव्युत्पादनमिति पक्षः। **सोम.** ७।३।१. * प्रकरणान्तराधिकरणे वाक्यभेददोषादेव अग्निहोत्रपदस्य गौणत्ववर्णनम्। **वाक्यार्थ.** पृ. २०. * यजेत इति प्रत्ययाभिहितसर्वभावनोद्देशेन विविदिषावाक्यवत् वाशब्दार्थविशिष्टकालविधेः **प्रकरणान्तराधिकरणे** व्युत्पादितत्वेन ('य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायाम्') इति इष्ट्यादिपदानामनुवादमात्रता। **कौ.** ३।३।१।२ पृ. ३१५–३१६. * वरुणप्रघासेषु अवभृथः सौमिकादवभृथात् कर्मान्तरम्, तुषांशे अर्थकर्म, निष्कासांशे च प्रतिपत्तिः, इत्युक्तं कौस्तुभे प्रकरणान्तराधिकरणे। **भाट्ट.** ११।२।१४.

* अष्टरात्रे प्रथमाहे विश्वजिति **प्रकरणान्तराधिकरणोक्तन्यायेन** कर्मान्तरे नामातिदेशेन एकाहकाण्डपठितविश्वजितो धर्मः सर्वस्वं दक्षिणा। **भाट्ट.** ६।७।८.

* **प्रकरणान्तराधिकरणपर्यालोचनया** (२।३।११।२४) अनुपादेयानि पञ्चैव इति प्रतिभाति। यजमानस्य आत्मीयमेकत्वं ब्राह्मण्यादिजातिरपि च अनुपादेयमेव। **बाल.** पृ. ९७.

* **प्रकरणान्तरनिष्कर्षनिरूपणम्**। प्रकरणान्तराधिकरणे (२।३।११।२४) पञ्चविधं अनुपादेयमुक्तं देशः, कालः, फलम्, निमित्तम्, संस्कार्यं चेति। 'अनुपादेयसंनिधिसचिवश्च असंनिधिः प्रकरणान्तरम्' इति प्रकरणान्तरलक्षणमुक्तं सर्वग्रन्थेषु। तच्च 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इत्यत्राव्याप्तम्। तत्र हि प्रकरणान्तरेणैव भेद उक्तो **वार्तिके** प्रकरणान्तराधिकरणे एव। **शास्त्रदीपिकायामपि** सप्तमे 'तथाऽवभृथः सोमात्' इत्यधिकरणे (७।३।४।१३–१६) उक्तं 'यन्ति' इत्यनेन प्रकरणान्तरन्यायेन कर्मान्तरं विधीयते इति। अत्र **भट्टसोमेश्वरः** समादधे— 'अस्त्येवोक्तलक्षणं तत्र वारुणीनिष्कासस्य तुषाणां च भूतोपयोगित्वेन

संस्कार्यतया अनुपादेयत्वात्' इति। तदुक्तं तेन 'तृतीयया तुषनिष्कासस्य (तुषशब्दो नास्ति सु.) साधनत्वोक्तावपि निष्कासस्य वारुण्यामिक्षाशेषत्वात् (वारुण्यामिक्षायागोपयुक्तद्रव्यशेषत्वात् इति सु.) तुषाणां च आग्नेयादियागशेषत्वात् (आग्नेययागाङ्गद्रव्यशेषत्वात् इति सु.) 'यत् किञ्चित् सोमलिप्तं स्यात् (स्याच्छब्दो नास्ति सु.) तेनावभृथं यन्ति' इतिवत् 'प्रयाजशेषेण हवींष्यभिघारयति' इतिवच्च 'प्रतिपाद्यत्वरूपसंस्कार्यत्वाविरोधः' इति (सु. पृ. ९५४)। तन्मन्दम्। अधिकरणविरोधात्। एकादशे हि (११।२।१५।६३-६५) अस्मिन्नेव वाक्ये सवनीयवत् प्रचारविप्रकर्षं पूर्वपक्षं विधाऽन्तरेण निरस्य, प्रतिपत्तिः इति पूर्वपक्षान्तरं तुषनिष्कासाख्यसंस्कार्यद्वयोद्देशात् वाक्यभेदापत्तेर्निरस्य अर्थकर्मत्वमेवोक्तम्। अत एव प्रकरणान्तरलक्षणं वाच्यम्। नात्र असंनिधिरिव स्वरूपतः अनुपादेयसंनिधिः प्रवेश्यः, किन्तु तत्कार्यं विधेः उपपदार्थसंक्रमासंभवः। स च यथा अनुपादेयसंनिधिना भवति, एवं उपादेयद्वयसंनिधिनाऽपि भवति। तस्मात् 'विधेः उपपदार्थसंक्रमासंभवेन सहकृतः असंनिधिः प्रकरणान्तरम्' इति प्रकरणान्तरलक्षणमभिप्रेतम्। अत एव 'विश्वजिता यजेत' इत्यादौ यत्र उपपदार्थो विधेयो नास्त्येव नामधेयमात्रश्रवणात्, तत्रापि उपपदार्थसंक्रमासंभवसहकृतात् असंनिधेरेव भेदः इत्यवधेयम्। अत एव उद्भिदादौ, नाम्नैव चैवमादीनां भेदः, इति संनिधावेव नाम्ना भेद उक्तः। एवम् 'अथैष ज्योतिः' इत्यादावपि। अष्टमतृतीये च (अधि. २) जनकसप्तरात्रप्रकरणाम्नाते 'चत्वारि त्रिवृन्ति अहानि अग्निष्टोममुखानि' इति वाक्ये चतुःसंख्या-त्रिवृत्त्व-रूपानेकोपादेयगुणश्रवणे तुषनिष्कासवाक्यवत् प्रकरणान्तरन्यायेनैव भेदोऽभ्युपगतः। अत एव च प्रकरणान्तराधिकरणे 'मासमग्निहोत्रं जुहोति' इत्यादौ 'अनुपादेयगुणे वा' इति वाक्ये 'उपसद्भिश्चरित्वा' इति गुणान्तरोपादानात् स्वरूपतः सन्नपि वाक्यभेदः सिद्धान्तसिद्ध्यनुपयोगित्वात् उपादेयगुणद्वययुक्तवाक्याभिप्रायेण एव सिद्धान्तहेतुतया उक्तो भाष्ये। आचार्यैश्च (पार्थसारथिभिः) मासादिवाक्येष्वेव तस्य सिद्धान्तसिद्ध्यनुपयोगो दूषितः, न सार्वत्रिकः इति ध्येयम्। बाल. पृ. ८८-८९.

**प्रकरणान्तरन्यायः।** कुण्डपायिनामयने मासाग्निहोत्रादीनां कर्मान्तरत्वम्॥

**प्रकरणान्तरे प्रयोजनान्यत्वम्। २।३।११।२४॥**

**भाष्यम्**— कुण्डपायिनामयने श्रूयते 'मासमग्निहोत्रं जुहोति' 'मासं दर्शपूर्णमासाभ्यां यजते' इत्येवमादि। तत्र संदिह्यते किं नियतेऽग्निहोत्रे नियतयोश्च दर्शपूर्णमासयोर्मासो विधीयते कालः, अथ किं नियताग्निहोत्रात् नियताभ्यां च दर्शपूर्णमासाभ्यां कर्मान्तरविधानमिति। किं तावत् प्राप्तम्? नियतेषु कालविधिरिति। कुतः? कालविधिसरूप एष शब्दो मासमिति। कथं कालविधिसरूपता? यत् अग्निहोत्रं जुहोतीति विदितम्, मासमित्यविदितम्। एवं चाग्निहोत्रशब्दो दर्शपूर्णमासशब्दश्च नार्थान्तरवृत्तौ भविष्यतः। तस्मात् कालविधिः। ननु कुण्डपायिनामयनप्रकरणं बाध्येतैवम्। कामं बाध्यताम्। वाक्यं हि बलवत्तरम्। **एवं प्राप्ते, ब्रूमः।** प्रकरणान्तरे श्रूयमाणं वाक्यं यस्य प्रकरणे तस्य वाचकं भवितुमर्हति। ननु प्रत्यक्षोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च गुणविधिः। नेत्युच्यते। कथम्? उपसद्भिश्चरित्वा इति हि उक्त्वा इदमभिधीयते। न चोपसदोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च सन्ति। तस्मादशक्यस्तत्र मासविधिः। अथोच्येत उपसदोऽपि विधीयन्ते इति। तथा गुणविधानार्थे अस्मिन् वाक्ये अनेकगुणविधानात् वाक्यं भिद्येत। अस्मिन् पक्षे पुनः अतन्त्रमग्निहोत्रशब्दः, न कर्म विशेक्ष्यति। तेन वाक्यभेदो न भविष्यति। तस्मात् कर्मान्तरमिति सिद्धम्।

**वा**— गतं गुणलक्षणभेदप्रसक्तानुप्रसक्तं कीदृशो गुणः पूर्वत्रासंभवन् भिनत्ति कीदृशो वा तत्रैव संभवतीति। इदानीं पर्यवसितेषु पञ्चसु भेदकारणेषु प्रकरणान्तरलक्षणो भेदः प्रस्तूयते। तत्र तावत् '**अग्निहोत्रादिशब्देन पूर्वं कर्मावबोधितम्। न विप्रकर्षमात्रेण भेदरूपं प्रपद्यते॥**' यथैव वलभ्यां पाटलिपुत्रे वा अग्निहोत्रादिशब्द उच्चार्यमाणो नार्थान्तरं प्रतिपादयति, एवं प्रकरणान्तरेऽपि। न हि प्रकरणान्तरं तस्यार्थाभिधानशक्तिमभि-

एवमपि तु अग्निष्टोमवाक्यानर्थक्यम्, तादृशश्च विकल्पः अतिरात्रे प्रसज्येत इति भट्टसोमेश्वरोक्तं दूषणद्वयं एवं परिहर्तव्यम्, अग्निष्टोमवाक्यार्थं (वाक्यं) परिसंख्यार्थम्, अग्निष्टोमातिरात्रप्रथमाहारयोः प्रसक्तो विकल्पः अग्निष्टोमे एव, न अतिरात्रप्रथमाहारे इति। प्रतिप्रसवोऽपि च तदा अग्निष्टोमवाक्यं भवत्येव, अकर्तव्यत्वेन बुद्धस्य कर्तव्यत्वबोधात्। न च प्रतिप्रसवत्वं परिसंख्यात्वं च विरुद्धम्। यद्वा परिसंख्यैव प्रतिप्रसवशब्देन पूर्वोक्तसादृश्यात् गौण्या उच्यते।

ननु विकल्पपरिसंख्या अतिरात्रे अननुष्ठानमात्रेणापि निर्वहति अनुष्ठानमात्रेणापि च, इति अननुष्ठानमेव न सिध्येत् इति चेत्, मैवम्। नहि अत्र विकल्पपरिसंख्या शाब्दी, किन्तु 'अग्निष्टोमे एव प्रवृणक्ति, नातिरात्रे' इति प्रवर्ग्यानुष्ठानपरिसंख्याद्वारा आर्थी, इति अतिरात्रे नित्याननुष्ठानसिद्धिः। एवं विकल्पपरिसंख्यारीतिः क्वापि अदृष्टा इति यदि ब्रूयात्, प्रतिब्रूयादेनं (सोमेश्वरं) अकर्तव्यत्वोक्त्यर्थपर्युदासरीतिर्वा क्व दृष्टा इति। अथ असौ अत्रैव कल्प्यते, ततः पूर्वाऽपि अत्रैव कल्प्यते, इति तुल्यौ पर्युदासानुयोगपरिहारौ।

ननु अग्निष्टोमे एव प्रवृणक्ति नान्यत्र इति परिसंख्यायां अतिरात्रद्वितीयादिप्रयोगेष्वपि विकृत्यन्तरे च सर्वत्रैव प्रवर्ग्यो न स्यात्, तत्र वैकल्पिकप्रवर्ग्यमात्रपरिसंख्यायां सत्यां अतिरात्रप्रथमाहारस्थस्यैव प्रवर्ग्यस्य पाक्षिकत्वात् परिसंख्या स्यात्, ननु वैकल्पिकप्रवर्ग्यमात्रपरिसंख्यायामेव प्रमाणमस्ति इति चेत्। उच्यते। लाघवात् तद्विषयता लभ्यते। अग्निष्टोमे एव प्रवृणक्ति नान्यत्र इति हि परिसंख्यया या अन्यत्र प्रवर्ग्यनिवृत्तिर्बोध्यमाना यत्र अतिरात्रप्रथमाहारे विकल्पातिदेशात् पक्षे प्रवर्ग्यनिवृत्तिः प्रसक्ता तत्रैव पक्षान्तरेऽपि सा चेत् बोध्यते लाघवं भवति। यत्र तु अतिरात्रे द्वितीयादिप्रयोगे विकृत्यन्तरे च प्रवर्ग्यनिवृत्तिः पक्षेऽपि न प्रसक्ता, तत्र चेत् परिसंख्यया सा बोध्यते, तत्र अत्यन्तं गौरवं स्यात्। यथा नियमविधिः अवघातादेः अप्राप्तिपक्षमेव पूरयति, प्राप्तिपक्षे तु उदास्ते, एवमियमपि परिसंख्या यत्र प्रवर्ग्यनिवृत्तेः अप्राप्तिपक्षः तमेव पूरयति, तत्प्राप्तिपक्षे तु उदास्ते। यथा च व्रीहिनियमः यत्र आग्नेयादौ व्रीहयः पक्षेऽप्राप्ताः तत्रैव तदप्राप्तिपक्षं पूरयन् प्रवर्तते, नोपांशुयाजादौ, तत्रानुत्पत्तिविशिष्टस्य सामान्यविहितस्यापि ध्रौवस्य प्राप्तेः पक्षेऽपि व्रीहीणामप्राप्तेः। लाघवाच्चाविशेषप्रवृत्तस्यापि वाक्यस्य विशेषपरता दशमे (१०।३।२।१३-१७) उक्ता, यथा– वायव्ये पशौ 'हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति' इति श्रुतं उत्तरे जौहवाघारे एव, तत्रैव 'इन्द्र ऊर्ध्वोऽध्वरः' इति प्राकृतमन्त्रजन्यनियमादृष्टक्लृप्तेर्लाघवात्। पूर्वाघारे तु तत्कल्पनाऽऽपत्तेर्गौरवादिति।

ननु एवमपि एषा प्राप्तपरिसंख्या, सा च त्रैदोष्यपरिहारासंभवात् न क्वचिदपि अङ्गीकृता, इति चेन्न। अस्या अपि वस्तुतः अप्राप्तपरिसंख्यात्वात्। यथा हि 'इमामगृभ्णन् रशनामृतस्य' इत्युदाहरणे यदि इयं न स्यात्, ततो लिङ्गात् विनियोजकवाक्यकल्पनया गर्दभरशनाऽऽदानेऽपि मन्त्रः प्राप्नुयात्, अस्यां तु सत्यां लिङ्गकल्प्यवाक्यकल्पनैव प्रतिषिध्यते, एवमत्रापि यदि 'अग्निष्टोमे प्रवृणक्ति' इति परिसंख्या न स्यात्, ततः अतिरात्रप्रथमाहारे 'यत् प्रवर्ग्यं प्रवृञ्जन्ति, न प्रथमयज्ञे प्रवृञ्ज्यात्' इत्यनयोः अतिदेशकल्पनात् विकल्पः प्राप्नुयात्, अस्यां तु सत्यां अतिदेशप्रतिबन्धात् नातिरात्रप्रथमाहारे विकल्पो भवति। इति सर्वं निरवद्यम्।

'परीपाकाच्छास्त्रे यदुदितमहो वार्तिककृता, तदज्ञात्वा सोमेश्वर इह बहु स्मान्यथयति। तदुद्दूष्याहं स्वां प्रकृतिमनयं वार्तिकमतं, तदज्ञात्वा दूष्यं न, विबुधजनैर्द्वेषविमुखैः॥' इति प्रवर्ग्याधिकरणदूषणोद्धारः। बाल. पृ. ९८-१०१.

ज्योतिष्टोमस्य प्रथमे प्रयोगे प्रवर्ग्यस्य निषेधः, द्वितीयादिप्रयोगे तु न निषेधः इति **भाष्यसिद्धान्तः**। अनूचानश्रोत्रियस्य अग्निष्टोमप्रथमप्रयोगे प्रवर्ग्यस्य विकल्पः, इतरयजमानस्य अग्निष्टोमप्रथमप्रयोगे नित्यमेवाभावः। अतिरात्रप्रथमाहारे प्रथमप्रयोगे नित्यं अकरणम्। विकृत्यन्तरेषु तु प्रथमप्रयोग एव नास्ति इति तेषु न निषेधः। 'न प्रथमयज्ञे' इति च न पर्युदासः किन्तु प्रतिषेध एव। इति **वार्तिककृत्सिद्धान्तः**। अग्निष्टोम-

प्रथमप्रयोगे अनूचानस्य नित्यं प्रयोगः, अन्येषां नित्यम-प्रयोगः। अतिरात्रप्रथमाहारे तु सर्वेषामेव अप्रयोगः इति शास्त्रदीपिकाकृत्सिद्धान्तः। अग्निष्टोमसंस्थाक-(प्रथम-) प्रयोगे अनूचानस्य नित्यं करणं तथा श्रोत्रियस्यापि। श्रोत्रियः प्रकर्षेण वेदतदर्थज्ञः। कामपदेन प्रकर्षाभिधानात्। तदन्येषां अग्निष्टोमप्रथमाहारेऽपि नित्यं अकरणम्। अतिरात्रप्रथमाहारे प्रतिप्रसवाभावात् नित्यमेवाप्रयोगः। विकृतौ तु प्रथमप्रयोगेऽपि नित्यं करणम्। यत्तु वार्तिके अनूचानादेर्विकल्पः अन्येषां तु नित्यमकरणं इत्युक्तम्, तत् प्रौढिवादमात्रम्। यदि तु तदेव समर्थनीयं इत्याग्रहस्तदा कामपदेन विकल्पाभिधानात् अग्निष्टोमवाक्यस्य च तेनोपसंहारात् अनूचानादेर्विकल्पः इत्येवं समर्थनीयम्। इति भाट्टदीपिकाकृन्मतम्। 'अधिकारिभेदेन विधिनिषेधयोर्व्यवस्था अस्तु। अनूचानव्यतिरिक्तकर्तृके अग्निष्टोमप्रथमप्रयोगे एवायं निषेधः' इति शास्त्रदीपिकाकृद्वत् विस्तरकृन्मतम्।

⌛ **प्रवर्ग्यन्यायः**। प्रवर्ग्यनिषेधाधिकरणम्। ज्योतिष्टोमे श्रुतस्य प्रवर्ग्यस्य अनूचानव्यतिरिक्तकर्तृके अग्निष्टोमप्रथमप्रयोगे एव निषेधः॥

**संख्यायुक्तं क्रतोः प्रकरणात् स्यात्। ३।३।१२। ३२॥**

**भाष्यम्**— ज्योतिष्टोमे प्रवर्ग्यं प्रकृत्य समाम्नायते 'न प्रथमयज्ञे प्रवृञ्ज्यात्' द्वितीये तृतीये वा प्रवृञ्ज्यात् इति। तत्र संदेहः किं ज्योतिष्टोमे सर्वेष्वेव प्रयोगेषु न प्रवर्जितव्यम्, उत प्रथमे प्रयोगे प्रतिषेधः इति। किं तावत्प्राप्तम्? ज्योतिष्टोमे प्रतिषेधः। कुतः? यज्ञसंयोगात्। प्रथमशब्देन यज्ञोऽभिधीयते ज्योतिष्टोमः। तस्य हि प्रथमसंयोगः एवं समाम्नायते 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो, य एतेनानिष्ट्वाऽथान्येन यजेत' इति। यज्ञानां प्रथमः इति कृत्वा प्रथमशब्देन ज्योतिष्टोमोऽभिधीयते। एवं च प्रकरणमनुगृह्यते। यदि क्रतोरेष वादः। तस्मात् संख्यायुक्तः प्रतिषेधो ज्योतिष्टोमस्य प्रवर्ग्यं प्रतिषेधेदिति।

वा— ('ज्योतिष्टोमे प्रवर्ग्यं' इति भाष्यं बह्वीषु शाखासु प्रवर्ग्यस्य अनारभ्याधीतत्वेन ज्योतिष्टोमप्रकरणपाठाभावात् अयुक्तं आशङ्क्य, अनारभ्याधीतत्वेऽपि अव्यभिचरितक्रत्वन्वयाभिः उपसद्भिः वाक्यकृतेनान्वयेन क्रत्वन्वयं प्राप्तस्य 'प्रकृतौ वा' इति न्यायेन ज्योतिष्टोमगमनाशयतया तावत् परमतेन उपपादयति—) प्रवर्ग्ये अनारभ्य कश्चित्क्रतुविशेषमाम्नायते 'यत्प्रवर्ग्यं प्रवृञ्जन्ति' इति। स च वाक्यसंयोगेन क्रतुसंबन्धं प्रतिपद्यते 'पुरस्तादुपसदां प्रवर्ग्येण चरन्ति' इति। स च 'प्रकृतौ वा द्विरुक्तत्वात्' इत्येवं ज्योतिष्टोमं गच्छति। तत्र हि उपसदः प्रत्यक्षविहिताः सन्ति। विकृतौ तु यावदनुमानेन ता गमिष्यन्ति, तावत् प्रवर्ग्योऽपि यास्यत्येव इति नार्थः उपदेशेन। तेन आह— ज्योतिष्टोमे प्रवर्ग्यं प्रकृत्य श्रूयते इति। यद्वा कौषीतकिब्राह्मणे ज्योतिष्टोमप्रकरणे एव (८।३) स्वक्रमस्थस्य प्रवर्ग्यस्योत्पत्तिः तदा तद्विषयः श्रवणोपन्यासो यथाश्रुतः एव भवति। तं प्रवर्ग्यं प्रकृत्य श्रूयते 'न प्रथमे यज्ञे प्रवृञ्ज्यात्' इति। तत्र संदेहः किं प्रथमयज्ञग्रहणेन सर्वसंस्थः सर्वप्रयोगावस्थश्च ज्योतिष्टोमो गृह्यते, उत प्रथमप्रयोगमात्रमिति। तत्र किं प्राप्तम्? यज्ञशब्दसामानाधिकरण्यात् 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः' इति च प्रयोगात्प्रथमशब्दस्य ज्योतिष्टोमपर्यायत्वं विज्ञायते। 'य एतेनानिष्ट्वा' इति च सर्वयज्ञेभ्यः प्रथमं प्रयुज्यमानत्वेन विधानात् एतस्यैव ग्रहणम्। तथा च प्रकरणमनुगृह्यते। ननु च तदीयप्रथमप्रयोगेऽपि प्रकरणानपकर्षात् अस्त्येवानुग्रहः। कथमनुग्रहः, यदा दीक्षितहोमदानपाकादिप्रतिषेधवत् अयं सर्वप्रयोगविषयः प्राप्नुवन् वाक्येन एकप्रयोगनिबन्धनः क्रियते। नहि तदा प्रकरणेन किञ्चन व्याप्रियते, ज्योतिष्टोमिकप्रयोगाश्रयणस्यापि वाक्यकृतत्वात्। यदीह अन्यः कश्चित् प्रथमप्रयोगार्हः स्यात्, नैवैष प्रतिषेधो ज्योतिष्टोमे एवावतिष्ठेत। तदभावात्तु यदि परिशेषात् इदं वाक्यं संयुक्तप्राथम्यानुरोधेन ज्योतिष्टोमगामि भवेत्, ततः प्रकरणस्य किमित्यवधारणात् बाधः प्रसज्येतैव। तस्मात् प्रकरणानुग्रहार्थमपि प्रथमशब्दोपात्तादिसंख्यायुक्तमिदं ज्योतिष्टोमे स्यादिति।

नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात् । ३३ ॥

भाष्यम्—न चैतदस्ति यज्ञस्य एष वादः इति । चतुर्ष्वपि वेदेषु न 'प्रथमः' इत्येवंसंज्ञकः कश्चिद्यज्ञोऽस्ति । भवति तु प्रथमो यज्ञस्य प्रयोगः, कर्तृसंयोगात् । पूर्वस्य द्वितीयादीनपेक्ष्य प्रथमशब्दो भवति । स प्रयोगस्योपपद्यते न क्रतोः । प्रयोगः श्रवणात् गम्यते । क्रतुः प्रयोगसंबद्धत्वात् । श्रुतिश्च बलीयसी न लक्षणा । तस्मात् प्रथमे प्रयोगे न प्रवर्जितव्यमिति । अथ यदुक्तम्, ज्योतिष्टोमेन सामानाधिकरण्यात् तद्वचन इति, लक्षणया सामानाधिकरण्यमिति तत् परिहृतम् । यत्तु प्रथमयज्ञे इति यज्ञशब्देन सामानाधिकरण्यम्, तदपि यज्ञशब्दस्य यागवचनत्वात् असत्पक्षस्य अबाधकम् ।

वा— 'यदि प्रथमशब्दोऽयं नाम स्याज्ज्योतिषः स्वतः । तत एवं भवेदेष प्रयोगस्य तु वाचकः ॥' प्रथमशब्देन हि यत् कर्तुः अप्रवृत्तपूर्वस्य आद्यं प्रवर्तनम्, तदभिधीयते, न कर्म किञ्चित् । तद्योगात्तु कर्मणि प्रतीतिः स्यात् । साऽपि च तत्प्रयोगगतस्यैव । नहि द्वितीयादीन् प्रयुञ्जानः कश्चित् प्रथमं यजते इत्युच्यते । न चैवं अयजमानस्य प्रथमयज्ञो नाम भवति । ततश्च पूर्वाभिहितप्राथम्यगुणलक्षणया तद्वति गृह्यमाणे अर्थविप्रकर्षः आपद्यते । तत्र च स आश्रीयते, यत्र तेन विना एकवाक्यत्वं नावकल्पते । यथा 'एष वाव प्रथमो यज्ञानाम्' इत्यत्र । न त्विह प्राथम्यस्य प्रतिषेधनिमित्तता न संभवति, येन पूर्वप्रतीतं सत् तदुल्लङ्घ्य तत्प्रयोगस्थोऽपि तावत् क्रतुर्गृह्येत । प्रयोगान्तरस्थस्तु दूरविप्रकृष्ट एव । नन्वेवं सति यस्य कस्यचित् प्रथमप्रयोगो निमित्तं प्राप्नोति । प्राप्नुयात्, यदि विधिरेष स्यात् । अयं तु प्रतिषेधत्वात् प्राप्तिमपेक्षमाणो लौकिकव्यापारेभ्यो वैदिकेभ्यश्च अध्ययनाधानाग्निहोत्रदर्शपूर्णमासादिभ्यः प्रवर्ग्यप्राप्त्यभावात् निवर्तमानः सामर्थ्येन सोमं गच्छति । तत्रापि अनारभ्यवादन्यायेन ज्योतिष्टोमम्, प्रथमशब्दाच्च तस्य आद्यं प्रयोगम् । एवं च सजातीयत्वेन प्रत्यासत्तेश्च तस्यैव द्वितीयादिप्रयोगापेक्षणं युक्ततरं भविष्यति, इतरथा तु दूरस्थयज्ञान्तरापेक्षायां सत्यां विप्रकृष्टतरत्वं भवेत् । तस्मात् प्रकरणं बाधित्वा वाक्येन प्रथमप्रयोगविषयता सिद्धा । तत्र तु केषाञ्चित् तैत्तिरीयादीनाम् 'अग्निष्टोमे प्रवृणक्ति' इति पुनर्विधानमस्ति (तैआ. ५।६।३) । तद्यदि तावत् द्वितीयादिप्रयोगविषयं कल्प्यते, ततः प्रतिषेधाभावात् पूर्ववचनेनैव सिद्धेः विधानानर्थक्यम् । तस्मात् आद्यप्रयोगविषयमेवैतत् । ततश्च प्रतिषेधो बाध्यमानः क्रत्वन्तरप्रथमप्रयोगं सावकाशत्वात् गच्छतीति केचित् । (परमतेन समादधाति—) तत्तु न युक्तम् । अग्निष्टोमस्यापि संस्थारूपस्य अन्यत्र विद्यमानत्वात् । न च प्राथम्यं सावकाशम्, 'य एतेनानिष्ट्वा' इति केवलज्योतिष्टोमविषयत्वात् । प्रथमं हि यजनं प्रथमं यज्ञः, न चैतत् अन्यस्य क्रतोरस्ति । तस्मात् ज्योतिष्टोमस्यैव अतिरात्रसंस्थस्य प्रथमाहारे (आहारः प्रयोगः) प्रतिषेधः अग्निष्टोमे विधिरित्यपरे । विहितश्च अतिरात्रस्यापि पाक्षिकः प्रथमाहारः 'तस्मात् प्रथमं यजमानोऽतिरात्रेण यजेत' इति । सोऽयं सामान्येन उभयोः संस्थयोः प्रतिषेधः अग्निष्टोमे तु विशेषविधिः, स बलीयान् । एतदपि न युक्तम् । अग्निष्टोमस्यापि बहुप्रयोगान्तरक्रत्वन्तरगामित्वेन सुतरां सामान्यरूपत्वात् । अतः अतिरात्रप्रथमाहारे नित्यं प्रतिषेधः अग्निष्टोमे तु विहितप्रतिषिद्धत्वात् विकल्पः इति केचित् । अत्र पुनश्चोदयन्ति । यद्येष प्रतिषेधः, तत एवं स्यात् । पर्युदासास्तु एवंविधा इति दशमे वक्ष्यते 'अपि तु वाक्यशेषः स्यात्' इति (१०।८।१४), न चासौ अग्निष्टोमवाक्यशेषो भवति । यदि हि, 'अप्रथमयज्ञे अग्निष्टोमे प्रवृणक्ति' इति कल्प्येत ततः तस्मादेव सामान्यशास्त्रात् प्राप्तत्वात् अग्निष्टोमयुक्तविध्यानर्थक्यं आपद्यते (येत) । तेन सामान्यविधेरेव एष शेषः, 'यत् प्रवर्ग्यं कुर्वन्ति, तत् अप्रथमयज्ञे' इति । ततश्च अतिरात्रविषयत्वमेव फलतो भवति । न च एक एव शेषः उभयोर्वाक्ययोः संभवति, एकसंबन्धेनैव कृतार्थत्वात् । तस्मात् अग्निष्टोमविधेः निरपवादत्वात् नित्यमेव तत्र भवितव्यमिति । (विकल्पायोगचोद्यं निराकर्तुमाह—) उच्यते । स्यादेतदेवम्, यदि अयं पर्युदासो भवेत्, न तु अयं पर्युदासः, वाक्यशेषत्वानुपपत्तेः । तत्र अग्निष्टोमवाक्ये तावत् भवत्येव प्रति-

पादितम् ( दृष्टान्तत्वेन अग्निष्टोमवाक्यशेषत्वस्य अनुपपन्नत्वं त्वयैवोक्तम् )। अतिरात्रवाक्येऽपि यदि तदीयकथम्भावपूरणवेलायां एतदुच्येत, ततः शेषो भवेत्। न तु तथोक्तम्, संस्थानां असमानविधानत्वात्, अवान्तरप्रकरणे च प्रतिषेधाश्रवणात्। न हि अनेकज्यौतिष्टोमिकवाक्यान्तरव्यवहितातिरात्रप्रकृतिवच्छब्दस्य एष शेषः अवकल्पते। तस्मात् 'न तौ पशौ' इतिवत् प्रतिषेधः एवायं विज्ञायते। ननु प्रतिषेधोऽपि सन् प्रकृतिविषय एव प्राप्नोति। प्राप्नुयात्, यदि विकृतावपि नोपपद्येत। स तु ( प्रतिषेधः ) प्राप्तिमात्रापेक्षित्वात् उपदेशमतिदेशं वा अनादृत्य उभयत्रापि प्रवर्तते। ( प्रकृतिमात्रविषयत्वमनुजानाति– ) शक्यं तु इह ( अपि ) वक्तुं 'प्रकृतौ वा द्विरुक्तत्वात्' इति। ननु च तुल्यार्थत्वे एतदेवं युक्तम्। अस्ति चेह अर्थभेदः, प्रकृतौ वैकल्पिकत्वात् अतिरात्रे च चोदकप्राप्तस्य नित्यप्रतिषेधात्। न एतत् ( द्विरुक्तत्वापत्तिः ) अस्ति। वक्ष्यति हि एतत् 'प्रतिषेधः प्रदेशे, अनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद् विकल्पः स्यात्' ( १०।८।१।१ ) इति। ( सूत्रार्थमुपपादयति– ) यस्य शास्त्रादृते प्राप्तिः नास्ति, तस्य प्राप्तिं अनभ्यनुज्ञाय प्रतिषेधासंभवात् अवश्यं प्रतिषेधेनैव तद्विषयोऽपि विधिः अङ्गीकर्तव्यः। स चेत् अङ्गीकृतः, शास्त्रत्वाविशेषात् तुल्यबलत्वं ( विधिप्रतिषेधयोः )। अतः सर्वथा अतिरात्रे विकल्पेन भवितव्यम्। तस्मात् द्विरुक्तत्वात् उपदेशातिदेशयोश्च प्राप्तिकालवैषम्यात् प्रकृत्यर्थतैव वरं इति। ननु एवं सति 'अग्निष्टोमे प्रवृणक्ति' इत्यनेनैव प्रकृतिविधेः सिद्धत्वात् अनारभ्यवादः अनर्थकः प्राप्नोति। नैष दोषः। तेन उत्पत्तिः, अनेन विनियोगः इत्येवं व्यापारभेदात्। अथवा अनारभ्यवादः अग्निष्टोमव्यतिरिक्तविषयो भविष्यति। ननु अग्निष्टोमवाक्येन उपसंह्रियते। न शक्यमेतत् उपसंहर्तुम्। तन्नाम विशेषवचनेन उपसंह्रियते, यत् क्रतुसंयोगाय असमर्थं कथञ्चित् परोक्षवृत्त्या संयुज्यते, यथा सामद्वयम्। अयं तु साक्षाद्यज्ञसंबन्धसामर्थ्यात् नोपसंहारमर्हति। अतश्च विकृत्यर्थो भविष्यति तथा सति च 'न प्रथमयज्ञे' इत्यनारभ्यवादशेषः उपपद्यते इति अतिरात्रप्रथमाहारे नित्यमप्रयोगः अग्निष्टोमे च केवलविधिसंस्पर्शात् नित्यं प्रयोगः। नहि तद्वाक्यशेषोऽपि अयं भवतीत्युक्तम्। ( एकदेशी अनारभ्यवादस्य विकृत्यर्थत्वं निरस्यति– ) एतावत्तु इह अवधारयितुं शक्यम्, नायमनारभ्यवादः प्रकृतेरन्यत्र गच्छति। यदि गच्छेत्, ततः इष्टिपशुबन्धानपि गच्छेत्। न च गन्तुमर्हति, 'पुरस्तादुपसदाम्' इति स्थाननियमस्य तत्रानुपपत्तेः। अतो यत्र उपसदः, तत्र गच्छति। ततश्च प्राप्तिकालवैषम्यात् प्रकृतौ तावत् ताः ( उपसदः ) सन्ति, इति अन्तरेणापि वचनं गच्छेत्, किमुत यदा विस्पष्टमेव वचनम्। स्फुटसामान्यसंबन्धस्यापि च एवमादेः उपसंहारः इति व्याख्यातं चतुर्थाधिकरणे ( ३।१।१५ इति तु टिप्पण्यामुक्तम् ) तस्मात् उत्पत्तिविनियोगाभ्यामेव अपुनरुक्तत्वम्। एवं सति येषां प्रकरणे एव प्रवर्ग्यपाठः, तैः सह संगतार्थता भविष्यति। ( एकदेश्युक्तं दूषयति– ) यदि तर्हि द्वयोरपि एकवाक्यत्वेन 'अग्निष्टोमे प्रवृणक्ति' इत्ययमर्थो निष्पन्नः, ततः 'न प्रथमयज्ञे' इत्येतस्य अप्रथमयज्ञे अग्निष्टोमे इत्येवं प्रवर्तमानस्य न कश्चित् विरोधः इति पर्युदासात् नित्यमेव अकरणेन भवितव्यम्।

अग्निष्टोमवाक्यं विकल्पसिद्ध्यै वर्णयितुमाह– ( अतः एवं वर्णनीयम्। अनारभ्यवादस्य प्रकृत्यर्थतायां सिद्धायां 'अग्निष्टोमे प्रवृणक्ति' इत्येतस्य अनन्यप्रयोजनत्वात् प्रतिषिद्धप्रतिप्रसवार्थता गम्यते। ननु नैवायं प्रतिषेधः इत्युक्तम्। अग्निष्टोमयुक्तवाक्यार्थवत्त्वाय प्रतिषेधः इति ब्रूमः। नहि अनेन सह पर्युदासः अवकल्पते इति दर्शितम्। न च अनारभ्यवादः अनग्निष्टोमार्थः, यतः तद्विषयः पर्युदासः अवकल्पते। तेन द्वयोरपि ( पर्युदासअग्निष्टोमवाक्ययोः ) अग्निष्टोमविषयत्वम्। अतश्च यद्यपि अयं पर्युदासः, तथापि उभयोः सामर्थ्यात् विकल्पेनैव भवितव्यम्। कुतः ? '**नित्यं हि क्रियमाणेऽस्मिन् पर्युदासो वृथा भवेत्। नित्यमक्रियमाणे वा पुनर्विधिरनर्थकः॥**' ततश्च यस्माद्विकल्पात् बिभ्यद्भिः पर्युदास आश्रीयते, स तस्मिन् सत्यपि आगतः, इति वरं शब्दस्वरसलभ्यः प्रतिषेधः एव आश्रितः। तेन प्रथमाहारे अग्निष्टोमे विकल्पः। तत्रापि यदा केषां

चित् ईदृशं वचनं ' कामं तु योऽनूचानः श्रोत्रियः स्यात्, तस्य प्रवृञ्ज्यात् ' इति, तदा प्रतिप्रसववचनस्य विकल्पकारिणः कर्तृविशेषगामित्वात् तद्विषयः एव विकल्पः, अन्येषां नित्यमेवाभावः । कथं पुनः अश्रोत्रियस्य कर्मणि प्रवृत्तिः, येन तत् विशेषणत्वेन श्रूयते ? सत्यं प्राप्तस्य पुनर्वचनं तावन्मात्रफलं अनर्थकं इति सामर्थ्यात् प्रकर्षगतिर्विज्ञास्यते । यथा ' अभिरूपाय कन्या देया ' इत्यत्र अभिरूपतराय इति गम्यते । अनूचानग्रहणं तु ब्राह्मणस्य अनुवचनसंबन्धात् क्षत्रियवैश्यनिवृत्त्यर्थं भविष्यति ।

तदेतत् अतिरात्रेऽपि एवमेव प्राप्नोति । तत्र ' न प्रथमयज्ञे ' इति प्रतिषेधात् अनग्निष्टोमत्वेन च प्रतिप्रसवाभावात् नित्यमेव न कर्तव्यः । विकृत्यन्तरेषु प्रथमप्रयोगानुपपत्तेः नित्यमेव करणम् । ननु तत्रापि ' न प्रथमयज्ञे ' इत्यतिदेशात् अग्निष्टोमस्वरूपस्य च प्रतिप्रसवनिमित्तस्य अभावात् प्रथमप्रयोगेषु अभाव एव प्राप्नोति । नैतदेवम् । प्रथमशब्दस्य अविशेषितस्य सर्वाद्ये प्रवर्तमानस्य अन्यत्र अप्रवृत्तेः । तस्मात् केवलज्योतिष्टोमप्रथमप्रयोगविषय एव चैष प्रतिषेध इति सिद्धम् ।

**शा**— **' वाक्यात् प्रकरणाच्चायं ( प्रतिषेधः ) क्रतोरङ्गं, तदुच्यते । वाक्यादेष प्रयोगाङ्गं प्रयोगः प्रथमो यतः ( मतः ) ॥ '** अग्निष्टोमप्रथमप्रयोगे अनूचानस्य नित्यं प्रयोगः, अन्येषां नित्यं अप्रयोगः । अतिरात्रप्रथमाहारे तु सर्वेषामेव अप्रयोगः ।

**सोम**— भवतु पूर्वत्र प्रकरणवाक्ययोर्विसंवादात् वाक्येन प्रकरणबाधः । इह तु विसंवादाभावात् न प्रकरणं बाध्यं इति प्रत्यवस्थानात् **संगतिः । सूत्रार्थस्तु**— संख्यायुक्तं लक्षणया प्राथम्ययुक्तं न प्रथमयज्ञे इत्येतत् निषेधनं प्रकरणात् क्रतोः स्यात् इति ।

**वि**— ' न प्रवृञ्ज्यादाद्ययज्ञे क्रतौ सोऽनुष्ठितावुत । प्रतिषेधः, क्रतौ युक्त उक्ता ह्यस्याद्ययज्ञता ॥, प्रवृणक्त्युपसद्भ्यः प्रागिति वाक्यात् क्रतौ विधेः । आद्यप्रयोगे प्राथम्यान्निषेधः क्वचिदेव सः ॥ ' क्वचित् अनूचानव्यतिरिक्तकर्तृके अग्निष्टोमप्रथमप्रयोगे । १७.

**भाट्ट**— अनारभ्याधीतः प्रवर्ग्यः ' यत्प्रवर्ग्यं प्रवृणक्ति ' इति श्रुतः । तस्य च ' पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति ' इति ज्योतिष्टोमाङ्गत्वेन विनियोगः, अव्यभिचरितक्रतुसंबन्धसहकृतद्विरुक्तत्वन्यायेन तदुपस्थितेः । **न च** उपसदङ्गत्वमेव किं न स्यादिति **वाच्यम्** । उपसत्पदस्य पुरस्तात्कालप्रतियोगित्वेन स्वार्थोपस्थापकस्य उद्देश्यसमर्पकत्वाभावात् । उपस्थितत्वात् तद्वाचकपदान्तरकल्पनया उद्देश्यत्वाङ्गीकारे तु उपसदां फलवत्त्वज्ञानार्थं ज्योतिष्टोमोपस्थितेरावश्यकत्वात् लाघवेन तदर्थत्वोपपत्तेः । **कौषीतकिब्राह्मणे प्रकरणे** एव प्रवर्ग्याम्नानाच्च ।

तत्र च 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति श्रुतम् । प्रथमयज्ञपदेन सर्वसंस्थः सर्वावस्थश्च ज्योतिष्टोमोऽभिधीयते, उत तदीयप्रथमप्रयोगमात्रमिति चिन्तायाम्, प्रथमयज्ञशब्दो ज्योतिष्टोमनामैव ' एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः ' इति सामानाधिकरण्यात्, तस्य प्रथमं प्रयुज्यमानत्वेन प्रवृत्तिनिमित्तसत्त्वाच्च । **यद्यपि** च अन्यसंस्थानां अन्यपदेनाभिधानात् तासु ज्योतिष्टोमोत्तरकालत्वविधानान्न सर्वसंस्थाकज्योतिष्टोमस्य प्रथमं प्रयुज्यमानत्वम्, **तथापि** ज्योतिष्टोमत्वसामानाधिकरण्येन तावत् तदस्तीति प्रवृत्तिनिमित्ताविघातः । अतो वाक्यात् प्रकरणाच्च ज्योतिष्टोमत्वावच्छेदेनैव अयं प्रतिषेधः पर्युदासो वा ज्योतिष्टोमभिन्ने प्रवृणक्तीति, अन्यथा विकल्पापत्तेः । यत्तु ' अग्निष्टोमे प्रवृणक्ति ' इति वचनं तत् पर्युदासप्रतिप्रसवार्थम् । तदपि च ' कामं तु योऽनूचानः श्रोत्रियः स्यात् तस्य प्रवृञ्ज्यात् ' इत्यनेन उपसंह्रियते । तेन अनूचानस्य श्रोत्रियस्य अग्निष्टोमसंस्थाकज्योतिष्टोमे नित्यं करणम्, अन्यज्योतिष्टोमे नित्यमकरणम्, विकृतिषु च नित्यं करणम् । **इति प्राप्ते**, प्रत्येकशक्त्यैव अर्थबोधोपपत्तौ अतिरिक्तशक्तिकल्पनायां प्रमाणाभावात्, प्रथमशब्दस्य च अप्रवृत्तप्रवर्तनविषयवाचित्वात् आद्यप्रयोगपरत्वावगतेः, यज्ञशब्दस्य च लक्षणया प्रयोगपरत्वम्, प्रकरणात् ज्योतिष्टोमरूपयज्ञपरत्वमेव वा अङ्गीकृत्य प्रथमयज्ञपदेन ज्योतिष्टोमप्रथमप्रयोगोऽभिधीयते । स च अग्निष्टोमसंस्थाकज्योतिष्टोमस्य, पाञ्चमिकन्यायात् । ' प्रथमं यजमानोऽतिरात्रेण यजेत ' इति वचनादतिरात्रसंस्थाकस्य च । अतः

उभयत्रापि अनेन वचनेन प्रवर्ग्यस्य प्रतिषेधः पर्युदासो वा। न तु विकृत्यन्तरे, तत्र उपदेशातिदेशाभ्यां तदप्राप्तेः। न च ज्योतिष्टोमे द्वितीयादिप्रयोगापेक्षया प्राथम्यस्य विवक्षितत्वात् विकृतावपि तद्द्वितीयादिप्रयोगापेक्षया प्रयोगवृत्तिप्राथम्यस्य सत्त्वात् कथं न तत्प्राप्तिरिति वाच्यम्। प्राथम्यस्य निरूपकापेक्षायां द्वितीयादिप्रयोगस्य निरूपकत्वाकल्पनात्। 'एष वाव प्रथमो यज्ञो यज्ञानाम्' इति वचनेन ज्योतिष्टोमविकृतिमात्रस्यैव तदवधारणात्। अत एव प्रथमप्रयोगविषयोऽपि ज्योतिष्टोम एव बोध्यः। तथा च प्रथमयज्ञशब्दो वाक्यशेषात् वैदिकप्रयोगाच्च निरूढलक्षणया सोमान्तरनिरूपितप्राथम्यवत् प्रयोगविषयज्योतिष्टोममेवाभिधत्ते। अन्यथा स्वस्वद्वितीयादिप्रयोगनिरूपितप्राथम्यवत्प्रयोगविषययज्ञमात्राभिधाने 'आहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशाः सत्रमासीरन्' इत्यादौ सत्रे यज्ञमात्रोत्तरकालापत्तेः। अत एव उक्तद्विविधज्योतिष्टोमप्रथमप्रयोगे एव प्रवर्ग्यप्रतिषेधः।

वस्तुतस्तु नायं प्रतिषेधः, तथात्वे 'न तौ पशौ करोति' इतिवत् अतिरात्रप्रथमाहारेऽपि विकल्पापत्तेः। न च क्रियायाः स्वरूपेण उद्देश्यसंबन्धित्वेन वा निषेधे एव विकल्पो यथोक्तस्थले, यत्र तु कारकनिषेधः यथा 'रात्रौ श्राद्धं न कुर्वीत' इत्यादौ, तत्र निषेधस्य कारकमात्रविषयत्वेन क्रियाविषयत्वाभावात् क्रियाविषयविधिविकल्पापादकत्वानुपपत्तिः। प्रकृते च प्रथमयज्ञशब्दस्य नोद्देश्यपरत्वम्, अपि तु 'मन्द्रं प्रातःसवने' इतिवत् अधिकरणकारकपरत्वम्, अतश्च न विकल्पापत्तिरिति केषांचिदुक्तं युक्तमिति वाच्यम्। कारकस्यापि प्रयोगाधिकरणत्वस्य विधितः प्राप्तौ न्यायतौल्येन प्रथमप्रयोगाधिकरणत्वस्यैव विकल्पापत्तेरावश्यकत्वात्। अत एव आक्षेपेण यत्किञ्चित्कालप्राप्तौ रात्र्युपादानस्य ऐच्छिकत्वेन रागप्राप्त्या वैधत्वाभावात् न तन्निषेधस्य विकल्पापादकत्वम्। प्रकृते तु प्रथमप्रयोगाधिकरणत्वं न ऐच्छिकम्, प्रतिप्रधानं गुणान्वयस्य वैधत्वात्। अतस्तन्निषेधोऽपि विकल्पापादक एव। वस्तुतस्तु प्रथमप्रयोगस्य उद्देश्यत्वमेव शास्त्रदीपिकायामुक्तमिति न किञ्चिदेतत्। अतो 'नानूयाजेषु' इतिवत् पर्युदासः एवायं अनारभ्यवाक्यशेषः उक्तविधप्रथमप्रयोगभिन्ने प्रवृञ्ज्यादिति। ततश्च प्रापकप्रमाणाभावात् प्रथमप्रयोगे अकरणप्रसक्तौ 'अग्निष्टोमे प्रवृणक्ति' इति वचनं वस्तुतः अत्यन्ताप्राप्तप्रापकमपि प्रतिप्रसवफलकं सत् अग्निष्टोमसंस्थाकत्वे निमित्ते प्रथमप्रयोगेऽपि नित्यं प्रवर्ग्यविधानार्थम्, न तु विकल्पेन, विकल्पे प्रमाणाभावात्। अस्य नान्यविषयता सामान्यविधितः एव सर्वत्र प्राप्तत्वादिति प्रथमप्रयोगविषयतैव। अनेन च काममित्यनूचानवाक्यस्योपसंहारः। तेन अग्निष्टोमसंस्थाकप्रयोगे अनूचानस्य नित्यं करणम्। तथा श्रोत्रियस्यापि। अनूचानो वेदाध्यापकः। तेन क्षत्रियवैश्ययोर्निवृत्तिः। श्रोत्रियः प्रकर्षेण वेदतदर्थज्ञः। कामपदेन प्रकर्षाभिधानात्। तस्य इत्येकपदेन उभयोः कर्त्रोर्विधानाच्च न विधेयानेकत्वम्। तदन्येषामग्निष्टोमप्रथमाहारेऽपि नित्यमकरणम्। यत्तु वार्तिके— अनूचानादेर्विकल्पोऽन्येषां तु नित्यमकरणमित्युक्तम्, तत् प्रौढिमात्रम्। अत एव पार्थसारथिना अनूचानादेः नित्यमेव प्रयोग इत्युक्तम्। यदि तु तदेव समर्थनीयमित्याग्रहः तदा 'कामं'पदेन विकल्पाभिधानात्, अग्निष्टोमवाक्यस्य च तेनोपसंहारात्, अनूचानादेर्विकल्प इत्येवं समर्थनीयम्। सर्वथा अतिरात्रप्रथमाहारे प्रतिप्रसवाभावान्नित्यमेवाप्रयोगः। विकृतौ तु प्रथमप्रयोगेऽपि नित्यं करणमिति स्थितम्।

**मण्डन**— 'नाद्यप्रयोगे प्रावर्ग्यम्।' १७.

**शंकर**— 'नाद्ये प्रयोगे प्रवृञ्ज्यात्।' १७.

* **प्रवर्ग्यन्यायेनैवा**श्वदानगतप्रयोजनवत्त्वजिज्ञासायां अवश्योपस्थितक्रतोरेव शेषित्वकल्पनौचित्यात् नाश्वदानस्य हेतुत्वं शेषितया, अपितु निमित्ततयैव। भाट्ट. ३।४।१४, * कर्तुः प्रयोजनवत्त्वसिद्ध्यर्थं अवश्यं प्रकरणालोचने क्रियमाणे क्रतोरुपस्थितत्वेन तत्साद्गुण्यवैगुण्यपरिहारयोरेव **प्रवर्ग्यन्यायेन** कल्पयितुं युक्तत्वात् पदान्तरकल्पनया न प्राधान्यम्। ३।४।८ पृ. ३२०, * जञ्जभ्यमानपुरुषस्य शानजुपात्तस्यापि सर्वप्रधानभूतायां भावनायां चैत्रादिवत् विशेषणत्वेनोपादानात् प्रवर्ग्यन्यायेन प्राधान्यकल्पनानुपपत्तिः। ३।४।९, * 'पुरस्तादुपसदां सौम्येन प्रचरन्ति' इत्यत्र उत्पत्तिवाक्यत्वेऽपि प्रवर्ग्यन्यायेन ३।३।१२

उपसन्निष्ठफलवत्त्वज्ञानस्य स्वाराज्यवाक्याधीनत्वात् तदर्थत्वमेव युक्तं सौम्यस्य । ४।४।३.

* प्रवर्ग्यसाम्नां 'उच्चैः प्रवर्ग्येण' इति करणविभक्त्या साङ्गस्य उच्चैस्त्वविधानात् प्रवर्ग्यप्रयोगबहिर्भावेऽपि प्रवर्ग्याङ्गत्वाविरोधात् उच्चैस्त्वम् । सु. पृ. ११८४.

* प्रवर्तकं ज्ञानं विचार्यते । ननु किमत्र विचार्यते इष्टसाधनत्व-कृतिसाध्यत्व-बलवदनिष्टाननुबन्धित्वज्ञानानां प्रवृत्तिहेतुत्वस्य क्लृप्तत्वात् इति चेत् । अत्र गुरवः । स्वविशेषणवत्ताप्रतिसंधानजन्यकार्यताज्ञानस्यैव चिकीर्षाद्वारा प्रवृत्तिहेतुत्वम्, न इष्टसाधनत्व-बलवदनिष्टाननुबन्धित्वज्ञानयोरपि, अन्यथा हेतुहेतुमद्भावत्रयकल्पनागौरवात् । तथाहि । कार्यताज्ञानं द्विविधम् 'मयेदं कर्तुं शक्यते' इत्येवंरूपमेकम् । 'ममेदं अवश्यं कार्यम्' इत्येवंरूपं द्वितीयम् । तत्र आद्यं पदार्थनिष्ठयोग्यतागम्यं इति न प्रवृत्तिं प्रति हेतुः । द्वितीयं तु स्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानजन्यं इति चिकीर्षाद्वारा प्रवृत्तिं प्रति हेतुः । इदमेव स्वविशेषणवत्ताप्रतिसंधानजन्यत्वम् । स्वं नियोज्यः, तद्विशेषणं काम्ये फलकामना, नित्ये शुचितत्कालजीवित्वादि । इति स्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानजन्यकार्यताज्ञानस्य चिकीर्षाद्वारा प्रवर्तकत्वं सिद्धं भवति । अत एव इष्टसाधनत्वेन अज्ञाते मध्वन्नभोजने, अनिष्टसाधनत्वेन ज्ञाते विषभोजने, बलवदनिष्टानुबन्धित्वेन ज्ञाते मधुविषसंपृक्तान्नभोजने न प्रवृत्त्यापत्तिः ।

न च तत्र 'मध्वन्नभोजनजन्यं सुखं भवतु' इतीच्छया तदापत्तिः । विषासंपृक्तमध्वन्नभोजनसुखत्वेनैव इच्छागोचरीभावात् । नापि जीवकर्तृकत्वलिङ्गककार्यताज्ञानेन विषभक्षणे प्रवृत्त्यापत्तिः, न वा काम्ये शौचादिलिङ्गककार्यताज्ञानात् प्रवृत्त्यापत्तिः । एतेन भावियौवराज्ये, तृप्तस्य भोजने च प्रवृत्त्यापत्तिर्निरस्ता ।

**के चित्तु** इदानींतनमत्कृतिसाध्यताज्ञानं हेतुः । तच्च इदानींतनमदिष्टसाधनत्वज्ञानाधीनं इति तदभावान्न प्रवृत्तिः इत्याहुः । तन्न, तदनुकूलकृत्यभावेऽपि 'यदि मया क्रियते तदेदं भविष्यति' इत्येतादृशकृतिसाध्यत्वज्ञानस्य तदानीमपि सत्त्वात् ।

एवं च इष्टसाधनत्वबलवदनिष्टाननुबन्धित्वशुचितत्कालजीवित्वज्ञानजन्यानां कार्यताज्ञानानां कार्यताज्ञानत्वेन अनुगतानां प्रवृत्तौ हेतुत्वं इति लाघवम् । इष्टसाधनत्वज्ञानादीनां प्रवृत्तिं प्रति हेतुत्वे तु हेतुहेतुमद्भावत्रयकल्पनागौरवम् ।

न च इष्टसाधनत्वादिज्ञानानां कार्यताज्ञानहेतुत्वकल्पने 'तद्धेतोरेवास्तु' इति न्यायात् प्रवृत्तिं प्रति तेषामेव कारणत्वं युक्तम् । शाब्दबोधे तात्पर्यज्ञानस्येव प्रवृत्तौ कार्यताज्ञानस्य लाघवेन हेतुत्वात्, तद्धेतु-( तात्पर्यज्ञान हेतु- ) प्रकरणादीनां शाब्दबोधहेतुत्वाभाववत् कार्यताज्ञानजनकेष्टसाधनत्वज्ञानादीनां अपि तद्धेतुत्वकल्पनाऽयोगात् । तस्मात् कार्यताज्ञानमेव प्रवर्तकम्, कार्यत्वमेव विध्यर्थः । मणि. पृ. ८३-८४.

* प्रवर्तनं औदासीन्यात् प्रच्युतिः । सोम. १०।१।२. * प्रवर्तना इष्टसाधनत्वमेव इति शास्त्रदीपिकाकारस्य मतम् । सोम. १।२।१ पृ. ७. * प्रवर्तना च परनिष्ठप्रवृत्तिहेतुः प्रवर्तकधर्मः । प्रवर्तकधर्मत्वं च 'अहमेनं प्रवर्तयामि' 'देवदत्तस्त्वां प्रवर्तयति नाहम्' इत्यादिप्रतीतिसाक्षिकम् । भोजनस्य स्वनिष्ठप्रवृत्तिहेतुत्वेन प्रवर्तनात्ववारणाय प्रवृत्तिहेतुः इति । प्रवृत्तिहेतुलिङादिवारणाय धर्मत्वं समवेतं बोध्यम् । स च धर्मः लोके इच्छादिरूपः। वेदे तु तदसंभवात् लिङादिनिष्ठः अलौकिकः कल्प्यते । मणि. पृ. १०, * प्रवर्तना प्रवर्तयितुः परप्रवृत्त्यनुकूलव्यापारविशेषः । मणि. पृ. ९०, सोम. २।१।४ पृ. १०९. * प्रवर्तना प्रवृत्तिहेतुभूतः प्रवर्तयितुः धर्मः कश्चित् । स्वातन्त्र्ये 'देवदत्त एव मां प्रवर्तयति, न यज्ञदत्तः' इति व्यवस्थानुपपत्तेः । स च लिङ्धर्मः । प्रवर्तनाज्ञापनमात्रेण प्रवर्तकत्वे देवदत्तस्त्वां प्रवर्तयति इति प्रवर्तनात् यज्ञदत्तस्यापि प्रवर्तकत्वप्रसङ्गः । सर्वत्र लोके पुरुषस्य आचार्यादेः प्रवर्तयितुर्धर्मः 'अहमेनं प्रवर्तयामि' इति प्रवर्तयितुः मानसप्रत्यक्षवेद्यः प्रैषादिरूपः ( व्यापारः ) नापह्नोतुं शक्यते । वेदे तु पुरुषाभावेन लिङादेरेव प्रवर्तकत्वात् तद्धर्मो भविष्यति । सु. पृ. ३०. * प्रवर्तना लिङर्थः । मीन्या.

* **प्रवर्तनोपायाः** सामादयोऽपि । परिक्रयस्तु यज्ञे प्रत्यक्षमाम्नातः । **भा.** १०।२।८।२५.

* **प्रवर्तनात्वं** ( लिङः शक्यतावच्छेदकं ) परनिष्ठप्रवृत्तिजनकज्ञानविषयप्रवर्तकधर्मत्वम् । **मणि.** पृ. ११७, इष्टसाधनत्वमेव प्रवर्तना इति मण्डनः । पदार्थान्तरं प्रवर्तना इति भाट्टाः । अर्थभावनाभिधानानुकूला शक्तिरेव प्रवर्तना इति पितृचरणाः । ११८. * प्रवर्तनात्वं प्रवृत्त्यनुकूलव्यापारत्वम् । अनुकूलत्वं च जनकत्वम् । तच्च लोके पुरुषाशयवृत्ति । वेदे च तदभावात् इच्छाभिन्नस्य कस्य चित् प्रवर्तनात्वं बोध्यम् । अर्थभावनाभिधानानुकूलायाः लिङादिनिष्ठशक्तेरेव अभिधाख्यायाः प्रवर्तनात्वेन रूपेण लिङ्वाच्यत्वं परिकल्प्य तज्ज्ञानस्य प्रवृत्तिं प्रति कारणत्वमात्रं कल्प्यते इति पार्थसारथिः । **रहस्य.** पृ. ११.

* **प्रवर्तनारूपो** हि विधिः । **भाट्ट.** ४।१।१.

* ' **प्रवर्तेऽहमिति** ज्ञानं येन शब्देन जन्यते । स चोदनोच्यते यद्वा प्रवर्तनफला मतिः ॥ ' इत्युक्तम् । **सु.** पृ. ५७–५८, **रत्नाकरः.** चोदनासूत्रम् श्लो. १३.

* **प्रवादः** । निर्युक्तिकप्रवादः हेयः । **मणि.** पृ. १२.

* **प्रवासगतस्य** यजमानस्य अग्निहोत्रेषु अग्न्युपस्थानार्थं आशीर्मन्त्रः ' इहैव सन् तत्र सन्तं त्वाग्ने ' इति । **वा.** ३।८।६।१६.

* **प्रवाहनित्यत्वं** सजातीयप्रागभावसमव्याप्तसजातीयध्वंसकत्वरूपम् । **मणि.** पृ. १७५. * **प्रवाहनित्यत्वस्य** नैमित्तिकत्वाविरोधः । **सु.** पृ. १२०१.

* **प्रवाहसमुद्रन्यायेन** सर्वाणि वेदान्तवाक्यानि ऋजुकुटिलमार्गेण परमशिवप्रतिपादकान्येव । ( गङ्गादिप्रवाहाः सर्वे अन्ततः समुद्रमेव प्राप्नुवन्ति तद्वत्, इति न्यायाक्षरार्थः ) । **श्रीकर.** १।१।१२ ब्रसू.

* **प्रवीणः** । बहुषु वीणावादस्य गुणेषु सत्सु निपुणे एव प्रवीणशब्दो वर्तमानो रूढ इत्युच्यते । **भा.** ६।७।१०।२२.

* **प्रवृञ्जनं** तप्तघृते पयःप्रक्षेपः । **वा.** ३।३।१२।३२ टिप्पणी.

⌛ **प्रवृत्तेऽपीति चेत्** । ६।३।१७।३६ ॥

श्रुतद्रव्यापचारे प्रतिनिधौ उपात्ते, प्रवृत्तेऽपि कर्मणि कृतेषु केषु चित् संस्कारेषु यदि तदेव मुख्यं उपलभ्येत मुख्यमेव ग्राह्यम् ।

अत्र **टुप्टीका**— ' केषु चित् संस्कारेषु कृतेषु अनभिनिर्वृत्ते ( मुख्ये ) प्रयोजने श्रुतमेव उपादातव्यम् । न संस्काराणामनुरोधः, द्रव्यगुणत्वात् । तस्मात् ये अभिनिर्वृत्ताः संस्काराः तेषां ( मुख्ये ) आवृत्तिः स्यात् । एवमिदं सिद्धान्तसूत्रं भवति । पूर्वपक्षस्तु उत्प्रेक्ष्यः । अथवा प्रवृत्तेऽपीति चेत् कृते ( मुख्ये ) प्रयोजने श्रुतमागमयितव्यमिति ( पूर्वः पक्षः ) ' इति ।

खदिरालाभे कदरेण प्रयोगः प्रारब्धः । पशुनियोजनात् प्राचीनाः संस्काराः कृताः । तावति काले खदिरो लब्धः । तथा सति खदिरे आदित आरभ्य सर्वे संस्काराः पुनः कर्तव्याः । पशुनियोजनं च खदिरे कृत्वा शिष्टः प्रयोगः समापनीय इति सिद्धान्तः । अत्र ' प्रवृत्तेऽपीति चेत् ' इति प्रवृत्तशब्दः पशुनियोजनातिरिक्तसंस्कारग्राहकः ।

अथवापक्षे तु प्रवृत्तशब्दः पशुनियोजनान्तान् सर्वानेव संस्कारान् गृह्णाति । पशुनियोजनान्तेषु संस्कारेषु कृतेषु पश्चाल्लब्धः खदिरः । तदापि सर्वः प्रयोगः खदिरेण पुनः कर्तव्यः इति पूर्वः पक्षः । तत्र प्रथमपक्षे सूत्रार्थस्तु ' इति चेत् ' इति पूर्वसिद्धान्तपरामर्शः । मुख्याधिगमे मुख्यं इति चेन्न्यायः ततः प्रवृत्तेऽपि प्रतिनिधौ मुख्यमेवोपादेयं इति । अथवापक्षे तु न क्लेशः ।

**नानर्थकत्वात्** । ३७ ।

मुख्यस्य द्रव्यस्य खदिरस्य अलाभे कदरे प्रतिनिधौ पशुनियोजनं कृतम्, अथ खदिरो लब्धः, परंतु प्रवृत्ते जाते नियोजने सति खदिरो मुख्योऽपि न ग्राह्यः । अनर्थकत्वात् निष्फलत्वात् । इति सिद्धान्तः । **के.**

* ' **प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात्** ' इत्यष्टमाधिकरणे ( ८।१।३।३ ) पूर्वपक्षवक्ष्यमाणस्य क्लृप्तोपकारत्वात् दार्शपौर्णमासिकानां धर्माणां ग्रहणस्य कृत्स्नविधानात् तत्पूर्वत्वमिति सिद्धान्ते निराकरिष्यमाणत्वेन अभावात् । **सु.** पृ. ११७८.

**प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात् । ८।१। ३।३॥**

सोमे इष्टेः प्रवृत्तिः स्यात् प्रवृत्तत्वात् । दीक्षणीयायां प्रायणीयायां आतिथ्यायां पशौ उदयनीयायां च दार्शपौर्णमासिको विध्यन्तः प्रवृत्तः । तन्मध्यवर्तिनि सोमेऽपि स एव विध्यन्तः स्यात् । दीक्षणीयादिषु प्रवृत्तत्वात् इति पूर्वः पक्षः ।

**लिङ्गदर्शनाच्च । ४ ॥**

सोमे दार्शपौर्णमासिको विध्यन्तः इति पूर्वपक्षे लिङ्गमाह । 'तस्यैकशतं प्रयाजानुयाजाः' इति ऐष्टिकाः प्रयाजादयो धर्माः सोमे दृश्यन्ते । तदेतल्लिङ्गं सोमे ऐष्टिकस्य विध्यन्तस्य । श्रुतौ तस्येति सोमस्येत्यर्थः । चकारो हेतुसमुच्चयार्थः ।

**कृत्स्नविधानाद्वाऽपूर्वत्वम् । ५ ॥**

सोमे ऐष्टिको विध्यन्तः इति पूर्वपक्षं सूत्राभ्यां प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । सोमे इत्यनुवर्तते । सोमे अपूर्वत्वं स्यात् । स न कुतश्चित् धर्मान् गृह्णाति । कृत्स्नविधानात् । सोमे कर्तव्यानां सर्वेषामेव धर्माणां सोमप्रकरणे विधानं भवति । तस्मात् विहितधर्मकोऽयम् । अविहितधर्मकेषु तु अतिदेशः । तस्मात् सोमः स्वतन्त्रा प्रकृतिः ।

**स्रुगभिघारणाभावस्य च नित्यानुवादात् । ६ ॥**

सोमे ऐष्टिको विध्यन्तो नास्ति, स्वतन्त्रत्वात् तस्य इति सिद्धान्तिना उक्ते इयं शङ्का—– ननु 'घृतं वै देवा वज्रं कृत्वा सोममघ्नन्, स्रुचौ बाहू । तस्मात् स्रुचि सोमहविर्नासाद्यते । न सोममाज्येनाभिघारयति' इति निषेधोऽनुपपन्नः, प्राप्तिपूर्वकत्वान्निषेधस्य । तस्मात् निषेधात् लिङ्गात् ऐष्टिकस्य सोमे प्राप्तिरिति । तत्राह सिद्धान्ती । स्रुक् च अभिघारणं च तयोः अभावस्य नित्यानुवादः स्यात् । नित्यसिद्धस्यैव अभावस्यायमनुवादः, न तु प्राप्तस्य निषेधः । तस्मात् सोमे नैष्टिको विध्यन्तः ।

**विधिरिति चेत् । ७ ॥**

पूर्वपक्षी ब्रूते । स्रुचि सोमग्रहणस्य, आज्याभिघारणस्य च योऽयं निषेधः स न सिद्धानुवादः किन्तु विधिरेव निषेधरूपः । ततश्च सोमे ऐष्टिकविध्यन्तस्य प्राप्तिः । इति चेत् ।

**न वाक्यशेषत्वात् । ८ ॥**

सिद्धान्ती ब्रूते । सोमे योऽयं स्रुचि सोमासादनस्य आज्याभिघारणस्य च निषेधः स न विधिः किन्तु नित्यसिद्धानुवाद एव । कस्मात् ? वाक्यशेषत्वात् । 'अवधिषुर्वा एतत् सोमं यदभिषुण्वन्ति । यदस्य स्रुचौ बाहू कुर्वन्ति, यच्चाज्यमन्तिकमकार्षुः, यदाह, अंशुरंशुस्ते देव सोमाप्यायतामिति । यदेवास्याघ्नन् तं क्षुरमकुर्वन् तदाप्याययन्ति' इत्यत्र योऽयं 'अंशुरंशुस्ते' इति विधिः, तस्य वाक्यशेषोऽयं 'घृतं वै देवा वज्रं कृत्वा सोममघ्नन् स्रुचौ बाहू । तस्मात् स्रुचि सोमहविर्नासाद्यते, न सोममाज्येनाभिघारयति' इति । अस्य विधेर्वाक्यशेषत्वात् नायं निषेधरूपो विधिः संभवति । तस्मात् सिद्धानुवाद एव निषेधः । ततश्च ऐष्टिकविध्यन्तस्य सोमे न प्राप्तिः ।

**शङ्कते चानुपोषणात् । ९ ॥**

सोमः अपूर्व एव न तत्र ऐष्टिको विध्यन्तः इति सिद्धान्ते हेत्वन्तरमाह । अनुपोषणशङ्का हेत्वन्तरम् । उपोषणं नाम बर्हिषो दाहः । उष दाहे इति धातुः । यदि सोमे ऐष्टिको विध्यन्तः स्यात् उपोषणस्य प्राप्तत्वात् अनुपोषणशङ्का न स्यात् । अनुपोषणात् च शङ्कते 'यदनुपोष्य प्रयायात् ग्रीवबद्धमेनं अमुष्मिंल्लोके नेनीयेरन्' (तैसं. ३।३।८।३) इति । तस्मात् सोमे नैष्टिको विध्यन्तः ।

**दर्शनमैष्टिकानां स्यात् । १० ॥**

सोमे ऐष्टिको विध्यन्तः इत्यत्र 'तस्यैकशतं प्रयाजानुयाजाः' इति लिङ्गमुक्तं 'लिङ्गदर्शनाच्च' (८।१।३।४) इति सूत्रे तत्रोत्तरमाह सिद्धान्ती । उक्तं दर्शनं लिङ्गदर्शनं सोमगतानां ऐष्टिकानां स्यात् । सोमे या दीक्षणीयादय इष्टयः, तासु सर्वासु मिलित्वा ये प्रयाजानुयाजाः तेषां सा संख्या । अङ्गाङ्गमपि च 'तस्य' इति शक्यते वक्तुं यथा 'वाजपेयस्य यूपः' इति । तथा च न तल्लिङ्गं सोमे ऐष्टिकस्य विध्यन्तस्य साधकम् । के.

* अथ समस्तानामाग्नेयादीनां कथं चित् रूढेः 'प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात्' इतिवत्

ग्रहणम् । ( इष्टिशब्देन ) ...... । वा. २।२।३।३ पृ. ४८२.

**प्रवृत्तवरणात् प्रतितन्त्रं वरणं होतुः क्रियेत। १२।१।१८।३६ ॥**

दर्शपूर्णमासयोः होतुर्वरणं 'अग्निर्देवो दैव्यो होता देवान् यक्षत्' इत्याम्नातम् । तत् सोमाङ्गभूतेषु ऐष्टिकेषु कर्मसु प्राप्यते । सौमिकं होतुर्वरणं 'अग्निर्होता स मे होता होतस्त्वं मे होताऽसि इति होतारं वृणीते' इत्याम्नातम् । तत्र सौमिकेन वरणेन आनतो होता इति दार्शिकं वरणं न कर्तव्यं इति प्राप्ते सिद्धान्तमाह । प्रतितन्त्रं प्रतीष्टिकर्म होतुः वरणं क्रियेत । कुतः ? प्रवृत्तवरणात् वरणात् प्रवृत्ते कर्मणि दार्शिकं वरणं क्रियते, अतः तन्न आनत्यर्थम् । किं तर्हि ? कर्ममात्रम् । तदकरणे गुणवैगुण्यं स्यात् । तस्मात् प्रतिकर्म होतुर्वरणं भेदेन कर्तव्यं इति सिद्धान्तः ।

**ब्रह्माऽपीति चेत् । ३७ ॥**

पूर्वपक्षी अतिप्रसङ्गेन शङ्कते । यदि प्रवृत्ते कर्मणि होतुर्वरणं क्रियमाणं प्रतिकर्म कर्तव्यं तर्हि ब्रह्मा अपि प्रवृत्ते कर्मणि व्रियते प्रणीताप्रणयनकाले, तस्मात् तदपि धर्ममात्रत्वात् प्रतिकर्म कर्तव्यम् । इति चेत् ।

**न प्राङ्नियमात् तदर्थं हि । ३८ ॥**

होतृवरणवत् ब्रह्मवरणमपि प्रतिकर्म कर्तव्यं इति चेत् तत्राह सिद्धान्ती । न ब्रह्मवरणं प्रतिकर्म कर्तव्यम् । न तद्धर्ममात्रम् । प्राक् नियमात् प्राक् वरणात् न किञ्चित् ब्रह्मत्वमस्ति । वरणादुत्तरकालं ब्रह्मणः कर्म । हि यस्मात् ब्रह्मवरणं तदर्थं कर्मार्थमेव न धर्मार्थम् । तस्मात् ब्रह्मवरणं न प्रतिकर्म कर्तव्यम् । नास्ति तेनातिप्रसङ्गः ।

**निर्दिष्टस्येति । ३९ ॥**

पुनः पूर्वपक्षी शङ्कते । निर्दिष्टस्य करणात् ब्रह्माऽपि प्रवृत्तवरण इति चेत् । अमावास्यायां औपवसथ्येऽहनि वेदिकर्म निर्दिष्टम् । 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति । तत्र वेदिपरिग्रहप्रसवः ब्रह्मणा क्रियते । तेन ब्रह्माऽपि प्रवृत्तवरणः । प्रवृत्तवरणात् प्रतिकर्म ब्रह्मणो वरणं क्रियेत इति चेत् ।

**नाश्रुतत्वात् । ४० ॥**

अमावास्यायां पूर्वेद्युर्वेदिकर्मणो निर्दिष्टस्य करणात् ब्रह्मणोऽपि प्रवृत्तवरणत्वात् तद्वरणमपि प्रतिकर्म कर्तव्यमापद्येतेति चेत् । न । पूर्वेद्युरमावास्यायां वेदिकरणं श्रुतम्, न परिग्रहणम्, अश्रुतत्वात् यथाकालमेव प्रवृत्ते ब्रह्मणि परिग्रहः करिष्यते । अतो न प्रतिकर्म ब्रह्मवरणं कर्तव्यम् । विषमो दृष्टान्तः ।

**होतुस्तथेति चेत् । ४१ ॥**

पूर्वपक्षी शङ्कते । यदि प्रवृत्ते कर्मणि ब्रह्मणो वरणम्, न च वरणात् प्राक् किञ्चित् ब्रह्मणः कर्मास्ति, तस्मान्न प्रवृत्तवरणो ब्रह्मेति । तर्हि होतुः अपि तथा प्राग्वरणान्न किञ्चित् कर्मास्ति । ततः तस्यापि वरणं न धर्ममात्रम् । इति चेत् ।

**न कर्मसंयोगात् । ४२ ॥**

न होतुर्वरणं न धर्ममात्रं किन्तु धर्ममात्रमेव । दृष्टार्थकर्मसंयोगात् । अस्ति होतुः प्राग् वरणात् सामिधेनीकर्मणा संयोगः 'अवृतः सामिधेनीरन्वाह' इति । तत् दीक्षणीयादिषु ऐष्टिकेषु कर्मसु कर्तव्यम् । इति सिद्धान्तः । के.

* प्रवृत्तिः क्रमबोधकं प्रमाणम् । मणि. पृ. १३; * प्रवृत्तिः द्वेधा स्वेच्छाधीना पराधीना च । तत्र आद्यायां इष्टसाधनत्वादिधीः कारणम् । अन्त्यायां राजगुर्वादेः आज्ञाप्रेरणादिधीः । पृ. ८९. * प्रवृत्तिः प्रथमा द्वितीयादिपदार्थक्रमनियामिका, यथा वाजपेये प्राजापत्यपशुसंस्कारेषु । वि. ५।१।५. * प्रवृत्तिः विधिसिद्धा । सु. पृ. ६. * ये हि सह चोदितास्तेषां प्रवृत्तिः नियन्त्री । वा. ५।१।३।३.

**प्रवृत्त्या कृतकालानाम् । ५।१।१३।२५ ॥**

ज्योतिष्टोमे सुत्यादिने प्रथमं प्रातरनुवाकः, ततः प्रचरण्याख्यया स्रुचा 'शृणोत्वग्निः०' इति मन्त्रेण होमः, ततः सवनीयपुरोडाशनिर्वापः इति पठितम् । अध्वर्युर्होत्रे प्रातरनुवाकप्रैषं दत्त्वा प्रतिप्रस्थातारमेवं प्रेष्यति 'प्रतिप्रस्थातः सवनीयान्निर्वपस्व' इति । तेन प्रचरणीहोमादिभ्यः ऊर्ध्वं प्राप्तोऽपि सवनीयपुरोडाशनिर्वापः प्रातरनुवाककाले प्रैषवशादपकृष्टः । एवं 'बहिष्पवमाने स्तुते आह

अग्नीदग्नीन् विहर, बर्हिः स्तृणीहि, पुरोडाशानलङ्कुरु' इति प्रैषवशाच्च पुरोडाशालङ्कारादेरुत्कर्षः । एवं स्थिते प्रचरणीहोमादिभिः बहिष्पवमानान्तैः सौमिकपदार्थैः प्रोक्षणादिपदार्थानां ऐष्टिकानां एककालत्वेन अनुष्ठाने प्राप्ते प्रातरनुवाककाले सवनीयनिर्वापोत्तरं प्रथमं किं प्रचरणीहोमादयः सौमिकाः पदार्थाः कर्तव्या उत पौरोडाशिकाः प्रागलङ्करणात् ये पदार्थास्ते कर्तव्याः इति विचारे नियमशास्त्राभावात् अनियम इति पूर्वपक्षे उत्सूत्रे प्राप्ते सिद्धान्तमाह । कृतकालानां प्रकृतौ विहितकालानां ज्ञातकालानां पदार्थानां प्रवृत्त्या प्रवृत्तेन प्रथमोपस्थितेन निर्वपणेन नियमः स्यात् । प्रवृत्त्या इति कर्मणि क्तिन् । प्रकृत्या इति पाठं स्वीकृत्य दर्शपूर्णमासप्रयोगेण कृतकालानां ज्ञातकालानां नियमः इति वृत्तौ व्याख्यातम् । मयूखमालिकायां तु कृतकालानां ज्ञातकालानां प्रकृत्या नियमः इति व्याख्यातम् । तथा च आदौ पौरोडाशिकाः पश्चात् सौमिकाः इति क्रमः इति सिद्धान्तः । अत्र प्रावृत्तिकः क्रमः ।

**शब्दविप्रतिषेधाच्च । २६ ॥**

सिद्धान्ते हेत्वन्तरपरं सूत्रम् । चकारः समुच्चये । पूर्वपक्षे स्वीकृते शब्दविप्रतिषेधात् शब्देन विरोधस्य प्रसङ्गात् । अलङ्कुरु इत्युक्ते प्रोक्षणादीन् प्रतिपद्येत । अस्मत्पक्षे तु अलङ्कुरु इत्युक्ते अलङ्करणमेव प्रतिपत्स्यते । तस्मादत्र प्रावृत्तिकः क्रमः । **के.**

* प्रवृत्त्या क्रमो नियम्यते । वाजपेये प्राजापत्यपशुषु उपाकरणक्रमेण नियोजनादिक्रमनियमः । ५।१।५। ८–१२. * प्रवृत्त्या क्रमः प्रातरनुवाके सवनीयनिर्वापादिप्रागलङ्करणानां पौरोडाशिकानां धर्माणाम् । ५।१। १३।२५–२६.

**§ प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् । ५।१।५।८॥**

वाजपेये 'सप्तदश प्राजापत्यान् पशूनालभते' इति श्रूयते । तेषु पशुषु चोदकप्राप्ताः प्रोक्षणादयो धर्माः । तत्र प्रथमः पदार्थः यतः कुतश्चित् पशोरारब्धव्यः । द्वितीयादिषु पदार्थेषु भवति संशयः किं तत एव द्वितीयादिरपि पदार्थ आरब्धव्यः उत द्वितीयादिषु अनियम इति । अनियमः नियमकारणाभावात् इति पूर्वपक्षे प्राप्ते सिद्धान्तयति । तुल्यकालानां एककालीनानां गुणानां उपाकरणादीनां प्रवृत्त्या प्रथमाङ्गप्रवृत्त्यनुसारेण क्रमः स्यात् तदुपक्रमात् प्रथमाङ्गस्य तथैव उपक्रमात् । तथा च प्रथमाङ्गक्रमानुसारेण द्वितीयाद्यङ्गक्रमः तत्र स्वीकार्यः, सोऽयं प्रवृत्त्या क्रमः ।

**सर्वमिति चेत् । ९ ॥**

पूर्वपक्षी आह । प्रतिपशु सर्वं अङ्गजातं काण्डानुसमयेन स्यात् इति । इति चेत् ।

**नाकृतत्वात् । १० ॥**

पूर्वपक्षिणा उक्तं निरस्यति सिद्धान्ती । इति चेन्न । अकृतत्वात् उक्तस्य साहित्यस्य अकृतत्वप्रसङ्गात् । तस्मात् प्रवृत्तिक्रमेण पदार्थानुसमय एव ।

**क्रत्वन्तरवदिति चेत् । ११ ॥**

वाजपेये प्राजापत्यपशुषु उपाकरणादिसर्वगुणकाण्डं प्रतिपशु पृथक् कर्तव्यं क्रत्वन्तरवत्, यथा सौर्ये ऐन्द्राग्ने च प्राजापत्येभ्यः क्रत्वन्तरे सर्वं गुणकाण्डं प्रत्येकं पृथक् क्रियते तद्वत् । इति चेत् पूर्वपक्षी ब्रूयात् ।

**नासमवायात् । १२ ॥**

तन्न । कुतः ? असमवायात् सौर्यादिकाम्येष्टीनां तत्तत्फलार्थतया विहितानां साहित्यस्य असंभवात् गुणकाण्डं पृथक् भवति । प्राजापत्येषु तु एकस्मिन्नेव क्रतूपकारे साहित्यावगमात् न गुणकाण्डं पृथक् कर्तुं शक्यते । तस्मात् अत्र उपाकरणादीनां पदार्थानुसमयेन प्रथमप्रवृत्त्यनुसारेण द्वितीयाद्यङ्गस्य अनुष्ठानक्रमः स्वीकार्यः इति सिद्धान्तः । **के.**

* प्रवृत्त्या प्राजापत्येषु पशुषु उपाकरणादीनां प्रवृत्तौ अनिरूपित एव क्रमो निरूप्यते । प्रकृतावपि च संभवति तथा क्रमनियमः । यथा सांनाय्ययोर्दध्नः पूर्वं धर्माः ततः पयस इति । रत्न. ५।१।१।१ . * प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभाविता ज्योतिष्टोमे सुत्यायाम् । ५।१।१३। २५–२६. * प्रवृत्तेः तत्प्रकारकनिश्चयहेतुकत्वम् । मणि. पृ. २८. * प्रवृत्तीनां अभिधायकाख्यातवशेन ऐदमर्थ्यं निरूप्यते । वा. ३।४।४।१२ पृ. ९०१. * प्रवृत्तौ (क्रमे) अङ्गनिरूपितप्रत्यासत्त्यनुग्रहो बीजम् ।

भाट्ट. ५।१।७. * प्रवृत्तौ समीहितसाधनतावगम एव कारणम् । सोम. १।२।१ पृ. ६. * प्रवृत्तौ हेतुः । अन्यथाख्यातिरूपरजतत्वविशिष्टज्ञानस्यैव ग्रहे प्रवृत्त्यादिहेतुता । न च एवं चैत्रो रजतज्ञानवान्, कार्यताज्ञानवत्त्वात् इति ज्ञानात् मैत्रस्य प्रवृत्त्यापत्त्या भ्रान्तभ्रान्तिज्ञसंकरापत्तिः इति वाच्यम् । भ्रान्तिज्ञस्य बाधादेव प्रवृत्त्यभावोपपत्तेः । परकीयरजतत्वप्रकारकज्ञानज्ञानवतः क्षणविलम्बेन रजतत्वप्रकारकज्ञानादेव प्रवृत्त्यङ्गीकारात्, ज्ञानाविषयकज्ञानत्वेन प्रवृत्त्यङ्गीकाराद्वा । यद्वा रजतविषयकप्रवृत्तित्वावच्छिन्नं प्रति रजतत्वप्रकारतानिरूपितरजतनिष्ठमुख्यविशेष्यताशालिज्ञानत्वेन हेतुत्वात् न काऽप्यनुपपत्तिः । मणि. पृ. २७.

* प्रवृत्तिक्रमः अतिदेशविषयेऽपि । टुप्. ५।१।१।१ । न उपदेशविषय एव । प्रवृत्त्या हि प्राजापत्येषु पशुषु उपाकरणादीनां प्रकृतौ अनिरूपित एव क्रमो निरूप्यते । प्रकृतावपि च संभवत्येव तथा क्रमनियमः यथा सांनाय्ययोर्दध्नः पूर्वं धर्माः ततः पयस इति । रत्न. * प्रवृत्तिक्रमः प्रयोगवचनाश्रयत्वात् दुर्बलः । श्रुत्यर्थपाठकाण्डास्तु चोदकाश्रितत्वात् बलीयांसः । टुप्. ५।१।१०।१८. * प्रवृत्तिक्रमः । यतः पूर्वपदार्थ आरब्धस्तत एवोत्तर आरम्भणीयः, प्राजापत्यसप्तदशपशुषु प्रोक्षणादिधर्मेषु वाजपेये । भा. ५।१।५।८, * प्रवृत्तिक्रमेण किं पूर्वं दध्नः अवदानाभिघारणासादनानि उत मुख्यक्रमेण पूर्वमाग्नेयस्येति संदेहे, अवदानादीनां प्रदानचोदनागृहीतत्वात् पूर्वमाग्नेयस्येति सिद्धान्तः । प्रावृत्तिकक्रमात् मुख्यक्रमो बलीयान् । मुख्यं प्रधानम् । ५।४।२।२–४. ( दर्शपूर्णमासयोः स्विष्टकृदवदानम्, प्रयाजशेषाभिघारणम्, बर्हिषि हविरासादनं चोदाहरणानि– वार्तिकम् । न तु प्रधानचतुरवत्तावयववावदानाभिघारणविषयम् –तन्त्ररत्न. ) * प्रवृत्तिक्रमात् मुख्यः क्रमः प्रबलः । अत एव सांनाय्यावदानादितः प्राक् आग्नेयावदानादिकं क्रियते । अन्यथा हि सांनाय्यकरणे पूर्वदिने प्रवृत्तत्वात् आग्नेयनिर्वापस्य च उत्तरे दिने प्रवृत्तत्वात् वैपरीत्यं प्राप्तम् । वि. ५।४।२. * प्रवृत्तिक्रमात् मुख्यक्रमो बलवान् । ५।४।२।२–४. मीको. पृ. २०२० ' दर्शे आग्नेयपुरोडाशस्य० ' इत्यत्र द्रष्टव्यम् । * प्रवृत्तिक्रमे अङ्गनिरूपितप्रत्यासत्त्यनुग्रहो बीजम् । भाट्ट. ५।१।७.

* प्रवृत्तिक्रमनियमाधिकरणम् । ५।१।५।८–१२. ' प्रावृत्तिकक्रमन्यायः ' इत्यत्र द्रष्टव्यम् ।

* प्रवृत्तिक्रमविचारस्य पदार्थानुसमयो बीजम् । भाट्ट. ५।२।१.

* प्रवृत्तिनिवृत्त्योः कार्यावगमपूर्वकत्वम् । ऋजु. पृ. १६.

* प्रवृत्तिनिवृत्त्युभयरूपं वैदिकं कर्म । इदमेव पर्युदास इत्युच्यते । इदं द्विविधं क्रत्वर्थं पुरुषार्थं चेति । बाल. पृ. ८६.

* प्रवृत्तिरूपं वैदिकं कर्म क्रत्वर्थपुरुषार्थानुभयरूपम्, यथा तन्त्ररत्ने लिप्सासूत्रे अध्ययनं आधानं च । बाल. पृ. ८१, * प्रवृत्तिरूपं वैदिकं कर्म । तत्र द्रव्यप्रक्षेपांशेन अदृष्टार्थं देवतोद्देशेन च दृष्टार्थम्, यथा उत्तमः प्रयाजः । पृ. ८३, * प्रवृत्तिरूपं वैदिकं कर्म द्विविधं क्रत्वर्थं पुरुषार्थं चेति । पृ. ८१.

* प्रवृत्तिविशेषकरो यो न भवति सोऽनर्थकः । भा. १।४।१।२.

## प्रशंसा । १।४।१२।२३–४ ॥

' अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः ' ' अयज्ञो वा एष योऽसामा ' ' असत्रं वा एतद् यदच्छन्दोमं ' इति श्रूयते । अर्थवादा एते । गोअश्वान् स्तोतुं इतरेषां अजादीनां अपशुत्वमुक्तम् । एवं सामसहितस्य अग्निष्टोमादेः प्रशंसार्थं दर्शपूर्णमासादीनां सामरहितानां अयज्ञत्वमुक्तम् । एवं छन्दोमसहितानां द्वादशाहादीनां प्रशंसार्थं छन्दोमशून्यानां असत्रत्वमुक्तम् । तेनात्र अपशवः अयज्ञः असत्रं एते शब्दाः गौण्या प्रवृत्ताः । निमित्तं तु अत्र प्रशंसा ।

' पशुशीर्षाण्युपदधाति ' इत्युपक्रम्य ' पुरस्तात् प्रतीचीनमश्वस्योपदधाति, पश्चात् प्राचीनमृषभस्य ' इति गवाश्वविधिप्रक्रमेण तयोः प्राशस्त्यापेक्षाऽस्ति इति ' अपशवो वै ' इत्याद्युक्तम् । के.

* प्रशंसा गौण्याः शब्दवृत्तेः अन्यतमो हेतुः । ' अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः '

अत्रान्येभ्यः पशुभ्यः गोअश्वानां प्रशस्ततां निमित्तीकृत्य 'अन्ये अपशवः' इत्युक्तम्। शा. १।४।१६. * प्रशंसा द्वेधा [१] वस्तुनि विद्यमानगुणोत्कर्षः, [२] स्तावकेन शब्देन संपादितगुणोत्कर्षश्चेति। प्रथमोदाहरणं 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' इति। 'आग्नेयो वै ब्राह्मणो देवतया' इति द्वितीयोदाहरणम्। वि. १।४।१६. * 'प्रशंसा वा संस्कारः प्रस्तरस्य संनिधानात् समिन्धनार्थं इध्मः'। संकर्ष. २।४।३ सिद्धान्तसूत्रम्। कु. ३।२।५।१३.

**प्रशंसाऽधिकरणम्॥**

**प्रशंसा। १।४।१२।२३-४॥**

**भाष्यम्**-- 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' 'अयज्ञो वा एष योऽसामा' 'असत्रं वा एतद् यदच्छन्दोमम्' इति श्रूयते। तत्र विध्यर्थवादसंदेहे अर्थवत्त्वात् विधयः। इति प्राप्ते, अभिधीयते। यदि विधयो भवेयुः गोअश्वा एव पशवः स्युः, सामवानेव यज्ञः, छन्दोमवदेव सत्रम्। अन्येषां पशूनां यज्ञानां सत्राणां च उत्पत्तिरनर्थिका स्यात्। विध्यन्तरं च नावकल्पेत। अतः स्तुत्यर्थं संवादः। गोऽश्वान् प्रशंसितुं अन्येषां पशूनां निन्दा। सामवतः प्रशंसितुं असाम्नां निन्दा। छन्दोमवन्ति प्रशंसितुं अच्छन्दोमकानि निन्द्यन्ते। यथा यदघृतं अभोजनं तत्। यन्मलिनं अवासस्तत् इति।

**वा**— ननु सर्वत्र प्रशंसानिमित्तत्वं गुणवादस्य उक्तम्। सत्यम्, फलमन्यत्र गुणवादस्य प्रशंसा, अत्र तु गुणसारूप्यादिवत् प्रवृत्तिनिमित्तम्। कथमिति चेत्, **'गवाश्वादिगतां पूर्वमुपादाय प्रशस्तताम्। तदभावोऽन्यपश्वादौ नञ्समासेन कथ्यते॥'** न तावत् महिषादीनां पशुत्वस्वरूपाभावः शक्यते वक्तुम्, प्रत्यक्षविरोधात्। कार्यप्रतिषेधः कल्प्येत। तदपि तत्रतत्र वचनविहितत्वात् न शक्यमेव। न च विकल्पः, वैषम्यात्। कल्प्यो हि अत्र विधिः, इतरत्र क्लृप्तः। स्तुत्या वा अर्थवत्त्वात् नागत्या तदाश्रयणम्। तुल्यश्च मुख्यार्थत्यागः। 'पशवो गोअश्वाः' इति च पुनरुपादानमनर्थकम्। न च पशुत्वैकार्थसमवायिनः क्रियागुणाः शक्याः प्रविवेक्तुम्। अथ गवाश्वसमवायिनो विशेषाः प्रतिषिध्येरन्, एवमपि मन्दं फलम्। अन्यशब्देनैव च तावानर्थः सिद्धः इत्यनर्थकम्। अवश्यं च उत्तरपदेन प्रतिषेध्ये अर्थे प्रथममुपात्तेन तत्र अनुवर्तितव्यम्, विशेषरहितप्रतिषेधासंभवात्। न च प्रशस्तत्वात् अन्यत् उपादीयमानं उपयुज्यते। शक्नुवन्ति च गवाश्वादिसंबन्धात् तद्गतं प्राशस्त्यं गमयितुम्। यद्यपि अप्रशस्तत्वमपि शक्नुवन्ति, तथापि प्रक्रमापेक्षया तदिह अनाकाङ्क्षितमिति प्राशस्त्यमेव निषिध्यते। तत्प्रतिषेधमात्रमपि च नैव औपयिकम्, इति तद्द्वारेण अन्येषां प्रशस्ततरत्वं कथ्यते। एतदुक्तं भवति, गवाश्वादीनपेक्ष्य नैव अन्यस्य प्राशस्त्यं विद्यते इति। एवं अन्यगतप्रशंसानिमित्तः प्रतिषेधः। सा चेह प्रथमतरमाश्रिता इति अनन्यप्रयोजनतया पश्चादवगम्यते। अन्यत्र पुनः उत्तरकालमेव एषा भवन्ती निमित्तत्वेन उच्यते।

**शा**— 'अपशवो वा अन्ये गोअश्वेभ्यः, पशवो गोअश्वाः' इत्यत्र नामधेयत्वमनाशङ्क्यमिति गुणविधित्वेनैव पूर्वः पक्षः। ('अपशवो वा अन्ये गोअश्वेभ्यः' इत्यन्यशब्देन घटादयो नोच्यन्ते, किन्तु उपात्तगवाश्वसदृशत्वात् अजादय एवोच्यन्ते। तैत्तिरीयशाखायां 'अपशवो वा अन्ये गोअश्वेभ्यः पशवः' इत्यन्यशब्दसामानाधिकरण्येन पशुशब्दश्रवणाच्च। ततश्च अन्यशब्दसमानाधिकृतस्य अपशुशब्दस्य अजादिनामत्वमेव वाच्यम्, तच्च विरोधादनाशङ्कनीयमित्यर्थः) पशुकार्ये गवाश्वव्यतिरिक्तानां प्रतिषेधः क्रियते अजादीनामिति। सिद्धान्तस्तु, तत्रतत्र अजादीनां विहितत्वात् अशक्यः पशुकार्ये प्रतिषेधः। तस्मादर्थवादः। प्रशंसानिमित्तस्तु परशब्दस्य पशुव्यतिरिक्तघटादिवचनस्य अपशुशब्दस्य परत्र अजादिषु पशुषु प्रयोगः। ननु सर्व एव प्रशंसानिमित्तोऽर्थवादः, किमत्र विशेषेणोपन्यस्यते? सत्यम्, फलमन्यत्र गुणवादस्य प्रशंसा। तत्सिद्ध्यादिना गुणेन परशब्दः प्रवृत्तः प्रशंसापरो भवति। इह तु शब्दप्रवृत्तिनिमित्तमपि गुणः प्रशंसैव। १।४।१६.

**सोम**-- नामधेयप्रस्तावे तत्प्रतिपक्षतया प्रसक्तगुणविध्यर्थवादविचाररूपत्वात् संगतिः। अग्निचयने पशु-

शीर्षोपधाने 'पुरस्तात् प्रतीचीनमश्वस्योपदधाति, पश्चात् प्राचीनमृषभस्य' इति विधेः अर्थवादोऽयं 'अपशवो वै०' इत्यादिः।

**वि**— 'पशवोऽन्ये गवाश्वेभ्योऽपशवो वा इति श्रुतम्। अजादिष्वपशुत्वं यद् गुणो वादोऽथवा, ऽस्तु तत्॥ स्तुत्यभावाद्गुणस्तेषु पशुकार्यनिषेधनम्। अशक्यत्वान्निषेधस्य घटाद्यर्थाभिधायिना ॥, पशवोऽपशुशब्देन प्राशस्त्याभावसाम्यतः। लक्ष्यास्तत्र निमित्तं तु प्रशंसैव गवाश्वयोः॥'

**भाट्ट**— 'अपशवो वा अन्ये०' इत्यत्र अजादीनां तत्रतत्र विहितत्वात् पशुकार्ये प्रतिषेधस्य पर्युदासस्य वा अनुपपत्तेः अर्थवादत्वम्। अपशुशब्दो घटादौ मुख्यः गवाश्वगतप्राशस्त्याभावरूपगुणयोगात् अजादौ गौणः सन् लक्षणया गवाश्वगतस्तुत्यर्थः। प्राचां मते तु नञ्समासान्तर्गतपशुपदेन गवाश्वगतप्राशस्त्यं लक्षयित्वा नञा तदभावरूपो गुण उपस्थाप्यते इति विशेषः। सर्वथा प्रशंसा गौणीनिमित्तघटिका इति सिद्धम्।

**मण्डन**— 'प्रशंसाऽश्वे पशूक्तिः स्यात्।' १६.

**शंकर**— 'प्रशंसातः क्वचिच्चेयम्।' १६. इयं गौणी।

* अर्थवादानां अवयवार्थपरत्वाभावे **प्रशंसाधिकरणविरोधः**। तत्र अपशुशब्दस्य अप्राशस्त्यगुणयोगात् गौण्या वृत्त्या अजादिपशुषु वृत्तेर्व्यवस्थापनात्। कु. १। २।१।१८.

* **प्रशंसार्थवादः** 'वायुर्वै क्षेपिष्ठा देवता' इति। बाल. पृ. ५०.

**⌛ प्रशसाऽस्यभिधानम्। ९।४।४।२३॥**

अध्रिगुप्रैषे 'प्रशसा बाहू' इति पठितम्। तत्र प्रशसा इति प्रातिपदिकेन अस्यभिधानं असेः अभिधानं स्यात्। असौ हि शासशब्दः प्रसिद्धः 'दश प्रयाजानिष्ट्वाऽऽह शासमाहरेति', 'असिं वै शासमाचक्षते' इति। तस्मात् प्रशसा असिना बाहू छिन्धि इत्यर्थः। इति पूर्वः पक्षः।

**बाहुप्रशंसा वा। २४॥**

अध्रिगुप्रैषे 'प्रशसा बाहू' इति पठ्यते। तत्र प्रशसा इत्यस्य असिना इत्यर्थः इति पूर्वः पक्षः। तं वाशब्देन व्यावर्त्य सिद्धान्तमाह। प्रशसा इति शब्देन बाहुप्रशंसा बाह्वोः प्रशंसा बोध्यते। प्रशसा बाहू कृणुतात् प्रशस्तौ बाहू छेत्तव्यौ इत्यर्थः। पशुविशसनार्थं स्वधितिः (छुरिका) विहिता नासिः। असिश्च पूर्वपक्षिणा उच्यते इति वैचित्र्यम्। तस्मात् प्रशसा प्रशस्तौ इत्यर्थः। के.

* **प्रशसाशब्देन** अध्रिगुप्रैषगतेन बाह्वोः प्रशंसा। ९।४।४. मीको. पृ. ३४५ 'अध्रिगुप्रैषगतेन प्रशसाशब्देन०' इत्यत्र द्रष्टव्यम्।

* **प्रशस्तं** च प्रतिपाद्यम्। भा. ६।७।१२।२६.

* **प्रश्नः अर्थवादः** 'वेदकर्णवतीं सूर्मिम्' इति। बाल. पृ. ५०. * **प्रश्नेनैवोपक्रमो** भवति (क्वचित्), यथा—का नामेयं नदी, को नामायं पर्वतः, किमिदं फलं इति। भा. ३।३।४।११, * पूर्वं हि **प्रश्नेन** भवितव्यं ततः प्रतिवचनेन। ३।५।१६।४२.

* **प्रश्नमन्त्रः** 'पृच्छामि त्वा परमन्तं पृथिव्याः' इति। बाल. पृ. ५९.

* **प्र(प)ष्ठौही** वर्षत्रयवयस्का। वि. ४।४।१, * '**प्र(प)ष्ठौहीम**श्विभ्याम्' (तैसं. १।८।१९) इति राजसूये पशुः। ४।४।१.

* **प्रसक्तस्य** च प्रतिषेधो न्याय्यः (नाप्रसक्तस्य)। भा. ६।७।१२।२७.

**⌛ प्रसक्तानुप्रसक्तन्यायः**। अयमन्योद्देशेन अन्यदीयस्यापि सहानुष्ठाने अन्योद्देशेन प्रवृत्तौ अन्यस्यापि सिद्धौ यावत् तत्र प्रवर्तते। यथा अलं प्रसक्तानुप्रसक्तेन इत्युक्तिः प्रायो ग्रन्थेषु दृश्यते। साहस्री. ५६४.

* **प्रसङ्गः** अग्निचयने देवसुवां हविःषु अनुनिर्वाप्येषु अग्नीषोमीयपशुपुरोडाशतन्त्रस्य। १२।३।२।३–८. मीको. पृ. ३८३ 'अनुनिर्वाप्याधिकरणम्' इत्यत्र द्रष्टव्यम्। * प्रसङ्गः। अधुना प्रसङ्गलक्षणं द्वादशे व्याख्यायते। प्रसङ्गशब्दार्थः अन्यैरुक्तः (साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः) 'एवमेव प्रसङ्गः स्याद्विद्यमाने स्वके

विधौ ' इति । अन्यत्र कृतस्य अन्यत्रापि प्रसक्तिः प्रसङ्गः । यथा प्रदीपस्य प्रासादे कृतस्य राजमार्गेऽप्यालोककरणम् । भा. १२।१।१।१. * प्रसङ्गः अनुबन्ध्यायां अनुनिर्वाप्येषु देविकाहविःषु पशुपुरोडाशतन्त्रस्य । १२।३।२. मीको. पृ. ३८३ 'अनुनिर्वाप्याधिकरणम्' इत्यत्र द्रष्टव्यम् । * प्रसङ्गः अन्योद्देशेन अन्यदीयस्यापि सहानुष्ठानम् । पश्वर्थं प्रयाजेषु कृतेषु पशुपुरोडाशार्थं पृथक् प्रयाजा न क्रियन्ते, प्रसङ्गसिद्धत्वात् पशूद्देशेन क्रियमाणानां पशुपुरोडाशीयप्रयाजानां अनुष्ठानं भवत्येवेति । वि. १२।१।१ प्रस्तावश्च. * प्रसङ्गः अमावास्यातन्त्रस्य निशीष्टौ । १२।२।५. मीको. पृ. २३८५ 'निशीष्टिन्यायः' इत्यत्र द्रष्टव्यम् । * प्रसङ्गस्तत्र, यत्र अन्यार्थेनाङ्गेन अन्यस्योपकार; । यत्र सकृत् कृतं सर्वेषामुपकरोति तत्र तु तन्त्रम् । रत्न. १२।२।७।२४. * प्रसङ्गः त्रिविधः अनुष्ठानप्रसङ्गः, पदार्थप्रसङ्गः, शास्त्रप्रसङ्गश्चेति । तत्र पदार्थस्य तत्त्वे सति परार्थमनुष्ठानेन परस्योपकारः अनुष्ठानप्रसङ्गः । यथा पशुपुरोडाशादौ पश्वर्थप्रयाजादेः । पदार्थस्य भेदे सत्यपि परार्थमुपात्तेन परस्योपकारः पदार्थप्रसङ्गः । यथा सौमिक्या वेदेः इष्टिपशुवेद्यपेक्षया भेदेऽपि तया सोमान्तर्गतेष्टिपशुषु उपकारः । एकेन शास्त्रेण शास्त्रान्तरस्य उपकारः शास्त्रप्रसङ्गः । यथा 'याजनादिभिर्ब्राह्मणो धनमर्जयेत्' इति द्रव्यार्जनशास्त्रेण ज्योतिष्टोमादिशास्त्रस्य ऋत्विगपेक्षस्य अविशेषेण त्रैवर्णिकमार्त्विज्यमाक्षिप्य वृत्तस्य उपकारः । तस्मात् 'अन्यार्थेन गृह्यमाणविशेषेण अन्यस्य तत्प्रयुक्तिशक्तस्योपकारः प्रसङ्गः' इत्यादिकमन्यदेव प्रसङ्गसामान्यलक्षणं बोध्यम् । सोम. १२।१।१ पृ. ८४६. * प्रसङ्गः त्रिविधः प्रधानप्रसङ्गः, अङ्गप्रसङ्गः, प्रधानाङ्गप्रसङ्गश्च इति । तत्र प्रधानप्रसङ्गः त्रिविधः प्रकृत्योः विकृत्योः प्रकृतिविकृत्योश्चेति । तत्र [ १ ] प्रकृत्योः प्रसङ्गो यथा— काम्येन अग्निहोत्रादिप्रयोगेण नित्यतत्प्रयोगस्य प्रसङ्गः । [ २ ] विकृतिप्रधानयोः प्रसङ्गो यथा— या विकृतयो निमित्ते कामे च विहितास्तत्र युगपत् निमित्तफलकामोत्पत्तौ अग्निहोत्रवदेव काम्यप्रयोगेण नित्यप्रयोगस्य प्रसङ्गसिद्धिः । स्मार्तोदाहरणं तु दर्शश्राद्धविकृतिभूतयोः महालयापरपक्षश्राद्ध–नित्यश्राद्धयोर्मध्ये पूर्वेण उत्तरस्य प्रसङ्गसिद्धिः । प्रकृतिविकृतिप्रसङ्गस्तु द्विविधः प्रकृत्या विकृतेर्विकृत्या वा प्रकृतेः । तत्रोभयत्र श्रौतमुदाहरणं मृग्यम् । स्मार्ते तु [ ३ ] आद्योदाहरणं यथा— दर्शश्राद्धेन नित्यश्राद्धस्य प्रसङ्गसिद्धिरिति । [ ४ ] द्वितीयोदाहरणं तु यथा— तीर्थश्राद्धेन दर्शश्राद्धस्य प्रसङ्गसिद्धिरिति । अङ्गप्रसङ्गस्तु षोढा, तद्यथा [ ५ ] औपदेशिकेन अङ्गेन औपदेशिकस्य प्रसङ्गः, यथा— वैश्यनिमित्तकेन साप्तदश्येन नित्याङ्गस्य पाञ्चदश्यस्य । [ ६–७ ] तथा काम्येन नित्यस्य नैमित्तिकस्य च, यथा— प्रतिष्ठार्थस्य एकविंशत्यनुवचनस्य अङ्गेन एकविंशतित्वेन नित्यस्य पाञ्चदश्यस्य, वैश्यनिमित्तकस्य च साप्तदश्यस्य प्रसङ्गसिद्धिः । [ ८ ] तथा औपदेशिकेनाङ्गेन आतिदेशिकस्य प्रसङ्गो यथा— दर्शार्थेन प्रयाजादिना निशीष्ट्यर्थस्य प्रयाजादेः प्रसङ्गसिद्धिः । [ ९ ] तथा आतिदेशिकेन आतिदेशिकस्य प्रसङ्गो यथा— पश्वर्थेन प्रयाजादिना पशुपुरोडाशार्थस्य प्रयाजादेः प्रसङ्गसिद्धिः । [ १० ] तथा आतिदेशिकेन औपदेशिकस्य प्रसङ्गो यथा— श्येने अतिदिष्टैः कर्तृभिः प्रयोगविधितः चोदकबलीयस्त्वेन प्रापितैः श्येनस्य औद्गात्रसमाख्यया प्रापितस्य उद्गातुः कार्यसिद्धेः प्रसङ्गः । प्रधानाङ्गप्रसङ्गश्चतुर्धा । प्रकृतिप्रधानेन अङ्गस्य प्रसङ्गसिद्धिः, अङ्गेन च प्रकृतिप्रधानस्येति द्वौ भेदो । विकृतिप्रधानेन अङ्गस्य प्रसङ्गसिद्धिः, अङ्गेन च विकृतिप्रधानस्य इति द्वौ भेदाविति । एषु चतुर्ष्वपि भेदेषु श्रौतोदाहरणानि मृग्याणि । स्मार्तानि तूच्यन्ते । [ ११ ] तत्राद्ये भेदे उदाहरणं यथा— काम्येन अमावास्याश्राद्धेन यात्राद्यङ्गभूतश्राद्धस्य प्रसङ्गसिद्धिः । [ १२ ] द्वितीयभेदे उदाहरणं यथा—– यात्राद्यङ्गभूतश्राद्धेन नित्यामावास्यस्य प्रसङ्गसिद्धिः । [ १३ ] तृतीयभेदोदाहरणं यथा— काम्यभरण्यादिश्राद्धेन यात्राद्यङ्गभूतश्राद्धस्य प्रसङ्गसिद्धिः । [ १४ ] चतुर्थभेदोदाहरणं यथा— यात्राद्यङ्गभूतश्राद्धेन नित्यश्राद्धस्य प्रसङ्गसिद्धिरिति ।

तदेवं चतुर्दशविधः प्रसङ्गो निरूपितः । बाल. पृ. १४९–१५०. * प्रसङ्गः द्वादशाध्यायार्थः । टुप्.

७।१।१।१. * प्रसङ्गो न ज्योतिष्टोमे दीक्षाकालीनेन जागरणेन दार्शिकजागरणस्य । १२।१।८।१७.

**प्रसङ्गो न ज्योतिष्टोमे सवनीयपुरोडाशादिषु सौमिकपात्रैर्ग्रहचमसैः दार्शिकपात्राणां जुह्वादीनाम् ॥**

**पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् । १२।१। ४।१० ॥**

**भाष्यम्**— सोमे एव यानि दर्शपूर्णमासप्रकृतीनि ग्रहचमसे प्रयुक्ते वर्तन्ते, यथा सावनः पशुः, सावनाः पुरोडाशाः, सौम्यश्चरुरिति । तेषु विचार्यते किं तेषां ग्रहैश्चमसैर्वा होमः कर्तव्यः, अथवा दार्शिकैः स्रुवादिभिः पात्रैरिति । तत्रोच्यते । पात्रेषु च प्रसङ्गः स्यात् । कुतः ? होमार्थत्वात् । होमार्थानि तानि पात्राणि । स च होमो ग्रहचमसेनापि निर्वर्त्यते । सोमतन्त्रमध्यपतितानि कर्माणि । तेषु ग्रहैश्चमसैर्वा होमः कर्तव्यः ।

**न्याय्यानि वा, प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् । ११ ॥**

**भाष्यम्**— न्याय्यानि वा दार्शपूर्णमासिकानि स्युः । तैर्होमः क्रियते । कुतः ? प्रयुक्तत्वात् । प्रयुक्तानि तानि विद्यन्ते । यदगृहीत्वाऽऽज्यानि सोममासादयेयुः अपघ्नन्ति यजमानम् । अथ यद्गृहीत्वा आज्यान्यासादयन्ति, न यजमानमपहन्ति इति प्रथमं तावत् तेषां प्रयोगः । प्रोक्षणं संमार्जनं च, तत आज्यग्रहणम् । तान्येव आज्यप्रयुक्तानि विद्यन्ते । अप्रयुक्ते प्रसङ्गः स्यात् । यन्मध्यपातिनोऽङ्गं न प्रयुक्तम्, तत्कार्ये तन्त्रिणोऽङ्गं प्रसज्यते । स्वस्याभावे हि परकीयमुपजीव्यते । असंनिहिते हि स्वस्मिन् याने देवदत्तो यज्ञदत्तयानमारोहति । संनिहिते तु स्वयानेनैव हि याति । तत्र हि तस्य यादृशं स्वातन्त्र्येण गमनसुखम्, न तादृशं परयाने । पुरोडाशानामपि दार्शिकैः पात्रैः यादृशं साद्गुण्यं तादृशं ग्रहचमसैर्न । न तत्र प्राकृत्यो वृक्षजातयः प्रोक्षणादयश्च संस्कारा लभ्यन्ते । ग्रहचमसे तेषामभावः । येऽपि सौमिकाः, तैः पुरोडाशानामसंबन्धः । यदि पुनर्दार्शिकान्यप्रयुक्तानि भवेयुः, किं ग्रहचमसं प्रसज्येत ? नेति ब्रूमः । दार्शिकान्येव प्रसज्येरन् । यत्र तन्त्रिणोऽङ्गं क्रियमाणं इतरस्यापि कृतं भवति, तत्र प्रसङ्गः, यथा पाशुकेषु प्रयाजेषु क्रियमाणेषु पौरोडाशिकाः । इह तु ग्रहचमसे प्रयुक्ते, नेतराणि प्रयुक्तानि भवन्ति । न हि सोमे हूयमाने पुरोडाशा हुताः । तस्मान्नास्त्यत्र प्रसङ्गः । किं तर्हीदमुच्यते अप्रयुक्ते प्रसङ्गः स्यादिति । यदि प्रयोग एषां नोपपद्येत, प्रतिषिध्येत वा, ततः प्रसङ्गः स्यादित्यर्थः । अपि च न्याय्यानि दार्शपूर्णमासिकानि, न ग्रहचमसम् । किं तेषां न्याय्यत्वम् ? दर्शपूर्णमासयोस्तानि शब्देनोक्तानि । ततश्चोदकेन पुरोडाशे अतिदिश्यन्ते इत्यस्ति शब्दसंस्पर्शः । ग्रहचमसेन तु हविर्यज्ञे न कश्चिद्धोमः श्रुतः । अर्थात् क्रियेत । असति शब्दोक्ते अर्थक्रिया भवति । दर्शयति चैतानि पात्राणि, 'युनज्मि ते पृथिवीं ज्योतिषा सहेति ध्रुवामभिमृशति, युनज्मि वायुमन्तरिक्षेण ते सहेत्युपभृतम्, युनज्मि वाचं सह दिवा सूर्येणेति जुहूम्' इति । तस्मादेतैर्होमः कर्तव्यः ।

**शा**— सोमाङ्गेषु ऐष्टिकेषु कर्मसु किं सोमार्थान्येव पात्राणि प्रसज्येरन्, उत जुह्वादीनि पात्राणि पृथक् प्रयोक्तव्यानि इति संदेहे सौमिकैरेव होमार्थैः ऐष्टिकानामपि होमादिकार्यसिद्धेः प्रसङ्गं मन्यते । जुह्वादिकार्याणि होमादीनि अन्यैः क्रियमाणानि विगुणीभवेयुः । न चात्र अन्यैरेव होमादयः कृताः, येन पृषदाज्यानूयाजवत् न पुनः क्रियेरन् । तेन कर्तव्याः सन्तो होमादयः साद्गुण्यसंभवे किमिति विगुणाः क्रियन्ते । तस्मात्र पात्रप्रसङ्गः ।

**सोम**— यदि प्रचारार्थतयाऽपि वेद्या प्राकृतहविरासादनसिद्धिः, तदा किमु वक्तव्यं होमार्थतया समानार्थैः पात्रैः प्रकृतहोमसिद्धिः इत्युत्थितेः संगतिः ।

**वि**— 'सौम्यचर्वादिहोमः किं सौमिकैरैष्टिकैरुत (पात्रैः) ।, कार्यसिद्धेः सौमिकैः स्या, दवैगुण्यादिहैष्टिकैः ॥'

**भाट्ट**— सौमिकानां ग्रहचमसादिपात्राणां स्वरासादनोत्तरं यान्यैष्टिकविकाराणि सवनीयपश्वादीनि, तेषु तैरेवोपात्तैः कार्यसिद्धेः न प्राकृतजुह्वादिपात्राक्षेपकत्वम् । इति प्राप्ते, न तावत् तैः सोमप्रक्षेपेण हविरन्तरप्रक्षेपसिद्धिः, तस्य पृथगनुष्ठानावश्यकत्वात् । हविरन्तरप्रक्षेपादौ च न ग्रहादीनां कारणता प्रकृते प्रामाणिकी, उपदेशातिदेशयोरभावात् प्रयाजाद्यदृष्टानां हि पुरोडाशोपकारकत्वे

अतिदेशेन सिद्धे युक्तं यत् सिद्धानामेव तेषामुपजीवनम्, प्रकृते तु सौमिकानामेतत्प्रक्षेपाद्यङ्गत्वे प्रमाणाभावात् महावेदिवच्च ग्रहचमसेषु आकारविशेषविशिष्टकाष्ठविशेषत्वादिरूपजुहूत्वादिरूपसत्त्वे प्रमाणाभावात्, आतिदेशिकपात्राणां चाधानवेलायामेवोपात्तत्वेन लाघवन्यायस्याप्यभावात् नात्र प्रसङ्गसिद्धिः। अत एव सुत्यादिने 'युनज्मि ते पृथिवीं ज्योतिषा सहेति स्रुचमभिमृशति' इत्यादिना ऐष्टिकपात्राणामभिमर्शनं विहितम्। अत एव 'ग्रहैर्जुहोति' इत्यादिना अङ्गप्रधानसाधारणप्रक्षेपानुवादेनैव 'हिरण्मय्यः स्रुचो भवन्ति' इतिवत् ग्रहादिविधानादुपदेशेनैव हविरन्तरप्रक्षेपे ग्रहादिप्राप्तेरैष्टिकपात्रबाधः इत्यपि अपास्तम्, तथात्वे ध्रुवादिदर्शनवैयर्थ्यात्, ग्रहादीनां सोममात्रार्थत्वे गमकान्तराणामपि सत्त्वाच्च।

**मण्डन**— 'ग्रहादिभिर्नैष्टिकहोम इष्यते।'

**शंकर**— 'पात्राणि प्रसजन्ति न।' सौमिकानि दैक्षादौ।

**⌛ प्रसङ्गो न सोमाङ्गेष्टिगतशेषभक्षाणां सौमिकदक्षिणया॥**

**शेषभक्षास्तथेति चेत्। १२।१।१७।३४॥**

**भाष्यम्**— अथ शेषभक्षा अपि तथा निवर्तेरन्, यथा अन्वाहार्यः, इति चेत्। परिक्रयार्थाशङ्कयोच्यते।

**न, कर्मसंयोगात्। ३५॥**

**भाष्यम्**— नैते निवर्तेरन्। नह्येते परिक्रयार्थाः। अन्वाहार्येण कर्मार्थमानतानां निर्वृत्तेः भूयिष्ठे कर्मण्येते विधीयन्ते। न चालमानमनाय। तस्मान्नैते परिक्रयार्थाः, किंतु संस्कारार्थाः। अतस्तदर्थं कर्तव्याः।

**शा**— पूर्वं यजमानभक्षस्य वृत्त्यर्थत्वात् व्रतेन निवृत्तिराशङ्किता। संप्रति ऋत्विग्भक्षाणां परिक्रयार्थतया प्रधानदक्षिणया निवृत्तिराशङ्क्यते। निराकरणं च तद्वदेव शेषप्रतिपत्त्यर्था भक्षाः नानत्यर्था इति। दशमे एव च (शेषभक्षाश्च तद्वत् १०।२।९।३०) आनत्यर्थत्वं भक्षाणां निराकृतम्। तस्येदं प्रयोजनं प्रसङ्गात्मकत्वेन इहोक्तम्।

**सोम**— यदि प्रधानदक्षिणया आनतिः कृता इत्यन्वाहार्यनिवृत्तिः, तदा भक्षणानामपि निवृत्तिः स्यात् इत्युत्थितेः संगतिः। सूत्रे तथा अन्वाहार्यवत् इत्यर्थः।

**वि**— 'ऋत्विग्भक्षा, निवर्तेरन् यद्यन्वाहार्यवत्, न तत्, याजमानवदेतेषां कार्यत्वात् प्रतिपत्तये॥'

**भाट्ट**— ऋत्विक्कर्तृकाणां शेषभक्षाणां द्वितीयया शेषप्रतिपत्त्यर्थत्वेऽपि प्रयाजशेषाभिघारणन्यायेनानत्यर्थत्वस्यापि करिष्यमाणकर्मणि बलाधानार्थत्ववत् संभवात्, तस्यैव चानुमानिकतया प्रयोजकत्वावगतेः युक्त एव द्वादशशतदक्षिणया प्रसङ्गः। इति प्राप्ते, अन्वाहार्यदक्षिणानियमविधिबलेन शेषभक्षस्यानत्यर्थत्वाकल्पनात् केवलं द्वितीयया शेषप्रतिपत्त्यर्थत्वम्। प्रयाजशेषन्यायेन च ऋत्विक्प्राणधारणापरपर्यायबलाधानार्थत्वमित्युक्तं दशमादौ। अतो नात्रापि प्रसङ्गसिद्धिः॥

**मण्डन**— 'न चानतिद्वारभृतिप्रदानादङ्गेष्टिभक्षा विनिवर्तनीयाः।'

**शंकर**— 'ऋत्विग्भक्षास्त्वैष्टिकाः स्युः।' १८.

* प्रसङ्गो निशियज्ञे अमावास्यातन्त्रस्य, परंतु इध्माबर्हिः पृथक् कार्यं अग्न्यन्वाधानं च यदि देवतार्थम्। १२।२।५।१४–१८. * प्रसङ्गः परार्थमनुष्ठितस्यापि परोपकारकत्वम्। रत्न. १२।१।१।१. * प्रसङ्गः पशुपुरोडाशतन्त्रस्यैवानुनिर्वाप्येषु (अग्निचयनादौ) देवसुवां हविरादिषु। १२।३।२. मीको. पृ. ३८३ 'अनुनिर्वाप्याधिकरणम्' इत्यत्र द्रष्टव्यम्। * प्रसङ्गः विशेषग्रहणे सकृदनुष्ठानम्। विशेषग्रहणं च सप्तधा– फलकामनातः निमित्ततः रूपतः संख्यातः कालतः मन्त्रतः कर्तृतश्चेति। बाल. पृ. १४९. * प्रसङ्गः सवनीयपुरोडाशेषु पाशुकतन्त्रस्यैव, न विकल्पः। १२।२।१२। ३०–३२. 'सवनीयादिन्यायः' इत्यत्र द्रष्टव्यम्। * प्रसङ्गः सौमिकवेद्या दार्शिकवेदेः। १२।१।३।८–९. * 'एवमेव प्रसङ्गः स्यात् विद्यमाने स्वके विधौ'। तन्त्रवदेव प्रसङ्गः। अयं तु विशेषः विद्यमाने स्वके विधौ इति। यद्यप्यस्य अन्यो विधिर्विद्यते, परविधिना तु कृतार्थत्वान्न क्रियते। यथा प्रयाजाः पशोरपि चोदकेन प्राप्ताः पशुपुरोडाशस्यापि। पश्वर्था एव तु कृताः पशु-

पुरोडाशस्योपकुर्वन्तीति न पुनस्तदर्थं क्रियन्ते । भा. १२।१।१।१, * न च तुल्यकालत्वे प्रसङ्गो भवति । यथा वैकृत्यः इष्टयः दर्शपूर्णमासाभ्यां तुल्यकाला अपि न दार्शपौर्णमासिकं तन्त्रं उपजीवन्ति । १२।२।५।१५.

* प्रसङ्गस्य विषयः । अस्ति प्रसङ्गः । तस्य विषयो निरूप्यते । अन्यस्य तन्त्रे प्रतते यदन्यत् तुल्यधर्मकमापतति कर्म, तस्य पूर्वकर्मणो येतिकर्तव्यता, सा प्रसज्यते । यथा पशौ प्रतते पशुपुरोडाश आपतति । तस्य पाशुकीतिकर्तव्यता प्रसज्यते । कथम् ? तदुच्यते । भावयेत् । किम् ? पशूपकारम् । केन ? पुरोडाशयागेन । कथं इत्यनेन यागगतो व्यापारः । स चोपमितलक्षितंप्रापणेन अग्नीषोमीयस्य यो यागगतो व्यापारः, तं साद्दश्येनाकाङ्क्षति । स इह पाशुकेन प्रयोगवचनेन कृतत्वात् न भूयः पौरोडाशिकः समीपे करोति । तस्मात् पौरोडाशिकः प्रयोगवचनो लुप्यते । एष प्रसङ्गः । टुप्. १२।१।१।२.

* प्रसङ्गत्वं विशेषग्रहणात् अन्यार्थस्यापि अन्योपकारकत्वम् । बिन्दुः. १२।१।१।१.

* प्रसङ्गलक्षणः प्राप्तबाधः सप्तविधः – प्रधानप्रसङ्गः एकः, अङ्गप्रसङ्गः षोढा । बाल. पृ. १३२. * प्रसङ्गलक्षणे ( द्वादशाध्याये ) अन्यार्थैरेव अङ्गैः उपक्रियमाणाः पशुपुरोडाशादयः न स्वाङ्गान्युपसंगृह्णन्ति । न च तद्धान्या किञ्चिद्वैगुण्यं भवति । वा. ३।६।३।१०.

* प्रसङ्गसंगतिः । यत्प्रसक्त्या यो विचारः, तत्समाप्तौ स एव बुद्धिस्थो भवति । सु. पृ. ४७०.

* प्रसङ्गसिद्धं ज्योतिष्टोमे ऐष्टिकेषु कर्मसु दार्शिकं आरण्यभोजनं चोदकप्राप्तं सौमिकेन पयोव्रतादिना । १२।१।१४।३०. * प्रसङ्गसिद्धं दार्शिकं व्रतं प्रायणीयादिषु सौमिकपयोव्रतादिना । १२।१।११. मीको. पृ. १८१८ ' ज्योतिष्टोमे प्रायणीयादिषु ' इत्यत्र द्रष्टव्यम् । * प्रसङ्गसिद्धं न होतुर्वरणं ज्योतिष्टोमे ऐष्टिकेषु कर्मसु । तत् प्रतिकर्म भेदेन कर्तव्यम् । भा. १२।१।१८।३५–४१, * प्रसङ्गसिद्धं प्रातःसवनीयानां पुरोडाशानां तन्त्रं पाशुकेन तन्त्रेण, माध्यंदिनसवनीय–तृतीयसवनीय–पुरोडाशतन्त्रं तु पाशुकेन वा प्रातःसवनीयपुरोडाशतन्त्रेण वा प्रसङ्गसिद्धम् । १२।२।१२।३०–३२, * प्रसङ्गसिद्धं ब्रह्मवरणं ज्योतिष्टोमे ऐष्टिकेषु कर्मसु दार्शिकं चोदकप्राप्तं सौमिकेन । १२।१।१८।३६–३९. * प्रसङ्गसिद्धं हविष्कृदाह्वानं पश्वर्थेन आह्वानेन सवनीयपुरोडाशेषु । १२।२।३।११.

* प्रसङ्गसिद्धः न दार्शिकः ऐडादिः शेषभक्षः ज्योतिष्टोमे ऐष्टिकेषु कर्मसु चोदकप्राप्तः, संस्कारार्थत्वात् । १२।१।१५।३१–३२. * प्रसङ्गसिद्धः परिक्रयः अन्वाहार्यः दार्शिकः ज्योतिष्टोमे ऐष्टिकेषु कर्मसु चोदकप्राप्तः सौमिकेन परिक्रयेण । १२।१।१६।३३. * प्रसङ्गसिद्धा न आरम्भणीया विकृतिषु दर्शपूर्णमासारम्भणीयया । १२।२।६।१९–२१. * प्रसङ्गसिद्धा हविष्कृत् सवनीयपश्वर्थया, तृतीयसवने सवनीयपुरोडाशेषु, सौम्ये चरौ आश्विने द्विकपाले च, भेदेन नाह्वातव्या । १२।२।४।१२–१३.

* प्रसङ्गसिद्धिः अग्नीषोमीयपशुपुरोडाशतन्त्रेण देवसुवां हविषां तन्त्रस्य । १२।३।२।३–८. * प्रसङ्गसिद्धिः अनुबन्ध्यातन्त्रेण अनुनिर्वाप्याणां देविकाहविषां तन्त्रस्य । भा. १२।३।२।३–८. * प्रसङ्गसिद्धिः उपसदग्नीषोमीयबर्हिःप्रोक्षणस्य आतिथ्याबर्हिःप्रोक्षणेन । १२।१।१९. मीको. पृ. ८८७ ' आतिथ्याबर्हिःप्रोक्षणादिना० ' इत्यत्र द्रष्टव्यम् । * प्रसङ्गसिद्धिः दार्शिकारण्यभोजनस्य सौमिकप्रायणीयादीष्टिषु पयोव्रतादिना । १२।१।१४।३०. * प्रसङ्गसिद्धिः दार्शिकवेदेः सोमाङ्गेष्टिपश्वादिषु सौमिकवेद्या । १२।१।३. 'सौमिकवेदिन्यायः' इत्यत्र द्रष्टव्यम् । * प्रसङ्गसिद्धिः दीक्षणीयादिषु अन्वाहार्यदक्षिणायाः सौमिकदक्षिणया । १२।१।१६. ' सौमिकदक्षिणान्यायः ' इति बिन्दौ द्रष्टव्यम् । * प्रसङ्गसिद्धिर्नास्ति आतिथ्याबर्हिस्स्तरणमन्त्रेणाग्नीषोमीयार्थस्तरणमन्त्रस्य ज्योतिष्टोमे । १२।१।२०।४४. * प्रसङ्गसिद्धिर्नास्ति ज्योतिष्टोमे दीक्षाकालीनजागरणेन प्रायणीयादिषु दार्शिकजागरणस्य । १२।१।८।१७. * प्रसङ्गसिद्धिर्नास्ति दर्शपूर्णमासार्थान्वारम्भणीयया विकृतिषु अन्वारम्भणीयायाः । १२।२।६।१९–२१. * प्रसङ्गसिद्धिर्नास्ति दार्शिकहोतृवरणस्य सौमिकेष्टिपश्वादिषु सौमिकेन होतृवरणेन । १२।१।१८।३५–४२. * प्रसङ्गसिद्धिर्नास्ति

पशुपुरोडाशे आज्यभागयोः। १२।१।२।७. * प्रसङ्गसिद्धिर्नास्ति सोमाङ्गेष्टिषु शेषभक्षाणां सौमिकदक्षिणया। १२।१।१७।३३-३४. * प्रसङ्गसिद्धिर्नास्ति सौमिकेन दीक्षाकालीनजागरणेन दार्शिकजागरणस्य। १२।१।८. मीको. पृ. १७५३ 'जागरणन्यायः' इत्यत्र द्रष्टव्यम्। * प्रसङ्गसिद्धिर्नास्ति सौमिकपात्रैर्दार्शिकपात्राणां सवनीयपुरोडाशादिषु ज्योतिष्टोमे। १२।१।४।१०-११. * प्रसङ्गसिद्धिर्न इध्मस्य बर्हिषः अग्न्यन्वाधानस्य च निशियज्ञे अमावास्यातन्त्रगतस्य। भा. १२।२।५।१८.

**प्रसङ्गसिद्धिर्न ऐष्टिकशेषभक्षाणां सौमिकव्रतभक्षेण ॥**

**शेषभक्षास्तथेति चेत्। १२।१।१५।३१॥**

**भाष्यम्**— दर्शपूर्णमासयोः शेषभक्ष ऐडादिः, सोमे चैष्टिकेषु कर्मसु चोदकप्राप्तः। सोऽपि सौमिकेन व्रतेनाऽऽरण्यवन्निवर्तते इति चेत्।

**नान्यार्थत्वात्। ३२॥**

**भाष्यम्**— न। कस्मात्? न स वृत्त्यर्थः। नहि अलं वृत्तये। संस्कारार्थोऽसौ, उपयुक्तशेषत्वात् भक्षाणाम्, द्वितीयानिर्देशाच्च 'यजमानपञ्चमा इडां भक्षयन्ति' इति। तस्मात् कर्तव्यम्।

**शा**— तदिदं षष्ठे एव साधितम् (६।८।८)। तस्य तु इदं प्रयोजनकथनं प्रसङ्गात्मकत्वात् इहोक्तम् (इति संगतिः)।

**सोम—सूत्रे** आरण्याशनवत् अकर्तव्यत्वं तथाशब्दार्थः।

**वि**— 'यजमानगता भक्षा, न सन्त्यारण्यवद् यदि।, न वृत्त्यर्था इमे किन्तु कर्तव्याः प्रतिपत्तये ॥'

**भाट्ट**— एवं तर्हि यजमानकर्तृकाणां शेषभक्षाणामपि प्रयाजशेषाभिघारणन्यायेन कर्तृसंस्कारकत्वस्यापि सत्त्वात् प्राणधारणार्थत्वोपपत्तेः, सत्यपि द्वितीयया शेषप्रतिपत्त्यर्थत्वे अस्मदुक्तप्रयाजशेषाभिघारणन्यायेन आनुमानिकस्यैव प्राणधारणस्य प्रयोजकत्वावगतेः, तस्य च पयोव्रतेन प्रसङ्गसिद्ध्युपपत्तिः। **इति प्राप्ते,** आरण्याशननियमविधानात् तेनैव प्राणधारणकर्तव्यत्वप्रतीतेः यजमानभक्षस्य केवलशेषप्रतिपत्त्यर्थत्वावसायात् तस्य च प्रसङ्गसिद्ध्यभावेन भक्षयितव्य एव यजमानेन प्रायणीयादिष्वपि शेषः।

**मण्डन**— 'स्याच्छेषभक्षः पुनरत्र दर्शवत्।'

**शंकर**— 'यष्टृभक्षाः पृथक् तु स्युः।' १६.

* प्रसङ्गसिद्धिः निशियज्ञे वेद्युद्धननस्य व्रतस्य च अमावास्यातन्त्रगतस्य। भा. १२।२।५।१४-१८. * प्रसङ्गसिद्धिः पश्वर्थानुष्ठितप्रयाजादिभिः पशुपुरोडाशस्य। १२।१।१।१-६. * प्रसङ्गसिद्धिः पशुपुरोडाशानुयाजानां पाशुकैरनुयाजैः। बिन्दुः. ५।१।१५. * प्रसङ्गसिद्धिः प्रकृतेर्वैकृताङ्गेन प्रकृतिविकृत्योः समानतन्त्रत्वे। (कृत्वाचिन्ता)। १२।२।१३।३३. मीको. पृ. २६९५ 'प्रकृतिविकृत्योः समानतन्त्रत्वे०' इत्यत्र द्रष्टव्यम्। * प्रसङ्गसिद्धिः प्राकृतस्य आरण्यभोजनस्य सौमिकपयोव्रतादिना प्रायणीयादिषु। १२।१।१४. मीको. पृ. ९७२ 'आरण्यभोजनन्यायः' इत्यत्र द्रष्टव्यम्। * प्रसङ्गसिद्धिः सोमाङ्गदीक्षणीयादीष्टिषु अन्वाहार्यदक्षिणायाः सौमिकदक्षिणया। १२।१।१६।३३.

**प्रसङ्गसिद्धिः सौमिकेन पत्नीसंनहनेन सौमिकेष्टिपशुषु पत्नीसंनहनस्य ॥**

**संनहनं च, वृत्तत्वात्। १२।१।१३।२९॥**

**भाष्यम्**— पत्न्याः संनहनं च दर्शपूर्णमासयोः समाम्नातं 'योक्त्रेण पत्नीं संनह्यति' इति। तत् सोमाङ्गभूतेष्वैष्टिकेषु कर्मसु चोदकेन प्राप्तमपि न कर्तव्यम्। कुतः? वृत्तत्वात्। दीक्षाकाले सोमार्थं पत्न्याः संनहनं वृत्तम्, 'योक्त्रेण पत्नीं संनह्यति, मेखलया दीक्षितम्, मिथुनत्वाय' इति यदाम्नातम्। संनहनं च वाससो धारणार्थं सर्वार्थम्। सौमिकेनैव आकर्मापवर्गात् प्रसङ्गेन सिध्यतीति।

**सोम**— पूर्वोक्तान्वाधानवैलक्षण्यात् **संगतिः। सूत्रार्थस्तु** संनहनं च न कर्तव्यं सोमे तस्य प्रवृत्तत्वात् इति।

**वि**— 'पत्नीसंनहनं, कार्यं चोदकादिति चे, न तत्। बन्धवासोधारणयोर्योक्त्रबन्धनसिद्धितः ॥'

**भाट्ट**— दर्शपूर्णमासयोः 'योक्त्रेण पत्नीं संनह्यति' इति विहितं संनहनं प्रायणीयादिषु दीक्षाकालकृतेन योक्त्र-

करणकपत्नीसंनहनेन प्रसङ्गसिद्धेर्न कार्यम्, दीक्षणीयायां तु कर्तव्यमेव। **बोधायनेन** तु तत्रापि नेत्युक्तम्। नहि तददृष्टार्थम्, येन जागरणन्यायेन पुनः क्रियेत, वासोधारणार्थत्वरूपदृष्टप्रयोजनसंभवे अदृष्टकल्पनस्यान्याय्यत्वात्। न च अत्र अन्वाधानवत् आद्यवासोधारणार्थत्वाप्रतीतेः सकृद्धृतस्यापि पुनःश्लथीभावसंभवेन सवनीये यूपदार्ढ्यातिशयार्थं परिव्याणान्तरवत् पुनः संनहनोपपत्तिरिति **वाच्यम्**। उपदिष्टपरिव्याणस्य विकृतौ प्रयोजनान्तरकल्पनायामपि प्राकृतस्य संनहनस्यासंनद्धसंनहनार्थत्वेन क्लृप्तप्रयोजनस्य विकृतौ कार्यान्तरकल्पनानुपपत्तेः। **यदि** तु संनहनं प्रकृतावेव न वासोधारणार्थम्, अपि तु करिष्यमाणकर्मणि बलाधानार्थमित्युच्येत, **तथापि** सोमार्थसंनहनेनैव बलाधानसिद्धेः, श्लथीभावे च तस्यैव प्रकृतिवत् कर्षणोपपत्तेः प्रसङ्गसिद्ध्यविरोधः।

**मण्डन**— 'पत्न्याश्च संनाह इहेष्यते न वै।'

**शंकर**— 'पत्नीसंनहनं नैव।' सोमे इष्टिषु। १४.

* प्रसङ्गसिद्धिः सौमिकवेद्या दार्शिकवेदेः सोमाङ्गेष्टिपशुषु। १२।१।३।८–९. * **प्रसङ्गसिद्धिः** सौमिकव्रतैः ज्योतिष्टोमीयप्रायणीयादिषु दार्शिकव्रतानाम्। १२।१।११।२०–२३. * **प्रसङ्गसिद्धेः** उदाहरणानि **मीको.** पृ. १२९१ 'एकादशाध्यायार्थः' इति बिन्दौ द्रष्टव्यानि।

* यदीयतन्त्रमध्ये अर्थान्तरं स तन्त्री, अर्थान्तरं **प्रसङ्गि**। वि. १२।२।१२. * यस्य पूर्वमुपक्रमः यस्य वा पश्चात् समाप्तिः स तन्त्री, इतरस्तु **प्रसङ्गी**। **शा.** १२।२।१२.

* **प्रसङ्गित्वम्**। भूयसां तन्त्रित्वम्, अल्पानां प्रसङ्गित्वम्। प्रसङ्गः उपकारलाभनिमित्तः। (यस्य प्रसङ्गेन सिद्धिः स प्रसङ्गी, येन च तन्त्रं स तन्त्री)। **भाट्ट.** १२।२।७–८.

* **प्रसज्यप्रतिषेधः**। 'प्रतिषेधः स विज्ञेयः क्रियया सह यत्र नञ्'। ('न कलञ्जं भक्षयेत्' इत्यादौ नञर्थः प्रसज्यप्रतिषेधः)। **मीन्या.**

* **प्रसज्यप्रतिषेधार्थकत्वे** नञो विधायकेनान्वयः, पर्युदासार्थकत्वे तु धातुनाऽन्वयः। 'न कलञ्जं भक्षयेत्' अत्र नञः लिङा अन्वयः, प्रसज्यप्रतिषेधार्थकत्वात्। 'नेक्षेतोद्यन्तमादित्यम्' अत्र नञः 'ईक्ष'धातुनैवान्वयः। **वि.** ६।२।५.

* **प्रसज्यप्रतिषेधस्थले** नञो न समासः 'न तौ पशौ करोति'। वि. १०।८।२.

* **प्रसञ्जकचिन्ता**। यत्प्रसक्त्या या चिन्ता क्रियते तत्समाप्तौ प्रसञ्जकचिन्ता बुद्धिस्था भवति। **सु.** पृ. ८०७.

* **'प्रसरं न लभन्ते हि यावत् केचन मर्कटाः। नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे॥'** इति न्यायः (वा. १।३।२।३ पृ. १७१)। आरोपितार्थत्वमेव गौणत्वं लोकवेदानुगुणं इति चेत्, सत्यम्। तथापि वेदे आरोपितार्थत्वस्वीकारे अप्रामाण्यापत्तेः अयं पक्षः आचार्यैः (पार्थसारथिभिः) दूषितः। यद्यपि रुद्ररोदनादिवत् असदर्थेनापि स्तुतिसंभवात् नाप्रामाण्यप्रसक्तिः, तथापि 'प्रसरं॰ गोचरे' इति न्यायेन वेदे प्रामाण्यविरोधिनः आरोपितार्थत्वस्यावकाशो न देयः इत्याशयेन तन्निराकरणं कृतमिति ध्येयम्। **सोम.** १।४। १३ पृ. ८५. * वार्तिकादिषु यदारोपप्रच्छादनं (आरोपितत्वरूपगौणत्वस्य निषेधः) तत् वेदप्रामाण्यसंरक्षणव्यसनितया। **'प्रसरं न लभन्ते हि॰'** इति न्यायमवलम्ब्य वेदप्रामाण्यप्रतिषेधकारणस्य कियतोऽपि अवकाशस्यालाभाय आरोपपक्षः प्रौढ्या प्रच्छादितः। **परिमल.** ३।३।४।९ ब्रसू.

* **प्रसर्पकाः** प्रसर्पन्ति यज्ञमण्डपेषु तत्रतत्र। यज्ञे अर्थसंशये निर्णायकाः। यज्ञार्थशालोपविष्टाः विद्वांसः शिष्टा ब्राह्मणा त्रिप्रभृतयः। **ज्योत्स्ना.** १०।१।१०.

* **प्रसादो** देवतास्तित्वसाधकः 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति चेत्, न, अर्थवादानां स्वार्थे तात्पर्याभावात्। **वि.** ९।१।४.

* प्रसिद्धमुद्दिश्याप्रसिद्धो बोध्यते इति न्यायः। **उपदेशसाहस्री**. पद्य. १८।१७७ रामतीर्थ.

* **प्रसिद्धेन** अप्रसिद्धं निर्णीयते। **मीन्या.** * 'प्रसिद्धे-

नाप्रसिद्धस्य नित्यमिष्टं विशेषणम् ' इत्यनेन न्यायेन विश्वजिदादिपदवत् यागनामधेयत्वमेव अमीषां ( दाक्षायणयज्ञ–साकंप्रस्थायीय – संक्रमयज्ञशब्दानाम् ) । तौता. २।३।४।५ पूर्वपक्षे.

* **प्रसिद्धस्य** संनिधौ यदभिधीयते किञ्चिदिदं कर्तव्यमिति तत्र आकृतिवचनं गम्यते, यथा–अमी पिष्टपिण्डाः सिंहाः क्रियन्तां इति, अर्जुनत्रदरा मेखलाः क्रियन्तां इति, सिंहाकृतिवचनं मेखलाकृतिवचनं च गम्यते । भा. ९।४।५।२५.

**प्रसिद्धानुवादेनाप्रसिद्धं निरूपणीयमिति न्यायः** । अयं न्यायो दृग्दृश्यविवेकापरपर्यायवाक्यसुधाख्यग्रन्थटीकायां व्यवहृतः "वाक्यार्थज्ञानस्य चान्वयव्यतिरेकाभ्यां पदार्थपरिशोधनपूर्वकत्वात्, पदार्थपरिशोधनस्य '.प्रसिद्धानुवादेनाप्रसिद्धं निरूपणीयम् ' इति न्यायेन प्रतिशरीरं अहमहमिति प्रसिद्धजीववाचकत्वं पदार्थपरिशोधनपूर्वकत्वात् " इति । साहस्री. ६३९.

* **प्रसिद्धिः** नाम प्रज्ञानम् । भा. ३।२।१।१ पृ. ७४८, * प्रसिद्धिर्वाक्येन बाध्यते । २।३।७।१८.

* **प्रसिद्धिहानाप्रसिद्धकल्पनं** व्यवहारोच्छेदकारणम् । वा. १।४।१२।२३–१ पृ. ३५६.

* **प्रसूनबर्हिर्नियम** आग्रयणे जघन्यद्यावापृथिव्यानुरोधेन मुख्यस्याप्यैन्द्राग्नादेः विरोधाभावात् । भा. १२।२।१४।३४.

* **प्रसूनमयं बर्हिः** आग्रयणे द्यावापृथिव्यैककपालानुसारेण हविस्त्रितयेऽपि । प्रसूनं पुष्पितम्, लूनशेषात् मूलात् पुनरुत्पन्नं वा । वि. १२।२।१४.

* **प्रस्तरः** आहुतिः, सूक्तवाको याज्या इति पूर्वपक्षे। भा. ३।२।५।१२, * प्रस्तरः उत्तरो बर्हिषः ( उपरि ) सादयितव्यः । १।४।१२।२३–१. * प्रस्तरस्तावत् प्रासङ्गिकस्तेषां सवनीयपुरोडाशानाम् । यदर्थश्च प्रस्तरः पश्वर्थः तदर्थं प्रहरणम्, प्रहरणाङ्गं च सूक्तवाकः । टुप्. ११।३।१६।५४. * प्रस्तरः दर्भमुष्टिविशेषः ( प्रथमलूनः कुशमुष्टिः ) । वि. ३।२।५. * प्रस्तरः स्रुग्धारणार्थः । भा. ३।२।५।११, ६।४।१४।४४. * ' यजमानः प्रस्तरः ' अत्र विधेयः प्रस्तरः यजमानशब्देन स्तूयते । यागसाधनत्वं चात्र यजमानगुणः । वि. १।४।१३. * प्रस्तरस्य शाखायाश्च प्रहरणं प्रतिपत्तिः । भा. ६।४।१४।४४, * शेषस्यापि वचनात् अनेकत्र गुणभावो भवति, यथा प्रस्तरस्य । १२।४।६।१६.

**प्रस्तरे शाखा श्रयणवत् । ६।४।१४।४४॥**

दर्शपूर्णमासयोः ' सह शाखया प्रस्तरं प्रहरति ' इति श्रूयते । तत्र प्रस्तरे अग्नौ प्रह्रियमाणे शाखा अङ्गं स्यात् । प्रस्तरस्य अङ्गभूता शाखा । अदृष्टश्च शाखया प्रस्तरे उपकारः । प्रस्तरे प्रहृते तदङ्गभूता शाखाऽपि अग्नौ प्रहर्तव्या इति पूर्वः पक्षः । श्रयणवत् । यथा ' पयसा मैत्रावरुणं श्रीणाति ' इति मैत्रावरुणग्रहे पयसः श्रयणं मिश्रणं श्रुतम् । तत्र द्वितीयातृतीयासंयोगात् अदृष्ट उपकारो गम्यते तद्वत् ।

**कालविधिर्वोभयोर्विद्यमानत्वात् । ४५ ॥**

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्य सिद्धान्तमाह । ' सह शाखया प्रस्तरं प्रहरति ' इति कालविधिः स्यात् । यस्मिन् काले प्रस्तरप्रहरणं तस्मिन् काले एव शाखाप्रहरणं इति कालार्थः संयोगः । नात्र प्रस्तरस्य विधिः, नापि शाखायाः, उभयोः शाखाप्रस्तरयोः विद्यमानत्वात् । वत्सापाकरणार्था शाखा पूर्वं विहिता । प्रस्तरोऽपि स्रुग्धारणार्थं प्राप्तः । तस्मात् कालार्थः संयोगः ।

**अतत्संस्कारार्थत्वाच्च । ४६ ॥**

पूर्वपक्षस्य निराकरणे हेत्वन्तरमाह सिद्धान्ती । तस्य प्रस्तरस्य संस्कारः तत्संस्कारः । तत्संस्कारः अर्थः प्रयोजनं यस्याः सा तत्संस्कारार्था, पलाशशाखा च तत्संस्कारार्था न भवति । न शाखया प्रस्तरस्योपकारो दृष्टः क्रियते । काष्ठं दह्यमानस्य तृणस्य नोपकारे वर्तते, तृणं तु काष्ठस्योपकुर्यात् । तस्मान्न शाखा प्रस्तरार्था ।

**तस्माच्च विप्रयोगे स्यात् । ४७ ॥**

' सह शाखया प्रस्तरं प्रहरति ' इति यस्मात्प्रस्तरस्य शाखा नाङ्गं तस्मात् पौर्णमास्यां शाखायाः प्रस्तरस्य विप्रयोगे असंयोगेऽपि विना शाखया प्रस्तरः प्रहर्तव्यः स्यात् । किंच सवनीयेषु हविःषु सवनीयपशुतन्त्रं प्रसज्यते इति द्वादशे वक्ष्यते । अतः पाशुक एव प्रस्तरः सवनीयानां नान्यः । तस्य च प्रहरणं तदाद्युत्कर्षन्यायेन

आग्निमारुतादूर्ध्वं अनुयाजेषु उत्कृष्यमाणेषु उत्कृष्टं तृतीयसवने । शाखा च सवनीयहविरन्तर्गतपयस्यार्थमुत्पादिता अपूर्वत्वात् वेदिकरणन्यायेन नोत्कृष्यते । अतः सा प्रातःसवने एव प्रहर्तव्या विनाऽपि प्रस्तरेण । इति सिद्धान्तः ।

**उपवेषश्च पक्षे स्यात् । ४८ ॥**

'सह शाखया प्रस्तरं प्रहरति' इत्यत्र शाखा न प्रस्तराङ्गं इति सिद्धान्ते सांनाय्यपक्षे विद्यमानायाः शाखायाः प्रतिपत्तिः इति सांनाय्यपक्षे एव उपवेषोऽपि स्यात् । तस्मात् कालार्थः संयोगः । वस्तुतस्तु 'उपवेषेण कपालान्युपदधाति' इति 'उपवेषेण अङ्गारान्निरुह्य दोहकुम्भीमधिश्रयति' इति च श्रवणात् उपवेषः सांनाय्यार्थः कपालोपधानार्थश्च । ततश्च पूर्णमासे दोहाभावेऽपि कपालोपधानं आत्मनिर्वृत्त्यर्थं उपवेषं प्रयोजयेत् । तत्र शाखाया अभावेऽपि वारणवृक्षस्योपवेषः कार्यः । इति कुतूहले उक्तम् । के.

*** प्रस्तरादिस्तुत्यर्थो** यजमानशब्दः 'यजमानः प्रस्तरः', 'यजमान एककपालः' इति । वि. १।४।१३.

*** प्रस्तरप्रहरणं** 'इदं द्यावापृथिवी०' इत्यादिना सूक्तवाकमन्त्रेण प्रस्तरस्य अग्नौ प्रक्षेपः । वि. ३।२।५, *** प्रस्तरप्रहरणं** देवतासंस्कारः । ३।२।५. *** प्रस्तरप्रहरणम्** । 'न च प्रहरणं यागमात्ररूपेऽवतिष्ठते । होम एव स्वयं स्पष्टः, प्रक्षेपाधिक्यचोदनात् ॥ आघारादि यथा द्रव्यक्षारणाद्धोमतां गतम् । तथा प्रक्षेपरूपत्वात् हरणस्यापि (प्रहरणस्यापि) होमता ॥' वा. ३।२।५।१२ पृ. ७६१. *** प्रस्तरप्रहरणं** प्रतिपत्तिः यागोऽपि । 'प्रतिपाद्येत प्रस्तरो यागश्च निर्वर्त्यते । प्रत्यक्षतः प्रतिपाद्यते, वचनात् इज्यां साधयति ।' भा. ३।२।५।१५. *** प्रस्तरप्रहरणम्** । प्रस्तरद्रव्यस्य हविष्ट्वसंकीर्तनादग्न्यादीनां च देवतात्वात् यागोऽयं विज्ञायमानः प्रक्षेपाधिकत्वात् होम इत्यवधार्यते । वा. ३।२।५।१३ पृ. ७६३. *** प्रस्तरप्रहरणेन** सह दर्शे शाखाप्रहरणं प्रतिपत्तिः । सा च संनयत एव, न तु असंनयतः । वि. ६।४।१४. *** प्रस्तरप्रहरणस्य** स्रुगासादनोपयुक्तप्रस्तरप्रतिपत्त्यर्थत्वम् । सु. पृ. ६३४. *** प्रस्तरप्रहरणे** अस्थियज्ञे मृताधिकारपक्षे सूक्तवाकमन्त्रगतः यजमानाऽऽशासनपरो भागः 'आशास्तेऽयं यजमानोऽसौ' इत्यादिर्लुप्यते । (क्रत्वाचिन्ता) । वि. १०।२।२१. *** प्रस्तरप्रहरणे** सूक्तवाकः दर्शपूर्णमासयोः मन्त्रः, न तु कालार्थः संयोगः । भा. ३।२।५।११-१५.

*** प्रस्तरप्रहरणकरणसूक्तवाके** बहुकर्तृके विकारे यजमानशब्द ऊहितव्यः । भा. ९।१।१४।४१.

*** प्रस्तरप्रहरणकाले** शाखाप्रहरणम् । ६।४।१४। ४३-४७. मीको. पृ. २०२४ 'दर्शे शाखाप्रहरणं०' इति बिन्दौ द्रष्टव्यम् ।

*** प्रस्तरप्रहरणन्यायः** (प्रस्तरप्रहरणाङ्गं सूक्तवाकः) । ३।२।५. 'सूक्तवाकन्यायः' इत्यत्र द्रष्टव्यम् ।

*** प्रस्तारपङ्क्तिः** पङ्क्तिः । पादेषु अक्षराणि १२। १२।८।८ । उदा० 'तस्याः समुद्रा अधि' (ऋसं. १।१६४।४२) । के.

*** प्रस्तावः** 'अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति, द्व्यक्षरेणोत्तरयोः' इति । भा. ९।२।३।१८, १०।६।१।२. *** प्रस्तावः** द्वितीया सामभक्तिः । तां प्रस्तोता गायति । वि. ३।५।८.

*** प्रस्तोता** उद्गातुः पुरुषः । द्वितीयवर्गस्थोऽयम् । अयं अर्धी दक्षिणार्धभाक् षट् गा लभते । वि. ३।७।१७, ***** 'प्रस्तोता प्रस्तौति' । ३।७।९, प्रस्तावं नाम द्वितीयं सामभागं गायति । ३।५।८, ***** 'प्रस्तोतारं प्रतिप्रस्थाता दीक्षयति' । ३।७।१७ .

*** प्रस्तोत्राद्य** एव उपगाः नाम, नान्ये के चित् । वि. ३।७।१४ .

*** प्रस्तोतृप्रतिहर्तारौ** गातारौ न उद्गातारौ । वा. ३।५।८।२६ .

*** प्रहरणं** (प्रस्तरस्य) प्रतिपत्तिः यागश्च । तत्र सूक्तवाकमन्त्रः अङ्गम् । वा. ३।२।६।१५ . *** प्रहरणं** (प्रस्तरस्य) यजिः । मान्त्रवर्णिको देवताविधिः । ...... प्रहरतिर्यजतिः । एवं सूक्तवाकेन प्रस्तरः प्रहर्तुं शक्यते यदि प्रहरतिर्यजतिः अग्न्यादिदेवताकश्च । भा. ३।२।५।१३, *** प्रहरणं** शाखाया न प्रयोजकम्, न

र्थार्थकर्म, किन्तु प्रतिपत्तिः दर्शपूर्णमासादौ । तच्च पूर्णमासयागे नास्ति । ४।२।४।१०–१३. * प्रहरणं शाखायाः प्रस्तरप्रहरणकाले । ६।४।१४।४४–४८. * प्रहरणं शाखायाः प्रस्तरस्य च प्रतिपत्तिः । भा. ६।४।१४।४४, * प्रहरणं सोमान्ते स्वरोः अग्नीषोमीये उपात्तस्य तन्त्रतया प्रवृत्तस्य, नानुबन्ध्याकालस्य । ११।३। ५।८–१२. * प्रहरणे प्रस्तरस्य च प्रतिपत्तिः शाखाया अपि । तत्र अनियतकाले प्रहरणे प्राप्ते सह प्रहरति इति विधीयते 'सह शाखया प्रस्तरं प्रहरति' इति । टुप्. ४।२।४।११.

* प्रहासः अतादृशत्वेन ज्ञाततः तादृशत्वकथनम् । मणि. पृ. ११६.

⌛ प्रागपरोधान्मलवद्वाससः । ३।४।७।१८॥

दर्शपूर्णमासयोः श्रूयते 'मलवद्वाससा न संवदेत, नास्या अन्नमद्यात्' इति मलवद्वाससा सह संवादस्य प्रतिषेधोऽयं किं दर्शपूर्णमासाङ्गस्य उत पुरुषस्य सर्वत्र प्रतिषेध इति विचारे सिद्धान्तमाह । मलवद्वाससः रजस्वलायाः संवादादिप्रतिषेधः पुरुषस्य सर्वत्र । पुरुषार्थ एवायं न क्रत्वर्थः । प्राक् साङ्गप्रयोगारम्भात् प्रागेव तस्याः अपरोधात् अपरोधस्य उक्तत्वात् 'यस्य व्रत्येऽहन् पत्नी अनालम्भुका भवति तामपरुध्य यजेत' इति । तस्मात् पुरुषार्थः । इति सिद्धान्तः ।

अन्नप्रतिषेधाच्च । १९ ॥

मलवद्वाससः नाम रजस्वलायाः स्त्रियाः 'नास्या अन्नमद्यात्, अभ्यञ्जनं वै स्त्रिया अन्नम्' इति श्रुत्या अन्नस्य अभ्यञ्जनापरपर्यायस्य लाटदेशप्रसिद्धस्य मिथुनभवनस्य प्रतिषेधाच्च संवादादिनिषेधस्य पुरुषधर्मत्वसिद्धिः । तस्मात् अयं निषेधः न क्रतुधर्मः किन्तु पुरुषार्थः प्रकरणादुत्कृष्टः इति सिद्धान्तः । के.

* प्रागुपनयनात् कामचारवादभक्षाः । टुप्. ६।२।६। २२. * 'प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते ।' अयं पञ्चमलकारेण विधिः स्मार्तः । बाल. पृ. ४०. * प्राग् लोकंपृणायाः चित्रिण्याद्युपधानम् । भा. ५।३। ८।२०.

⌛ प्राग् लोकंपृणायास्तस्याः संपूरणार्थत्वात् । ५।३।८।२०॥

चित्रिण्यादय इष्टकाः मध्यमायां चितौ उपधेयाः इति पूर्वाधिकरणे समधिगतम् । मध्यमायामपि लोकंपृणायाः नाम इष्टकायाः प्रागेव उपधेयाः न परस्तात् । तस्याः लोकंपृणायाः चितेः संपूरणार्थत्वात् । चितेः संपूरणं लोकंपृणया क्रियते । तस्मात् सा अन्ते एव उपनिधीयते एका अनेका वा । तत उत्तरं न काऽपि उपधातुं शक्यते । तस्मात् चित्रिण्यादयः मध्यमायां चितौ लोकंपृणायाः प्राक् उपधातव्याः इति सिद्धान्तः । के.

* प्राकरणिकेन अनारभ्याधीतं बाध्यते यथा साप्तदश्यं पाञ्चदश्येन । बाल. पृ. १४१. * प्राकरणिकानां कृत्स्नानामङ्गं हस्तावनेजनं वाग्यमः मुष्टिकरणं इत्यादि । वि. ३।१।१४.

* प्राकरणिकाङ्गता उपवीतस्य दर्शपूर्णमासयोः । ३।१।११।२१.

⌛ प्राकरणिकाप्राकरणिकेष्टकासाधारण्यं इष्टकाधर्माणां अकृष्णत्वादीनाम् । चित्रिण्यादयोऽपि अग्न्यङ्गम् ॥

अग्न्यङ्गमप्रकरणे तद्वत् । ३।६।१२।३५॥

भाष्यम्— अनारभ्याग्निमुच्यते 'चित्रिणीरुपदधाति, वज्रिणीरुपदधाति, भूतेष्टका उपदधाति' इति । सन्ति तु प्रकरणे इष्टकाधर्माः 'अखण्डामकृष्णलामिष्टकां कुर्यात्' इति, तथा 'भसनेष्टकाः संयुज्यात्' इति । तत्र संदेहः किमप्रकरणे समाम्नातानामिमे धर्माः कर्तव्या उत नेति ? किं प्राप्तम् ? न कर्तव्याः । कुतः ? असंनिधानात् । इति प्राप्ते, उच्यते । अग्न्यङ्गमेवंजातीयकं तद्वदेव स्यात्, यद्वत् ग्रहाः । प्रकरणाद्धि वाक्यं बलवत् । अमूषां चेष्टकानामग्न्यर्थत्वात् ।

शा— पूर्वत्र अंश्वदाभ्ययोः अनारभ्योत्पन्नयोरपि प्राकरणिकेन वाक्येन विनियोगोऽस्तीति प्रकरणसंस्पर्शायुक्तो धर्मसंबन्धः, चित्रिण्यादीनां तु विनियोगोऽप्यनारभ्यवादेनैवेति प्रकरणसंस्पर्शाभावान्न तद्धर्मसंबन्ध इति विशेषाशङ्का, प्रकरणसंस्पर्शाभावेऽपि प्रकृतापूर्वसंस्पर्शात् तत्साधननिवेशिनो धर्मास्तासामपि भवन्तीति सिद्धान्तः ।

**सोम**— सूत्रार्थस्तु अप्रकरणे यदन्यङ्गं चित्रिण्यादिकं तदपि अश्वदाभ्यग्रहबद्धधर्मयुक्तं स्यात् इति ।

**वि**— ' अखण्डादीष्टकाधर्माश्चित्रिण्यादिषु नोचिताः । सन्ति वा, वाक्यमप्यत्रानारभ्योक्तं ततो न ते ॥, प्रकृतापूर्वसंबन्धात्तादृशादपि वाक्यतः । अखण्डत्वादयोऽन्यर्थचित्रिण्यादिषु सन्ति ते ॥ '

**भाट्ट**— इष्टकाधर्माणामकृष्णत्वादीनामनारभ्याधीतचित्रिण्यादीष्टकाविनियोगस्याप्यनारभ्याधीतत्वात् प्राकरणिकेष्टकामात्रधर्मत्वम् । इति प्राप्ते, पूर्ववदनुष्ठानसादेश्यात् इष्टकाप्रयोज्यचयनापूर्वसंबन्धित्वस्य तत्प्रयोज्यक्रत्वपूर्वसंबन्धित्वस्यैव वा लक्षणीयस्यानारभ्याधीतास्वप्यविशेषाच्चात्राप्युभयधर्मत्वम् ।

**मण्डन**— ' स्युरिष्टका दूरगताः सधर्माः । '

**शंकर**— ' चित्रिण्याद्यग्निधर्मकम् । ' १३

* **प्राकारन्यायः** । हृदयात् पुरीततं गच्छतो ( जीवस्य ) नाडीनां मार्गत्वोपपादनाय हि ' हृदयात् पुरीततमभिप्रतिष्ठन्ते ' इत्युक्तम् । अतः प्राकारन्यायोऽत्र न प्रवर्तते । नहि ' प्रासादान्निर्गत्य प्राकारे शेते नृपतिः ' इति वाक्यं प्राकारवेष्टितप्रासादमध्यगतपर्यङ्कशयनेनोपपादयितुं शक्यम् ( शङ्काग्रन्थः ) । **परिमल**. ३।२।२।७ **ब्रसू**., * ' प्राकारे शेते, प्रासादे शेते, पर्यङ्के शेते ' अत्र शयने अधिकरणत्वेन त्रयाणामपि समुच्चयः । नाडीनां पुरीततपरिवेष्टितहृदयपुण्डरीकमध्यगतब्रह्मप्राप्तौ मार्गत्वेन समुच्चयो घटते । पुरीततोऽपि **प्राकारन्यायेन** स घटते ( सिद्धान्ते ) । ३।२।२।७.

* **प्राकाशौ** अध्वर्युभागस्यैव निवर्तकौ, न तु कृत्स्नस्य क्रतुदाक्षिण्यस्य अश्वमेधे ( इति भाष्यम् । वस्तुतस्तु राजसूये दशपेये तैत्तिरीयके प्राकाशवाक्यम् )। **भा**. १०।३।१७।६३–६४.

⌛ **प्राकाशौ तथेति चेत् । १०।३।१७।६३॥**

राजसूये दशपेये ' प्राकाशावध्वर्यवे ददाति ' इति श्रुतम् । इमौ प्राकाशौ तथा धेनुवत् ( १०।३।१४।५७ ) कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकौ । इति चेत् पूर्वपक्षी ब्रूयात् । प्राकाशौ ददाति इत्यन्वयः । अध्वर्युशब्दस्तु अवयुत्यानुवादः ।

**अपित्ववयवार्थत्वाद् विभक्तप्रकृतित्वाद् गुणेदन्ताविकारः स्यात् । ६४ ॥**

पूर्वपक्षं अपितु इति शब्दो व्यावर्तयति । प्राकाशौ न कृत्स्नक्रतुदाक्षिण्यनिवर्तकौ । अवयवार्थत्वात् सर्वेषामृत्विजां समुदायरूपाया दक्षिणायाः अध्वर्युभागः अवयवो भवति । सोऽवयवः अर्थः प्रयोजनं ययोः तौ प्राकाशौ अवयवार्थौ । तयोर्भावः अवयवार्थत्वम् । विभक्तप्रकृतित्वात् विभक्ता ' इदमध्वर्योः ' इति विभागयुक्ता प्रकृतिः ज्योतिष्टोमरूपा ययोः तौ प्राकाशौ विभक्तप्रकृती, तयोर्भावः विभक्तप्रकृतित्वं तस्मात् । यस्मात् प्रकृतौ अध्वर्युविभागः, तस्मात् विकृतावपि । प्राकाशयोः अवयवार्थत्वात् विभक्तप्रकृतित्वाच्च गुणेदन्ताविकारः स्यात् प्राकाशौ । किमिदं गुणेदन्ताविकार इति, गुणस्य अध्वर्युभागस्य इदन्ता इयत्ता परिमाणं गुणेदन्ता । इदमः भावः इदन्ता । गुणेदन्तायाः विकारः गुणेदन्ताविकारः । अध्वर्युभागस्य सर्वस्य विकारः प्राकाशौ इत्यर्थः । प्राकाशौ एव अध्वर्यवे ददाति नान्यत् इति श्रुतिवाक्यार्थः । तस्मात् प्राकाशौ अध्वर्युभागमात्रस्य निवर्तकौ न सर्वस्याः क्रतुदक्षिणायाः इति सिद्धान्तः । **के.**

* प्राकाशौ दीपस्तम्भौ इति केचित् । दर्पणौ इत्यपरे । अश्वमेधे ( ? राजसूये दशपेये ) ' प्राकाशावध्वर्यवे ददाति ' । **वि**. १०।३।१७. * प्राकाशौ सौवर्णदर्पणौ इति भट्टभास्करः । **सोम**. १०।३।१७. * **प्राकाशाभ्यां** अश्वमेधे विहिताभ्यां प्राकृताध्वर्युभागमात्रस्य बाधः । १०।३।१७।६३–६४.

* **प्राकाशाधिकरणे** अभ्युदितेष्टेः दर्शयागाभेदेऽपि तदवच्छिन्नभावनाऽन्तराभ्युपगमेन वाक्यभेदः परिहरिष्यते । **सु. पृ**. ७७३, * समस्तायाः ज्यौतिष्टोमिक्या दक्षिणायाः अश्वमेधे अतिदेशप्राप्तायाः **प्राकाशाधिकरणे** अध्वर्युभागमात्रविकारत्वमभिहितम् । पृ. ७६९.

⌛ **प्राकाशन्यायः** । राजसूयगते दशपेये दक्षिणारूपाभ्यां प्राकाशाभ्यां अध्वर्युभागस्यैव प्राकृतस्य बाधः ॥

**प्राकाशौ तथेति चेत् । १०।३।१७।६३॥**

**भाष्यम्**— अश्वमेधे ( ? राजसूये ) श्रूयते, ' हिर-

ण्मयौ प्राकाशावध्वर्यवे ददाति' इति। तत्रैषोऽर्थः सांशयिकः, किं प्राकाशौ कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकौ, उताध्वर्युभागस्य निवर्तकाविति। कुतः संशयः? इह प्राकाशावित्येष यदि ददातिना संबध्यते, ततः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकः। अथाध्वर्युणा, तदा अध्वर्युभागस्य। किं प्राप्तम्? कृत्स्नस्येति। तत्रैतद्वर्ण्यते, प्राकाशाविति शब्दो ददातिना संबध्यते इति। कुतः? एवं ददातिसंबन्धविधाने श्रुतिरनुगृहीता। अध्वर्युणा संबन्धे वाक्यम्। अपि च प्राकाशाविति द्वितीया कारकविभक्तिः सामर्थ्यादेव आख्यातेन संबध्यते, न नाम्ना। तस्मात् ददातिना संबन्धः। अध्वर्युसंबन्धे चाध्वर्युशब्दात् षष्ठी अभविष्यत्। तस्मादपि ददातिना संबन्धः। ददातिं लक्षयित्वा प्राकाशौ विधीयेते। तत्र न शक्यो ददातिरध्वर्युणा विशेष्टुम्। वाक्यं हि तदा भिद्येत। अपि च विशेषणे सत्यपि यदि ददातिरविशिष्टः पदान्तरेण संबध्यते, अविशिष्ट एव कार्ये प्राप्नोति। प्रयुज्यमानमपि हि विशेषणमशक्तं न विशेष्यं विशिनष्टि। तस्मात् योऽध्वरं युनक्ति सोऽध्वर्युरिहाभिप्रेतः। अतः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकौ प्राकाशाविति।

टुप्— ददातिं (प्रकृतितः प्राप्तं) अनूद्य प्राकाशौ विधीयेते, हिरण्मयौ इति न विधीयते। कुतः? प्राकाशौ इति हिरण्मयावेव उच्येते, नान्यद्रव्यमयौ धेनुशब्दवत्। यदि प्राकाशाध्वर्युसंबन्धो भवेत् तथा सति अत्यन्तं वाक्यं स्यात्। न धात्वर्थो विधीयते, न धात्वर्थोऽन्यत्र, न धात्वर्थे किञ्चित्। कारकविभक्तिश्च श्रुत्यैव प्राकाशयोर्ददातिना संबन्धं ब्रवीति। अध्वर्युसंबन्धे (अध्वर्युशब्दात्) षष्ठी अभविष्यत्। अत्र (भाष्य—) ग्रन्थः 'अपि च विशेषणे सत्यपि यदि ददातिः अविशिष्टः पदान्तरेण संबध्यते, अविशिष्ट एव कार्ये प्राप्नोति' इति। (तस्य) कोऽभिप्रायः? (उत्तरं—) अस्मिन् वाक्ये ददातिमनूद्य प्राकाशौ विधीयेते। एतस्यां च अवस्थायां (अनुवादावस्थायां) ददातेर्विशेषणं (श्रूयमाणमपि) अविवक्षितम्, वाक्यभेदप्रसङ्गात्। प्रयुज्यमानमपि विशेषणमशक्तं विशेष्टुम्, न विशिनष्टि। कथं (अशक्तम्?) प्रधानभूतोऽत्र ददातिः। प्रधानभूतस्य च लिङ्गसंख्यमविवक्षितम्। (कथम्?) प्रत्ययः (तावत् साक्षात्) क्रियां विधत्ते, क्रिया (च) विधीयमाना कारकैर्विना न भवति, कारकाणि (च) स्वविशेषणैर्विना न भवन्ति। तस्मात् क्रिया (च) कारकाणि (च) कारकविशेषणानि च प्रत्ययेन परामृश्यन्ते, न (तु) यः क्रियां प्रति उद्दिश्यते। स प्रधानभूतः क्रियां प्रति, न तु स क्रियाङ्गम्। क्रिया (एव तु) तदर्था। तस्य (प्रधानभूतस्य) यत् लिङ्गसंख्यं तदनङ्गत्वात् क्रियायाः प्रत्ययेन न परामृश्यते। तस्मात् यत् क्रियार्थं प्रातिपदिकं उपादीयते तस्य यत् लिङ्गसंख्यं तदेव विवक्षितम्, क्रियाङ्गत्वात्। (प्रधानस्य तु ददातेः विशेषणं अध्वर्युः न विवक्षितम्। इत्ययं भाष्यार्थः। तस्मात् कृत्स्नविकारौ प्राकाशौ अध्वर्युशब्दस्तु अवयुत्यानुवाद इति)।

## अपित्ववयवार्थत्वाद् विभक्तप्रकृतित्वाद् गुणेदन्ताविकारः स्यात्। ६४॥

भाष्यम्— अपित्विति पक्षव्यावृत्तिः। दक्षिणावयवकार्यार्थौ प्राकाशौ, न कृत्स्नदक्षिणाकार्यार्थौ। विभक्ता हि तेषां भागा अध्वर्य्वादीनाम्। अयमध्वर्योर्भागः, इमेऽन्येषामिति। तस्मात्, गुणेदन्ताविकारः स्यात्। किमिदं गुणेदन्ताविकार इति? गुणस्येदन्ता गुणेदन्ता। इदम्भाव इदन्ता। गुणेदन्ताया विकारो गुणेदन्ताविकारः। अध्वर्योर्भागस्य निवर्तकौ प्राकाशौ। कथमिव? एकमिदं हि वाक्यं 'हिरण्मयौ प्राकाशौ' इति। नेयं प्रथमा, नापि दक्षिणाशब्देन संबन्धः, येन दक्षिणाकार्ये वर्तेयाताम्। का तर्ह्येषा? द्वितीया। ददातिनैव संबध्यते। तदेकं वाक्यं 'हिरण्मयौ प्राकाशावध्वर्यवे ददाति' इति। अध्वर्युसंप्रदानकेन ददातिना एतयोः संबन्धः। तस्मात्तत्राध्वर्युददातिभागं निवर्तयतः। यद्वा सर्वविशेषणविशिष्टो ददातिरपूर्वो विधीयते। दृष्टार्थत्वादध्वर्योः अन्यान् आनत्यर्थान् प्रत्याख्यास्यति। अथ यदुक्तं प्राकाशयोर्ददातिसंबन्धो विधीयते इति, तथाहि श्रुतिरनुगृहीता भविष्यतीति। नासौ वाक्यानपेक्षिणी श्रुतिः। असति ददातिना आनन्तर्ये नावकल्पते। यदप्युच्यते

कारकविभक्तिराख्यातेन संबन्धयोरेति । योग्यत्वं दर्शनेन बाध्यते । दृश्यते त्वानन्तर्यं प्राकाशयोरध्वर्युशब्देन । यद्प्युक्तं तत्संबन्धे षष्ठ्यभविष्यदिति । सत्यं प्राप्नोति षष्ठी, न तु तदभावे संबन्धो नास्त्यध्वर्युणा । गम्यते हि स वाक्येन । आह । चतुर्थीश्रुतिरत्र या, सा वाक्यमपबाधिष्यते इति । नाविधीयमाना बाधितुमुत्सहते । कथं तर्हि विधित्सिते संप्रदाने श्रूयते इति । सामर्थ्यप्राप्तस्यानुवादेनेति । तस्माददोषः । उक्तं वा सर्वविशेषणविशिष्टं दानं विधीयते इति । एवमन्येषामनिवृत्तौ यथाप्रकृतिभावे चोदकानुग्रहो भविष्यति । तस्मादध्वर्युभागस्य निवर्तकौ प्राकाशाविति ।

टुप्— न कृत्स्नस्य दाक्षिण्यस्य निवर्तकौ प्राकाशौ । कुतः ? यदि दक्षिणामनूद्य ( प्राकाशौ प्रथमान्तौ ) विधीयेयाताम्, ततः कृत्स्नाया दक्षिणाया निवर्तकौ स्यातां 'प्राकाशौ दक्षिणा ( इति ), तौ चाध्वर्यवे' ( इति, पश्चात् वाक्यान्तरेण पुरुषापनयः स्यात् ) यथा 'औदुम्बरः सोमचमसो दक्षिणा, स ब्रह्मणे देयः' इति ( न तु एवमस्ति । कथम् ? ) एकं चेदं वाक्यं प्राकाशौ ( अध्वर्यवे ददाति ) इति ( चशब्दो हेतौ । प्राकाशौ इति— ) न चेयं प्रथमा, यथा सोमचमसः इति । का तर्हि ? द्वितीया । सा ( च ) अध्वर्युददातिना संबध्यते ( न ददातिमात्रेण ), एकवाक्यत्वात् ( अध्वर्युपदैकवाक्यत्वादित्यर्थः । तत्र च— ) अध्वर्युप्राकाशयोर्ददातिना ( ददातिपरेण विधिना ) संबन्धो विधीयते । ( 'न ददातिमध्वर्युविशिष्टमुद्दिश्य । नापि ददातिमुद्दिश्य, अध्वर्युशब्दस्य अवयुत्यानुवाददोषात्, व्यवहितसंबन्धाच्च । किन्तु अध्वर्युमेवोद्दिश्य इति । तत्र चतुर्थ्यन्तोऽध्वर्युः संप्रदानभूतः । प्राकाशप्रातिपदिकं च द्वितीयान्तमध्वर्युं प्रति गुणभावेन, तयोः प्रातिपदिकयोः संबन्धात् चतुर्थी लभ्यते इति । ननु ददातिमनूद्य प्राकाशौ विधीयेते इत्युक्तम् । उच्यते । अध्वर्युपदसामर्थ्यात् तदानन्तर्येण योऽर्थः स ग्रहीतव्यः, न प्राकाशददात्योः संबन्धो ग्रहीतव्यः' इति आनन्दाश्रमीयपुस्तके अधिकम्, अस्मदीयलिखितपुस्तके तन्त्ररत्ने च अयं ग्रन्थो न उपलभ्यते ) तत्र चतुर्थ्यन्ताध्वर्युसंबन्धो ग्रहीतव्यः ( इयं पङ्क्तिः आनन्दाश्रमीये नास्ति ) ( नाध्वर्युः स्वरूपेण ) । ननु श्रुत्यैव क्रियया कारकाणि संबध्यन्ते ( तेन ) ददातिप्राकाशयोः संबन्धो भविष्यति ( न तु अध्वर्युप्राकाशयोः ) । उच्यते । अविधीयमानत्वात् ददातेः वाक्यसंबन्ध एव बलवान् भवति । ( एतदेव विवृणोति— ) विधीयमानायां तु क्रियायां कारकाणि उद्भूतशक्तीनि भवन्ति । तानि च क्रियया संबध्यन्ते, कारकत्वात् । अविधीयमानायां तु ( क्रियायां कारकाणि उद्भूतशक्तीनि ) न भवन्ति । तत्र ( अविवक्षिते श्रुत्यर्थे सति ) आनन्तर्येण यः संबन्धो वाक्यलक्षणः ( प्रतीयते ) स एव ग्रहीतव्यः, न व्यवहितेन ददातिना, अध्वर्युपदेन व्यवधानात् प्राकाशयोः । 'नासौ वाक्यानपेक्षिणी श्रुतिः' इत्यादि ( भाष्य— ) ग्रन्थः अनेनैव (श्रुत्यर्थस्य अविधित्सितत्व— ) न्यायेन नेयः । ( 'योग्यत्वं दर्शनेन बाध्यते' इति भाष्यं अर्थत उपादाय व्याचष्टे— ) 'प्रसिद्धिः ( कारकविभक्तिराख्यातसंबन्धिनी इति, ) दर्शनेन बाध्यते' इत्ययमपि ( ग्रन्थः ) अविधीयमानत्वादेव नेयः ( तस्मात् अध्वर्युणा संबन्धात् तद्भागस्यैव निवृत्तिः ) ।

( उल्लङ्घितं 'एकां पञ्चेति' इत्यधिकरणं व्याचष्टे— ) 'एकां गां' इत्येकशब्दस्य गोशब्देन संबन्धः, न ददातिना, अनूद्यमानत्वादेव क्रियायाः, इत्ययमेव न्यायः । (उपरितनमधिकरणत्रयमत्रैव स्थित्वा संक्षिप्य दर्शयति—) द्वितीयमधिकरणं ( प्राकाशाधिकरणमपेक्ष्य द्वितीयम् ) कृत्स्नस्य ( दाक्षिण्यस्य निवर्तकोऽश्वः इति ) । तृतीयमपि ( 'तथा च सोमचमसः' इति ) कृत्स्नस्यैव ( क्रतुदाक्षिण्यस्य निवर्तकम् । तत्र विशेषशङ्कामाह— ) लिङ्गाशङ्कानिवृत्त्यर्थं तु आरभ्यते । ( यजुर्युक्ताधिकरणं तु— ) न कृत्स्नविकारः, नेदन्ताविकारः ( न भागविकारः ), अध्वर्युभागनियमार्थं तु अन्त्यम् ।

शा— अश्वमेधे ( वस्तुतस्तु राजसूये श्रूयते 'प्राकाशावध्वर्यवे ददाति' इति । तत्र संशयः, किं प्राकाशौ कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकौ, उत अध्वर्युभागस्य निवर्तकाविति । यदि 'प्राकाशौ ददाति' इति संबन्धः, ततः कृत्स्नस्य । अथ प्राकाशौ अध्वर्यवे इति, ततः

तद्भागस्यैव । तत्र ' तदानन्तर्यसंप्राप्तं बाधित्वाऽध्वर्युसंगमम् । द्वितीयाश्रुतिसामर्थ्याद्ददातीति क्रियान्वयः ॥ ' दानं च चोदकप्राप्तमुद्दिश्यते । न चोद्देशमध्वर्युणा शक्यं विशेष्टुम् । तस्मात् ' अध्वरं युङ्क्ते ' इत्येवमध्वर्युशब्दं कथञ्चित् ऋत्विङ्मात्रे व्याख्याय (अनुवादत्वात् कथञ्चित् व्याख्यानं न दोषः) दानमात्रे प्राकाशविधिः, इति कृत्स्ननिवृत्तिः । ' उच्यते, ऽध्वर्युसंबन्ध एव प्राकाशयोरिह । विधीयतेऽथवा पूर्वं दानं द्वाभ्यां विशेषितम् ॥ ' अध्वर्युशब्दस्यानर्थक्यभयात् न दानमात्रे विधानम् । अतः क्रियान्वयनिमित्तो यः पश्चात्तनः संप्रदानस्याध्वर्योः संप्रदेयभूतयोश्च प्राकाशयोर्मिथः संबन्धः, स एव विधीयते । (चतुर्थीबलात् अध्वर्युविशिष्टं संप्रदानकारकमुद्दिश्य द्वितीयाबलात् प्राकाशविशिष्टं कर्मकारकं विधीयते । कारकस्य सापेक्षत्वात् उद्देश्यस्य अध्वर्युणा विशेषणेऽपि न वाक्यभेदः । प्रदेयसंप्रदानसंबन्धश्च दानक्रियाऽधीन इति ददात्यन्वितयोः पार्ष्ठिको यः संबन्धः, तत्र विधिपर्यवसानात्, तदुभयसंबन्धघटकत्वेन अपेक्षितदानक्रियोपस्थापकत्वात् ददातेर्नात्यन्तानर्थक्यम् । **केचित्तु** प्राकाशाध्वर्युशब्दार्थयोरेव स्वस्वामिभावसंबन्धो विधीयते । स च प्राकाशयोः अध्वर्यवे दानात् भवति, इत्यध्वर्युसंप्रदानत्वस्य प्राकाशकर्मत्वस्य दानत्वस्य च प्राप्तेः द्वितीयाचतुर्थीभ्यां सह ददातिरनुवादः इत्याहुः । तत्र क्रयादिसाधारणस्य स्वस्वामिभावसंबन्धस्य नियमेन दानाक्षेपकत्वासंभवात् तदपि विधेयं स्यात् इत्यपरितुष्यता ग्रन्थकारेण कारकसंबन्ध एवोपपादितः) । अथवा अध्वर्युशब्दस्य आनर्थक्यपरिजिहीर्षयैव दानान्तरमेवापूर्वं अध्वर्युप्राकाशविशिष्टं विधीयते । तेन च दृष्टार्थत्वात् अध्वर्य्वानतिसिद्धेः तद्भागः प्राकृतो निवर्तते इति न कृत्स्ननिवृत्तिः (अथवेतिपक्षः प्रौढवादः, विशिष्टविधेः केवलविध्यसंभवनिबन्धनत्वात्) ।

**सोम**— एकामित्यस्य ददात्यन्वयाभावात् कृत्स्नदाक्षिण्यानिवृत्तावपि इह तदन्वयसंभवात् कृत्स्ननिवृत्तिः इत्युत्थितेः **संगतिः** । प्राकाशौ इति, प्रकाशन्ते रूपाण्यत्र इत्यधिकरणे घञ् । ' उपसर्गस्य घञ्यमनुष्ये बहुलम् ' (पा० ६।३।१२२) इति उपसर्गस्य दीर्घः; छान्दसो वा । ततश्च सौवर्णदर्पणद्वयं प्राकाशौ इत्याह **भट्टभास्करः । सूत्रे** धेनुवत् सर्वनिवर्तकौ इति तथाशब्दार्थः ।

**वि**— ' किं प्राकाशौ बाधकौ स्तः कृत्स्नस्याध्वर्यवस्य वा ।, ददातियोगात् कृत्स्नस्य, न विशिष्टेन योगतः ॥ ' (विशिष्टेन संप्रदानविशिष्टदानक्रियया योगतः संबन्धात्) । प्राकाशौ दीपस्तम्भौ इत्येके । दर्पणावित्यपरे ।

**भाट्ट**— अश्वमेधे ' हिरण्मयौ प्राकाशावध्वर्यवे ददाति ' इति श्रुतम् । तत्र तृतीयविधिप्रकारलिप्सया दानानुवादेनैव प्राकाशविधिः । न च हिरण्मयत्वस्यापि विधाने वाक्यभेदः, प्राकाशपदार्थस्यान्यद्रव्यकत्वाभावेन हिरण्मयत्वस्य नित्यप्राप्तत्वात् । उद्देश्यस्य च दानस्याध्वर्युणा विशेष्टुमशक्यत्वात्, ' अध्वरं युनक्ति ' इति व्युत्पत्त्या अध्वर्युशब्दं ऋत्विङ्मात्रे कथञ्चिद्व्याख्याय प्राकृतदक्षिणामात्रस्य निवृत्तिः । **इति प्राप्ते**, अध्वर्युपदवैयर्थ्यापत्तिभिया तृतीयविधिप्रकारत्यागेनाध्वर्युसंप्रदानत्वमुद्दिश्य प्राकाशविधानम् । संप्रदानत्वं च न दानातिरिक्तक्रियायामिति योग्यतयैव दानस्याश्रयत्वसिद्धिः । यत्तु ' प्राकाशाध्वर्युसंबन्धो विधीयते ' इति मूलम्, तस्याप्ययमेवार्थः, न तु अपदार्थस्याव्युत्पन्नस्य संबन्धस्य विधेयत्वमित्येवं यथाश्रुतः । अतश्च यथैव गोरुद्देशेनैकत्वविधिः, इन्द्रियोद्देशेन वा दधिविधिः, तथाऽत्रापि संप्रदानत्वमुद्दिश्य प्राकाशविधानेऽपि उद्देश्यविधेययोरुभयोर्भावनायामेवान्वयात् नाव्युत्पन्नान्वयः । यदि तु विभक्त्यर्थकर्मत्वद्वारैव सर्वत्र प्रातिपदिकार्थस्यैव गवादेर्भावनायामुद्देश्यत्वम्, न तु कर्मत्वसंसर्गेण विभक्त्यर्थसंप्रदानत्वस्येति विभाव्यते, अत एव न मैत्रावरुणादीनामपि संप्रदानत्वेनैवोद्देश्यत्वम्, अपि तु तत्त्वेन गुणत्वेऽपि पदान्तरकल्पनया तदवष्टम्भस्यैव तदित्युक्तम्, तदाऽस्तु अत्र चतुर्थविधिप्रकारस्यापि त्यागेन विशिष्टदानान्तरविधिरेव । **न च** तथापि चतुर्थ्या कर्मत्वलक्षणया अध्वर्योरेवोद्देश्यत्वेन प्राकाशभावनां प्रति अन्वयोपपत्तेर्न दानान्तरविधिकल्पना युक्ता इति **वाच्यम्**, तथात्वे दानस्यैव नित्यप्राप्त्य-

भावेनानुवादानुपपत्तेः । अतः षष्ठविधिप्रकाराङ्गीकारेऽपि दानान्तरमेव संप्रदानप्राकाशोभयविशिष्टं पदान्तरकल्पनया विधेयसामर्थ्यानुरोधेन अध्वर्य्वानतिजनकत्वेन विधीयते, कार्यान्तरकल्पनायां प्रमाणाभावात् । अतश्च तज्जनकीभूतप्राकृतदानाभ्यासस्यैव निवृत्त्या तदीयभागस्यैव निवृत्तिः । वस्तुतस्तु लाघवादतिदेशप्रवृत्तेः पूर्वप्रवृत्त्यङ्गीकारेणोक्तदानाभ्यास एव उक्तविशेषणद्वयविशिष्टो विधीयते, पूर्ववदध्वर्य्वानतिसिद्ध्यर्थमिति प्राकृतदाननिवृत्त्यभावेऽपि प्राकृततद्भागनिवृत्तिः । सर्वथा न प्राकृतकृत्स्नदक्षिणानिवृत्तिरिति सिद्धम् ।

**मण्डन——** ' प्राकाशबोधे न तु सर्वबाधः । '

**शंकर——** ' प्राकाशौ भागबाधकौ । '

*** प्राकाशन्यायेन** श्यामोऽश्वः ब्रह्मभागस्यैव बाधक इति पूर्वः पक्षः । वि. १०।३।१८.

* प्राकाशशब्दवाच्यः प्रदीपः । सु. पृ. ७६९.

**' प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ' इति न्यायः ।** यत्र निकृष्टजातिजोऽपि गुणी स्वगुणोदयेन ख्यातिं यायात् तत्रायं प्रचरतीति । साहस्री. ७९३.

*** प्राकृतमङ्गं** यत् विकृतौ श्रूयते, तदेव विकृतिः निराकाङ्क्षत्वात् स्वीकरोति । टुप्. १०।३।१।१. * प्राकृतं अर्थलोपेन बाध्यते, यथा कृष्णलचरौ अवघातः प्राकृतः चोदकप्राप्तः वैतुष्यरूपार्थलोपेन, यथा वा स्वयंदिते बर्हिषि लवनं प्राप्तिरूपार्थलोपेन । बाल. पृ. १३१, * प्राकृतं पर्युदासेन बाध्यते, यथा होतृवरणं प्राकृतं चोदकप्राप्तं पित्र्यायां ' न होतारं वृणीते ' इति पर्युदासेन । पृ. १३१. * प्राकृतं पूर्वं वैकृतमन्ते, यथा नक्षत्रेष्टिषु उपहोमेभ्यः प्राक् नारिष्ठहोमाः । ५।२। ९।१७-२०. * प्राकृतं प्रत्याम्नानेन अनारभ्याधीतेन बाध्यते, यथा ' य इष्ट्या० ' इत्यनारभ्यविहितेन सद्यस्कालत्वेन विकृतिषु अतिदिष्टद्व्यहकालत्वम् । बाल. पृ. १३२, * प्राकृतं प्रत्याम्नानेन आरभ्याधीतेन बाध्यते, यथा कुशमयं बर्हिः प्राकृतं चोदकप्राप्तं श्येनादौ शरमयेन आरभ्याधीतेन । पृ. १३१. * प्राकृतं यत् वैकृतेन बाध्यते तत्रापि एतदेव कारणं ' न अबाधित्वा पूर्वविज्ञानं वैकृतं संभवति ' इति । प्राकृतं च पूर्वम् । यतो विकृतौ तदपेक्षा । भा. ६।५।१९।५४. * प्राकृतं वैकृतेन बाध्यते, प्राप्तबाधोऽत्र । वा. ३।३।७।१४ पृ. ८६०.

**प्राकृताच्च पुरस्ताद्यत् । ५।२।११।२२ ॥**

अग्निचयने ' सावित्राणि जुहोति ' इति सावित्रहोमा आम्नाताः । ततो महता प्रबन्धेन उखासंभरणादिकमाम्नातम् । पश्चात् ' आग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाणः ' इति दीक्षणीया आम्नाता । तत्र प्रकृतौ दीक्षणीया क्लृप्तोपकारत्वात् चयने शीघ्रं स्मर्यते, तस्मात् अग्निचयने दीक्षणीया प्राक् कर्तव्या, पश्चात् सावित्रहोमादयः इति पूर्वपक्षे उत्सूत्रे प्राप्ते सिद्धान्तमाह । चकारः ' स देशः स्यात् ' इति पूर्वसूत्रस्थस्यानुकर्षणार्थः । यत् सावित्रहोमादि प्राकृतात् दीक्षणीयाकर्मणः पुरस्तात् तस्य स एव दीक्षणीयायाः प्राचीन एव देशः स्यात्, न तु दीक्षणीयाया अन्ते । अग्निकाण्डे चोदकप्राप्तस्यापि दीक्षणीयादेः सावित्रादिभ्य ऊर्ध्वं पुनः पाठात् । तस्मात् सावित्रादयः पूर्वं पश्चाद्दीक्षणीया । के.

**प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् । १०।४।१४।२६॥**

प्राकृतस्य प्रकृतिगतस्य देवताऽभिधानस्य विकृतौ गुणश्रुतौ गुणस्य श्रवणे सति सगुणेन देवताशब्देन आवाहनादिनिगदेषु अभिधानं स्यात् । तथा कर्तव्यम् । यथा पवमानहविःषु ' अग्निं पवमानमावह ', ' अग्निं पावकमावह ', ' अग्निं शुचिमावह ' इत्यादि वक्तव्यम् । न तु निर्गुणं केवलमग्निशब्दम् । इति सिद्धान्तः ।

**अविकारो वाऽर्थशब्दानपायात् स्याद् द्रव्यवत् । २७ ॥**

पवमानेष्टिषु ' अग्नये पवमानाय जुष्टं निर्वपामि, अग्नये पावकाय, अग्नये शुचये ' इतिरीत्या सर्वत्र प्राकृतस्य देवताभिधानस्य विकृतौ अविकारः स्यात् विकारो न स्यात् निर्गुणमभिधानं कर्तव्यम् । वाशब्दः इतरपक्षनिरासार्थः । अर्थशब्दानपायात् अर्थश्च शब्दश्च अर्थशब्दौ, तयोः अनपायात् अपायाभावात् । तत्र अर्थो देवता शब्दश्च अग्निशब्दः । अग्निशब्दस्तावत् उच्चारणीय एव । अथ पवमानादिगुणशब्दे सति असति वा सैव देवता

भवति, न तस्या अपायः। द्रव्यवत् यथा 'सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेत भूतिकामः' इति अजावशाशब्देन चोदितेऽपि कर्मणि छागाशब्देन निगमा भवन्ति, न च तत्र अर्थश्च शब्दश्च अपेतो भवति तद्वत्। तस्मादविकारः स्यात् इति पूर्वः पक्षः।

**आरम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशासनमनर्थकं स्यात्। २८॥**

वाशब्दः पूर्वपक्षनिरासार्थः। आरम्भासमवायात् देवतायाः स्वेन रूपेण कर्मारम्भेण समवायस्य संबन्धस्य अभावात्, अर्थस्य देवतारूपस्य च श्रुतिसमवायित्वात् 'अग्नये पवमानायाष्टाकपालं निर्वपेत्' इति श्रुत्या देवतारूपस्य अर्थस्य समवायित्वं साक्षात्संबन्धवत्त्वं अभिधीयते। तस्मात् चोदितेन विहितेन सगुणदेवतापदेन अर्थस्य देवतारूपस्य अभिधानं आवाहननिगदादिषु स्यात्। सगुणेन अवचने च पवमानादिगुणवाचकपदसहितेन अग्निपदेन अनभिधाने तु गुणशासनं विशेषणविधायकं पवमानादिपदं अनर्थकं स्यात्। तस्मात् सगुणेन अग्निपदेन निगदादिषु देवताया अभिधानं कर्तव्यम्, न निर्गुणेन इति सिद्धान्तः। **के.**

**द्रव्येष्वारम्भगामित्वादर्थेऽविकारे सामर्थ्यात्। २९॥**

पवमानेष्टिषु विशेषणपदरहितेन केवलेनाग्निपदेन आवाहनादिनिगदेषु देवताऽभिधानं कर्तव्यं इति पूर्वपक्षे 'द्रव्यवत्' इति पदेन अजावशादृष्टान्त उक्तः (१०।४।१४।२७) तं वैषम्येण निरस्यति। 'सा वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेत' इति विहिते वशायागे अजाद्रव्यं स्वेन रूपेण समवायं गच्छति। तदेतदाह द्रव्येषु आरम्भगामित्वात् इति। अर्थे अविकारेऽपि छागारूपे द्रव्ये विकाररहितेऽपि अजावशारूपविशेषणरहिते केवले छागाशब्दे उच्चारितेऽपि इत्यर्थः। सामर्थ्यात् अभिधानसामर्थ्योपपत्तेस्तत्राविकारो युक्तः। प्रकृतपवमानेष्ट्यादौ तु देवतायाः स्वरूपेण कर्मसंबन्धाभावात् चोदनानुसारेण सगुणेनैवाभिधानं कर्तव्यं इति युक्तः सिद्धान्तः।

**कुतूहले** तु द्रव्येषु द्रव्यनिर्देशात्मके अर्थे कार्ये कर्तव्ये अविकारः प्रकृतितः अवैषम्यं आश्रयणीयं छागाशब्देनैव द्रव्यं निर्देष्टव्यम्। न तु वशाशब्देन। सामर्थ्यात् चोदकस्य संगतार्थकत्वात्। वशाशब्देन द्रव्यनिर्देशाभावेऽपि विधौ वशाशब्दस्य संगतार्थकत्वात् इत्यप्यर्थः। कुतः? आरम्भगामित्वात्, आरम्भः उपाकरणेन अजादिद्रव्यपरिग्रहः, तद्गामित्वात्। विधौ वशाशब्दाभावे हि अवशाऽपि परिगृह्येत, तद्व्यावृत्तये वशाग्रहणमावश्यकम्। इति व्याख्यातम्। **के.**

* 'अग्नये पवमानायाष्टाकपालं निर्वपेत्' इति विहिते किमग्निः पवमानादिगुणशब्दसहितेन अग्निशब्देनाभिधेयः केवलेन वेति संदिह्य '**प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात्**' इति सिद्धान्तेनोपक्रम्य, 'अविकारो वाऽर्थशब्दानपायात् स्याद् द्रव्यवत्' (२७) इत्यनेनार्थस्याग्नेः चोदकप्राप्तस्य चाग्निशब्दस्य केवलाभिधानेऽपि अनपायात् यथा 'सा वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेत भूतिकामः' इत्यजाशब्देनापि विहिते द्रव्ये वशाशब्दवाच्यवन्ध्यात्वगुणयुक्ते च अतिदेशप्राप्तौ न छागशब्देन निर्गुणेनाभिधानं तथेहापि अविकारः स्यात् इति पूर्वपक्षमुपन्यस्य 'आरम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात्' (२८) इत्यनेन अर्थस्य देवतायाः श्रुतिसमवायित्वात् आरम्भेण स्वरूपेण कर्मणि असमवायात् गुणानभिधाने च गुणशास्त्रस्य आनर्थक्यापत्तेः चोदितेन सगुणेन अभिधानं स्यात् इत्येवं निरस्य 'द्रव्येष्वेवारम्भगामित्वादर्थे विकारसामर्थ्यम्' (२९) इत्यनेन आरम्भेण स्वरूपेण द्रव्येषु क्रियागामित्वात् विकारसहितस्यापि शब्दस्य द्रव्यरूपेऽर्थे सामर्थ्यमस्ति इति वैषम्यं वदता द्रव्येषु अर्थरूपेण कर्मणि समवायः अभ्युपगतः। सु. पृ. ४६८–४६९. * **प्राकृतानामङ्गानां** विकृतौ लुप्तार्थकानां बाधः। १०।१।१।१–३ वर्णक १. * प्राकृतानामङ्गानां वैकृतेभ्यः प्राक् प्राप्तिः 'निर्देशात्तु विकृतावपूर्वस्यानधिकारः' (३।८।१६।३२) इत्यत्र सिद्धा। सु. पृ. ६३४. **प्राकृते यागे** यागगतो व्यापारः

प्रयोगवचनेन कल्पितः संगृहीतश्च विद्यते । भा.१०।१। १।२.

* प्राकृतधर्माः विकृत्यपूर्वपदार्थानां नाङ्गम् । यूपावटस्तरणबर्हिर्न्यायः । बर्हिर्न्यायः । ३।८।१६।३२. * प्राकृतधर्माणां विकृतावतिदेशे कार्ये नियामकम् । वि. ३।८।१७.

* प्राकृतबर्हिःस्तरणमन्त्रे हरितपदस्थाने रक्तपदस्योहो मौद्गे चरौ । ९।३।२।३.

* प्राकृतवैकृतयोः पौर्वापर्यनैमित्तिकन्यायेन पूर्वबाधः । टुप्. ६।५।१९।५४. * प्राकृतवैकृतयोर्यत्र युगपन्न संभवः, तत्र वैकृतेन प्राकृतं बाध्यते । भा. १०।३।४।२४.

* प्राकृतव्रीह्यादिस्थानापन्नेषु नीवारादिषु व्रीह्यादिधर्माणामूहेनानुष्ठानम् । ९।२।१२।३९.

* प्रागभावः । 'क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते ।' श्लोवा. अभावप्रामाण्यवादे २. * प्रागभावे प्रमाणाभावः । न च प्रागभावानङ्गीकारे उत्पन्नस्य पुनरुत्पत्तिप्रसङ्गः, शततन्तुकपटे द्वितन्तुकपटोत्पत्तिप्रसङ्गश्च इति वाच्यम् । तद्व्यक्तेरेव प्रतिबन्धकत्वाङ्गीकारात् । अक्लृप्तप्रागभावतद्धेतुत्वकल्पने गौरवात् ।

केचित्तु प्रागभावो नाभावरूपः । किन्तु आद्यक्षणसंबन्धरूपोत्पत्तिपूर्वकालरूप एव प्रागभावः । तस्य उत्तरकालमेव नाशात् अनित्यत्वम् । अत एव घटो भविष्यति इति प्रतीतिः । नहि 'प्रागभावोऽस्ति' इति कश्चित् प्रत्येति । अतः प्रागभावो नास्ति इति वदन्ति । मणि. पृ. २९.

## ॥ प्रागाथिकं तु । ९।२।६।२५ ॥

अग्निष्टोमे 'बृहत् पृष्ठं भवति, रथंतरं पृष्ठं भवति' इति श्रूयते । तत्र रथंतरस्य 'अभि त्वा शूर नोनुमः' इति बृहती योनिः, 'न त्वावाँ अन्यः' इति च पङ्क्तिः उत्तरा । ते एते द्वे ऋचौ मिलित्वा प्रगाथो भवति । एवं बृहतो योनिः 'त्वामिद्धि हवामहे' इति बृहती, 'स त्वं नश्चित्र वज्रहस्त' इति पङ्क्तिः उत्तरा, ते द्वे मिलित्वा प्रगाथो भवति । अनयोः बृहद्रथंतरयोः गानं भिन्नच्छन्दस्कयोः द्वयोरेव ऋचोः स्थाने भवति । तदुक्तं 'न वै बृहद्रथंतरमेकच्छन्दो यत्तयोः पूर्वा बृहती ककुभावुत्तरे' इति । उत्तरे द्वे ऋचौ अक्षरतः ककुभौ भवतः इति । अत्र एवं विचार्यते यत् उत्तराग्रन्थे बृहद्रथंतरयोः येयं उत्तरा ऋक् पठिता तामपनीय तस्याः स्थाने द्वे वास्तविक्यौ ककुभौ आगमयितव्ये न वेति । आगमने तु 'ककुभावुत्तरे' इति यदुक्तं तत् सार्थकं स्यात् नान्यथा । अत्र सिद्धान्तमाह । प्रागाथिकं गानं बृहद्रथंतरयोः कर्तव्यमिति । बृहतीपङ्क्त्योरेव प्रग्रथनेन तिस्रः ऋचः संपादनीयाः । संपादिते च उत्तरे द्वे ककुभौ भवतः तथा सति 'ककुभावुत्तरे' इत्यपि उपपन्नम् । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः ।

अथ द्वितीयं वर्णकम् । अग्निष्टोमे 'त्रिच्छन्दा माध्यंदिनः पवमानः पञ्चसामा' इत्युक्तम् । माध्यंदिने पवमानस्तोत्रे गायत्री बृहती त्रिष्टुप् इति त्रीणि छन्दांसि भवन्ति । गायत्रम्, आमहीयवम्, रौरवम्, यौधाजयम्, औशनं चेति पञ्च सामानि भवन्ति । तत्र रौरवयौधाजययोर्विचारः । तयोः 'पुनानः सोम धारयापो' इति प्रथमा बृहती, 'दुहान ऊधर्दिव्यं मधु' इति उत्तरा विष्टारपङ्क्तिः । किमेतां विष्टारपङ्क्तिं परित्यज्य तत्स्थाने अन्यतः उत्पत्तितो बृहत्यौ आगमय्य समासु गानं कर्तव्यं उत बृहतीविष्टारपङ्क्त्योरेव प्रग्रथनेन तिस्रो बृहतीः कृत्वा तासु गानं कर्तव्यं इति विचारे सिद्धान्तमाह । प्रागाथिकं गानं कर्तव्यमिति । नोत्पत्तितो बृहत्यौ आगमयितव्ये इति ।

अथ तृतीयं वर्णकम् । अग्निष्टोमे 'पञ्चच्छन्दा आर्भवः पवमानः सप्तसामा' इति श्रुतम् । तृतीयसवनगते आर्भवे नाम पवमानस्तोत्रे गायत्री, अनुष्टुप्, उष्णिक्, ककुप्, जगती इति पञ्च छन्दांसि भवन्ति । गायत्रम्, संहितम्, श्यावाश्वम्, आन्धीगवम्, सफम्, पौष्कलम्, कावं इति सप्त सामानि च भवन्ति । अत्र श्यावाश्वान्धीगवयोः साम्नोः 'पुरोजिती वो अन्धसः' इति प्रथमा अनुष्टुप्, 'यो धारया पावकया' इति द्वितीया गायत्री, 'तं दुरोषमभी नरः' इति तृतीया गायत्री । एवमयं आनुष्टुभः प्रगाथः । अत्र गायत्रीद्वयं परित्यज्य अन्यत एव द्वे उत्पत्तितः अनुष्टुभौ आगमय्य समासु

गानं कर्तव्यं उत पठितगायत्र्योरेव अनुष्टुप्कारं प्रग्रथनेन तृचं संपाद्य गानं कर्तव्यं इति विचारे सिद्धान्तमाह । प्रागाथिकमेव गानं कर्तव्यमिति ।

अथ चतुर्थं वर्णकम् । गवामयने अभीवर्तं ब्रह्मसाम । तच्च प्रगाथात्मकयोः द्वयोर्द्वयोर्ऋचोः पादप्रग्रथनेन जायमाने तृचे एव गातव्यम्, न तु प्रथमे प्रगाथे द्वितीयप्रगाथस्य प्रथमां ऋचमुपादाय, एवमुत्तरत्रापि कृत्वा जायमानेषु तृचेषु गानम् ।

**स्वे च । २६ ॥**

सिद्धान्ते हेत्वन्तरं आह । एवं सति स्वे छन्दसि गानं कृतं भवति । उत्तरापाठेन हि पङ्क्तिरेवोपदर्शिता तस्मात् ऋग्द्वयात्मके प्रगाथे एव गानम् ।

अथ द्वितीयं वर्णकम् । अग्निष्टोमे माध्यंदिने पवमानस्तोत्रे रौरवयौधाजययोः साम्नोर्गानं स्वे स्वीये बृहतीविष्टारपङ्क्त्यात्मके प्रगाथे एव कर्तव्यम् ।

अथ तृतीयं वर्णकम् । श्यावाश्वान्धीगवयोः स्वीये प्रगाथे एव गानं कर्तव्यम् ।

अथ चतुर्थं वर्णकम् । गवामयने अभीवर्तं ब्रह्मसाम । तच्च स्वे प्रगाथे एव पादप्रग्रथनेन संपादिते तृचे गेयम् ।

**प्रगाथे च । २७ ॥**

हेत्वन्तरमाह । एवं सति प्रगाथे गानं भविष्यति । प्रगाथशब्द उपपन्नो भविष्यति । प्रग्रथने कृते सति प्रगाथः संपद्यते नान्यथा ।

अथ द्वितीयं वर्णकम् । अग्निष्टोमे माध्यंदिने पवमाने रौरवयौधाजययोः साम्नोर्गानं बृहतीविष्टारपङ्क्त्यात्मके प्रगाथे एव कर्तव्यं न तु उत्पत्तिबृहत्यौ आगमयितव्ये ।

अथ तृतीयं वर्णकम् । अग्निष्टोमे आर्भवे पवमाने श्यावाश्वान्धीगवयोः साम्नोः आनुष्टुभे प्रगाथे एव गानं कर्तव्यम् । न तु उत्पत्तितः अनुष्टुभौ अन्यत आनेतव्ये ।

अथ चतुर्थं वर्णकम् । गवामयने अभीवर्तं ब्रह्मसाम । तच्च प्रगाथात्मके स्वीये पादप्रग्रथनेन संपादिते तृचे एव गेयम् ।

**लिङ्गदर्शनाव्यतिरेकाच्च । २८ ॥**

अग्निष्टोमे बृहद्रथंतरे सामनी प्रथमा बृहती द्वितीया पङ्क्तिः इति उत्तराग्रन्थपठितयोः द्वयोरेव ऋचोः गातव्ये । प्रग्रथनेन च ऋक्त्रयं संपद्यते । इति सिद्धान्त उक्तः । तत्र हेत्वन्तरमाह । 'एषा वै प्रतिष्ठिता बृहती या पुनःपदा, तद्यत् पादं पुनरारभते तस्मात् वत्सो मातरमभि हिंकरोति' इति अर्थवादे पुनःपादारम्भलिङ्गदर्शनस्य अव्यतिरेकात् गत्यन्तराभावात् । किंवा व्यतिरेकः असंसर्गः अव्यतिरेकः संबन्धः प्रग्रथनेन स्वीयाभ्यां ऋग्भ्यामेव संबन्धः । लिङ्गदर्शनेन स्वीयाभ्यामेव ऋग्भ्यां संबन्धस्य ज्ञानात् नान्ये उत्पत्तिककुभौ आगमयितव्ये किन्तु प्रगाथे एव प्रग्रथनेन संपादिते तृचे बृहद्रथंतरे गातव्ये इति सिद्धान्तः । प्रग्रथनं तु 'अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥' इति यथाश्रुतबृहत्यां रथंतरं गेयम् । 'ईशानमिन्द्र तस्थुषो न त्वावां अन्यो न पार्थिवः । न जातो न जनिष्यते ॥' इति द्वितीयायां प्रग्रथनेन संपादितायां ककुभि रथंतरं गेयम् । 'न जातो न जनिष्यते अश्वायन्तो मघवन्निन्द्र वाजिनः । गव्यन्तस्त्वा हवामहे ॥' इति प्रग्रथनेन संपादितायां द्वितीयायां ककुभि आदितः तृतीयायां रथंतरं गेयम् । इति ।

बृहत्साम्नोऽपि इत्थमेव प्रग्रथनरीतिर्ज्ञेया ।

अथ द्वितीयं वर्णकम् । अग्निष्टोमे माध्यंदिने पवमाने रौरवयौधाजययोः साम्नोः गानं बृहतीविष्टारपङ्क्त्योः प्रगाथे प्रग्रथनेन बृहतीतृचात्मके संपादिते कर्तव्यं इत्यत्र अव्यतिरेकेण लिङ्गं दर्शयति 'षष्टिस्त्रिष्टुभो माध्यंदिनं सवनम्' इति । यदि प्रग्रथनेन बृहतीकारं गानं क्रियते ततः सर्वस्मिन् सवने या ऋचः समाम्नाताः ताः षष्टिर्भवन्ति । उत्पत्तिबृहत्योः आनीयमानयोस्तु अभ्यधिका भवेयुः । तस्मात् अन्यतो नानेतव्ये । प्रग्रथनमित्थम्— 'पुनानः सोम धारयापो वसानो अर्षसि । आ रत्नधा योनिमृतस्य सीदस्युत्सो देव हिरण्ययः ॥' इति बृहती पठितैव गातव्या । 'उत्सो देव हिरण्यय उत्सो देव हिरण्ययः । दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत् ॥' इति संपादिता बृहती गातव्या । 'प्रत्नं सधस्थमासदत्प्रत्नं

सधस्थमासदत् । आपृच्छयं धरुणं वाज्यर्षति नृभिर्धृतो विचक्षणः ॥ ' इति संपादिता तृतीया बृहती गातव्या इति ।

अथ तृतीयं वर्णकम् । अग्निष्टोमे आर्भवे पवमाने श्यावाश्वान्धीगवयोः आनुष्टुभे एव प्रगाथे गानं कर्तव्यं इत्यत्र अन्यतिरेकेण लिङ्गं भवति ' चतुर्विंशतिर्जगत्यः तृतीयसवनं एका ककुप् ' इति । उत्पत्त्यनुष्टुभोरानयने तु एतल्लिङ्गं उपपद्यते । प्रग्रथनं तु ' पुरोजिती वो अन्धसः ' इत्यनुष्टुप् यथापाठं गातव्या । तस्या एव चतुर्थं पादं पुनरुपादाय ' यो धारया पावकया ' इत्यनया गायत्र्या संयोज्य गेयम् । पुनस्तस्याः चतुर्थं पादं पुनरादाय ' तं दुरोषं ' इत्यनया संयोज्य गेयम् । इति ।

अथ चतुर्थं वर्णकम् । गवामयने अभीवर्तं ब्रह्मसाम । तच्च द्वयोर्द्वयोः प्रगाथात्मकयोर्ऋचोः पादप्रग्रथनेन संपादिते तृचे गेयम् । न तु प्रथमस्य प्रगाथस्य ऋग्द्वयं द्वितीयस्य च प्रगाथस्य प्रथमां ऋचं गृहीत्वा जायमाने तृचे गेयम् । लिङ्गदर्शनाव्यतिरेकात् ' अन्या अन्या ऋचो भवन्ति ' इति ऋगन्यत्वविध्यात्मकलिङ्गदर्शनस्य अव्यतिरेकात् अविरोधात् । के.

* **प्राग्वंशः** ज्योतिष्टोमे पत्नीशाला । सु. पृ. ६४. * **प्राग्वंशे** आतिथ्या क्रियते । ( प्राचीनवंशा चतुर्दिक्ष्वतीकाशा दक्षिणतो वर्षीयसी चतुर्दिक्षु अरत्निमात्रमध्यद्वारवती षोडशप्रक्रमव्यासा द्वादशप्रक्रमविस्तीर्णा दीर्घचतुरस्रा । तस्याः शालायाः दक्षिणतो व्रतश्रयणागारं भवति । पश्चात् पत्नीशाला । इयं शाला प्राग्वंशः इत्युच्यते ) । वि. १२।१।२०.

* **प्राग्वंशदेशः** आतिथ्यायां स्तरणेन संस्कृतः, नोत्तरवेदिदेशः । भा. १२।१।२०।४४.

* **प्राची** दिक् इति न प्रत्यक्षेण प्रतीयते, नानुमानेन । शब्दादेव प्रतीयते । टुप्. १०।४।१२।२३ । ननु प्रत्यक्षैव दिक् । सत्यम्, परमतेन एतदुपन्यस्तं इत्यदोषः । रत्न. * ' **प्राचीमाहरति** ' इति शाखावादो न दिग्वादः । ४। २।२. ' शाखावादः ' इत्यत्र द्रष्टव्यम् । * ' प्राचीमाहरति ' वृक्षस्य प्राचीनां शाखामित्यर्थः । न तु प्राचीदिशं प्रति इति । याज्ञिकास्तु दिग्वादमाहुः । भाट्ट. ४।२।२.

* ' **प्राचीं** देवा अभजन्त ' इति ज्योतिष्टोमे दिग्विभागवाक्ये विधिरर्थवादो वा इति संशयः । अर्थवादः इति सिद्धान्तः । भा. ३।४।२।१०. * **प्राच्यां** दिशि ऐन्द्रीत्वव्यपदेशः, इन्द्रस्य पुराणेतिहासेषु प्राचीदिक्पालत्वस्मरणात् । सु. पृ. १०८८.

* **प्राक्त्व**–ऋजुत्व–संततत्वानामाघारे समुच्चयः, भिन्नकार्यत्वात् । भा. १२।३।३।९.

* ' **प्राङ्मुखो**ऽन्नानि भुञ्जीत ' । अयं नियमविधिः पुरुषार्थः । बाल. पृ. २४.

* ' **प्राचीनप्रवणे** वैश्वदेवेन यजेत ' इति देशस्य नियमविधिः, नानुवादः । भा. ४।२।९।२३–२४.

* **प्राचीनवंशः** नाम मण्डपो दार्शिकीं वेदिमन्तर्भाव्य अवतिष्ठते ज्योतिष्टोमे । वि. ३।७।२, * प्राचीनवंशः । यस्य मण्डपविशेषस्य उपरिवंशाः प्रागग्रा भवन्ति सः । ३।४।६, * **प्राचीनवंशे** पश्चिमवह्नेः पूर्वप्रसिद्धमुख्यगार्हपत्यस्य प्राजहित इति पूर्वाचार्यसंज्ञा । १२।१।६, * प्राचीनवंशे पूर्वमवस्थापितः सोमो वैसर्जनहोमादूर्ध्वं हविर्धाने प्राणीयते । ५।१।१४, * प्राचीनवंशे समानयन्ति क्रीतं सोमम् , शकटे अवस्थाप्य । ४।२।१३ .

* **प्राचीनवंशगतो** वह्निः वैसर्जनहोमादूर्ध्वं आग्नीध्रीये प्रणीयते । वि. ५।१।१४.

* **प्राचीनवंशशालायां** पूर्वभागे वर्तमानः आहवनीयः शालामुखीयो नाम । वि. १२।१।५.

* **प्राचीनावीतं** दक्षिणोत्तरवासोविन्यासलक्षणम् । सु. पृ. १३५३. * ' प्राचीनावीतं पितॄणाम् ' इति दर्शपूर्णमासप्रकरणस्थवाक्ये प्राचीनावीतं वासोविषयम्, न तु त्रिवृत्सूत्रविषयम् । वि. ३।४।१, * प्राचीनावीतं पैतृके कर्मणि । ३।४।१.

* **प्राच्याः** अन्यदेशे निर्गतास्तत्रावस्थिताः होलाकादीन् कुर्वन्त्येव । भा. १।३।७।१९. * **प्राच्यैरेव** होलाकादयः कर्तव्या इति न नियमः, किन्तु सर्वधर्मः सः । १।३।७।१५–२३. * प्राच्यैः होलाकादयः क्रियन्ते । होलाका नाम वसन्तोत्सवः । वि. १।३।८.

* **प्राजहितः** प्राचीनवंशस्थः पश्चिमवह्निरूपः मुख्य-गार्हपत्य एव । इयं च पूर्वाचार्यसंज्ञा । वि. १२।१।६. * **प्राजहितेऽग्नौ** मासाग्निहोत्रश्रपणम्, न शालामुखीये कौण्डपायिनामयने । १२।१।६।१३. * प्राजहिते एव अग्निहोत्रपाकः पशोः द्व्यहकालत्वे । **संकर्ष.** ३।२।२५. **मीको.** पृ. ९५ 'अग्निहोत्रपाकः पशोः०' इत्यत्र द्रष्टव्यम् ।

* **प्राजहितवादः** 'स वैव स्यात्' इति ज्योतिष्टोमे । **संकर्ष.** ३।२।२१. **मीको.** पृ. १८३० 'ज्योतिष्टोमे स वैव स्यात्' इत्यत्र द्रष्टव्यम् ।

* **प्राजापत्यं** अग्नीषोमीयं वैष्णवं वेति दर्शपूर्णमासयोरुपांशुयाजाज्यम् । **भा.** ५।४।६।२१, * प्राजापत्यं वैष्णवं वा उपांशुयाजाज्यं ब्राह्मणेन सोमात् प्राक् कर्तव्यम् । अग्नीषोमीयं तु उपांशुयाजाज्यं सोमात् प्राक् न कर्तव्यं इति उपांशुयाजस्य न उत्कर्षः । ५।४।६।१९–२१. * **प्राजापत्याः** सप्तदश पशवो यद्यपि क्रतुपशुभिः सहोपक्रान्ताः तथापि पर्यग्निकरणोत्तरं चिरं विलम्ब्य ब्रह्मसामकाले आलभ्यन्ते, क्रतुपशवस्तु प्रातरालभ्यन्ते । तत्र 'दैव्याः शमितारः' इत्यध्रिगुप्रैष आवर्तनीयो न तन्त्रम् । वि. ११।४।२१. * प्राजापत्याः सप्तदश पशवः वाजपेये । तत्र एते सप्तदशैव यागाः, न तु सप्तदशपशुगुणकं एकं कर्म । २।२।७।२१. * '**प्राजापत्यं** घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः' इति श्रूयते । तस्मिन् हिरण्ये औषधस्य विध्यन्तो नाज्यस्य । ८।१।१८।३५–३९. * 'प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः' 'चत्वारि चत्वारि कृष्णलान्यवद्यति' । इति कृष्णलानां हविष्ट्वम् । **भा.** १०।१।१०।४०, * **प्राजापत्यान्** पशून् प्रकृत्य 'तान् पर्यग्निकृतान् उत्सृजन्ति, ब्रह्मसाम्नि आलभन्ते' इति श्रूयते । तत्र पूर्वः पर्यग्निकरणात् परेषां संस्काराणां प्रतिषेधार्थः उत्तरश्च तेषामेव कालान्तरे प्रतिप्रसवार्थः । ११।२।१२।५१–५३. * **प्राजापत्यैः** पशुभिः क्रतुपशूनां समुच्चयः वाजपेये । १०।४।३।६. 'वाजपेयोपदिष्टैः प्राजापत्यैः' इत्यत्र द्रष्टव्यम् । * **प्राजापत्यस्य** उपांशुधर्मत्वं इति एकः पक्षः । 'प्रजापतिं मनसा ध्यायेत्' इति तूष्णींभाव एव प्रजापतिधर्मः इत्यपि पक्षः । वि. १०।८।१७. * **प्राजापत्यानां** आलम्भः माध्यंदिने सवने ब्रह्मसामकाले श्रूयते । **भा.** ४।१।१४।३३.

**⌛ प्राजापत्यानां पशूनां ब्रह्मसामकाले आलम्भोत्कर्षमात्रम् ॥**

**पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत् तस्मात् ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् । ११।२।१२।५१॥**

**भाष्यम्**—वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते 'तान् पर्यग्निकृतानुत्सृजन्ति', 'ब्रह्मसाम्न्यालभते' इति । तत्र विचार्यते, 'तान् पर्यग्निकृतानुत्सृजन्ति' इति किं अयं कर्मशेषप्रतिषेधः, 'ब्रह्मसाम्न्यालभते' इति कर्मान्तरचोदना, अथवा पूर्वः पर्यग्निकरणात् परेषां संस्काराणां प्रतिषेधार्थः, उत्तरश्च तेषामेव कालान्तरे प्रतिप्रसवार्थ इति । किं प्राप्तम्? कर्मोत्सर्गः । कर्मशेषप्रतिषेध इत्यर्थः । श्रुतिसामान्यात् आरण्यवत् । यथा 'पर्यग्निकृतानारण्यानुत्सृजन्ति' इत्ययं कर्मशेषप्रतिषेध इत्युक्तम् 'शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत्' (९।४।१३।५२) इति । तया श्रुत्या तुल्येयं श्रुतिः । किमनयोस्तुल्यत्वम्? तत्र कर्माणि चोदितानि 'वसन्ताय कपिञ्जलानालभेत' इति । तेषु सर्वेषु प्राकृता गुणाः प्राप्ताः । तेषु प्राप्तेषु पर्यग्निकरणान्तं गुणकाण्डं पुनः श्रुतम् 'पर्यग्निकृतानुत्सृजति' इति । निर्गुणं पुनर्वचनमितरपरिसंख्यापकं भवतीति कर्मशेषस्य प्रतिषेधकं विज्ञायते । एवमिहापि 'प्राजापत्यानालभेत' इति चोदितानां कर्मणां तथैव सर्वाङ्गेषु प्राप्तेष्विदं पर्यग्निकरणान्तस्य गुणकाण्डस्य निर्गुणं पुनर्वचनं कर्मशेषस्य निवर्तकम् । यस्माच्चैवं तस्मात् 'ब्रह्मसाम्न्यालभते' इति कर्मान्तरचोदना स्यात् । पूर्वापेक्षया ब्रह्मसाम्न्यालभते सप्तदश प्राजापत्यानिति ।

**टुप्**— 'पर्यग्निकृतानुत्सृजन्ति' इति पर्यग्निकरणान्ताङ्गरीतिर्विधीयते । तयैते प्राजापत्या निराकाङ्क्षीक्रियन्ते गृहमेधीयवत् । 'ब्रह्मसाम्न्यालभते' इति कर्मान्तरम् । तत्र यदेव द्रव्यदेवतं पूर्वेषु यागेषु तदेवानुषज्यते ।

**संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् । ५२ ॥**

भाष्यम्— न वा कर्मशेषप्रतिषेध इति । किं तर्हि ? संस्काराणां प्राप्तावसराणां तस्मादवसरात् प्रतिषिध्य ब्रह्मसाम्नि प्रतिप्रसवः । किं कारणम् ? वाक्यैकत्वे क्रतुसामान्यात् । एकमिदं वाक्यम् 'तान् पर्यग्निकृतानुत्सृजन्ति' 'ब्रह्मसाम्न्यालभते' इति । कथं ज्ञायते ? आलभत इति द्रव्यदेवतस्याश्रवणात् । समाने च क्रतौ वाक्यैकत्वं भवति । तदा हि केवल आलम्भो वक्तव्यः, द्रव्यदेवतस्योक्तत्वात् । अथ वाक्यभेदः स्यात्, ततः पूर्वेण कर्मशेषः प्रतिषिध्येत, परेण कर्मान्तरं चोद्येत । तत्र द्रव्यदेवतं वक्तव्यम् । यत्तु पूर्वोक्तं संभन्त्स्यत इति । तत् तत्रैव कृतार्थत्वादिह न संबध्येत । तस्मादेकं वाक्यम् । नन्वेकस्मिन्नपि क्रतौ पूर्वेण संस्काराः प्रतिषिध्यन्ते, परेण विधीयन्ते इत्यर्थभेदात् वाक्यभेद एव भवति । न हि 'ब्रह्मसाम्न्यालभते' इत्युक्ते अर्थादेव पर्यग्निकरणान्त उत्सर्गः सिद्धः । स न विधीयते । तमनूद्य आलम्भः केवल उत्कृष्येतेति नास्ति क्रतुसामान्ये वाक्यभेदः ।

टुप्— यथावसरं प्राप्ताः ( पर्यग्निकरणोत्तरकालाः आलम्भादयः ) संस्काराः अस्मिन् काले न कर्तव्याः ( किन्तु ब्रह्मसाम्नि ) इत्येवमपि वाक्यार्थे उपपद्यमाने अङ्गरीतिविधानं न गृह्णीमः, ( तथा सति मिथः कर्मद्वये अस्य संबन्धाभावात् ) वाक्यभेदात् ( ततश्च कर्मभेदः, कर्मभेदाददृष्टभेदः इति ) अदृष्टकल्पनाभयाच्च । यदा हि आलम्भोऽन्यस्मिन् काले विहितः तदा न्यायादेव सर्वसंस्काराणामुत्कर्षात् कः प्रसङ्गः अन्यस्मिन् ( पर्यग्निकरण- ) काले संस्काराणाम्, येन प्रतिषिध्येरन् । ( तस्मादुत्कर्षमात्रविधिरिति एकवाक्यता । अतः न पर्यग्निकरणान्तं माध्यंदिने पुनरावर्तनीयम् ) ।

**वपानां चानभिघारणस्य दर्शनात् । ५३ ॥**

भाष्यम्— 'सव्या वा एतर्हि वपा यदनभिघृता, ब्रह्म वै ब्रह्मसाम, यद्ब्रह्मसाम्न्यालभते तेनासव्यास्तेनाभिघृताः' इति । यदि संस्कारप्रतिषेधः, ततो जुह्वाः सवनीयप्रचारेण रेचितत्वात् प्रयाजशेषो नास्ति । तदभावादनभिघृतत्वं युज्यते । अथ कर्मशेषप्रतिषेधस्ततो ब्रह्मसाम्न्यालम्भः कर्मान्तरे । तत्र प्रयाजाः पुनरिज्यन्ते । तेषां शेषोऽस्ति । तेनाभिघारणं स्यात् । अनभिघारणदर्शनं नोपपद्येत । तस्मादपि संस्कारप्रतिषेधः ।

टुप्— यस्यापि 'ब्रह्मसाम्न्यालभते' इति कर्मान्तरम्, तस्यापि पशुपुरोडाशस्येव ( तत्कालानां कर्मान्तराणामपि 'पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात्' इति न्यायात् ) प्रासङ्गिकाः प्रयाजाः । तस्मादेतद्दर्शनमयुक्तम् । द्वयोरपि ( वादिनोः प्रयाजाभावेन अनभिघारणस्य ) तुल्यत्वात् । तत्र **केचित्** वर्णयन्ति । तेषां ( पशूनाम् ) द्वौ पक्षौ । एकः पक्षो ( आश्विनग्रहग्रहणानन्तरं क्रतुपशुभिः सहोपकृतानां पशूनां पर्यग्निकरणान्तं कृत्वा तत उत्सृज्य ) ब्रह्मसामकाले आलम्भः । द्वितीयः सह क्रतुपशुभिः समाप्तिः । अस्मिन् द्वितीये पक्षे वपानामभिघारणं विद्यते ( संनिहितत्वात् ) । यदा च माध्यंदिने ( सवने ) आलम्भः, तदा यत् तद्वपाभिघारणं तन्नास्ति, प्रयाजावसरे वपाया अनुत्पन्नत्वात् । यागैकत्वे योऽसौ अभिघारणसंस्कारो नान्तरीयको हविषि अनुभूतः तस्य इदानीं अविद्यमानत्वात् ( दोषस्य ) आशङ्कावचनम् ( 'सव्या वा एतर्हि' इति ) उपपद्यते । कर्मान्तरपक्षे तु ( तदीयवपाभिः ) स धर्मः ( अभिघारणाख्यः ) अननुभूतपूर्वः । तत्र ( 'सव्या वा एतर्हि' इति ) शङ्कैव नास्ति इति ( दोषाशङ्कादर्शनात् अकर्मान्तरत्वं इति ) । **इदमपि नोपपद्यते** । कर्मान्तरवादिनः अपि हविषां चोदकेन संस्कारः प्राप्नोति इति स इह नास्तीत्याशङ्कावचनमुपपद्यत एव इति । ( तस्मादयुक्तमेवेदं लिङ्गं परमतत्वेन नेतव्यम् । ) ।

शा— अतः पर्यग्निकरणान्ताः प्राजापत्याः 'ब्रह्मसाम्न्यालभते' इति 'आज्येन शेषः' इतिवत् कर्मान्तरमिति मन्वानस्योत्तरम् **'नान्यकर्मविधिर्युक्तोऽनेकादृष्टप्रकल्पनात् । वाक्यभेदप्रसङ्गाच्च तस्मादुत्कर्षचोदना ॥'**

**सोम**— पूर्वत्र कर्तृभेदादापराग्निकहोमानामिव इह कालभेदादावृत्तिरित्युत्थितेः **संगतिः** । **सूत्रे** श्रुति-

सामान्यात् शब्दसारूप्यात् चोदनापृथक्त्वं कर्मान्तरविधिः इत्यर्थः ।

वि— ' पर्यग्निकरणे त्याग आलम्भो ब्रह्मसामनि । कर्मशेषनिषेधश्च कर्मान्तरविधिर्भवेत् ।। किं वोत्कर्षोऽवशिष्टस्य, ह्यारण्योक्तिवदादिमः । अदृष्टवाक्यभेदार्तेर्ग्याभावेन चान्तिमः ।। '

भाट्ट — वाजपेये प्राजापत्यान् पशून् प्रक्रम्य ' तान् पर्यग्निकृतानुत्सृजति ', ' ब्रह्मसाम्न्यालभते ' इति श्रुतम् । तत्र पूर्ववाक्येन ' पर्यग्निकृतानारण्यान् उत्सृजन्ति ', ' पर्यग्निकृतं पात्नीवतमुत्सृजन्ति ' इतिवत् पर्यग्निकरणान्ताङ्गरीतिविधानात् गृहमेधीयाज्यभागन्यायेनापूर्वत्वापत्तौ उत्तराङ्गानामकर्तव्यत्वावगतेः ' ब्रह्मसाम्न्यालभते ' इति ' आज्येन शेषं संस्थापयति ' इतिवत् कर्मान्तरविधिः । तत्र च तद्वदेव ' सप्तदश प्राजापत्यान् पशून् ' इत्यस्यानुषङ्गेण द्रव्यदेवतालाभः । इति प्राप्ते, आश्विनग्रहग्रहणोत्तरं क्रतुपशुभिः सहोपाकृतानां प्राजापत्यानां ब्रह्मसामकाले पर्यग्निकरणोत्तरक्रियमाणालम्भोत्कर्षमात्रविधाने 'ब्रह्मसाम्न्यालभते ' इत्यनेन कृते अर्थात् पर्यग्निकरणान्तस्य क्रतुपशुभिः सह करणावगतेः, तदन्ते उत्सर्गस्य प्राप्तत्वात् पूर्ववाक्यस्यानुवादतया अर्थवादत्वविषया उत्तरविध्येकवाक्यत्वप्रतीतेः, पूर्वोत्तरवाक्ययोर्वाक्यभेदमङ्गीकृत्य पूर्वस्मिन् परिसंख्याफलकतृतीयविधिप्रकाराङ्गीकरणे तूत्तरस्मिंश्च द्रव्यदेवताविशिष्टापूर्वकर्मविधिफलक–षष्ठविधिप्रकाराङ्गीकरणे गौरवापत्तेः , अतोऽत्र आलम्भोत्कर्षमात्रं विधीयते । तदा च तदुत्तराङ्गानामुत्कर्षः 'तदादि वाऽभिसंबन्धात् ' ( ५।१।१२।२४ ) इति न्यायादेव लभ्यते । तेन अत्रारण्यन्यायासंभवात् न पर्यग्निकरणान्तानामङ्गानामावृत्तिः ।

अत एव प्राजापत्यवपानां क्रतुपशुभिः सह करणपक्षे ' सह पशून् आलभते वपानामभिघृतत्वाय ' इति वदन् उत्कर्षपक्षे तन्मात्राभावं दर्शयति । पर्यग्निकरणान्ताङ्गरीतिविधाने तु वपानामेवाभावादभिघारमात्राभावदर्शनमसमञ्जसं स्यात् । एतदभिप्रायकमेव च ' वपानां चानभिघारणस्य दर्शनात् ' इति सूत्रम् ।

यत्तु भाष्यकारेण इदम् 'सव्या वा एतर्हि वपा यदनभिघृता यद्ब्रह्मसाम्न्यालभते तेनाभिघृताः ' इति लिङ्गं अकर्मान्तरत्वे प्रयाजशेषस्य क्रतुपशुवपाभिघारणेन रिक्तत्वादनभिघृतत्वं युज्यते, कर्मान्तरत्वे तु तदर्थं पुनः प्रयाजकरणात् तेनैव तद्वपाभिघारणोपपत्तेरनभिघृतत्वदर्शनं न युक्तमिति व्याख्यातम्, तत् कर्मान्तरत्वपक्षेऽपि माध्यंदिनकालीनपशुपुरोडाशसवनीयहविषामिव सवनीयतन्त्रमध्यपातित्वेन प्रसङ्गितया प्रयाजपुनःकरणानापत्तेरुपेक्षितम् ।

मण्डन-- ' संस्कारो वार्यते पशौ । '

शंकर-- ' ब्रह्मसाम्नि न कर्मभित् । '

* प्राजापत्यानां व्रतानां पुरुषार्थता । ४।१।३।३–६. * प्राजापत्ये शतकृष्णलचरौ औषधस्य विध्यन्तः । ८।१।१८।३५–३९. * प्राजापत्येषु एकादशिनीविध्यन्तातिदेशः वक्ष्यते ' तत्प्रवृत्तिर्गणेषु स्यात् ' ( ८।१।८।१५ ) इत्यत्र । सु. पृ. ८१३. * प्राजापत्येषु क्रतुपशुषु च अग्निगोः आवृत्तिः कालभेदात् वाजपेये । भा. ११।४।२०।५४–५६. * ' प्राजापत्येषु च आम्नानात् ' ( १०।४।३।६ ) इत्यत्र वाजपेये उपदिष्टानां प्राजापत्यपशूनामतिदिष्टानां संस्थापशूनां च समुच्चयः उक्तः । भा. ४।१।१४।३३ , बाल. पृ. १७७. * ' प्राजापत्येषु चाम्नानात् ' इत्यादौ तत्र-तत्र अविरोधात् समुच्चयं वक्ष्यति ( इति शङ्का ) । वा. ३।६।१६।४२ पृ. १०६३.

⌛ **प्राजापत्येषु चाम्नानात् । १०।४।३।६।।**

प्रकृतौ क्रतुपशवः समाम्नाताः । वाजपेये च ' सप्तदश प्राजापत्यान् पशूनालभते ' इति विहितम् । तत्र प्राजापत्येषु च आम्नानात् क्रतुपशुभिः समुच्चयः । आम्नायन्ते हि वाजपेये क्रतुपशवः ' ब्रह्मवादिनो वदन्ति नाग्निष्टोमो, नोक्थ्यो, न षोडशी, नातिरात्र इति, अथ कस्मात् वाजपेयेन सर्वे यज्ञक्रतवोऽवरुध्यन्ते ? पशुभिरिति ब्रूयात् । यदाग्नेयं पशुमालभते अग्निष्टोमं तेनावरुन्धे, ऐन्द्राग्नेनोक्थ्यम्, ऐन्द्रेण षोडशिनम् , सारस्वत्याऽतिरात्रम्, मारुत्या बृहत् स्तोत्रम् । एतावन्तो वै यज्ञक्रतवस्तान् पशुभिरेवावरुन्धे ' इति समुच्चयं दर्शयति ।

तस्मात् प्राजापत्यानां क्रतुपशुभिः समुच्चयः । ग्रहाणामिवेति चशब्दार्थः । इति सिद्धान्तः । के.

* प्राजापत्येषु पशुषु कुम्भी तन्त्रम् । भा. ११।४।११।३९. * प्राजापत्येषु पशुषु 'छागस्य वपाया मेदसः' इत्यत्र 'छागानां वपानां मेदसाम्' इत्यूहः । बाल. पृ. १२७. * प्राजापत्येषु पशुषु वाजपेये कुम्भीशूलवपाश्रपणीनां तन्त्रम् । ११।४।८।३३. * 'प्राजापत्येषु यागानामेकानेकत्वसंशये । कुतः प्रकृतिवच्छब्दवाक्यशेषेण निर्णयः ॥' वा. ३।१।१।१ पृ. ६५०.

* प्राजापत्याङ्गप्रचारो वाजपेये सर्वसोमोत्तरम् । ११।३।१५।४८–५४.

* न च प्राजापत्याधिकरण– ( २।२।७।२१ ) पूर्वपक्षन्यायात् एकपदोपादानात् सहितानां हृदयादीनां एकदेवतासंबन्धोपपत्तेः कथमनेकयागकल्पनं इति वाच्यम् । कौ. २।२।६।१७ पृ. २०९.

* प्राजापत्यन्यायः । प्राजापत्यपशुधर्माणां पदार्थानुसमयो वाजपेये । ५।२।१. मीको. पृ. २४३७ 'पदार्थानुसमयन्यायः' इत्यत्र द्रष्टव्यम् । * एकदेवत्ये पशुगणे प्राजापत्यन्यायेन ( ५।२।१ ) दैवतावदानादिना प्रत्येकमनुसमयः । अन्ते च तन्त्रेण देवताहोमः । न च प्रकृतौ एकस्य पशोः दैवताद्यवदानत्रयं आनन्तर्येण कृतमिति इहापि तथैव कार्यमिति शङ्क्यम्, प्राजापत्यन्यायेनैव पश्वेकत्वस्य प्रकृतौ आर्थिकत्वेन चोदकविरोधाभावात् । भाट्ट. ५।२।६.

* प्राजापत्यन्यायाभावः चोदकाभावे । बाल. पृ. ८७.

* प्राजापत्यपशूनां क्रतुपशुभिः सहकरणत्वपक्षः ब्रह्मसामकालीनत्वपक्षश्च । भाट्ट. ४।१।१४. * प्राजापत्यपशूनां क्रतुपशूनां च वाजपेये प्रातःसवने सहोपक्रमः । प्रयाजानुष्ठानं उभयार्थं प्रातरेव । प्राजापत्यानां पर्यग्निकरणान्तमनुष्ठानं प्रातरेव, आलम्भस्तु माध्यंदिने ब्रह्मसाम्नि । तेषां प्रयाजाभिघारणं तु लुप्यते, अभिघारणस्य शेषप्रतिपत्तित्वात् । वि. ४।१।१४, * प्राजापत्यपशूनां धर्मसाहित्यं प्रयोगवचनेन परिकल्प्यते । ५।२।१. * प्राजापत्यपशूनां ब्रह्मसामकालीनत्वपक्षे प्रयाजशेषाभिघारणाभावः, 'सह पशूनालभते वपानामभिघृतत्वाय' इति लिङ्गात् । भाट्ट. ४।१।१४. * प्राजापत्यपशूनां वपायाः अभिघारणापेक्षैव नास्ति, ब्रह्मसाममाहात्म्येनैव तद्वपायाः स्निग्धतायाश्च अभिघृततायाश्च सिद्धत्वात् । अत एव श्रूयते 'शम्या वा एतर्हि वपा यर्ह्यनभिघृता । ब्रह्म वै ब्रह्मसाम । यद् ब्रह्मसाम्न्यालभते तेनाशम्यास्तेनाभिघृताः' इति । शम्याः रूक्षाः । अशम्याः स्निग्धाः । वि. ४।१।१४. * प्राजापत्यपशूनां वसाहोमः तन्त्रं वाजपेये । ११।२।५।२५.

## ⌛ प्राजापत्यपशूनां सवनीयपशूनां च शामित्रोऽग्निस्तन्त्रम् ॥

दैक्षे पशौ 'अग्निना पुरस्तादेति रक्षसामहपत्यै' इति श्रुतं पशोः शामित्रदेशनयनकाले वपानयनकाले चोल्मुकस्य नयनं प्रत्याहरणं च तद्वाजपेये प्राजापत्यानां क्रतुपशूनां च कालभेदेन प्रचारादावर्तेत, उभयेषामपि राक्षसापहननस्यावश्यकत्वात् । इति प्राप्ते, रक्षोऽपहननश्रुतेरर्थवादत्वेन श्रपणार्थताया एवोचितत्वात् कालान्तरे आनीतस्यापि श्रपणार्थत्वानपायात् तन्त्रम् । संकर्ष. १।१।९.

* प्राजापत्यपशूनां साहित्यमवगतम् 'सप्तदश प्राजापत्यान् पशूनालभते' इति । वि. ५।२।१. * प्राजापत्यपशुषु अग्निगुप्रैषस्य प्रत्येकमावृत्तिः वाजपेये । ११।४।२०. * प्राजापत्यपशुषु अभिघारणार्थं प्रयाजशेषधारणतत्पात्रे न कर्तव्ये वाजपेये । ४।१।१४।३३–३९.

## ⌛ प्राजापत्यपशुषु उत्कर्षे यूपोन्मोचनप्रभृति माध्यंदिने एव ॥

वाजपेये प्राजापत्यान् प्रकृत्य 'तान् पर्यग्निकृतान् उत्सृजते, ब्रह्मसाम्न्यालभते' इति श्रुतयोः पर्यग्निकरणसंज्ञपनयोर्मध्यवर्तिपदार्थः शामित्रदेशं प्रति प्रापणम्, स च क्रतुपशुभिः सह प्रातःसवने एव कार्यः, अग्निगुप्रैषस्य तदानीमेव वक्तव्यत्वात् । अन्यथा प्रैषस्य आवृत्त्यापत्तेः । निष्ठाप्रत्ययोक्तस्य उत्सर्जनपूर्वत्वस्य व्यवधानेऽपि भुक्त्वागत इत्यादाविव अविरोधात् । यूपादुन्मोचनमेव वोत्सर्गपदार्थ इति कार्ष्णाजिनेर्मतेन प्राप्ते, यूपादुन्मोचनादिप्राणवियोगान्तव्यापारस्य एकपदार्थत्वात् संज्ञपनकरणक-

भावनायाः सेतिकर्तव्यताकाया एवालम्भविधिनोत्कर्षात् उत्सृजतिरुत्तरव्यापारोपरममनुवदतीति क्त्वाप्रत्ययोक्तमव्यवहितपूर्वत्वं न बाधनीयम् । अग्निगोस्त्वावृत्तिर्मनोतादेरिव युक्तैवेत्युक्तम् । **संकर्ष.** १।१।४.

* प्राजापत्यपशुषु उपाकरणे य ऐच्छिकः क्रमः स्वीकृतस्तेनैव नियोजनादय उत्तरसंस्काराः कर्तव्याः । सोऽयं प्रवृत्तिक्रमः । ५।१।५।८–१२. * प्राजापत्यपशुषु उपाकरणानन्तरमेव नियोजनं इति यथाप्रकृति अनुष्ठानम् । **भाट्ट.** ५।२।१. * प्राजापत्यपशुषु उपाकरणादीनां प्रकृतौ अनिरूपित एव क्रमो निरूप्यते प्रवृत्त्या । **रत्न.** ५।१।१।१. * प्राजापत्यपशुषु एकैकस्मिन् उपाकरणादीनां पदार्थानामावर्तनीयानां पदार्थानुसमयो वक्ष्यते ( ५।२।१ ) । **भाट्ट.** ५।१।५. * प्राजापत्यपशुषु कर्मशेषप्रतिषेधपूर्वपक्षेऽपि 'ब्रह्मसाम्न्यालभते' इति पर्यग्निकरणोत्तरकालीनानां संस्काराणां कालान्तरे अनुष्ठेयत्वश्रुतेः सर्वथा प्रतिषेधायोगेन पर्यग्निकरणोत्तरकालीनत्वमात्रं निषेधस्य एकादशे ( ११।२।१२।५१–५३ ) वक्ष्यते । **सु. पृ.** ९३९. * प्राजापत्यपशुषु दैवतावदानादिना अनुसमयः । **भाट्ट.** ५।२।६. * प्राजापत्यपशुषु पशुधर्माणां पदार्थानुसमयः कर्तव्यः (पङ्क्तिपरिवेषणन्यायेन) वाजपेये । ५।२।१।१–२. * प्राजापत्यपशुषु प्रत्यक्ष एवोपदेशः पूर्वषट्के चिन्तितः । **टुप्.** ७।१।१।१. * प्राजापत्यपशुषु प्रधानार्थानि स्विष्टकृदर्थानि इडाभक्षणार्थानि च इति त्रिविधानि अवदानानि त्रयः पदार्थाः । पदार्थानुसमयेनैव चानुष्ठानं कर्तव्यम्, न काण्डानुसमयेन । एवं सर्वत्र पशुगणे । **वि.** ५।२।६. * प्राजापत्यपशुषु संनिपत्योपकारकेषु पदार्थानुसमयः, न तु काण्डानुसमयः । सहभावात् पदार्थाभ्यासोऽवश्यंभावी । **टुप्.** ५।२।१।१–२. * प्राजापत्यपशुषु सप्तदशसु कस्मिंश्चिन्नष्टे तत्स्थाने पुनरानीतस्यैव उपाकरणादयः संस्काराः कर्तव्याः, न तु पुनः सर्वेषाम् । **सोम.** २।२।७. * प्राजापत्यपशुषु सर्वेषामेव दैवतैः अवदानैः दैवतानामनुसमयः सौविष्टकृतैः सौविष्टकृतानां ऐडैश्च ऐडानाम् । ५।२।६।१०–१२.

* प्राजापत्यवपानां प्रयाजशेषाभिघारणं वैकल्पिकम् । **बाल. पृ.** १६३.

* 'प्राजापत्यवपाभिघारणार्थं प्रयाजशेषधारणं न कर्तव्यम्, तदर्थं पात्रान्तरं नोत्पादनीयम्, प्राजापत्यवपाश्च न अभिघार्याः । **भा.** ४।१।१४।३३–३९. * प्राजापत्यवपाभिघारणार्थं प्रयाजशेषस्थापनं चतुर्थे निरस्तं ( ४।१।१४ ) ब्रह्मसामकालपक्षे । **बाल. पृ.** १६३.

* प्राजापत्यवसाहोमानां तन्त्रेण अनुष्ठानम् । ११।२।५।२५ .

* **प्राजापत्यसप्तदशपशुप्रचारः** वाजपेये प्राकृतानां वैकृतानां च सर्वेषां सोमानामुपरिष्टात् कर्तव्यः । 'उपरिष्टात् सोमानां प्राजापत्यैश्चरन्ति' इति । ११।३। १५. 'वाजपेये सर्वसोमोत्तरम्' इत्यत्र द्रष्टव्यम् ।

* 'प्राणांस्तु सततं रक्षेद्दारैरपि धनैरपि' इति न्यायेन प्राणस्य परमधनत्वम् । **कौषीतक्युपनिषत् – शंकरानन्द.** २।२.

* 'प्राणापानावेवात्मन् धत्ते' ईदृशेन शब्देन फलविधानं न क्रियेत इति वक्ष्यामः (४।३।१।१–३) । **वा.** ३।४।५।१५.

* 'प्राणभृत उपदधाति' अत्र प्राणभृच्छब्दस्य समुदायपरत्वात् न्यूनस्य अधिकार्थविषयत्वकल्पने गौणत्वदोषः । **बाल. पृ.** ३. * 'प्राणभृत उपदधाति' अत्र मन्त्रविधिरिति पूर्वपक्षः । लिङ्गप्रकरणप्राप्तमन्त्रानुवादेन इष्टकोपधानविधिरिति सिद्धान्तः । **वि.** १।४।१८. * 'प्राणभृत उपदधाति' इत्यत्र प्राणशब्दघटितमन्त्रोपधेया इष्टका एव । **संकर्ष.** २।१।२३. **मीको. पृ.** १०६५ 'इष्टका एव प्राणशब्द०' इत्यत्र द्रष्टव्यम् । * 'प्राणभृत उपदधाति' । प्रथममन्त्रे एव प्राणभृल्लिङ्गमाम्नायते 'अयं पुरोभुवस्तस्य प्राणो भौवायनः' इति । एकस्यैव मन्त्रस्य प्राणभृत्त्वेऽपि तत्सहचरिताः सर्वे मन्त्राः प्राणभृच्छब्देन लक्ष्यन्ते, तेन च पुनः तैर्मन्त्रैरुपधातव्या इष्टकाः उपलक्ष्यन्ते । तथा चात्र वाक्ये प्राणभृतः इष्टकाः । **वि.** १।४।१८.

**प्राणभृदिष्टकार्था मन्त्रा एव प्राणग्रहार्थाः ॥** प्राणग्रहान् प्रकृत्य 'प्राणा वै प्राणग्रहाः' इत्यादिना स्तुत्वा तत्संनिधौ 'त्वे क्रतुमपि वृञ्जन्ति विश्वे' इत्यादयो मन्त्राः पठिताः । तेषां च परस्पराकाङ्क्षया संबन्धः, मन्त्राणां ग्रहेभ्योऽल्पत्वेऽप्यावृत्त्या पूर्तिसंभवात् । इति प्राप्ते, 'ज्येष्ठा वा एता ब्राह्मणाः पुराविदामक्रन्' इति तदर्थवादेषु तन्मन्त्राणां महर्षिलिङ्गत्वेन संस्तवात् तादृशानां च चयनप्रकरणे वसिष्ठविश्वामित्रभरद्वाजादिपदघटितत्वात् प्राणभृन्मन्त्राणां एवोपलम्भात् तेषामेव ग्रहणेऽपि करणत्वम् । अत एव 'प्राणभृत उपधाय संयत उपदधाति' इति विधिशेषे 'प्राणानेवास्मिन् धित्वा संयद्भिः संयच्छति' इति तेषामिष्टकानां प्राणग्रहाणां च प्राणत्वेन तुल्यः स्तव उपपद्यते । प्राणभृन्मन्त्राणां पञ्चाशत्संख्याकत्वेऽपि 'दश गृह्यन्ते' इत्यवयुत्यानुवादः एकपर्यायापेक्षो युज्यते । संकर्ष. २।३।१८.

* **प्राणभृन्न्यायः** । प्राणभृच्छब्देन इष्टकासमुदायो गृह्यते । १।४।१२।२३–६ . 'लिङ्गसमवायन्यायः' इत्यत्र द्रष्टव्यम् । * 'घृतेष्टका उपदधाति' इत्यादौ 'घृतं मिमिक्षिरे' इत्यादिमन्त्रैरुपधानं मृन्मयीनामेव प्राणभृन्न्यायेन ( संकर्ष. २।१।२३ ) विधीयते इति पूर्वपक्षः । संकर्ष. २।१।२४.

* **प्राणिनो** बहवः वातनिर्मितैर्लघुभिः सूक्ष्मैर्देहैः अन्तरिक्षे भ्रमन्ति भूम्याद्यनुग्रहात् । वा. ३।१।७।१३ पृ. ७०२ . * **प्राणिनां** सर्वेषां महाभूमिः गोपथ–राजमार्ग– जलाशयादिसहिता साधारणं स्वम् । वि. ६।७।२.

* **प्राणिद्रव्यकत्वं** पशुप्रकृतिलिङ्गम् । बाल. पृ. ११९.

**प्रातस्तु षोडशिनि । ६।५।१४।४४ ॥** षोडशिसंस्थे ज्योतिष्टोमे अतिपन्नानां अग्निहोत्रहोमानां प्रतिहोमाः, प्रातः प्रातःकालीनहोममारभ्य कर्तव्याः । तत्र यागे अवभृथस्य रात्रौ अनुष्ठेयताप्राप्तेः सायंहोमानधिकारः । प्रातर्होमस्य अधिकारः प्राप्नोति । तेन प्रातर्होममारभ्यैवानुष्ठानम् । तुशब्दः पूर्ववैलक्षण्यार्थः । के.

* **प्रातरग्निहोत्रप्रभृति** प्रतिहोमानुष्ठानं षोडशिसंस्थे ज्योतिष्टोमे । ६।५।१४।४४. 'षोडशिसंस्थायां प्रातरग्निहोत्रं' इत्यत्र द्रष्टव्यम् ।

* **प्रातरनुवाकं** होताऽनुब्रूते । वि. ३।७।९.

* **प्रातरनुवाकोत्तरं** ऐष्टिको निर्वापः, प्रोक्षणादिकं च अलङ्करणात् प्राचीनमङ्गजातं कृत्वा, पश्चात् सौमिकाः प्रचरणीहोमादयः कर्तव्याः, ततः सवनीयादयः, ततो बहिष्पवमानस्तोत्रम् । वि. ५।१।१३.

* **प्रातरनुवाकोपास्त्यभावपक्षे** अध्वर्योः अधिकरणमिदं न तु तदुपास्तिपक्षे । सोम. ५।१।१३.

* **प्रातरनुवाकप्रचरणीहोमयोः** सौमिकयोः पाठप्राप्तमनुक्रमं विच्छिद्य प्रैषबलात् ऐष्टिको निर्वापः प्रवृत्तः। तत्रैव प्रोक्षणादिकमपि अलङ्करणात् प्राक्तनं सर्वं कृत्वा ततः प्रचरणीहोमादयः कर्तव्याः । वि. ५।१।१३.

* **प्रातर्दोहयागः** दुग्धस्य उत्पत्तेः अप्रयोजकः उपादानपालनयोस्तु प्रयोजकः । बाल. पृ. १०६.

* **प्रातःसवनं** दैवान्मानुषाद्वा प्रतिबन्धादुत्कृष्यमाणं माध्यंदिनं सवनं उत्कर्षति । भा. ५।१।१७।३०, * **प्रातःसवने** अष्टाकपालः सवनीयपुरोडाशः । १०।५।२६।८८. * प्रातःसवने आज्यस्तोत्राणि चत्वारि पञ्चदशस्तोमकानि । वि. १।४।३, * प्रातःसवने गायत्रं साम । २।३।१. * प्रातःसवने गौग्गुलवेन अभ्यञ्जते अञ्जनाभ्यञ्जने नाम सत्रे । भा. १०।४।६।१०. * प्रातःसवने ज्योतिष्टोमीये ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, ध्रुवः इत्यादयो ग्रहा गृह्यन्ते । वि. २।३।१, ३।६।९ । प्रातःसवने उपांशुः, अन्तर्यामः, ऐन्द्रवायवः, मैत्रावरुणः, शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, ध्रुवः, आश्विनः इति दश ग्रहा गृह्यन्ते । 'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' । सोम. २।२।६ पृ. १३८. * प्रातःसवने ज्योतिष्टोमगते बहिष्पवमानस्तोत्रे त्रिवृत्स्तोमः, तदुत्तरं आज्यस्तोत्राणि चत्वारि, तेषु पञ्चदशः स्तोमः । वि. १।४।३. * प्रातःसवने धाराग्रहेभ्यः पूर्वं अंशुग्रहः । सोम. २।३।९. * प्रातःसवने शुक्रामन्थिग्रहप्रचारे अच्छावाकचमसवर्जं नव चमसाः सवनमुखीयाः प्रथम-

मिन्द्राय हूयन्ते। इतरयोस्तु सवनयोर्दशदश। तत्र होत्रकाणां चमसेषु सकृत्सकृत् इन्द्राय हुतेषु तच्छेशेषु सत्स्वेव अभक्षितेषु पुनरपि द्रोणकलशात् सोममुन्नीय मित्रावरुणादिदेवताभ्यो हुत्वा तेषु चमसेषु हुतशेषः सोमो भक्ष्यते इति स्थितिः ( सत्याषाढः- ८।७।१-३८ )। कु. ३।२।१२।२७. * प्रातःसवने सादनसंमार्गादयो ग्रहधर्माः पठिता अपि सवनत्रयेऽपि संबध्यन्ते। वि. ३।६।९. * 'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' ज्योतिष्टोमे। भा. २।२।६।१७.

* प्रातःसवनीयानां पशोः वा तन्त्रे असंशयं पतिताः माध्यंदिनसवनीयतृतीयसवनीयपुरोडाशाः। भा. १२।२।१२।३२, * प्रातःसवनीयानां पुरोडाशानां तन्त्रं पाशुकेन तन्त्रेण प्रसङ्गसिद्धम्। १२।२।१२।३२.

* प्रातर्होमस्य सूर्यप्रजापती देवते। वा. २।२। ५।१६ पृ. ५०७.

* प्रातिपदिकं अभिधात्री श्रुतिः। तत् द्विविधम्; 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इत्येकम्, 'कृत्तद्धितसमासाश्च' ( पा० १।२।४५-४६ ) इति द्वितीयम्। बाल. पृ. ४१. * प्रातिपदिकं आकृतिमात्राभिधायकम्, 'न चास्य ( विशेषणस्य ) प्रातिपदिकमभिधायकम्, आकृतिमात्राभिधायित्वात्'। वा. ३।१। ६।१२ पृ. ६७३. * प्रातिपदिकं जातिं ब्रूते लक्षणया तु द्रव्यम्। सर्वत्रैव लक्षणया लिङ्गसंख्ये प्रवर्तेते। टुप्. १२।१।१।१. * प्रातिपदिकं यद् बहुषु वर्तते ततो बहुवचनं भवति। भा. ३।५।८।२३. * प्रत्ययः प्रातिपदिकार्थमवश्यमुच्चारणीयः। न केवलं प्रातिपदिकं स्वार्थे वर्तते। टुप्. ६।४।६।२२. * स्त्रियां यत् प्रातिपदिकं वर्तते तस्मात् स्त्रीप्रत्ययो भवति। भा. ३।१। ६।१२पृ. ६८१-६८२. * प्रातिपदिकेन अन्वयव्यतिरेकाभ्यां जात्यभिधानम्। वा. ३।४।४।१३ पृ. ९२०. * प्रातिपदिकात् उच्चरन्ती द्वितीयादिविभक्तिः प्रातिपदिकार्थो विशेषकः इत्याह। ( प्रत्ययानां प्रकृत्यर्थानुरक्तस्वार्थबोधकत्वस्वाभाव्यात् )। भा. १।१।७।२५ पृ. ९९. * प्रातिपदिकस्य विशेष्ये वर्तमानस्य भावप्रत्ययार्थो निमित्तम्। वा. ३।१।६।१२ पृ. ६७४, * प्रातिपदिकस्य समुदायप्रसिद्धौ संभवन्त्यां अवयवप्रसिद्धिर्न युक्ता 'उद्गातॄणां' इत्यादौ। ३।५।८।२६. * प्रातिपदिकानां सर्वेषां सत्तावाचित्वं आकृत्यधिकरणे निरस्तम्। सु. पृ. ५०६.

* प्रातिपदिकार्थो निरूप्यते। धातुप्रत्ययतदन्तभिन्नत्वे सति अर्थवच्छब्दत्वं प्रातिपदिकत्वम्। 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' (पा० १।२।४५) इति सूत्रात्। विभक्त्यन्तानां तत्संज्ञावारणाय प्रत्ययान्तेति। एवं च पूर्वनिपातितेषदसमाप्त्यर्थक-बहुच्प्रत्यययुक्तबहुपटुशब्दस्य प्रातिपदिकसंज्ञा। तत्र तद्धितान्तत्वाभावेन तत्संज्ञायाः 'कृत्तद्धित०' इति सूत्रेण (पा० १।२।४६) अलाभात्। तद्धितयोगमात्रविवक्षायां 'पचतकि' इत्यत्र अकच्प्रत्यययुक्तेऽपि तदापत्तेः। न चैवं कृत्तद्धितान्तेषु अनर्थकशशशृङ्गादिसमासेषु प्रातिपदिकत्वं न स्यादिति वाच्यम्। 'कृत्तद्धितसमासाश्च' इति सूत्रेण तत्र संज्ञाविधानात्। अन्ये तु अर्थवत्सूत्रेण वाक्यसमासयोरपि संज्ञाप्राप्तौ कृत्सूत्रेण समासेषु पुनः संज्ञाकरणं वाक्यपरिसंख्यार्थमित्याहुः।

तच्च प्रातिपदिकं चतुर्धा पूर्वमुक्तं रूढं यौगिकं योगरूढं यौगिकरूढं चेति। तच्चतुर्विधमपि जातिगुणक्रियायदृच्छाशब्दभेदात् चतुर्विधं इति महाभाष्यकाराः। वस्तुनिर्देशशब्दावधिकौ इति चन्द्रालोककारः।

सर्वेषु द्रव्यवाचकघटादिपदेषु जातिरेव वाच्या, वाच्यतावच्छेदिका वा। इदं चाग्रे स्फुटीकरिष्यते। नीलशुक्लादिपदेषु गुणपदसमानाधिकरणेषु गुणिवाचिसमानाधिकरणेष्वपि गुण एव वाच्यो न नीलत्वादिजातिः, गुणिनि तदभावात्। नापि गुणी गौरवात्। लक्षणया सामानाधिकरण्याद्युपपत्तेश्च। वाच्यतावच्छेदको वा गुणः। एवं पाचकादिपदे पाकक्रियैव वाच्या, तस्या एव प्रतीतेः। तस्याश्चैकत्वात् वाच्यत्वं वाच्यतावच्छेदकत्वं वा। एवं दण्डी इत्यादौ दण्डसंबन्धो वाच्यो वाच्यतावच्छेदको वा। पाचकादिपदे पचनस्य विशेषणत्वेन भानात् इह दण्डसंबन्धस्य विशेषणत्वेन भानात् भेदः। डित्थादियदृच्छाशब्देषु शब्द एव वाच्यो वाच्यतावच्छेदको वा। एवं कंसपरिक्षितचामुण्डादि-

पदेषु निर्देश एव वाच्यः शक्यतावच्छेदको वा । निर्देशश्च वाचकवर्णानां स्वपरत्वम् । यथा 'कंसः' इत्यत्र कंकारसकारावेव कंसपदे प्रतीयेते । तत्र नरकपदान्तर्गतसानुस्वारककारेण नरकप्रतीतिः, समाश्रितपदान्तर्गतसकारेण च समाश्रितप्रतीतिः । तेन स्वोपस्थाप्यसानुस्वारककारसकारवत्पदवत्त्वसंबन्धेन ककारसकारावेव वाच्यौ वाच्यतावच्छेदकौ वा इति । एवं चामुण्डादिपदेऽपि चण्डमुण्डानयनवत्त्वादिसंबन्धेन वर्णत्रयमेव शक्यं शक्यतावच्छेदकं वा । एवं परिक्षितादिपदे 'परिक्षीणे कुले जातः' इत्यादिसंबन्धेन तत्तद्वर्णवत्त्वं बोध्यम् । एतेषु च जातिगुणक्रियासंबन्धासिद्धेर्न जात्यादिशब्दत्वम्, नापि यदृच्छाशब्दत्वम्, संबन्धप्रदर्शनात् । नापि यौगिकत्वम्, पिण्डार्थान्तःप्रविष्टार्थवाचकावयवारब्धत्वासंभवात् । नापि लक्षणा, संबन्धाग्रहात् । द्विरेफपदस्य भ्रमरपदादौ रेफद्वयसंबन्धज्ञानसत्त्वात् युक्ता लक्षणा । नापि लक्षितलक्षणा, लक्षणाया अभावात् । अतस्ते वर्णा एव शक्यतावच्छेदकाः शक्या वेति ।

अत्र **केचित्** । व्यक्तिसंकेतपक्षे सर्वासु व्यक्तिषु संकेत एको नाना वा । नाद्यः, आनन्त्यात् । नान्त्यः, व्यभिचारापत्तेः । गौः शुक्लः चलः इत्यादिपदानां व्यक्त्यैक्येन अर्थभेदाभावात् सहप्रयोगानुपपत्तेश्च । अतो धर्मे एव शक्तिः । हेतुताऽपि शक्तिग्रहस्य तत्तत्पदत्वधर्मितावच्छेदककगोत्वप्रकारकनिश्चयत्वेन । तत्र जातौ च निरवच्छिन्नैव प्रकारता इति लाघवम् । अन्यथा गोत्वधर्मितावच्छेदककतत्तत्पदप्रकारकनिश्चयत्वेन हेतुतायां तत्तत्पदत्वस्य प्रकारतावच्छेदकतया गौरवं इति जातावेव शक्तिर्युक्ता । आकाशादिपदे अनन्तशक्तिकल्पनाऽभावेन न धर्मे शक्तिः । एवं च सर्वत्र नानानीलपीतरूपव्यक्तिषु वर्तमाना नीलत्वपीतत्वादिजातिः नीलपीतादिपदवाच्या । चलना इत्यत्रापि चलनक्रियानिष्ठा जातिरेव । डित्थादिशब्दानामपि बालाद्यवस्थापरिणते नानाविरुद्धधर्माध्यासात् भिन्नडित्थाद्यर्थनिष्ठा डित्थत्वजातिरेव वाच्या । 'बालवृद्धशुकोदीरितशब्दभेदेन शब्दनिष्ठैव जातिर्वाच्या' इत्यपि **केचित्** ।

तत्राप्येवं विभागः, जातिरेव नामार्थः, उक्तयुक्त्या आक्षेपाच्च व्यक्तिलाभः । अर्थापत्तिः समानवित्तिवेद्यत्वं वा आक्षेपो निरूढलक्षणा वा । तेन वृत्त्या प्रकृत्युपस्थाप्यत्वस्य प्रकृत्यर्थत्वात् न प्रत्ययार्थान्वयाद्यनुपपत्तिः । 'शक्यादन्येन रूपेण भाने भवति लक्षणा' इति नियमस्य अप्रयोजकत्वादिति । एवं च घटशाब्दबोधे घटत्वशक्तिज्ञानत्वेन कारणतायां लाघवम् ।

अन्ये तु सर्वत्र व्यक्तिरेव पदार्थः । अशक्याया अपि जातेः उपलक्षणतया तदुपलक्षितव्यक्तिशक्त्यङ्गीकारेण न व्यभिचारानन्तशक्तिकल्पनादिदोषः । तदुक्तं 'आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम् । शब्दः सुकरसंबन्धो न च व्यभिचरिष्यति ॥' इति ।

**परे तु** जातिविशिष्टा व्यक्तिर्वाच्या । अन्यथा घटत्वांशे शक्त्यभावेन घटत्वादेः शाब्दविषयत्वासंभवात् । **न च** घटविशेष्यकघटत्वप्रकारकबोधे जातिशक्तिज्ञानत्वेन व्यक्तिशक्तिज्ञानत्वेन वा हेतुत्वात् नायं दोष इति **वाच्यम्** । द्रव्यादिपदानामपि एवमापत्तौ घटादिपदात् द्रव्यत्वप्रकारकबोधापत्तेः । **न च** पदज्ञानस्य संबन्धिज्ञानविधया हेतुत्वेन येन रूपेण उपस्थितयोः संबन्धः तेन रूपेण उपस्थापकत्वनियमः । एवं च घटत्वांशे शक्त्यग्रहेऽपि तेनैव रूपेण उपस्थितिः इति **वाच्यम्** । उपस्थितस्य आकाशादेरपि अन्वयापत्तेरिति । एवं च द्विकं प्रातिपादिकार्थं इति ।

यद्वा जातिव्यक्तिलिङ्गानि इति त्रिकमर्थः । लिङ्गं द्वेधा, शास्त्रीयव्यवहारहेतुः लौकिकं च, अवयवसंस्थानविशेषवत्त्वं अन्यं तत्तद्व्यक्तिविशेषनिष्ठं व्यवस्थितम्, इयं व्यक्तिः, अयं पदार्थः, इदं वस्तु इति सर्वत्र व्यवहारात् । अव्यवस्थितं लिङ्गत्रितयनिबन्धनकार्योपयुक्तं आद्यम् । तच्च सत्त्वरजस्तमोगुणानां वृद्ध्यपचयस्थितिरूपमिति **पतञ्जलिस्वामिनः** । स्त्रीत्वपुंस्त्वनपुंसकत्वादिर्जातिरेव इत्यन्ये । तत्र लौकिके लिङ्गे शक्तिः । अलौकिके गौण्या प्रयोगः आरोपात् । 'पशुना यजेत' इत्यादौ मुख्यपुंस्त्वविवक्षणात् न स्त्रीपशुना यागप्रसङ्ग इत्याहुः । **अन्ये तु** पशुशब्दस्य लिङ्गत्रयसाधारण्येन प्रयोगेऽपि मान्त्रवर्णिक-

च्छागपदस्य व्यवस्थितप्रयोगेण लौकिकपुंस्त्वे शक्तिमादाय दोषोद्धार इत्याहुः ।

यद्वा शास्त्रीयं लिङ्गं शब्दनिष्ठमेव, लौकिकं तु अर्थनिष्ठम् । तत्र अर्थनिष्ठे शक्तिः । कुमारब्राह्मणपदानां तत्रैव प्रयोगात् । अत एव 'प्रास्मा अग्निं भरत' इत्यत्र उपस्थितव्यक्तिगतपुंस्त्वे शक्तिस्वीकारात् केवलमेष्यामूहः । शब्दगते लक्षणा इति ।

अत्र टाबादीनां ङीबादीनां शीप्रभृतीनां द्योतकत्वं अस्मिन्मते । ङीबादीनामेव वाचकत्वं इत्यपि **केचित्।**

यद्वा जातिव्यक्तिलिङ्गसंख्या इति चतुष्कं प्रातिपदिकार्थः । 'दधि पश्य' इत्यादौ प्रातिपदिकादेव तत्प्रत्ययात् । एवं च विभक्तेर्द्योतकत्वमात्रम् । तेनैव च नामार्थप्रकारकशाब्दबोधे सुबादिजन्योपस्थितेर्हेतुत्वनिर्वाह इति दिक् । एतत् सर्वं महाभाष्ये 'सरूपाणामेकशेषः' (पा. १।२।६४) इति सूत्रे स्पष्टम् ।

**आलङ्कारिकास्तु** 'विषयत्वमनादृत्य शब्देनार्थः प्रकाश्यते' इतिमतावष्टम्भेन पञ्चकं प्रातिपदिकार्थः ।

**परे** तु शब्दस्यापि प्रातिपदिकार्थत्वात् षट्कं प्रातिपदिकार्थः । तथाहि — 'गामुच्चारय' इत्यादिलौकिकप्रयोगे 'शिपिविष्टवतीषु रथंतरं गायति' इत्यादिवैदिकप्रयोगे च शब्दोऽपि भासते इति निर्विवादम् । वृत्तिविषय एव शाब्दबोधे विषयः इति नियमः । तथा च शब्दस्यापि शब्दशक्तिविषयतया भानं अङ्गीकार्यम् । तत्र घटादिपदे शब्दनिरूपिताऽपि शक्तिः भिन्ना कल्प्यते इति **केचित्।**

**अन्ये** तु शक्तिविषयः अर्थो भासते । शक्तिविषयत्वं च आश्रयतानिरूपकतान्यतरसंबन्धेन शक्तिमत्त्वम् । तथा च अर्थशक्तिज्ञानेनैव पदस्यापि भानम् । तेन घटादिपदानां शक्तिसंबन्धेन घटत्वादिवत् पदमपि शक्यम् । एतावांस्तु विशेषः यत् संबन्धस्योभयनिरूप्यत्वेन संबन्धिद्वयोपस्थापकत्वाविशेषात् घटत्वाद्यवच्छिन्नशक्त्यैव घटादिवत् शब्दस्यापि तथैव वृत्त्या उपस्थितौ सत्यां अर्थबोधे तात्पर्ये सति तत्र विशेषणतया स शब्दो भासते । तत्रापि घटत्वादिरूपेण विशिष्य शक्तिग्रहवतां पदजात्युभयप्रकारकबोधः । नलयुधिष्ठिरादिपदवद्विशिष्य शक्तिग्रहाभावे तु व्यक्तिविशेष्यकः केवलपदप्रकारकः नलपदवाच्यः कश्चित् इत्याद्याकारको बोधः । यत्र तु उक्तोदाहरणेषु शब्दमात्रे तात्पर्यं तदा तत्र शक्त्या शब्दस्वरूपस्य प्राधान्येन भानमिति । एवं च क्वचित् तात्पर्यवशात् शब्द एव प्राधान्येन भासते क्वचित् तदभावे अर्थविशेषणत्वेन इति सिद्धम् ।

अत एव 'अग्निहोत्रं जुहोति' इत्यादौ तस्य विशेषणत्वेन अन्वयात् अग्निहोत्रनामकेन इति बोधः ।

एतेन अग्निहोत्रनामके निरूढलक्षणा इति निरस्तम् । अनुपपत्त्यभावात् । मत्वर्थलक्षणातौल्येन सिद्धान्तानुबन्धाच्च । अतः शब्दोऽपि वाच्यः । एवं च 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च । संपत्तौ च विपत्तौ च महतामेकरूपता ॥' इत्यादौ 'रक्त एवास्तमेति' इति यदा क्रियते तदा पदान्तरप्रतिपादितः स एवार्थः अर्थान्तरतयैव प्रतिभासते इति काव्यप्रकाशोक्तिः संगच्छते ।

अतः षट्कं प्रातिपदिकार्थः इति । तदुक्तम् 'ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा । तथैव सर्वशब्दानामेते पृथगवस्थिते ॥' इति दिक् । **मणि. पृ. ११८–१२३.**

* प्रातिपदिकार्थः प्रधानं विभक्त्यर्थो गुणः । सति प्रातिपदिकार्थे विभक्त्यर्थेन भवितव्यम् । **भा. ९।३।५।१५.** * प्रातिपदिकार्थो यद्यपि गौणः, प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यात्, तथापि 'पौर्णमास्यां चतुर्होत्रा अभिमृशेत्' इत्यादौ अभिम्रष्टव्यविशेषानवगमात् समस्तस्रुवादिविषयसंशयोपप्लवे सति विशेषोऽन्यतः एव लब्धव्यः इति साकाङ्क्षत्वात् असंदिग्धपरिग्रहार्थं प्रथमगृहीतत्वेन च प्रातिपदिकार्थं मुख्यमाश्रित्य विभक्तिः सप्तम्यर्थेऽवकल्पते पौर्णमास्यामिति । **वा. ३।७।३।१०.** * 'प्रातिपदिकार्थः सत्ता' इति सत्त्ववाचित्वस्मृतिः । **सु. पृ. ९५४.** * गुणश्च विभक्त्यर्थः, प्रधानं **प्रातिपदिकार्थः ।** प्रातिपदिकार्थविशेषो विभक्त्या अभिधीयते । **भा. ९।३।५।१५.** * **प्रातिपदिकार्थस्य** लिङ्गसंख्यापेक्षया प्राधान्यं स्मर्यते। **सु. पृ. १०१४.**

* **प्रातिपदिकार्थकारकत्व**वाचिनी विभक्तिः । **सु. पृ. ७३९.**

* 'प्रातिपदिकार्थ–लिङ्ग–परिमाण– वचनमात्रे प्रथमा' ( पा० २।३।४६ ) इति सूत्रं प्रथमायाः लिङ्गपरिमाणवचनेषु शक्तिग्राहकं इति वैयाकरणाः। नेदं शक्तिग्राहकम्, किन्तु नेयं कारकविभक्तिः इति सूचनार्थम्। मणि. पृ. १२४–१२५.

* प्रातिपदिकावृत्तिलक्षणः वाक्यभेदः द्विविधः समासासमासभेदात्। बाल. पृ. १८१.

* प्रातिपदिकत्वं धातुप्रत्ययतदन्तभिन्नत्वे सति अर्थवच्छब्दत्वम्। मणि. पृ. ११८.

* प्रातिपदिकविभक्त्योः प्रातिपदिकं प्रधानम्, धर्मिवाचकत्वात्। विभक्तिस्तु कर्मत्व–करणत्वादिधर्मवाचकत्वात् गुणभूता। वि. ९।३।५.

* प्रातिपदिकविशेषणं हि स्त्रीशब्दः ('अजाद्यतष्टाप्' इत्यत्र)। स्त्रियां यत् प्रातिपदिकं वर्तते ततष्टाबादयः इति। भा. ९।१।९।३३.

* 'प्रातिशाख्यानि वा यानि स्वाध्यायवदधीयते।' प्रातिशाख्यैः पुनः वेदसंहिताध्ययनानुगतस्वरसंधिप्रयतिविवृतिपूर्वाङ्गपराङ्गाद्यनुसरणात् वेदाङ्गत्वमाविष्कृतम्। वा. १।३।८।२४ पृ. २६५। सर्वानुदात्तपदसंहतिः प्रयतिः, असंहिता विवृतिः। स्वरितस्योदात्तोंऽशः पूर्वाङ्गः, अनुदात्तः पराङ्गः। सु. पृ. २८७.

* मन्त्रशास्त्रे मातृकान्यासादौ दीर्घलृवर्णो यद्यपि स्वीकृतः, तथापि प्रातिशाख्यन्यायेन अन्यत्र असौ नोपयुज्यते एव (यथा तत्प्रातिशाख्योक्तं तच्छाखायामेव नान्यत्र तथा)। शब्दकौस्तुभ. २ ऋलृक्सूत्रे.

* प्राथमिकहविःशेषात् स्विष्टकृदाद्यनुष्ठानम्। ३।४।१६. मीको. पृ. २७५२ 'प्रथमोपस्थितन्यायः' इत्यत्र द्रष्टव्यम्।

* प्रादान्येनाग्निना आहवनीयादेः संसर्गे प्रायश्चित्तम्, 'अग्नये शुचयेऽष्टाकपालं निर्वपेत्' इति। भा. १२।४।७।२२.

* प्राधान्यं विना अनेकपदार्थवैशिष्ट्यायोगः। सु. पृ. ६८३. * प्राधान्यं स्तोत्रादीनाम्। वि. २।१।५. * प्राधान्येनाभिधानं तात्पर्येणाभिधानम्, न शेषित्वेन। वा. ३।४।४।१२ पृ. ९०३. * 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेन ('सोमेन यजेत' इत्यत्र) वाक्यीयाङ्गत्वस्य श्रौताङ्गत्वस्य वा व्यवहारः। मुरारि. पृ. ११७२, * 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेन ('ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यत्र) श्रौताङ्गत्वस्य व्यवहारः, न तु वाक्यीयाङ्गत्वस्य। पृ. ११७९.

* प्राधान्यलक्षणं साधकतमत्वम्। सु. पृ. ७४४.

* प्राप्तस्य पुनरुपदेशो न किञ्चित् प्रयोजनमस्ति। भा. १०।८।१४।४०. * प्राप्तस्य पुनर्वचनं तावन्मात्रफलं अनर्थकं इति सामर्थ्यात् प्रकर्षगतिर्विज्ञास्यते। यथा 'अभिरूपाय कन्या देया' इत्यत्र अभिरूपतराय इति गम्यते। वा. ३।३।१३।३४ पृ. ८८०. * प्राप्तस्य पुनः श्रवणं असति प्रयोजने अन्यस्मिन् परिसंख्यार्थमेव भवति। भा. ७।३।९।२५. * प्राप्ते कर्मणि अनेकार्थगुणविधानं न च संभवति। वा. २।२।९।२३ पृ. ५३९. * प्राप्ते कर्मणि अनेकगुणविधौ वाक्यभेदप्रसङ्गः। वि. २।३।११. * प्राप्ते कर्मण्यपि एकपदोपात्तानेकार्थविधिः शोणाद्युदाहरणैस्तत्र तत्र प्रतिपादितः। वा. ३।६।७।२२, * 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः॥' कर्मोत्पत्तिवाक्ये हि प्रत्ययो भावनां अप्राप्तत्वात् विधातुमुपक्रमते। सा च यावत् धात्वर्थकारकैः न परिपूर्यते तावत् अनुष्ठातुमयोग्या इति न विधित्वपर्यवसानम्। तत्र भावना आत्मांशभूतावगतकारकसामान्यान्यथाऽनुपपत्त्या आक्षिप्तविशेषोपलिप्सायां स्ववाक्योच्चारितकारकविभक्त्यन्तपदप्रतीतैर्विशेषैः भावनामात्राकाङ्क्षिभिः वाक्यादेव विशेष्यते। प्रतिपदं च यावत्किञ्चिद् द्रव्याश्रितं जातिलिङ्गसंख्यादि तत्सर्वमेकपदोपादानलक्षणश्रुतिप्रतिलब्धविशेषणविशेष्यभावं अप्रतिपन्नपरस्परशेषशेषित्वं विभक्तिश्रुत्यैव कारकात्मना भावनार्थत्वं प्रतिपद्यते। एवं यावन्ति पदानि संनिकर्षविप्रकर्षस्थानि तानि सर्वाणि अनुषङ्गाधिकरणोक्तेन मार्गेण (२।१।१६) अनादृत्य संनिकर्षविप्रकर्षौ युगपत् संनिपतन्ति। ततः सर्वविशेषणविशिष्टां अनुष्ठानयोग्यां भावनामासाद्य विधिः समाप्यते। स च एकेनैव प्रयत्नेन तां विशिष्टां विदधाति, इति नानेकशक्तिकल्पनापत्तिदोषः। तथाहि, 'श्रौतव्यापारनानात्वे

शब्दानामतिगौरवम् । एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते ॥' विशिष्टायां भावनायां आधाय श्रौतं विधित्वं यदि अन्यत्रापि श्रुत्यैव पुनर्व्याप्रियेत, ततः पुनरुच्चारणदोषं अवैदिकत्वापत्त्या लभेत । अयं पुनः सकृद्विधाय निवृत्तव्यापारः स्वार्थान्यथानुपपत्त्या सर्वविशेषणेषु प्रत्येकनिष्ठानि विध्यन्तराण्याविर्भावयन् समाम्नायावगतैकरूपापरित्यागेनैव असकृदुच्चारणफले वर्तते । २।२।३।६ पृ. ४८५, * प्राप्ते कर्मणि संबन्धद्वयकरणे वाक्यं भिद्यते । ३।१।११।२१ पृ. ७३४. * 'प्राप्ते पुनरारम्भो नियमाय' इति न्यायेन 'यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा' इति विहिते पुनः 'उपव्ययते' इति विधिः दर्शपूर्णमासयोः पित्र्येऽपि कर्मणि यज्ञोपवीत्येव कुर्यात् । सत्याश्रौ. १।१।५७ वैजयन्ती. * प्राप्ते वचनं न विधिरिति गम्यते । प्राप्तस्यानुवादो भवितुमर्हति । भा. ६।३।१३।३१.

* **प्राप्तानुवादेन** हि अप्राप्तं विधेयमिति न्यायः । (स्पष्टार्थः) । आभरणम् . ३।३।९।१८ ब्रसू .

* **प्राप्ताप्राप्तविवेकन्यायः** । 'अग्नीषोमीयेण यजेत पौर्णमासीम्, अमावास्यामभिचरन्' इति वाक्ये दार्शिकाग्नेयदेवतोद्देशेन भ्रातृव्यवत्प्रयोगे सोमसाहित्यविधिः प्राप्ताप्राप्तविवेकेन तथा पर्यवसानात् । इति पूर्वपक्षः । संकर्ष. १।२।१७. * प्राप्ताप्राप्तविवेकन्यायः । न च ('शाद्वौ' इत्यत्र) विशिष्टस्य विधेयत्वेऽपि प्राप्ताप्राप्तविवेकन्यायेन 'शा' शब्दे एव विधेयता पर्यवस्यति ... । भूतिः . पृ. १५८ परि० ४०.

* **प्राप्तपरिसंख्या** त्रिदोषा । अस्या भाष्यवार्तिकोक्तमुदाहरणं सिद्धान्ते नास्त्येव । पूर्वपक्षे तु गृहमेधीये पञ्चमे पक्षेऽस्ति । भाष्यकारान्तरमते तु सिद्धान्तेऽप्यस्ति यथा, दशमे अङ्गिरसां द्विरात्रे 'वैखानसं पूर्वेऽहन् साम भवति षोडश्युत्तरे' इति । तत्र द्विरात्रोत्तमाहानां अतिरात्रसंस्थत्वात् प्रकृत्यतिरात्रतः षोडशिविकल्पे प्राप्ते 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति वाक्यान्तरेणानारभ्याधीतेन षोडश्युत्तरे इत्यनेन अङ्गिरसां द्विरात्रे एव परिसंख्यायते तेन द्विरात्रान्तरे विकल्पः इति । स्मार्तोदाहरणं तु अस्त्येव, यथा 'पञ्च पञ्चनखा भक्ष्याः' इति । बाल. पृ. २५.

* **प्राप्तबाधः** द्विविधः नित्यो वैकल्पिकश्चेति । बाल. पृ. १३१. * प्राप्तबाधः नाम 'साधारणस्य शास्त्रस्य विशेषविषयादिना । संकोचः क्लृप्तरूपस्य प्राप्तबाधोऽभिधीयते ॥' यत्र क्लृप्तस्यैव शास्त्रस्य सामान्यद्वारेण विशेषानुपसर्पतः क्वचित् विशेषयागादिना प्राप्तिरपोह्यते, तत्र प्राप्तबाधः । न्यायमाला. अङ्गनिर्णयः श्लो. १४. * प्राप्तबाधः, प्राकृताङ्गस्य विकृतौ चोदकप्राप्तस्य प्रत्याम्नानात् अर्थलोपात् प्रतिषेधाद्वा यो बाधः । यथा प्राकृतानां कुशानां प्रतिकूलशराम्नानात्, अवघातस्य कृष्णलेषु वैतुष्यरूपप्रयोजनस्य लोपात्, पित्र्येष्टौ होतृवरणस्य 'न होतारं वृणीते' इति प्रतिषेधात् । मीन्या. * प्राप्तबाधः यत्र अतिदेशसामान्यशास्त्रादिजनिते ज्ञाने अंशे सर्वविषये वा 'मिथ्येदं' इति प्रत्ययान्तरं भवति स प्राप्तबाधः । अयं प्रमेयापहारलक्षणो बाध इत्युच्यते । बाल. पृ. १३१. * प्रमाणतदाभास–नित्यनैमित्तिक–क्रत्वर्थपुरुषार्थ– पौर्वापर्य– प्राकृतवैकृत– सामान्यविशेष–निष्प्रयोजनसप्रयोजन–अल्पभूयस्त्व–सावकाशानवकाश – अङ्गप्रधान-तद्धर्मबाधेषु प्राप्तबाधः । वा. ३।३।७।१४ पृ. ८६१. * यत्र प्रापकप्रमाणं क्लृप्तं तत्र प्राप्तबाधः, यथा सामान्यशास्त्रस्य विशेषशास्त्रेण । प्राप्तबाधत्वं नाम क्लृप्तस्य बोधकस्य विशेषविषयताप्रतिबन्धकत्वम् । कौ. ३।३।७।१४ पृ. ३६८.

* **प्राप्तबाधभेदाः**, नित्याः २८+ वैकल्पिकाः ४८ =७६ । यदा तु नित्यबाधभेदाः जातिद्रव्यगुणक्रियाविषयत्वेन भिन्ना निरूप्यन्ते तदा ते ११२ भवन्ति इति नित्याः ११२+वैकल्पिकाः ४८ = १६० इति प्राप्तबाधभेदा भवन्ति । बाल. पृ. १३४.

* **प्राप्त्यां अधिकरणे** प्रयोजनं न वक्तव्यम् । उत्तरविवक्षा तत्र प्रयोजनम् । भा. २।१।७।३२.

* **प्राप्तिपूर्वकं** हि दर्शनं भवति । भा. १२।४।१४।४१, * प्राप्तिपूर्वकः प्रतिषेधो भवति । १०।८।१०।२२.

* प्राप्तिरूपं वैदिकं कर्म यथा, पयो दोग्धि। दोहनं दुग्धप्राप्त्यर्थम्। बाल. पृ. ८४.

* प्राप्यं ईप्सितं कर्म। सतः अप्राप्तस्य प्रापणं प्राप्तिः। यथा 'पयो दोग्धि'। मणि. पृ.१२९.

* प्राबल्यं पदार्थस्य पदार्थधर्मापेक्षया। वि. १।३।४. * प्राबल्यं पूर्वपूर्वस्य श्रुतिलिङ्गादीनाम्। ३।३।७।१४. * प्राबल्यं श्रुतेः स्मृतिभ्यः। वि. १।३।२.

* प्राभाकराः अनीश्वरवादिनः। कु. १।२।१।१८ पृ. २६. * प्राभाकरैः वृत्तिकारान्तरैश्च 'आम्नायस्य क्रियार्थत्वात्' (१।२।१।१) इति सूत्रं सकलवेदाप्रामाण्यपरतया व्याख्यातम्। तन्न युक्तम्। सु. पृ. ६.

* प्राभाकरवत् अस्माभिः द्रव्यहानेरङ्गहानेश्च प्रतिसमाधानमनपेक्ष्य नानुष्ठानमिष्यते। सोम. ६।१।९. * प्राभाकरवत् कार्य–नियोगापरपर्यायस्वतन्त्रापूर्वाभ्युपगमे परोक्ता दोषाः स्युः, नास्मदभिमतशक्तिरूपाभ्युपगमे। सु. पृ. ५९८.

* प्रामाण्यं अकार्यबोधकवाक्यानाम्। १।२।१। १–१८. * प्रामाण्यं अप्रामाण्यं च ज्ञानस्य उभयं स्वतः इति सांख्याः, उभयं परतः इति तार्किकाः। अप्रामाण्यं स्वतः प्रामाण्यं तु परतः इति बौद्धाः। प्रामाण्यं स्वतः अप्रामाण्यं तु परतः इति मीमांसकाः। वैद्यनाथ. १।१। २।२ पृ. १४. * प्रामाण्यं अर्थतथात्वरूपविषयधर्मः, यन्निमित्तौ ज्ञाने प्रमाण–बुद्धिव्यपदेशौ भवतः। तच्च स्वतो गृह्यते ज्ञानेनैव विषयीक्रियते घटादीव। बाल. पृ. ६. * प्रामाण्यं आचमनादिस्मृतीनाम्। १।३।३। ५–७. * प्रामाण्यम्। तार्किकास्तु प्रमाकरणं प्रमाणम्। प्रमात्वं च यथार्थानुभवत्वम्। याथार्थ्यं च तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वम्। अनुभवत्वं तु 'अनुभवामि' इतिप्रतीतिसिद्धः साक्षात्कारानुमित्युपमितिशाब्दबोधसाधारणः स्मृतिव्यावृत्तो जातिविशेषः। न तु अगृहीतग्राहित्वं धारावाहिके अव्याप्तेः इत्याहुः। तदेतदयुक्तम्। 'अनुभवामि' इतिप्रतीतिसिद्धानुभवत्वस्य साक्षात्कारे एव सत्त्वेन अनुमित्यादौ अव्याप्तेः। 'स्वर्गमनुभवामि' 'पर्वते वह्निमनुभवामि' इति प्रतीत्यभावेन अनुमित्यादौ तत्सत्त्वे मानाभावात्। तस्मात् अनधिगतार्थगन्तृत्वमेव अनुभवत्वम्। न च धारावाहिके अव्याप्तिः, तत्तत्क्षणविशिष्टघटादेः पूर्वपूर्वज्ञानागृहीतस्यैव उत्तरोत्तरज्ञानविषयत्वात्, 'इदानीं स्पृशामि' 'इदानीं पश्यामि' इत्यादिप्रतीत्या कालस्यापि षडिन्द्रियवेद्यत्वात्, कालान्यद्रव्यचाक्षुषत्वस्यैव रूपकार्यतावच्छेदकत्वात्, अनुभवानुसारेण कार्यकारणभावकल्पनात् अन्यथा लाघवात् चाक्षुषत्वस्यैव कार्यतावच्छेदकत्वापत्तेः।

न च कालः अतिसूक्ष्मत्वात् कथं प्रत्यक्षग्राह्य इति वाच्यम्। ज्ञानधारायामुपरतायां 'किमत्र घटोऽवस्थितः' इति पृष्टः सन् कथयति 'अस्मिन् क्षणे मयोपलब्धः' इति 'प्रातरारभ्य एतावन्तं कालं मयोपलब्धः' इति च। कालभेदे तु अगृहीते कथमेवं भवेत्। 'शतपत्रपत्रशतं मया सूच्या युगपद् भिन्नम्' इति तु स्थूलकालविषयकम्।

वस्तुतस्तु धारावाहिकस्थले तावत्कालव्यापिनी एकैव ज्ञानव्यक्तिः, कारणभेदाभावात्, तद्भेदकल्पने मानाभावात्, योग्यविभुविशेषगुणानां त्रिक्षणावस्थायित्वस्य परिभाषामात्रत्वात्।

वस्तुतस्तु स्वसमानविषयकज्ञानानपेक्षोत्पत्तिकज्ञानत्वमेव अनधिगतार्थगन्तृत्वम्। अतः कालभेदस्य इन्द्रियवेद्यत्वाभावेऽपि न क्षतिः। दिनान्तरे गृहीतस्य घटादेः दिनान्तरे पुनर्ज्ञानमपि प्रमैव। याथार्थ्यमपि प्रमाणलक्षणे देयम्। तच्च तद्वति तत्प्रकारकत्वम्, विशेष्यावृत्त्यप्रकारकत्वं वा। अनुमितेरपि वह्निविशिष्टः पर्वतो विषयः इति अनधिगतार्थगन्तृत्वम्। न च पर्वतस्य अनुमितिविषयत्वे 'पर्वतमनुमिनोमि' इत्यनुव्यवसायापत्तिः, विधेयताख्यविषयताशालिन एव 'अनुमिनोमि' इत्यनुव्यवसायभाननियमात्। एवं उपमितावपि अनधिगतार्थगन्तृत्वं बोध्यम्। लौकिकशब्दजन्यज्ञानं तु न प्रमा, अनधिगतार्थगन्तृत्वाभावात्। न च लौकिकशब्दः प्रमाणम्, उक्तप्रमाकरणत्वाभावात्। लौकिके शब्दे तज्जन्यज्ञाने च प्रामाण्यव्यवहारस्तु तद्वति तत्प्रकारकत्वांशमादाय गौणः। आप्तत्वं च अत्रैवोपयुज्यते। वेदस्तु प्रमाणम्, तस्य उक्तलक्षणाक्रान्तत्वात्। 'व्रीहिभिर्यजेत' इत्यादिवाक्येषु यागादिपदार्थविषये अप्रामाण्य-

मिष्टमेव । तदुक्तम् 'ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले । देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ॥' इति ( वा. १।३।८।२४ पृ. २७३ ) । ( अत्र श्लोके सुधा– यथा ब्राह्मणशब्दे ब्रह्मशब्दार्थो नञर्थश्च णकारार्थ एव वा ज्ञानाख्यः अनिरुपाख्यश्च नास्ति, कम्बलशब्दे च कंशब्दार्थः बलशब्दार्थो वा नास्ति, तथा देवदत्तादयः शब्दाः वाक्ये अनर्थकाः स्युः इति टीकाकारश्लोकार्थः । पृ. ३०४ ) ।

प्रामाण्यं च स्वतः । अप्रामाण्यं तु परतः । स्वतस्त्वं च कारणगुणसंवाद्यर्थक्रियाज्ञानानधीनत्वम् । परतस्त्वं तु बाधकज्ञानकारणदोषविसंवादज्ञानाधीनत्वम् । याथार्थ्यघटितप्रामाण्यस्य स्वतस्त्वम्, अयाथार्थ्यरूपाप्रामाण्यस्य च परतस्त्वं ज्ञानग्राह्यत्वं कारणदोषादिज्ञानग्राह्यत्वं च क्रमेण बोध्यम् । कु. १।१।५।५ पृ. ६–७. * प्रामाण्यं नास्ति 'औदुम्बरी सर्वा वेष्टयितव्या' इत्यादिस्मृतेः । वि. १।३।२. * प्रामाण्यं नास्ति प्रत्यक्षादेर्धर्मे । १।१।४।४. * प्रामाण्यं नास्ति बाह्यग्रन्थानाम् । वा. १।३।२।४ पृ. १९४. * प्रामाण्यं नास्ति वेदाविरुद्धस्यापि शाक्यवचनस्य । भाट्ट. १।३।३ वर्णकं २. * प्रामाण्यं नास्ति श्रुतिविरुद्धायाः स्मृतेः । १।३।२।३–४. * प्रामाण्यं नास्ति स्वतः कल्पसूत्राणाम् । १।३।६।११–१४. * प्रामाण्यं परत उत्पद्यते ( गुणतः ) एवं ज्ञानान्तरेण गृह्यते च । अर्थक्रियादिज्ञानेषु तु अगत्या स्वतःप्रामाण्यग्रहाङ्गीकारः । इति नैयायिकाः । मणि. पृ. १४, * प्रामाण्यं प्रमाकरणत्वम् । पृ. ११. * प्रामाण्यं म्लेच्छप्रसिद्धशब्दार्थस्य आर्यप्रसिद्ध्यविरोधे । १।३।५. * प्रामाण्यं यागनामतया उद्भिद्–बलभिद्– विश्वजित्–आदीनाम् । १।४।१।१. * प्रामाण्यं वाक्यार्थस्य पदार्थमूलतया । भा. १।१।७।२४–२६. * प्रामाण्यं सदाचाराणां वसन्तोत्सवादीनाम् । वा. १।३।३।७ पृ. २०३. * प्रामाण्यं स्मृतीनाम् । १।३।१।१–२. * प्रामाण्यं स्वतः अप्रामाण्यं तु परतः । स्वतस्त्वं च कारणगुणसंवाद्यर्थक्रियाज्ञानानधीनत्वम् । परतस्त्वं तु बाधकज्ञानकारणदोषविसंवादज्ञानाधीनत्वम् । कु. १।१।५।५. * प्रामाण्यं स्वतः विधेः, अबोधकत्वसापेक्षत्वयोरप्रामाण्यकारणयोरभावात् । वि. १।१।५. * 'परिच्छेदफलत्वाद्धि प्रामाण्यमुपजायते ।' श्लोवा. शब्दपरिच्छेदः १०४. * प्रामाण्यस्य स्वतस्त्वं कारणगुणसंवादार्थक्रियाज्ञानानधीनत्वम् । बाल. पृ. ५–६.

* प्रामाण्याभावः ( अननुष्ठानलक्षणः ) श्रुतिविरुद्धस्मृतीनाम् । भा. १।३।२।३–४.

* प्रामाण्यपरीक्षा धर्मे प्रमाणानाम् । भा. १।१।३।३.

* प्रामाण्यवादः । ज्ञानप्रामाण्यं ज्ञानहेतुभिन्नहेतुजन्यं ज्ञानग्राहकभिन्नज्ञानग्राह्यं च, उत्तरज्ञानसामग्रीजन्यं ज्ञानग्राहकसामग्रीग्राह्यं वेति चिन्त्यते ।

अत्र नैयायिकाः । 'प्रमात्वं ज्ञानसामान्यकारणभिन्नकारणजन्यतावच्छेदकं ज्ञानवृत्त्यनित्यधर्मत्वात् अप्रमात्ववत्' इत्यनुमानेन प्रमात्वस्य इन्द्रियादिगतगुणजन्यत्वं सिध्यति । दोषाभावस्य कारणत्वे गौरवात्, 'पीतः शङ्खः' इति शङ्खप्रमानुत्पत्तिप्रसङ्गाच्च । अन्वयव्यतिरेकाभ्यां तद्धेतुकत्वसिद्धेश्च । एवं च प्रमायां गुणः भ्रमे च दोषः कारणम् ।

किञ्च रङ्गादपि रजतज्ञानोत्पत्तिदर्शनात् न ज्ञानमात्रस्य तत्प्रकारकत्वावच्छिन्नतद्वद्विशेष्यकत्वनियमः । अतस्तत्र भिन्ना सामग्री वाच्या । ज्ञानसामान्यकारणजन्यत्वे जन्यज्ञानमात्रस्य प्रमात्वप्रसङ्गः । तेन प्रामाण्यं अप्रामाण्यं च परत उत्पद्यते । एवं ज्ञानान्तरेण गृह्यते । तच्च 'इदं ज्ञानं प्रमा, गुणवत्कारणजन्यत्वात्, अर्थक्रियासंवादात्, बाधाभावात्' इत्याद्यनुमानम् । संवादत्वं च तद्विषयविषयकत्वम् । न चैवं वेदवाक्यजन्ययागस्वर्गसाध्यसाधनभावज्ञाने अर्थक्रियासंवादाभावात् न कदाऽपि प्रामाण्यनिश्चयः स्यादिति वाच्यम् । तेषां ईश्वरवाक्यजन्यतया गुणवत्कारणजन्यत्वेन तदनुमानात् । न च अर्थक्रियादिज्ञानेषु कथं प्रामाण्यनिश्चयः इति वाच्यम् । अगत्या तत्र स्वतःप्रामाण्यग्रहाङ्गीकारात् । तस्मात् परतः प्रामाण्यं निश्चीयते इत्याहुः ।

सिद्धान्तस्तु–– अनन्तगुणानां हेतुत्वमपेक्ष्य ज्ञानसामान्यसामग्रीजन्यत्वस्यैव उचितत्वात् दोषवदिन्द्रियजन्यस्यापि धर्म्यंशे प्रमात्वाच्च ।

एतेन गुणज्ञानज्ञाप्यत्वं दोषाभावज्ञानज्ञाप्यत्वं चापास्तम् । अनेकदोषाभावानां अननुगतत्वेन गौरवात् ।

अतो न ज्ञानोत्पत्तेः परतस्त्वम् । नापि ज्ञप्तेः परतस्त्वं संभवति । तथाहि, नोदकाहरणरूपार्थक्रियाज्ञानेन अर्थनिश्चयद्वारा पूर्वज्ञाने प्रामाण्यनिश्चयः । तस्यापि स्वप्नावस्थायां अर्थव्यभिचारेण तेन अर्थनिश्चयासंभवात् । नापि तज्जन्यसुखोत्पत्त्या, अयथार्थादपि स्वप्ने चन्दनलेपादिज्ञानात् सुखोत्पत्तेः तस्यापि अर्थव्यभिचारात् ।

किञ्च, उदकाहरणादिरूपार्थक्रियया व्याप्यविधया घटनिश्चयः । व्याप्तिश्च संबन्धरूपा इति नागृहीते संबन्धिनि ग्रहीतुं शक्यते । तत्र संबन्धिघटज्ञाने स्वत एव प्रामाण्यनिश्चयो वाच्यः । एवं गुणज्ञानसंवादज्ञानयोरपि । न च एताभ्यां विषयो निश्चेतुं शक्यते । न च तत्रापि ज्ञानान्तरेण प्रामाण्यनिश्चयः, अनवस्थापत्तेः ।

एवं च स्वत एव अर्थतथात्वनिश्चयो वाच्यः । एवं तर्हि घटादिज्ञानेऽपि स्वत एव प्रामाण्यम्, तस्यापराधाभावात् । तेन ज्ञानग्राहकेणैव तस्य ज्ञानं इति सिद्धं प्रामाण्यज्ञप्तेः स्वतस्त्वम् ।

किञ्च, ज्ञानं न प्रत्यक्षम् । तस्य प्रत्यक्षत्वे निर्विकल्पकप्रत्यक्षवारणाय–निष्प्रकारकत्व–निर्विशेष्यकत्व-निःसंसर्गकत्वानां विनिगमकाभावेन त्रयाणामपि प्रतिबन्धकत्वकल्पने गौरवात् । न च विशिष्टवैशिष्ट्यप्रत्यक्षे विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुतया तदभावात् न निर्विकल्पकप्रत्यक्षतापत्तिः इति वाच्यम् । 'विशेष्ये विशेषणं' इति रीत्या 'एकत्रोभयं' इति रीत्या वा तादृशप्रत्यक्षे विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुत्वाभावेन तद्रीत्या निर्विकल्पकप्रत्यक्षापत्तेर्दुर्वारत्वात् ।

एवं च आवश्यकप्रतिबध्यप्रतिबन्धकभावकल्पनमपेक्ष्य आत्मनिष्ठगुणप्रत्यक्षे तादात्म्येन ज्ञानस्यैव धर्माधर्मभावनानामिव ज्ञानभावनादृष्टसाधारणवैजात्यकल्पनया तज्जात्यवच्छेदेनैव वा प्रतिबन्धकत्वकल्पनमुचितम् । 'जानामि' इत्याद्यनुभवानामपि 'अनुभवामि' इत्युपनीतभानत्वम् ।

एवं च विषयनिष्ठज्ञाततया तन्निष्ठमेव ज्ञानं अनुमीयते 'घटो ज्ञानवान्, ज्ञाततावत्त्वात्' इति । तत्र घटत्वनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन ज्ञानानुमितौ तादृशप्रकारतानिरूपितविशेष्यतारूपप्रामाण्यग्रहः । न च ज्ञाततायाः प्रमात्वाव्याप्यतया तदनुमापकत्वासंभव इति वाच्यम् । प्रमात्वस्यानुमेयत्वात् । ज्ञानानुमाने समानसंवित्संवेद्यतया ज्ञानत्ववत् प्रमात्वस्य स्वतस्त्वसंभवात् ।

न च ज्ञाततायाः मानाभावः । तस्याः विषयज्ञानातिरिक्तायाः आवश्यकत्वात् । तथाहि । न तावत् विषयता ज्ञानस्वरूपा, घटप्रकारकभूतलविशेष्यकज्ञानात् भूतलप्रकारकघटविशेष्यकानुव्यवसायापत्तेः । नापि विषयस्वरूपा, विशिष्टज्ञानसमूहालम्बनयोः अवैलक्षण्यापत्तेः । अत उभयातिरिक्ता । सा च नित्या, लाघवात् । अन्यथा अनन्ततत्तद्विषयकज्ञानैः अनन्ततत्तद्विषयतोत्पत्तितन्नाशकल्पनात् गौरवापत्तेः । एवं च नष्टयुधिष्ठिरादिविषयकज्ञानोत्पत्तिरपि सुलभेति युक्तम् ।

अन्ये तु आत्मघटयोः व्याप्यतालक्षणः संबन्धो मानसप्रत्यक्षः स विषयता इत्याहुः । तेषां भावं नाकलयामः ।

अन्ये तु तत्तज्ज्ञानजन्या तत्तद्विषयनिष्ठा ज्ञातता । सा च नष्टभाविविषयनिष्ठाऽपि ।

न च असतः कथं कार्योत्पत्तिरिति वाच्यम् । द्वित्वादिवत् उत्पत्तौ बाधकाभावात् । न च तत्र नष्टद्वित्वस्य स्मरणमिति वाच्यम् । अननुभूतद्वित्वस्य स्मरणासंभवात् । न च यावदाश्रयप्रत्यक्षं विना कथं द्वित्वप्रत्यक्षमिति वाच्यम् । लाघवेन संयोगप्रत्यक्षे तस्य हेतुत्वाङ्गीकारेण व्यासज्यवृत्तिधर्मप्रत्यक्षे तस्य हेतुत्वाभावेन तत्प्रत्यक्षस्य सुवचत्वात् । न चाश्रयप्रत्यक्षं विना कथं तन्निष्ठगुणप्रत्यक्षं इति वाच्यम् । वायुप्रत्यक्षत्वाभावेऽपि तन्निष्ठस्पर्शप्रत्यक्षस्य त्वयैव ( नैयायिकेन ) अङ्गीकारात् । अतो द्वित्वबहुत्वयोर्भाविभूतपदार्थनिष्ठत्ववत् तत्तज्ज्ञानोत्पाद्यविषयताया अपि भाविभूतपदार्थनिष्ठत्वम् । न च द्वित्वादेः गुणस्य समवायिकारणाभावेन भाविभूतयोः कथमुत्पत्तिरिति वाच्यम् । समवायसंबन्धेन भावकार्योत्पत्तौ तादात्म्यसंबन्धेन द्रव्यस्य जनकता इति समवायिकारणकार्यकारण-

भावस्य वक्तव्यत्वेन संख्यायाः पदार्थान्तरत्वेन विषयतावत् समवायेन उत्पत्त्यभावेन समवायिकारणानावश्यकत्वात्। संख्याया विषयतायाश्च 'अभावं जानामि' 'अभावौ द्वौ' 'चतुर्विंशतिर्गुणाः' इति प्रतीत्या अभावगुणादिनिष्ठतया स्वरूपसंबन्धेनैव उत्पत्त्यङ्गीकारेण समवायिकारणानावश्यकत्वात्। न च द्वित्वादीनामाकस्मिकत्वप्रसङ्गः। अपेक्षाबुद्धेरेव जनकतया नियामकत्वात्। अपेक्षाबुद्धेरमिव्यञ्जकत्वे तु नित्यतया न तदापत्तिप्रसङ्गोऽपि। न च कार्यसमवेतगुणत्वेन अनित्यत्वानुमानात् कथं नित्यत्वमिति वाच्यम्। एकत्वेनाङ्गीकृतासु अरुणादिव्यक्तिषु व्यभिचारात्, अनुकूलतर्काभावेन अप्रयोजकत्वाच्च। न चाश्रयाभावे विषयताद्वित्वादेः क्वावस्थानमिति वाच्यम्। कपालादिनाशे क्षणमात्रं घटादेरिव विषयताया अपि सत्त्वे बाधकाभावात्, अतो नष्टघटादावपि 'घटो ज्ञातः' इत्याद्यनुभवात् भूतभाविनिष्ठत्वं इति दिक्। अत एव ज्ञानजन्यज्ञाततावत्त्वात् 'घटं जानामि' इति कर्मत्वोपपत्तिः।

तस्मादतिरिक्ता विषयता। किञ्च ज्ञानेच्छाकृतिसंस्काराणां समानविषयकत्वेनैव कार्यकारणभावे लाघवादपि विषयता अतिरिक्ता। सैव च ज्ञातता। तयैव ज्ञानं गृह्यते, तन्निष्ठप्रमात्वमपि इति स्वतस्त्वम्।

ननु एवं 'इदं ज्ञानं प्रमा न वा' इति संदेहो न स्यात्, ज्ञानाग्रहे धर्मिज्ञानाभावात् तद्-ग्रहे तन्निष्ठप्रमात्वस्यापि ग्रहात्; इति चेन्न। नायं ज्ञानविशिष्टप्रमात्वसंशयः किन्तु विषयसंशय एवायम्। 'पुरोवर्तिनि रजतत्वमस्ति न वा' इति रजतादिज्ञानोत्तरं प्रमात्वस्मरणे रजतादिज्ञाननाशात् तत्संशयोपपत्तेः। यद्वा धर्मिज्ञानाभावेऽपि धर्मीन्द्रियसंनिकर्षमात्रेण संशयोत्पत्तिः। यद्वा सत्यपि प्रामाण्यज्ञाने दोषवशादेव तदुत्पत्तिः। दोषश्च अनभ्यासदशानापन्न(दशापन्न)त्वं इति। तस्मात् युक्तं ज्ञप्तिप्रामाण्यस्य स्वतस्त्वमिति।

गुरवस्तु घटादिमात्रविषयकं न ज्ञानम्, सर्वज्ञानानां त्रिपुटीविषयकत्वाङ्गीकारात्। त्रिपुटी च ज्ञानात्मविषयरूपा। तेन सर्वज्ञानं 'घटं जानामि' इत्याद्यनुव्यवसायाकारमिति। स्वेनैव स्वस्य घटादिविषयकत्वग्रहणात् ततः प्रामाण्यं इत्याहुः।

मुरारिमिश्रास्तु घटादिज्ञानोत्तरं 'घटं जानामि' इत्याद्यनुव्यवसायो जायते, तेन घटत्ववद्विशेष्यकत्वघटत्वप्रकारकत्वरूपप्रामाण्यग्रहः इत्याहुः।

वस्तुतो जलादिज्ञानोत्तरं प्रवृत्त्या जलादिनिश्चयोत्तरं पूर्वज्ञाने प्रामाण्यं जानाति इति कश्चित्।

कश्चित्तु (स्वमतं) ज्ञात्वा प्रामाण्यं प्रवर्तते इत्यनुभवात् 'जातं ज्ञानं प्रमा न वा' इत्यादिसंशयानुभवात् न ज्ञानमात्रे स्वतःप्रामाण्यनिश्चयो युक्तः। नापि परतःप्रामाण्यं क्वचित् सिद्धान्तभङ्गापादकम्। किन्तु कुत्रचित् स्वतःप्रामाण्यग्रहः, क्वचित् परतः इत्यननुगत एव प्रामाण्यग्रहः शक्तिग्रहवत्। तेन वेदजन्यज्ञाने संशयाभावात् स्वतःप्रामाण्यं तद्भिन्नज्ञाने तु परतःप्रामाण्यं ज्ञायते। अत एव स्मृतिजन्यज्ञाने सन्मूलकत्वगुणज्ञानादेव प्रामाण्यं सिद्धान्तेऽपि अङ्गीकृतं इति युक्तमुत्पश्यामः। **मणि.** पृ. १३–१८.

* **प्रामाण्यवादः**। सर्वज्ञानानि अधिकृत्य चिन्त्यते किं प्रामाण्यमप्रामाण्यं च उभयं स्वत एवावगम्यते, अथवा अन्यतरदपि स्वभावेन अनिरूपितं कारणगुणदोषप्रत्ययाभ्यामवगम्यते, आहोस्वित् अप्रामाण्यं स्वतोऽवगम्यते प्रामाण्यं तु कारणगुणज्ञानात् संवादज्ञानात् अर्थक्रियाज्ञानाद्वा अवधार्यते, उत प्रामाण्यं स्वतः प्राप्तं सत् अर्थान्यथात्वकारणदोषज्ञानाभ्यां अवगम्यमानेन अप्रामाण्येन अपोद्यते इति।

तत्र सर्वकारणानां स्वकार्यशक्तेः स्वाभाविकत्वात् उभयमपि ज्ञानस्य स्वरसादेवावगम्यते इति केचित्। (एतच्च सत्कार्यवादिमतम्। तन्मते हि सर्वमेव कार्यजातं सत् उत्पद्यते, इति प्रामाण्याप्रामाण्यात्मकमपि स्वत एवेति) तदयुक्तम्। नहि ज्ञानं स्वविषयस्य तथात्वं अतथात्वं च युगपत् शक्नोति वेदयितुं विरोधात्। अथ काऽपि ज्ञानव्यक्तिः स्वप्रामाण्यं स्वतो बोधयति, काऽपि अप्रामाण्यं इत्युच्यते, तथापि न युक्तम्। कारणान्तरनिरपेक्षस्य ज्ञानस्यैव उपलम्भहेतुत्वे किं क्व ज्ञाने भवति इति न शक्यं विवेक्तुम्। अतो द्वयमपि स्वस्वभावेन अनिरूपितं कारणगुणदोषज्ञानाभ्यां

अवगम्यते, इत्यपरे (नैयायिकाः)। तदपि अपेशलम्। एवं हि गुणदोषावधारणात् प्राक् अन्यतरेणापि आकारेण अर्थे अनवगमयत् विज्ञानं निःस्वभावं स्यात्। तस्मात् अप्रामाण्यं स्वतः, प्रामाण्यं तु संवादज्ञानादिभिः इत्येतदेव युक्तम् (इति सौगताः)। तथाहि। न ज्ञानमुत्पन्नं इत्येतावता अर्थतथात्वावधारणं युक्तम्, व्यभिचारात् अनिश्चयाच्च। अप्रामाण्यमेव तस्यां वेलायां प्राप्तम्। पश्चात् कारणगुणज्ञानात् संवादज्ञानात् अर्थक्रियाज्ञानाद्वा प्रामाण्यावगमात् अपोद्यते। शब्दे च आप्तप्रणीतत्वं गुणः। न च वेदे तदस्ति, अपौरुषेयत्वाभ्युपगमात्। 'वनस्पतयः सत्रमासत' 'शृणोत ग्रावाणः' इत्येवमादीनां उन्मत्तप्रलपितकल्पत्वात् अप्रत्ययिततरप्रणीतत्वात् अप्रामाण्यमेव वेदानाम्। इति प्राप्ते, अभिधीयते। '**परापेक्षं प्रमाणत्वं नात्मानं लभते क्वचित्। मूलोच्छेदकरं पक्षं को हि नामाध्यवस्यति॥**' यदि हि सर्वमेव ज्ञानं स्वविषयतथात्वावधारणे स्वयमसमर्थं विज्ञानान्तरमपेक्षेत, ततः कारणगुण– संवाद– अर्थक्रियाज्ञानान्यपि स्वविषयभूतगुणाद्यवधारणे परमपेक्षेरन्, अपरमपि तथा, इति न कश्चिदर्थो जन्मसहस्रेणापि अध्यवसीयेत इति प्रामाण्यमेव उत्सीदेत्। अथ अर्थक्रियाज्ञानं स्वतःप्रमाणमिति चेत्, को विशेषः? अव्यभिचार इति चेत्, न, स्वप्नावस्थायां असत्यपि उदकाहरणे अर्थक्रियाविज्ञानदर्शनात्। अथ सुखज्ञानमेव अर्थक्रिया, तच्च अव्यभिचारि एव। नहि क्वचिदपि असति सुखे सुखज्ञानमस्ति। सत्यमेतत्, न तु तेन पूर्वज्ञानस्य प्रामाण्याध्यवसानं संभवति, अप्रमाणेनापि प्रियासंगमविज्ञानेन स्वप्नावस्थायां सुखदर्शनात्। तस्मात् स्वतःप्रामाण्यं प्राप्तं अर्थान्यथात्वकारणदोषज्ञानाभ्यां अपोद्यते इत्यवश्यं अङ्गीकरणीयम्। एवं च शब्देन आप्तपुरुषसंस्पर्शकृतत्वात् दोषाणां अपौरुषेये वेदे तदभावात् साक्षाच्च अर्थान्यथात्वज्ञानाभावात् अनपोदितं प्रामाण्यं भवति। पौरुषेयवचनानि तु पुरुषबुद्धिप्रभवत्वात् भ्रान्त्या विप्रलिप्सया वा प्रयुक्तानि मूलदोषेण दुष्टत्वात् अयथार्थानि भवन्ति इति वैषम्यम्। अनाप्तवचसां सत्येव अप्रामाण्ये वक्तृदोषाधीनत्वात् वेदे च तदभावात् प्रामाण्यं वक्तव्यम्। शा. तर्कपादे पृ. २०–२३.

* **प्रामाण्यवादार्थः।** '**विज्ञानस्य प्रमाणत्वं स्वतो निर्णीयते यथा। परतश्चाप्रमाणत्वं तथा न्यायोऽभिधीयते ॥१॥**' स्वतः सर्वप्रमाणानामित्यारभ्य स्वतःप्रामाण्यं परतश्चाप्रामाण्यमाचार्यैर्निबद्धम्। तत्र व्याख्यातारो विवदन्ते— स्वशब्दः किमात्मवचन आत्मीयवचनो वा, तथा प्रामाण्यं किं स्वतो भवति किं वा भाति, तथा प्रामाण्यं नाम किं अर्थतथात्वं किं वा तथाभूतार्थनिश्चायकत्वमिति। तत्र च '**आत्मवाची स्वशब्दोऽयं स्वतो भाति प्रमाणता। अर्थस्य च तथाभावः प्रामाण्यमभिधीयते ॥२॥**' तत्र केचित्तावदाहुः प्रामाण्यं नाम अर्थाव्यभिचारित्वं तथाभूतार्थविषयत्वमिति यावत्। तच्च ज्ञानानां स्वत एव जायते। स्वशब्दोऽयमात्मीयवचनः स्वीयादेव कारणात् तथाभूतार्थविषयत्वं ज्ञानस्य जायते, न गुणात्। अप्रामाण्यं तु अयथार्थविषयत्वलक्षणं न स्वीयादेव कारणाज्जायते, अपि तर्हि तद्गताद्दोषादिति परत इत्युच्यते; यदि हि सत्यार्थविषयता गुणनिमित्ता स्यात् स्वकारणदोषात् त्वसत्यविषयतैव, तथा सति दोषयुक्तात् गुणहीनादिन्द्रियादेः पीतशङ्खादिज्ञानेषु न किञ्चित् सत्यं गम्येत। गम्यते तु तत्रापि शङ्खस्वरूपादिकं सत्यम्। दोषाधीने त्वस्यायथार्थत्वे स्वकारणाधीने सत्यविषयत्वे सत्युभाभ्यां मिलिताभ्यां जायमानं सत्यासत्यार्थविषयकं भवतीत्युपपन्नम्। तस्मात् स्वीयात्कारणात् यथार्थत्वलक्षणं प्रामाण्यं जायते, न तु भाति। न हि ज्ञानमात्मानमात्मीयं वा प्रामाण्यमवगमयति, अर्थप्रकाशमात्रोपक्षीणत्वात्। परतस्तु कारणदोषादयथार्थत्वलक्षणमप्रामाण्यमिति दोषाभावाद्वेदस्य यथार्थत्वमिति। अस्मिंस्तु पक्षे 'जातेऽपि यदि विज्ञाने' (श्लोवा. चोदनासूत्रम् ४९) इत्यादिना अनवस्थाप्रसङ्गेन परतःप्रामाण्यदूषणं न घटते। गुणज्ञानाधीने हि प्रामाण्ये स्यादनवस्था। गुणस्वरूपायत्ते तु अनवगता एव गुणा इन्द्रियवत् ज्ञानप्रामाण्यं जनयन्ति इति न अनवस्थापत्तिः। तथा 'दोषाभावो गुणेभ्यश्चेन्ननु सैवास्थितिर्भवेत्'

( श्लोवा. चोदनासूत्रम् ६६ ) इति चोदयित्वा 'तदा न व्याप्रियन्ते हि ज्ञायमानतया गुणाः ' ( श्लोवा. चोदनासूत्रम् ६७ ) इति परिहरन् परपक्षे गुणज्ञानादेव प्रामाण्यम्, न गुणस्वरूपात् इति दर्शयति । तथा 'तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता । अर्थान्यथात्वहेतूत्थदोषज्ञानैरपोद्यते ॥' ( श्लोवा. चोदनासूत्रम् ५३ ) इति वदन् सिद्धान्ते दोषज्ञानादेव अप्रामाण्यम्, न दोषस्वरूपात् इति व्यक्तमेव आह । तथा 'अपरे कारणोत्पन्नगुणदोषावधारणात् ' (श्लोवा. चोदनासूत्रम् ३४) इत्यादयो बहवः श्लोका अस्मिन् पक्षे न संगच्छन्ते । अतो न वार्तिककाराभिमतोऽयं पक्षः । अन्ये त्वाहुः । अनधिगततथाभूतार्थनिश्चायकत्वं प्रामाण्यम् । तच्च ज्ञानानां स्वतः एव जायते । स्वशब्दश्चायमात्मवचनः । ज्ञानस्वरूपादेव तथाभूतार्थनिश्चयो जायते न गुणज्ञानात्, संवादज्ञानात्, अर्थक्रियाज्ञानाद्वा, अनवस्थाप्रसङ्गात् । अर्थान्यथात्वनिश्चयस्तु परतो दोषज्ञानात् अर्थान्यथात्वज्ञानाद्वेति परत इत्युच्यते इति । अस्मिन्नपि पक्षे स्वतः प्रामाण्यं जायते, न तु ज्ञायते । अत्रेदं वक्तव्यम्— यदि प्रामाण्यस्य जन्मनि स्वयमेव कारणं ज्ञानम्, तथा सत्यप्रामाण्यस्यापि जन्मन्येव दोषज्ञानबाधकज्ञानयोः कारणत्वं वक्तव्यम् । तत्र कस्याप्रामाण्यं कारणदोषज्ञानाद्बाधकज्ञानाद्वा जायते ? न हि शुक्तौ रजतज्ञानस्य बाधकादिजन्यमप्रामाण्यम्, उत्पत्तावेव तस्याप्रमाणत्वात् । अतथाभूतार्थनिश्चयो ह्यप्रामाण्यम् । तच्च अप्रमाणज्ञानं स्वत एव भवतीति न तद्बाधकज्ञानादिकमपेक्षते । न ह्युत्पत्तौ प्रमाणं सत् पश्चाद्बाधकेनाप्रमाणीक्रियते, अपि तूत्पत्तावेवम्भूतमप्रामाण्यं बाधकेन ख्याप्यते, न त्वर्थस्यान्यथाभावाभावनिश्चयो बाधकेनैव जन्यते । सत्यम्, न तु तदेवाप्रामाण्यम् । नह्यर्थान्यथाभावनिश्चयः पूर्वज्ञानस्याप्रामाण्यम्, किन्तु वस्तुतोऽर्थस्यान्यथाभावः, अन्यथाभूते वा तथाभावनिश्चायकत्वम् । नैतदुभयमपि बाधकजन्यम्, स्वत एवार्थस्यान्यथाभावात्, स्वत एव चाप्रमाणज्ञानादन्यथाभूतेऽर्थे तथात्वनिश्चयात् । तथा चाप्रामाण्यमपि स्वत एवोत्पद्यते । 'तस्मात् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता । अर्थान्यथात्वहेतूत्थदोषज्ञानैरपोद्यते ॥' ( श्लोवा. चोदनासूत्रम् ५३ ) इति श्लोकोऽपि भवता इत्थं व्याख्येयः बुद्धेः स्वतो जातं प्रामाण्यं पश्चादपोद्यते इति । तच्चायुक्तम्, उत्पत्तावेवाप्रमाणत्वात् । अथ निश्चायकत्वं प्रामाण्यम्, तदभावोऽप्रामाण्यम्, तच्च बाधकेन निराक्रियते इति मतम् । तदयुक्तम् । न हि बाधकेन निश्चयस्य विनाशः क्रियते, तस्य स्वत एव विनश्वरत्वात् । तस्मादेवं वक्तव्यम् । **'बुद्धेः स्वीयं प्रमाणत्वं स्वत एवावगम्यते । परतश्चाप्रमाणत्वं दोषबाधकबोधतः ॥ ३ ॥'** नन्वत्रापि ग्रन्थविरोधो न्यायविरोधश्च स्यात् । तथाहि । न हि विज्ञानमात्मानं गृह्णाति, नतरामात्मीयं प्रामाण्यम्, अर्थग्रहणोपक्षीणत्वात् । तथा च 'ननु प्रमाणमित्येवं प्रत्यक्षादि न गृह्यते । न चेत्थमगृहीतेन व्यवहारोऽवकल्पते ॥' (श्लोवा. चोदनासूत्रम् ८२ ) इति प्रामाण्याग्रहणदोषं चोदयित्वा 'प्रमाणं ग्रहणात्पूर्वं स्वरूपेणैव संस्थितम् । निरपेक्षं स्वकार्येषु गृह्यते प्रत्ययान्तरैः ॥' (श्लोवा. चोदनासूत्रम् ८३) इति प्रमाणत्वाग्रहणमङ्गीकृत्यैव दोषप्रसङ्गं समाधत्ते, तद्विरुद्ध्यते प्रामाण्यस्यात्मना ग्रहणे । तथा 'निश्चायकवस्तुत्वात् प्रामाण्यं जन्यते गुणैः ' इति निश्चयात्मकप्रामाण्योत्पादनं तु वस्तुस्वरूपत्वात् संवादकारणगुणज्ञानकार्यत्वेन अध्यवसानमिति पूर्वपक्षे प्रामाण्यस्य जन्मन्येव गुणानां कारणत्वमिति वदन् सिद्धान्तेऽपि जन्मैव स्वत इति दर्शयति । तस्मात् स्वतो भातीत्ययमपि पक्षोऽनुपपन्न इति ।

अत्राभिधीयते । यत्तावत् उक्तम् 'न ज्ञानं आत्मानं गृह्णाति, विषयप्रकाशकत्वात् । न चात्मन्यगृह्यमाणे तत्संबन्धितया प्रामाण्यं शक्यते ग्रहीतुम्' इति । यदि वयं ज्ञानं 'अहं प्रमाणम्' इत्येवं 'मदीयं वा प्रामाण्यम्' इत्येवं गृह्णातीति वदेम तदैवमुपालभ्येमहि, न त्वेवमस्माभिरुच्यते । यत् वस्तुतो ज्ञानस्य प्रामाण्यं यद्वशात् ज्ञानं प्रमाणं भवति तत् प्रमाणबुद्धिशब्दयोर्भावकतया लब्धप्रामाण्यपदाभिधानीयकमात्मनैव ज्ञानेन गृह्यत इत्युच्यते । किं पुनस्तत् अर्थतथात्वम् ? इदमेव हि ज्ञानस्य प्रामाण्यं यदर्थस्य तथाभूतत्वम्, अतथाभूतविषयस्य ज्ञानस्याप्रामाण्यात् । इदमेव चाप्रामाण्यं यदर्थस्यान्यथात्वम् । तेन

स्वत एव ज्ञानादर्थतथात्वरूपमात्मीयं प्रामाण्यं निश्चीयते, न तु गुणज्ञानात् संवादज्ञानात् अर्थक्रियाज्ञानाद्वा तदवगन्तव्यम् । अप्रामाण्यं त्वात्मीयमर्थान्यथात्वरूपं स्वतो नावगम्यते, न तु ( ? किन्तु ) कारणदोषज्ञानात् साक्षादेव वा नैतदेवमिति ज्ञानादवगम्यते इत्येतदत्र प्रतिपाद्यते । आह च । ' मिथ्यैतत्सर्वविज्ञानमिति नाज्ञायि तेन हि । प्रमाणवद्धि तेनार्थस्तथैवेत्यवधारितः । अन्यथात्वं कुतस्तस्य सिद्धे ज्ञानान्तरादृते ॥ ' इति । तथा ' अप्रमाणं पुनः स्वार्थे प्रमाणमिव हि स्वतः । मिथ्यात्वं तस्य गृह्णीत न प्रमाणान्तरादृते ॥ न ह्यर्थस्यातथाभावः पूर्वेणोक्तस्तथात्ववत् । तथात्वे ह्युपलब्धत्वान्निष्फला स्यात् पुनः प्रमा ॥ अन्यथात्वे त्वसिद्धत्वात् सावकाशा प्रमान्तरम् ॥ ' इति । तथा विचारोपक्रमे ' प्रमाणत्वाप्रमाणत्वे ज्ञानस्य स्वत एव किम् । अथवैकमपि स्पष्टं स्वभावेनानिरूपितम् ॥ पराश्रयादसंदिग्धमेकं पक्षं प्रपद्यते ॥ ' इति वदन् प्रमाणत्वाप्रमाणत्वनिरूपणमेव हि स्वतः परतो वेति चिन्त्यते इति स्पष्टमेवाह । यत् तु ' ननु प्रमाणमित्येवं प्रत्यक्षादि न गृह्यते । ( न चेत्थमगृहीतेन व्यवहारोऽवकल्पते ॥ ) प्रमाणं ग्रहणात् पूर्वं स्वरूपेणैव संस्थितम् । ' ( श्लोवा. चोदनासूत्रम् ८२–८३ ) इति वार्तिकं तत् प्रमाणमस्मीत्यनेन आकारेण अग्रहणात् तथा च प्रमाणमित्येवं प्रत्यक्षादि न गृह्यते इत्याह । ननु यदि प्रामाण्यं ज्ञानोत्पत्तिसमये अवगम्यते, यत् उत्पत्तौ प्रमाणतया न चकास्ति तदप्रमाणमित्युत्पत्तावेव परिशेषान्निश्चेतुं शक्यं विनापि कारणदोषबाधकप्रत्ययाभ्यां इति अप्रामाण्यमपि स्वत एवापद्येत ।

मैवं वोचः । न हि स्वशब्दोऽयं प्रामाण्यपरतया प्रयुक्तः प्रामाण्यादेव प्रामाण्यं भातीति, नापि प्रमाणपरतया । यदि हि तथा स्यात् ततोऽप्रमाणेषु प्रामाण्यानवभासात् परिशेषसिद्धमप्रामाण्यं स्यात् । विज्ञानपरस्तु स्वशब्दः विज्ञानादेव प्रामाण्यं भातीति । ततश्चाप्रमाणज्ञानादपि प्रामाण्यमेवात्मनोऽसदपि बोध्यत इति नाप्रामाण्यस्य परिशेषसिद्धिः । अप्रामाण्यं तु प्रतीतप्रामाण्यापवादरूपेण पश्चाद्बोध्यत इति । यथाऽऽह– ' यस्मात् स्वतः प्रमाणत्वं सर्वत्रौत्सर्गिकं स्थितम् । बाधकारणदुष्टत्वबोधाभ्यां तदपोद्यते इति ॥ ' स्थितं प्राप्तं प्रतिपन्नमित्यर्थः । सर्वत्रेति न केवलं प्रमाणेषु, ज्ञानमात्रे इति यावत् । तथा ' अप्रमाणमपि स्वार्थे प्रमाणमिव हि स्वतः । ' इति । न च प्रमाणज्ञानान्यधिकृत्य चिन्तेयं प्रमाणानां प्रामाण्यं स्वतः परतो वेति । किं तर्हि ? यानि तावत् स्थाणुर्वा पुरुषो वा इति परस्परोपमर्दकानेककोटिसंस्पर्शिज्ञानेभ्यः स्मृतिज्ञानेभ्यश्चातिरिक्तानि घटोऽयं पटोऽयमित्येवंरूपाणि ज्ञानानि तानि सर्वाण्यधिकृत्य चिन्तेयम् । ' सर्वविज्ञानविषयमिदं तावत्परीक्ष्यताम् । ' (श्लोवा. चोदनासूत्रम् ३३ प्रतीक्ष्यतामिति पाठः ।) इत्युपक्रम्यते । यदि प्रमाणान्येव विषयीकृत्य चिन्त्येत ततो विषयस्योभयवादिसिद्धत्वात् यान्युभयोः प्रमाणतया प्रसिद्धानि तेषां प्रामाण्यं स्वत इत्येतावत् सिद्ध्यन्येत । ततश्च वेदस्योभयवादिसिद्धप्रामाण्याभावेन विचाराविषयत्वात् नास्य स्वतः प्रामाण्यं साधितं स्यात् । तत्र वेदप्रामाण्यानुपयोगिनी चिन्ता काकदन्तपरीक्षावदकर्तव्या स्यात् । ज्ञानमात्रं त्वधिकृत्य स्वतः प्रामाण्ये परतश्चाप्रामाण्ये साध्यमाने वेदस्यापि स्वतस्तावद्विषयतथात्वरूपं प्रामाण्यमवगतं स्यात् ( ? सत् ) कारणदोषज्ञानादेरभावान्निरपवादं स्थितं भवतीति प्रयोजनवती चिन्ता ।

ननु नार्थतथात्वमात्रं प्रामाण्यम्, स्मृतेरपि तथात्वप्रसङ्गात् । सत्यम्, न तावन्मात्रम् । अस्मिंस्तु प्रकरणे तावन्मात्रमेव स्वतः परतो वेति चिन्त्यते । प्रमाणशब्दो ह्यधिगततया अननुसंधीयमानतथाभूतार्थनिश्चायकत्ववाची । तस्य भावः प्रामाण्यम् । कश्च तस्य भावः ? प्रमाणान्तराधिगततया अननुसंधीयमानत्वम्, तथाभावश्च अर्थस्य, ज्ञानस्य तन्निश्चयजनकता, इति त्रितयं मिलितं प्रमाणबुद्धिशब्दयोर्वाचकं प्रामाण्यम् । तत्र यदेतदर्थस्यावगततया अननुसंधीयमानत्वं तद्योग्यानुपलब्धिगम्यत्वेन न ज्ञानस्वरूपाद् गम्यते । न हि घटज्ञानं घटस्यान्यतः अनवगततां प्रतिपादयति । नापि गुणज्ञानादिभिस्तदवगतिः । तेन न तत्र स्वतः परतो वेति चिन्ता । यदेव तु नन्वतथाभूतमित्यनेनायथार्थत्वलक्षणमप्रामाण्यमाशङ्कितं तत्परिहारायार्थतथात्वलक्षणमेव प्रामाण्यं स्वत इति साध्यते । यस्तु ' निश्चयात्मकप्रामाण्योत्पादनम् ' इति ग्रन्थः सोऽप्य-

विरुद्धः। तथाहि यदर्थतथात्वनिश्चायकं तदेव तद्विषयस्य निश्चयस्योत्पादकं भवति। यदेव हि ज्ञेयापेक्षया ज्ञापकं तदेव ज्ञानापेक्षया जनकं भवति। निश्चयोऽपि च प्रमाणशब्दप्रवृत्तिनिमित्तत्वात् प्रामाण्यमेव। 'तेन अर्थतथात्वलक्षणं प्रामाण्यं गुणज्ञानान्निश्चीयते' इति प्रतिपादयतः पूर्वपक्षिणो नासंगतः 'निश्चयात्मकप्रामाण्योत्पादनं तु वस्तुस्वरूपत्वात् संवादगुणज्ञानकार्यत्वेन स्वध्यवसानम्' इति ग्रन्थः। यदि पुनरिदमेव साक्षादुच्यते 'निश्चयात्मकं प्रामाण्यं स्वतो जायते' इति, तथा सत्यप्रामाण्यमपि परतो जायत इति वक्तव्यम्। अन्यथाऽस्य प्रतिपक्षत्वमेव न स्यात्। प्रामाण्यं स्वतो जायते, अप्रामाण्यं परतोऽवगम्यते इति। तस्मात् स्वतः परतश्च प्रामाण्यमप्रामाण्यं चावगम्यते इत्येव प्रकरणार्थः। एवं हि न्यायो ग्रन्थश्च समञ्जसो भवति।

तदयमत्र **पूर्वोत्तरपक्षसंक्षेपः**। घटादघटाच्च घटज्ञानदर्शनान्न तन्मात्रेण घटो निश्चेतुं शक्यते। तेनार्थक्रियादर्शनादेव तद्धेतुभूतघटनिश्चयपुरःसरं पूर्वस्य घटज्ञानस्य घटादुत्पत्तिर्निश्चेतव्या। अर्थक्रियाज्ञानं तु अव्यभिचारात् स्वतःप्रामाण्यमर्थक्रियायां निश्चाययत् शक्नोति पूर्वज्ञानस्य प्रामाण्यं निश्चाययितुम्। तथा ज्ञानान्तरसंवादोऽपि नार्थतथात्वाभावे घटते इति ततोऽप्यर्थतथात्वनिश्चयः। तथा गुणवत्कारणजन्यं विज्ञानं यथार्थमेव भवतीति कारणगुणावधारणादपि शक्यतेऽर्थस्य तथाभावो निश्चेतुम्। तस्मात् परत एव ज्ञानस्य प्रामाण्यनिश्चयः, न स्वतः तस्यार्थतथात्वलक्षणं प्रामाण्यं निश्चेतुं शक्यम्, अनैकान्तिकत्वात्। अनिश्चिते चार्थे नास्ति प्रामाण्यमित्यप्रामाण्यमेव ज्ञानस्य स्वतः। किञ्च निश्चयप्रागभावो न दोषज्ञानेन शक्यते जनयितुम्, निश्चयस्तु वस्तुत्वाच्छक्यते गुणज्ञानादिना जनयितुम्। तस्मात् परत एवार्थतथात्वरूपप्रामाण्यं निश्चीयते इति पूर्वः पक्षः।

सिद्धान्तस्तु न ज्ञानमव्यभिचारमुखेनैव अर्थं निश्चाययति, किन्तु स्वत एव। यदि हि स्वतो निश्चेतुं न शक्नुयात् तथा सति निश्चयात्यन्ताभाव एव स्यादित्यान्ध्यमेवाशेषस्य जगतो भवेत्। न हि स्वतोऽनिश्चितोऽर्थः परतो निश्चेतुं शक्यते, परस्यापि तद्वदेवासामर्थ्यात्। यथा हि घटज्ञानमसत्यपि घटे दृष्टमित्यनिश्चायकम्, तथा अर्थक्रियाज्ञानमप्यसत्यामेवार्थक्रियायां स्वप्नावस्थायां दृष्टमिति न तेनापि सा निश्चेतुं शक्या, नतरां तया घटनिश्चय इत्यायातमान्ध्यमशेषस्य जगतः। अथ अर्थक्रियाशब्देन नोदकाहरणादिकमुच्यते, किन्तु ज्ञानमेव सुखात्मकम्, सर्वं च सुखज्ञानं स्वात्मनि स्वत एव प्रमाणम्, अव्यभिचारात् इत्युच्यते। तथा सति भवतु नामार्थक्रियानिश्चयः, तथापि तु न तया पूर्वज्ञानस्य शक्यं याथार्थ्यं विज्ञातुम्। अयथार्थादपि स्वप्ने चन्दनलेपादिना सुखोत्पत्तेः। अपि च गृहीताविनाभावयाऽर्थक्रियया पूर्वज्ञानविषयस्य निश्चयः। अनुमानं ह्येतत् कार्यात् कारणगोचरम्। न चागृहीते संबन्धिनि संबन्धग्रहणसंभवः। तेन संबन्धग्रहणसमये अवश्यं घटज्ञानादेव घटनिश्चयोऽङ्गीकर्तव्यः। एवं गुणज्ञानसंवादज्ञानयोरपि वाच्यम्। न हि गुणज्ञानाद् गुणोऽपि निश्चेतुं शक्यते, किं पुनः पूर्वज्ञानप्रामाण्यम्। तथा संवादोऽपि। संवादो नाम तद्विषयं ज्ञानान्तरम्। तस्य पूर्वज्ञानात् को विशेषः येन पूर्वज्ञानानिश्चितमनेन निश्चीयते। यद्यपि वस्तुत्वाज्जन्यो निश्चयः तथापि ज्ञानेनैव जन्यते, नान्येन। तस्मात् स्वत एव प्रामाण्यं परतश्चाप्रामाण्यं दोषज्ञानाद्बाधकज्ञानाद्वा निश्चेयम्।

ननु अवस्तुत्वान्न दोषजन्यमप्रामाण्यं भवति, अतज्जन्यं च न ततोऽवधारयितुं शक्यम्। उच्यते। न तावन्निश्चयप्रागभावरूपमप्रामाण्यं दोषैर्गम्यते इति ब्रूमः, किन्तु अर्थान्यथात्वरूपम्। तद्धि शक्यं दोषज्ञानेन निश्चेतुम्, दोषनिमित्तकत्वादयथार्थत्वस्य दुष्टेषु कारणेष्वयथार्थत्वदर्शनात्। वेदेऽपि स्वतस्तावत् प्रामाण्यं दोषाभावादनपोदितं स्थितम्।

कथं पुनरवगम्यते दोषनिमित्तमयथार्थत्वम्, न गुणाभावनिमित्तमिति? सर्वत्र हि गुणविधुरेषु दुष्टेषु च कारणेषु अयथार्थत्वं ज्ञायते। तत्र कुतोऽयं विवेकः दोष एव निमित्तं न गुणवैधुर्यमिति? तस्माद्यद्यपि परत एवाप्रामाण्योपलक्षणं तथापि गुणाभावादेवोपलक्षणसंभवाद्वेदे च आप्तप्रणीतत्वगुणायोगात् स्वरसप्राप्तप्रामाण्यस्यापि

वेदस्य परत एव गुणाभावादप्रामाण्यमापद्यते इति । तदभिधीयते । दृष्टानुसारिणी हि कल्पना भवति, न दृष्टवैपरीत्येन । तेन वेदस्य स्वत एव प्राप्तं प्रामाण्यं यथा न विरुध्यते तथा चैतत् कल्पयितुं शक्यते । ततो विरुद्धं न कल्पयितुं युक्तम् । तेन यद्यपि प्रसिद्धेष्वयथार्थज्ञानेषु गुणाभावो दोषाश्च दृष्टाः, तथापि वेदे गुणाभावेऽपि प्रामाण्यदर्शनात् तन्मा बाधीति दोषनिमित्तमेवायथार्थत्वं शुक्तिरजतादिज्ञानानां कल्प्यते । अन्यथा हि ज्ञानत्वनिबन्धनमप्ययथार्थत्वं कल्प्येत, सर्वेष्व-प्रमाणेषु ज्ञानत्वदर्शनात् । तत्र यथार्थेष्वपि प्रत्यक्षादिषु ज्ञानत्वदर्शनान्न तन्निमित्तमयथार्थत्वम् । एवं गुणाभावोऽपि यथार्थो वेदे दृष्टत्वात् नायथार्थत्वस्य निबन्धनम् । असिद्धं तस्य यथार्थत्वमिति चेत्, प्रत्यक्षादीनां वा कुतः सिद्धम् ? स्वत इति चेत्, तद्वेदेऽपि समानमन्यत्र नास्तिक्याभिनिवेशात् । तस्मान्न तन्निबन्धनं प्रामाण्यम् । अपि च शुक्तिकारजतादिज्ञाने गुणाभावेऽपि शुक्लभास्वरत्वादिरूपाणां तथाभूतानामेव दर्शनान्न गुणायत्तं यथार्थत्वं ज्ञानस्य । यदि तु स्वकारणादेव यथार्थत्वं दोषाच्चायथार्थत्वमिति । तथा सति शुक्तिकारजतादिज्ञानानि स्वकारणवशाद्दोषाच्च तथाभूतं शुक्लत्वादि अतथाभूतं च रजतत्वादिकं गोचरयन्तीत्युपपन्नं भवति । तस्मात् स्वतः सिद्धं प्रामाण्यं सर्वज्ञानानाम्, तच्च वेदस्यानपोदितमिति सिद्धम् । '**पार्थसारथिमिश्रेण स्वतःप्रामाण्यनिर्णयः । व्याख्याविवादसंजातमोहव्यावृत्तये कृतः ॥ ४ ॥ रत्नमाला. पृ. ३०–३९.**

* **प्रायोवृत्त्या** भवति हि तद्बुद्धिः, यथा अम्ब्यप्राये लिखितः अम्ब्यः इति गम्यते । **भा.** ९।४। १२।५०.

* '**प्रायेणानृतवादित्वात् पुंसां भ्रान्त्यादिसंभवात्**' इति न्यायेन पुरुषविशेषप्रणीतवेदस्य प्रामाण्यानवधारणम् । **कु.** १।१।१।१ .

⌛ '**प्रायेण भार्यादौःशील्यं स्नेहान्धो नेक्षते जनः**' **इति न्यायः** । स्पष्टार्थः । **साहस्री.** ९४९ .

* प्रायेण यागानां दर्शपूर्णमासकालत्वम् । **भा.** ७।१।१।२.

⌛ '**प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः' इति न्यायः । साहस्री.** ७७२.

* **प्रायादपि** च अर्थनिश्चयो भवति । यथा अम्ब्यप्राये लिखितः अम्ब्य इति गम्यते । **भा.** २।३।६।१६ .

* **प्रायदर्शनम्** । 'प्रायवचनाच्च' ( २।२।४।१२ ) इत्यत्र प्रधानप्राये यत्रान्यानि प्रधानानि तत्र वचनात् इत्युक्तम् । तथा 'विशये प्रायदर्शनात्' ( २।३।६। १६ ) इत्यत्र संस्कारप्राये यत्रान्ये संस्कारा गोदोहनादयः तत्रास्य दर्शनं इत्युक्तम् । 'वेदो वा प्रायदर्शनात्' ( ३।३।१।२ ) इत्यत्र तु वेदप्राये वाक्ये वेदोपक्रमे निगम्यमाना इमे शब्दाः श्रूयन्ते इत्यर्थः भाष्ये । **वा.** ३।३।१।२, * विनापि वाक्यग्रहणेन '**प्रायदर्शनात्**' इति वाक्यविनियोगः वक्ष्यते । ३।१।१।१ पृ. ६५३. * सर्ववेदान्तप्रत्ययत्वेन अन्यत्र विहितानां अन्यत्रोपासनविधानायोपादानात् **प्रायदर्शनन्यायेन** उपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिः । **शांभा.** ३।३।१।४ ब्रसू.

* '**प्रायवचनाच्च**' (२।२।४।१२) इत्यत्र हि प्रधानप्राये यत्रान्यानि प्रधानानि तत्र वचनात् इत्युक्तम् । **वा.** ३।३।१।२ पृ. ८०५.

* **प्रायणीयं** द्वादशाहे प्रथममहः गवामयने च प्रथममहः, तयोः प्रकृतिविकृतिभावो नास्ति इति न द्वादशाहप्रायणीयात् धर्मातिदेशः । **वि.** ७।३।२. * प्रयन्ति अनेन इति **प्रायणीयम्**, प्रवर्तन्ते अनेन सत्रे इति एष (प्रायणीय–)शब्दः गुणेन क्रियायोगेन तस्मिन् कर्मणि श्रुत्यैव प्रयुज्यते । **भा.** ७।३।२।५ । प्रयन्ति अनेनेति प्रायणीयमित्यनेन योगेन द्वादशाहे इयं संज्ञा प्रवृत्ता । गवामयनेऽप्ययं योगो विद्यत एवेति धर्मातिदेशो नास्ति । **टुपू.** ७।३।२।५. * प्रारभ्य अयते गच्छति प्रवर्तते कर्म अनेनेति व्युत्पत्त्या 'प्राथम्यविशिष्टं कर्म' प्रायणीयं नाम । **वि.** ७।३।२. * **प्रायणीयोऽतिरात्रो** गवामयने द्वादशाहिकं प्रथममहः, तस्य धर्मो द्वादशोपसत्त्वम् । **भा.** ७।४।३।१९. * प्रायणीयो ज्योतिष्टोमे 'आदित्यः ( अदितिदेवताकः ) प्रायणीयः पयसि चरुः' इति विहितः । तत्र पयसि वत्सापाकरणादयः सांनाय्यधर्माः न कर्तव्याः, किन्तु उत्पवनादयः प्रणीताधर्माः

कर्तव्याः। वि. ९।४।१०. * प्रयन्ति प्रारभन्ते अनेन इति **प्रायणीयः।** बाहुलकात् करणे अनीयर् प्रत्ययः। प्रायणं आरम्भः, तत्र भवः इति वा प्रायणीयः। गहादिषु वेणुकादेराकृतिगणत्वात् छण्। तथा च प्राथम्यं प्रायणीयशब्दप्रवृत्तिनिमित्तम्। सोम. ७।३।२. * **प्रायणीयस्य** निष्कासे उदयनीयानिर्वापः अर्थकर्म संस्कारः। ११।२।१६।६७–६९. * प्रायणीयस्य पूर्वमप्राप्ततया द्रव्यम्, देवता, श्रपणाधारभूतं पयश्च इत्येवमनेकैर्गुणैर्विशिष्टं कर्म एकेन वाक्येन 'आदित्यः प्रायणीयः पयसि चरुः' इत्यनेन विधीयते ज्योतिष्टोमे। वि. ९।४।११. * **प्रायणीये**ऽतिरात्रे पञ्च ऐकादशिनाः आलभ्यन्ते उदयनीये षट्। १०।६।४।६–१२. * प्रायणीये आदित्ये चरौ श्रूयते 'अग्नये स्विष्टकृते समवद्यति' इति 'आज्यादेकस्माच्च हविषोऽवद्यति' इति। भा. ३।५।१।३। 'आज्यस्य एनं चरुमभिपूर्य आज्यभागाः पथ्यादयश्चतस्रो देवता यष्टव्याः' इति। वा., * प्रायणीये पथ्यादयश्चत्वारोऽपि यागाः द्रव्यसामान्यात् उपांशुयाजविकाराः। आदित्यश्चरुराग्नेयविकारः। ३।५।१।३. * प्रायणीये पयसि चरुः। तत्र पयसि प्रदानार्था धर्मा न कर्तव्याः। ९।४।९।३२–४०. * **प्रायणीयायां** चतुर्विंशतिमानं हिरण्यं दक्षिणा श्येने। भा. ८।१।९।१६, * प्रायणीयायां दार्शपौर्णमासिको विध्यन्तः प्रवृत्तः। ८।१।३।३. * प्रायणीयायां द्वादशाहगतायां ऐन्द्रवायवाग्रत्वम्। वि. १०।५।२३. * प्रायणीयायां प्राकृतानि समभ्यस्तानि कर्माणि क्रियन्ते। वा. १।२।१।१० पृ. १२६. * 'प्रायणीयायां मन्द्रं अनुब्रूयात्' अयं स्वरः प्रायणीयापूर्वप्रयुक्तः न परमापूर्वप्रयुक्तः ज्योतिष्टोमे। ९।१।२।२–३ वर्णकं २.

* **प्रायणीयनाम्नः** धर्मानतिदेशकत्वम्। ७।३।२।५–६. मीको. पृ २४८ 'अतिदेशो न प्रायणीयनाम्ना' इत्यत्र द्रष्टव्यम्।

* **प्रायणीयन्यायः।** ९।४।९. मीको. पृ. ९०९ 'आदित्यपयोऽधिकरणम्' इत्यत्र द्रष्टव्यम्। * **प्रायणीयन्यायेन** (९।४।९।३२–४०) पशुकामेष्टौ दधिशृतयोः सप्तम्या श्रपणाधारत्वावगमात् प्रणीता धर्मा एव कार्याः। वि. ९।४।१२, * प्रायणीयन्यायेन (वि. ९।४।१०) सप्तमीनिर्दिष्टयोर्दधिशृतयोः प्रदेयद्रव्यधर्माः न कर्तव्याः, किन्तु प्रणीताधर्माः। इति पूर्वपक्षः। ९।४।११.

* **प्रायणीयशब्दः** परत्रापि श्रूयमाणो न धर्माणां ग्राहकः। भा. ७।३।२।५। यत्र तु पञ्चमः षष्ठो वा प्रायणीयः तादृशो न पूर्वाधिकरणापवादः। टुप्.

* **प्रायणीयातिरात्रे** द्वादशाहगवामयनयोः ज्योतिष्टोमिको विध्यन्तः। टुप्. ७।४।३।१९.

* **प्रायणीयातिथ्ययोर्नियमेन** शंय्विडान्तत्वं ज्योतिष्टोमे। १०।७।१२।३८–३९. मीको. पृ. १८१७ 'ज्योतिष्टोमे प्रायणीया शंय्वन्ता' इत्यत्र द्रष्टव्यम्। * प्रायणीयातिथ्ययोः पूर्वाभ्यामेव शंय्विडाभ्यां शंय्विडान्तत्वं ज्योतिष्टोमे। १०।७।१३।४०–४२. मीको. पृ. १८१५ 'ज्योतिष्टोमे प्रायणीया पूर्वशंय्वन्ता' इत्यत्र द्रष्टव्यम्।

* **प्रायणीयातिथ्यादौ** 'सप्तम्या तु तदाधारो यावान्मन्त्रः प्रयुज्यते। तस्य सर्वस्य मन्द्रादिस्वरयोगोऽङ्गमाश्रितः॥' वा. ३।३।२९ पृ. ८१२.

* **प्रायणीयादीनि** दर्शपूर्णमासप्रकृतिकानि चोदकप्राप्तानि अस्थियज्ञे। भा. १०।२।२१।५२. * **प्रायणीयादौ** सर्वस्वारे जीवद्दशायां क्रियमाणे सूक्तवाकान्तर्गतायुराशासनादेरनुष्ठानम्। १०।२।२५।६१–६२.

* **प्रायणीयादीष्टिषु** दार्शिकारण्यभोजनस्य सौमिकपयोव्रतादिना प्रसङ्गसिद्धिः। १२।१।१४।३०. मीको. पृ. ९७२ 'आरण्यभोजनन्यायः' इत्यत्र द्रष्टव्यम्। * प्रायणीयादीष्टिषु दार्शिकजागरणस्य सौमिकदीक्षाजागरणेन प्रसङ्गसिद्धिर्न भवति ज्योतिष्टोमे। १२।१।८।१७. * प्रायणीयादीष्टिषु दार्शिकव्रतानां नानुष्ठानं ज्योतिष्टोमे। १२।१।११।२०–२३. मीको. पृ. १८१८ 'ज्योतिष्टोमे प्रायणीयादिषु' इत्यत्र द्रष्टव्यम्। * प्रायणीयादीष्टिषु पत्नीसंनहनं सौमिकसंनहनेन प्रसङ्गसिद्धत्वात् पृथङ् न कार्यम्। १२।१।१३।२९. * प्रायणीयादीष्टिषु शेषभक्षणस्य सौमिकपयोव्रतादिना प्रसङ्गसिद्धिर्नास्ति। १२।१।१५।३१–३२.

* **प्रायणीयादिशब्दानां** यौगिकानां नास्त्यतिदेशकत्वम्, तत्र नाम्ना धर्मातिदेशो नास्ति। अग्निहोत्रादि-

शब्दानां तु कर्मनामधेयानां अतिदेशकत्वमस्ति । वि. ७।३।१-२.

* **प्रायणीयेष्टौ** पयसि प्रदेयधर्मा नानुष्ठेयाः । ९। ४।९. **मीको.** पृ. ९०९ 'आदित्यपयोऽधिकरणम्' इत्यत्र द्रष्टव्यम् ।

* **प्रायणीयेष्ट्यादौ** अस्थियज्ञे मृताधिकारपक्षे प्रस्तरप्रहरणे सूक्तवाकमन्त्रगतः यजमानाऽऽशासनपरः 'आशास्तेऽयं यजमानोऽसौ' ( असौ इति नाम गृह्णाति 'केशवशर्मा' इत्यादि ) इत्यादिः लुप्यते (कृत्वाचिन्ता) । १०।२।२१।५३-५५.

* **प्रायणीयोदयनीययोः** ऐकादशिनानपेक्षमाणयो-रपि भवति समासः । प्रधानस्य पदान्तरमपेक्षमाणस्यापि भवति समासः । **टुपू.** १०।६।४।८.

* **प्रायणीयोदयनीयैकादशिनीवत्** अवयवशः संबन्धो भवति (सूक्तवाके) । **वा.** ३।२।६।१९ । **सुधा**— प्रायणीये पञ्च, उदयनीये पञ्च अन्त्योऽपि आसन्नत्वात् उदयनीये एव इत्यवयवशः द्वादशाहे प्रायणीयोदयनीया-न्वयो वक्ष्यते दशमे ।

* **प्रायणीयानिष्कासे** उदयनीयानिर्वापः उदय-नीयासंस्कारः, नार्थकर्म नापि प्रतिपत्तिः । ११।२।१६. **मीको.** पृ. १११३ 'उदयनीयानिर्वापाधिकरणम्' इत्यत्र द्रष्टव्यम् ।

**प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् । ६।५।१५।४५॥**

दर्शपूर्णमासयोः अधिकारे 'भिन्ने जुहोति, स्कन्ने जुहोति' इत्यादि यत् किञ्चित् प्रायश्चित्तं उक्तं तत् सर्वत्र यत्रयत्र भिद्यते स्कन्द्यते वा तत्रतत्र अग्निहोत्रादावपि स्यात् । दोषसामान्यात् दोषस्य भेदनादेः समानत्वात् इति पूर्वः पक्षः ।

**प्रकरणे वा शब्दहेतुत्वात् । ४६ ॥**

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । प्रायश्चित्तं एवंजातीयकं प्रकरणे तस्मिन्नेव कर्तव्यं स्यान्ना-न्यत्र कर्मणि । शब्दहेतुत्वात् प्रकृतैकवाक्यतापादकप्रयोग-वचनरूपस्य शब्दस्य तत्र हेतुत्वात् । तस्मात् यत् प्रायश्चित्तं यस्मिन् प्रकरणे उत्पन्नं तत् तत्रैव प्रकरणे स्यान्नान्यत्र फलान्तरकल्पनाप्रसङ्गात् । इति सिद्धान्तः ।

**अतद्विकाराच्च । ४७ ॥**

सिद्धान्ते हेत्वन्तरमाह । अग्निहोत्रस्य ज्योतिष्टोमादेर्वा अतद्विकारात् तद्विकारत्वाभावात् दर्शपूर्णमासविकारत्वा-भावात् । भावप्रधानो निर्देशः । प्रकृतौ उत्पन्नं प्रायश्चित्तं विकृतौ तु स्यात् । चकारो हेत्वन्तरसमुच्चये । **के.**

* **प्रायश्चित्तं** अपच्छेदयौगपद्येऽपि । ६।५।१७। ४९-५०. **मीको.** पृ. ४९८ 'अपच्छेदयौगपद्येऽपि प्रायश्चित्तम्' इत्यत्र द्रष्टव्यम् । * प्रायश्चित्तमभ्युदितेष्टि-रूपं चन्द्राभ्युदयनिमित्तकं असंनयतोऽपि भवति । ६।५। ६. **मीको.** पृ. ५८३ 'अभ्युदितेष्टिरूपं चन्द्राभ्युदय-निमित्तकं' इत्यत्र द्रष्टव्यम् । * प्रायश्चित्तं कपालादेः एकदेशभेदनस्कन्दनादावपि । ६।४।४।१०-१६. **मीको.** पृ. २०३९ 'दर्शपूर्णमासयोः कपालादेः०' इत्यत्र द्रष्ट-व्यम् । * प्रायश्चित्तं कृत्स्नपुरोडाशदाहे । ६।४।५। १७-२१. * प्रायश्चित्तं पञ्चशराव ओदनः दर्शे दोहयो-रेकनाशेऽपि । ६।४।६।२२-२३. **मीको.** पृ. ९९२ 'आर्तिन्यायः' इत्यत्र द्रष्टव्यम् । * प्रायश्चित्तं पर-निमित्तकमनुष्ठेयं अपच्छेदपौर्वापर्ये । ६।५।१९।५४. * प्रायश्चित्तं पापान्निवृत्तस्य श्रूयते । **सोम.** ६।८।४. * प्रायश्चित्तं पुनराधानं उभयाग्निनाशे । ६।४।८।२६-२७. **मीको.** पृ. ९४ 'अग्निहोत्रे उभयाग्निनाशे' इत्यत्र द्रष्टव्यम् । * प्रायश्चित्तं पुरुषार्थे लौकिक एव यूपोपस्पर्शने न वैदिके । 'यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात् । यदि द्वौ, एतौ ते वायू इति । यदि बहून् एते ते वायवः इति' । ९।३।३।९. **मीको.** पृ. ११८ 'अग्नीषोमीये पशौ यागसमाप्त्युत्तरम्' इत्यत्र द्रष्टव्यम् । * प्रायश्चित्तं प्राधान्येनाग्निना आहवनीयादेः संसर्गे 'अग्नये शुचयेऽष्टाकपालं निर्वपेत्' इति । **भा.** १२।४। ७।२२. * प्रायश्चित्तं यूपविरोहणे प्रकृतावपि । **संकर्ष.** १।३।१०. 'यूपविरोहणे प्रायश्चित्तं प्रकृतावपि' इत्यत्र द्रष्टव्यम् । * प्रायश्चित्तं विनष्टसंस्कारार्थम् । **भा.** ६।४। ४।११, * प्रायश्चित्तं ( कर्मणि ) व्यृद्धे । २।४।२।८. * प्रायश्चित्तं शकृत्संप्रवेध-लोहितनिरसन-लोपनिमित्तं

भवत्येव, शकृल्लोहितयोरभावे नाशे वा अग्नीषोमीयपशौ। भाट्ट. ४।१।१२. * प्रायश्चित्तं सोमेन्द्रश्यामाकचरुः वैदिकसोमपानव्यापदि। ३।४।१२।३२–३३. * प्रायश्चित्तानि द्विप्रकाराणि। कानि चित् वैगुण्यस्य प्रमादादापतितस्य समाधानार्थानि, कानि चित् निमित्ते कर्माङ्गानि। भा. १२।३।५।१६., * विध्यपराधे च प्रायश्चित्तानि विधीयन्ते, निमित्ते कर्माङ्गभूतानि, यथा 'भिन्ने जुहोति' इति। ६।३।१।७. * प्रायश्चित्तानां अदोषनिर्घातार्थानां समुच्चयः। १२।३।६।१७. 'समुच्चयाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

**प्रायश्चित्तानां दोषनिर्घातार्थानां विकल्पः॥**

**प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात् सर्वस्य निर्घातः। १२।३।५।१६॥**

**भाष्यम्—** प्रायश्चित्तानि द्विप्रकाराणि। कानि चिद्वैगुण्यस्य प्रमादादापतितस्य समाधानार्थानि। कानि चिन्निमित्ते कर्माङ्गानि। तत्र समाधानार्थानि यथा 'यद्यृक्तो यज्ञ आर्तिमियात्, भूः स्वाहेति गार्हपत्ये जुहुयात्, अथ यदि यजुष्टो दक्षिणाग्नौ भुवः स्वाहेति, यदि सामतः स्वः स्वाहेत्याहवनीये। यद्यविज्ञातो भूर्भुवः स्वः स्वाहेत्याहवनीय एव' इति। आर्तिमियात्, विनाशमियादित्यर्थः। कः पुनर्यज्ञस्य विनाशः? शिष्टस्याक्रिया, प्रतिषिद्धसेवनं च। कथं पुनर्ज्ञायते विनष्टस्य समाधानार्थं तत् प्रायश्चित्तमिति? वाक्यसंयोगात्। यद्यार्तिमियादिदं कुर्यात्। यदि तस्मिन् कृतेऽपि तत् विनष्टमेव, कोऽर्थस्तेन कृतेन। यस्त्वत्र ब्रूते, आर्तौ निमित्ते कर्माङ्गं प्रायश्चित्तमिति। स च वक्तव्यः। अङ्गं नाम तत्, यत् प्रधानं फलवत् करोति। प्रधानं च विनाशादफलत्वमापन्नम्। यदि तदनेन फलवत् क्रियते तत एतदङ्गम्। तच्चेदफलं प्रसक्तमेतेन फलवत् क्रियते, हन्त तर्हि जातस्य विनष्टस्य समाधानार्थम्। अथ न क्रियते, न तर्हि कर्माङ्गम्। तत्र यदुच्यते निमित्ते कर्माङ्गमिति तदेव नास्ति। अपि च तत्रतत्र नष्टसमाधानमेव वाक्यशेषे श्रूयते 'अग्निर्वै देवानां पथिकृत् स्वेन भागधेयेनोपासीरन्। स एवैनं पन्थानमपि नयति, स एनं व्रतमालम्भयति' इति। तस्मादेते दोषनिर्घातार्थाः। तेषु विकल्पः स्यात्। कुतः? ऐकार्थ्यात्। कथमैकार्थ्यमेतेषाम्? निष्पन्नेन दोषेण केवलस्य तस्यतस्याभिसंयोगः, 'यद्यृक्तो यज्ञ आर्तिमियात्, भूः स्वाहेति जुहुयात्' इति। तस्मात् सर्वस्य दोषस्यैकेन निर्घातः। एकेन चेन्निर्हतो दोषो द्वितीयादीनि प्रयोगान्तरार्थानि भवन्ति। एवं स्मार्तेष्वपि द्रष्टव्यम्।

**सोम—** न नैमित्तिकमात्रस्य वैगुण्यसमाधानार्थत्वम्, किन्तु कर्मवैगुण्ये निमित्ते विधीयमानस्य। तेन भिन्नादिहोमानां न वैगुण्यसमाधानार्थत्वम्। **भवनाथस्तु** (प्रभाकरानुयायी) यज्ञार्तिरूपेण अङ्गान्वयः, न तु ऋगाद्यार्तितया इत्यैकार्थ्यमाह। **सूत्रार्थस्तु—** प्रायश्चित्तेषु यस्मात् निष्पन्नेन वैगुण्यरूपनिमित्तेन योगः, तस्मादैकार्थ्यम्। ततश्च एकेन सर्वस्य वैगुण्यस्य निर्घातः इति विकल्पः इति।

**वि—** 'वैश्वानरे पथिकृते साहित्यं वा विकल्पनम्।, साहित्यं स्याददृष्टाय, विकल्पः स्यात् समाधये॥' वैगुण्यसमाधानाय।

**भाट्ट—** प्रायश्चित्तानि कर्मवैगुण्यनिमित्तदोषनिर्घातार्थानि। तेषु यानि एकस्मिन्नेव वैगुण्ये अनेकानि निरपेक्षाणि तत्तद्वाक्यैर्विधीयन्ते तेऽपि सत्यपि अदृष्टार्थत्वे पूर्ववत् विकल्पः। यथा 'यदि सामतो यज्ञ आर्तिमियात् सुवरित्याहवनीये जुहुयात्' इति कस्यांचिच्छाखायामध्वर्युकर्तृको होमः। अपरस्यां तु 'यदि सामतो यज्ञ आर्तिमियात् स्वरित्याहवनीये' इति ब्रह्मकर्तृको होमः। इदं चैकजातीययज्ञार्तावेव तत्परिहारार्थं प्रायश्चित्तद्वयम्। तथा दर्शपूर्णमासातिक्रमणे एव क्वचित्पाथिकृतीष्टिः, क्वचिच्च वैश्वानरीति। तदत्रापि दर्शपूर्णमासातिक्रमनिमित्तप्रत्यवायपरिहारार्थत्वमपेक्षितविधिबलात् वाक्यशेषात् च अवगम्यते। अतश्च व्रीहियवादिवदेव तत्तद्विनियोगविधिवेलायामेव एकवैगुण्यध्वंसरूपावान्तरकार्यनैरपेक्ष्येण साधनत्वावगमात् युक्तोऽत्रापि विकल्पः। न च कारणताऽवच्छेदकवैजात्यात् धर्मव्यवस्थासिद्धये च अवान्तरापूर्वभेदस्यावश्यकत्वात् कथं न प्रयाजादिवत् समुच्चयः। तद्भेदेऽपि नैरपेक्ष्येणैव विनियोगविधिदशायां उभयोस्तददृष्टयोः एकवैगुण्यध्वंसजनक-

त्त्वावगतेः प्रयाजादिवत् औत्तरकालिकेन प्रयोगविधिना समुच्चयाप्रतीतेः । नहि एकादशोक्तरीत्या ( ११।१।५ ) एकस्मिन् प्रधानोपकाराख्ये महाकार्ये प्रयाजादीनां सर्वेषामङ्गानां प्रयोगविधिना साहित्यावगमवत् अवान्तरकार्येऽपि साहित्यावगमः, तथात्वे उत्पत्तिविनियोगावगतनैरपेक्ष्यबाधापत्तेः । अतस्तस्य विनियोगवाक्यप्रमितावान्तरकार्यनिरूपितत्वस्य आवश्यकत्वात् युक्तो विकल्पः । न चैवमपि प्रकृते नैरपेक्ष्यस्य तत्तदवान्तरापूर्वनिरूपितत्वेनैवोपपत्तेः वैगुण्यध्वंसनिरूपितत्वे प्रमाणाभावः, तस्य वैगुण्यध्वंसनिरूपितनैरपेक्ष्यावगमोत्तरकालं धर्मव्यवस्थादिसिद्ध्यर्थं कल्पितस्य तद्बाधकत्वानुपपत्तेः ।

मण्डन— ' प्रायश्चित्तं स्याद् विकल्पेन नाशे । '

शंकर— ' दोषे प्रायश्चित्तयोश्च । ' विकल्पनम् ।

* ' प्रायश्चित्तेषु चैकार्थ्यात् ' ( १२।३।५।१६ ) इत्यधिकरणे पाथिकृतस्य वैश्वानरद्वादशकपालस्य च विकल्पो वक्ष्यते, एकार्थत्वात् । बाल. पृ. ८५.

* ' प्रायश्चित्तेषु चैकार्थ्यात् ' इति न्यायेन एतेषां नैमित्तिकानां कर्मणां ( चन्द्राभ्युदयेष्ट्यादीनां ) स्वकाले क्रियमाणदर्शाङ्गत्वं प्रकरणात् । तच्च अकालोपक्रमनिमित्तदोषनिर्घातार्थत्वात् च द्वादशाधिकरणन्यायेन विकल्प्येत, इति प्राप्ते । भाट्ट. ६।५।१.

**प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात् सर्वस्य निर्घातः ।।१२।३।५।१६।।**

'यदि ऋक्तो यज्ञ आर्तिमियात् भूः स्वाहा इति गार्हपत्ये जुहुयात् ' इत्यादिषु दोषनिर्घातार्थेषु प्रायश्चित्तेषु ऐकार्थ्यात् एककार्यत्वात् विकल्पः स्यात् । निष्पन्नेन दोषेण अभिसंयोगः तस्यतस्य प्रायश्चित्तस्य नाशकत्वेन भवति इति ऐकार्थ्यं भवति । तस्मात् अन्यतमेन प्रायश्चित्तेन सर्वस्य दोषस्य निर्घातः नाशो भवति । इति सिद्धान्तः । एवं स्मार्तेऽपि । के.

* **प्रायश्चित्ताचरणात्** दुःखेनाल्पेनापि सता महते दुःखान्तराय प्रवृत्तः सन् अधर्मो विनाश्यते इति वचनात् गम्यते । वा. ३।८।३।९.

* **प्रायश्चित्ततपांसि** यानि तेषां दोषापहारमात्रमेव फलम् । वा.३।८।३।९.

* **प्रायश्चित्तपशुः** ( व्रात्यपशुः ) आधानव्यवहितसोमानुष्ठाने सोमात् प्रागेव सोमाधिकारसिद्ध्यर्थं कर्तव्यः । न तेन व्यवधानं भवति । टुप्. ५।४।३।६.

* **प्रायश्चित्तरूपो** वैश्वानरयागः अग्निचयने संवत्सरमुख्याग्निधारणासंभवे नैमित्तिकः । ४।४।६।१२–१३.

* **प्रायश्चित्तरूपज्योतिष्मतीष्टिः** दर्शपूर्णमासार्थोद्धृताग्निनाशेऽपि नानुष्ठेया । ९।४।६।२८.

* **प्रायश्चित्तविधिः** । वैकल्पिकानामादित एवाङ्गीकरणात् आश्रितक्रमातिक्रमे प्रायश्चित्तविधिरुपपत्स्यते । वा. २।४।२।२३.

* **प्रायश्चित्तहोमाः** दर्शपूर्णमासयोः, फलीकरणहोमोत्तरं कपालोद्वासनात् प्राक् क्रियन्ते । वि. १०।७।१२.

* **प्रारब्धं** परिसमापनीयं गम्यते । भा. १०।५।२।८.

* **प्रारब्धकाम्यकर्मणो** नित्यकर्मणश्च श्रुतद्रव्यापचारे प्रतिनिधिना समापनम् । ६।३।४।१३–१७.

* प्रारब्धकाम्यकर्मणः समाप्तिनियमः । ६।२।३। १४–१६. ' शिष्टगर्ह्याधिकरणम् ' इत्यत्र द्रष्टव्यम् ।

* **प्रारब्धलौकिककर्मसमाप्तेः** अनियमः । ६।२।४। १७-१९.

* **प्रावचनस्वरः** प्रवचनकालीनः स्वरः त्रैस्वर्यम् । भा. १२।३।८।२०.

* **प्रावाहणिः** यः प्रवाहयति । भा. १।१।८।३१.

* ' यदि **प्रावृषि** यजेत सकृदुपस्तृणीयात् द्विरभिघारयेत् ' । भा. १०।४।२५।५६.

* **प्रावृत्तिकः क्रमः** प्रयोजकवशः । वा. ३।१।१।१ पृ. ६५१. * प्रावृत्तिकः क्रमः प्राजापत्यपशुसंस्कारेषु द्वितीयादिषु, प्रथमे उपाकरणे तु इच्छया प्रवृत्तिः । वि. ५।१।५.

**प्रावृत्तिकक्रमन्यायः ।।**

**प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् । ५।१।५।८ ।।**

**भाष्यम्**— वाजपेये ' सप्तदश प्राजापत्यान् पशूनालभते ' इति श्रूयते । तेषु पशुषु चोदकप्राप्ताः प्रोक्षणादयो धर्माः । तत्र प्रथमः पदार्थो यतः कुतश्चिदारब्धव्यः । द्वितीयादिषु भवति संशयः, किं तत एव द्वितीयोऽपि

पदार्थ आरब्धव्य उत द्वितीयादिष्वनियम इति। किं तावत् प्राप्तम्? नियमकारिणः शास्त्रस्याभावादनियम इति।

एवं प्राप्ते, ब्रूमः। यतः पूर्वं आरब्धस्तत एव द्वितीयादयोऽपि पदार्था आरब्धव्या इति। कुत एतत्? तदुपक्रमात्। सर्वे हि पदार्थाः प्रधानकालान्न विप्रकृष्टव्याः। प्रधानं हि चिकीर्षितम्। कृतं वा तेषां निमित्तम्। सहवचनं हि भवति पदार्थैः सह प्रधानं कर्तव्यमिति। बहुपदार्थसमाम्नानात् तु अवश्यम्भावी विप्रकर्षः। तथापि तु यावद्भिर्नाव्यवहितः शक्यः पदार्थः कर्तुं तावद्भिर्व्यवधानमवश्यं कर्तव्यम्, ततोऽभ्यधिकेन न व्यवधातव्यमिति। यदि द्वितीयं पदार्थमन्यत आरभेत, ततोऽधिकैरपि व्यवदध्यात्। तथा प्रयोगवचनं बाधेत। ननु तथा सति कश्चिदल्पैर्व्यवहितो भविष्यति। उच्यते। अनुमतानां व्यवधायकानां त्यागेन कश्चिदभ्यधिको गुणो भवतीति। तस्माद्यतः पूर्वपदार्थ आरब्धस्तत एवोत्तर आरम्भणीय इति।

टुप्— 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति' इत्यस्मिन्काले उपादीयमानाः सेतिकर्तव्यताकाः इतरेतरयुक्ताः (वैश्वदेवानन्तरकाले करणत्वेन उपात्तत्वात्) सह कार्या इत्यवगते क्रमश्चिन्त्यते। तत्र प्रथमे पदार्थे अनियम (एव)। यतः कुतश्चित् (पशोरारभ्य) कर्तव्यः। द्वितीयस्तु (पदार्थः) किं प्रथमो यत आरब्धः तत एवारम्भणीयः उत (तत्रापि) अनियमः (एव) इति (संशयः)। श्रुत्यर्थपाठाभावादनियमे प्राप्ते (अभिधीयते-) प्रवृत्त्यैव नियमः। (प्रथमः पदार्थो येन क्रमेण कृतः स एवोत्तरेष्वपि नियम्येत।) कुतः एतत्? (इति प्रश्नभाष्यम्। प्रयोगविधिसमयोत्तरकालभाविनी प्रवृत्तिः कथं तद्व्यापारस्य नियन्त्री भवति इत्यर्थः।) तदुपक्रमात् (इत्युत्तरभाष्यम्)। सर्वे हि पदार्थाः प्रधानकालात् न विप्रकृष्टव्याः। सहवचनं हि भवति पदार्थैः सह प्रधानं कर्तव्यं इत्येवं व्यवहितो ग्रन्थसंबन्धः (कर्तव्यः)। कथं (व्यवहितसंबन्धः? उत्तरम्—) प्रधानकालात् न विप्रकृष्टव्या इत्यस्य हि सहवचनं भवतीत्युपपत्तिः। (अतो योग्यार्थयोरनयोः ग्रन्थयोरव्यवायार्थं प्रधानं हि चिकीर्षितं इत्यादिभाष्यं अवश्यम्भावी विप्रकर्ष इत्यस्य अनन्तरं द्रष्टव्यम्।) कथं (पदार्थैः सह प्रधानस्य वचनं यावता 'दर्शपूर्णमासाभ्यां यजेत' इत्यादिषु प्रधानमात्रं श्रूयते? ) भवन्तं भावयेद्यागेनेत्थमिति ('यजेत' इत्यस्य अर्थः)। तत्र यस्यामेव वेलायां स्वर्गो भवने कर्तृत्वं प्रतिपद्यते तस्मिन्नेव क्षणे करणेतिकर्तव्यते अपि व्याप्रियेते। तस्मात् त्रितयस्य फलकरणेतिकर्तव्यत्वस्य (युगपत्) यजेतेत्यनेन कर्तव्यतोच्यते। शब्दवृत्तं तावदेवम्, वस्त्वप्येवमेव। यदि भूतकालं भाव्यम्, भविष्यति काले करणेतिकर्तव्यते, ततोऽनयोः करणेतिकर्तव्यतात्वमेव न स्यात्। (न हि पश्चाद्भावि करणम्।) भविष्यति भाव्ये भूते (च) करणे अयमेव दोषः (न हि विनष्टं करणं भवतीति।) करणेतिकर्तव्यतयोरपि विप्रकर्षे अयमेव दोषः। अतः शब्दवस्तुभ्यामेककालतैषाम्। तत्र यदि फलस्य कालः अवगम्येत, ततस्तदीयेन कालेन करणेतिकर्तव्यतयोः परिच्छेदः स्यात्। इह तु स्वर्गस्य अनवगतः कालः, करणेतिकर्तव्यतयोस्तु अवगतः। तयोस्तु कालेन स्वर्गभवनकालः परिच्छिद्यते। ततः प्रधाने सेतिकर्तव्यताके एकैकस्मिन् क्षणे सहकर्तव्ये प्राप्ते, एककर्ता बहूनि प्रधानानि इतिकर्तव्यतां वा असमर्थः कर्तुं यौगपद्येनेत्यवश्यम्भावी विप्रकर्षः। ईदृशेन विप्रकर्षेण क्रियमाणेन अपि सहैव पदार्थाः कृता भवन्ति। तत्र प्रधान-(आसत्ति-)नियमेन पदार्थाः प्राप्नुवन्ति आग्नेयादीनां सकाशे। तत्र श्रुत्यर्थपाठैः अनियमेन या आसत्तिः सा व्यावर्त्यते। (नियममात्रे श्रुत्यर्थादीनां व्यापारः, न तु क्रमस्वरूपे इत्यर्थः। अस्मिंश्चावसरे उत्कृष्टं भाष्यं व्याख्यातव्यमित्याह—) अवश्यम्भाविनि विप्रकर्षे प्रधानं हि चिकीर्षितम्, कृतं वा तेषां निमित्तं इत्यर्थतो ग्रन्थसंबन्धः। ('चिकीर्षितं कृतं वा' इत्यनयोः व्यवस्थां दर्शयति-) अग्न्यन्वाधानादीनां करिष्यमाणं प्रधानं निमित्तम्, स्विष्टकृदादीनां तु कृतम्। तेनैवं (अवश्यम्भाविनि विप्रकर्षे) केचित् पदार्थाः क्षणव्यवहिताः (प्रधानेन) अपेक्ष्यन्ते, के चिद् द्वाभ्याम्, के चित् बहुभिः। प्रकृतावयमर्थ इति (इह) विकृतावप्ययमेव न्यायः (चोदकप्राप्तेः)।

इति, यदि संस्कारशब्दः प्रोक्षणीरासादयेति प्रैषः, यदि जातिशब्दः, घृतमासादयेति, यदि यौगिकः प्रोक्षणमिति ।

वा— ननु समुदायप्रसिद्धेः श्रुतिस्थानीयत्वाद्वाक्यस्थानीयावयवप्रसिद्धिर्दुर्बला स्यात् । तथाहि । '**अक्षरैरेव बुध्यन्ते समुदायप्रसिद्धिषु । अर्थभागोपसंहारादितरा विप्रकृष्यते ॥**' सत्यमेवमेतत् । अवश्यं त्ववयवानामपि स्वार्थे शक्तिराश्रयणीया तदनाश्रयणेऽवयवप्रसिद्धित्वाभावात् । तत्र च '**असत्स्ववयवार्थेषु योऽन्यत्रार्थे प्रयुज्यते । तत्रानन्यगतित्वेन समुदायः प्रसिध्यति ॥**' लब्धात्मिका हि समुदायप्रसिद्धिरवयवप्रसिद्धिं बाधते, तस्यास्त्वात्मलाभो यत्र प्रमाणान्तरेण पूर्वानुभूतावयवार्थरहितेऽर्थे शब्दप्रयोगो दृश्यते, यथाऽश्वत्वकर्णत्वरहिते वृक्षेऽश्वकर्णशब्दस्य । न ह्यत्र पूर्वशक्त्यनुसारेण प्रतीतिरुपपद्यते इत्यर्थापत्त्या शक्त्यन्तरं कल्प्यते । ततश्चोभयसंभवे अवयवार्थानुसंधानाद्विक्षिप्ताया अवयवप्रसिद्धेरक्षरश्रवणमात्रलभ्यत्वादियं बलीयसी भवति । अत्र पुनरप्सु प्रकर्षसेचनक्रियाकरणत्वसंभवादवयवशक्तिभिरेव वाक्यवत्प्रयोगोपपत्तेः शक्त्यन्तरे प्रमाणाभावात् समुदायप्रसिद्ध्यभावः । तथाहि '**भवेतां यदि वृक्षेषु वाजिकर्णौ कथञ्चन । अदृष्टां समुदायस्य कः शक्तिं जातु कल्पयेत् ॥**' तस्मान्नाप्सु समुदायप्रसिद्धिरिति द्रवद्रव्यमात्रसाधारणता । ननु संस्कारनिमित्तत्वेऽपि अप्सामानाधिकरण्यकृतत्वादीकारस्य घृतान्निवृत्तिः स्यात् । यदि हि प्रागीकारात्संस्कारनिमित्तताऽवगम्येत ततः स्त्रीप्रत्ययोऽयमाश्रयलिङ्गनिमित्त इत्यवधारणादन्यलिङ्गान्निवर्तेत । अयं पुनरन्यप्रयोगः संस्कारेष्वीकारान्त एवानवगतविभागो वेद्यादिवत् प्रयुक्त इत्यन्यादृशस्य वाचकत्वं नावधार्येत, तस्मादीकारान्तः स्यात् । यौगिकत्वे तु प्रागीकाराद्योगो गम्यते इति स्त्रीप्रत्ययोऽयं निमित्ताभावादघृते न प्रयोक्ष्यते, चोदकप्राप्तं तु प्रातिपदिकमात्रं प्रयोक्तव्यम् । न च द्रव्येष्वर्थसमवायाद्विधिशब्दप्रयोगनियमः, यतः प्रोक्षणशब्दबाधेन जातिपक्षवद् घृतमित्येव प्रयोगः स्यात् ।

शा— '**रूढिर्लब्धात्मिका योगं बाधते न त्वलब्धिका । तत्रैव चात्मलाभोऽस्या यत्र नावयवार्थता ॥ यथा वृक्षेऽश्वकर्णस्य सत्सु त्ववयवार्थेषु । तत एवोपपन्नत्वादर्थापत्तिः परिक्षीणा ॥ नादृष्टां समुदायस्य शक्तिं कल्पयितुं क्षमा । सन्ति त्ववयवार्थाः प्रकृष्टोक्षणहेतुत्वात् ॥ स्त्रीलिङ्गत्वाच्च तेनात्र नात्मानं लभते रूढिः । वाक्यार्थे वाक्यवत् तस्मात् यौगिकः प्रोक्षणीशब्दः ॥**' (एतेषां चतुर्णामपि श्लोकानां वक्त्राख्यवृत्तिविशेषत्वं बोध्यम् । **सोम.**)

**सोम**— आपवादिकी **संगतिः । सूत्रार्थस्तु**— प्रोक्षणीषु अवयवार्थसंयोगात् योगत्वम्, न तु समुदायशक्तिः इति ।

वि— ' प्रोक्षणीः संस्कृतिर्जातिर्योगो वा, सर्वभूमिषु । तथोक्तेः संस्कृति, र्जातिः स्याद्रूढेः प्रबलत्वतः ॥ अन्योन्याश्रयतो नाद्यो न जातिः कल्प्यशक्तितः । योगः स्यात् क्लृप्तशक्तित्वात् क्लृप्तिर्व्याकरणाद् भवेत् ॥ '

**भाट्ट**— प्रोक्षणीशब्दस्यापि पूर्ववत् संस्कारवाचित्वे ' प्रोक्षणीभिरुद्वेजिताः स्मः ' इति लोके संस्कारं विहाय जातिमात्रे प्रयोगदर्शनात् रूढ्या जलत्ववाचित्वे **प्राप्ते,** क्लृप्तावयवयोगेनोपपत्तौ रूढिकल्पने प्रमाणाभावः । अत एवाश्वकर्णादिशब्दे योगबाधे एव तत्कल्पनम् । न चापामौदासीन्यावस्थायां प्रकृष्टोक्षणसाधनत्वरूपयोगाभावः । फलोपधानासंभवेऽपि उक्षणस्वरूपयोग्यत्वस्य संभवात् । न चैवं रथकारपदेऽपि रथकर्तृत्वयोग्यत्वरूपयोगसंभवेन जातिविशेषशक्तिकल्पनानुपपत्तिः । अनुशासनबलेन तत्कल्पनात् । कर्तृत्वस्वरूपयोग्यत्वस्य अव्यावर्तकत्वेन ' वर्षासु रथकारः ' इत्यस्य वैयर्थ्यापत्तेश्च । प्रोक्षणीशब्दे तु रूढिकल्पने प्रमाणाभावात् यौगिकत्वमेव ।

प्रयोजनं तु विकृतौ ' घृतं प्रोक्षणं ' इत्यादौ ' प्रोक्षणीरासादय ' इत्यविकृतः प्रयोगः संस्कारवाचित्वपक्षे । ' घृतमासादय ' इति जातिवाचित्वे । ' प्रोक्षणमासादय ' इति यौगिकत्वे द्रष्टव्यम् ।

**मण्डन**— ' यौगिकं प्रोक्षणीपदम् । '

**शंकर**— ' प्रोक्षण्यादि तु यौगिकम् । '

* अवयवप्रसिद्धेः विप्रकर्षोपपादनार्थम् ' अक्षैरेव बुध्यन्ते ' इति **प्रोक्षण्यधिकरणवार्तिकोक्तं** दौर्बल्यं स्मारयति । सु. पृ. ८३३.

* **प्रोक्षण्यादिशब्दानां** यौगिकता । १।४।८.

* **प्रोक्षण्यासादनादीनां** अनाध्वर्यवता । वि. ३।८।१२.

* **प्रोक्षणीशब्दः** प्रकर्षसेचनयोग्यत्वकारणस्य द्रवत्वस्य अप्सु स्वाभाविकस्य भावात् उदासीनास्वपि तासु । सु. पृ. ९००.

* **प्रोक्षति** अग्नीषोमीयं पशुं ज्योतिष्टोमे ' अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामि ' इति । भा. ८।२।२।११.

* **प्रोत्साहनार्थानां** मन्त्राणां ' अगन्म स्वः सं ज्योतिषाऽभूम ' इत्यादीनां ' यदेव श्रद्धया करोति तदेव वीर्यवत्तरं भवति ' इति वाक्यावधारितकर्माङ्गभूतश्रद्धाजननार्थं अनुष्ठेयकर्मस्मृतिफलकत्वम् । सु. पृ. १०२.

* **प्रोत्साहनमन्त्राणां** याजमानत्वम् । ३।८।६। १५-१६. **मीको.** पृ. १०१२ ' आशीरधिकरणम् ' इत्यत्र द्रष्टव्यम् ।

* **प्लक्षशाखायाः** अग्नीषोमीये पशावेव विनियोगः । **संकर्ष.** १।३।१४. **मीको.** पृ. ११७ ' अग्नीषोमीये पशौ प्लक्षशाखायाः० ' इत्यत्र द्रष्टव्यम् ।

⌛ **प्लवङ्गमगतिन्यायः** । यथा पिपीलिकापेक्षया प्लवङ्गमः शाखाऽन्तरे उत्प्लवमानो द्वित्रिचतुरुत्प्लवैरुच्चतरमपि तारवफलं स्वल्पायासेन लभते, तथैव मध्यमाधिकारी अज्ञान्यपेक्षया जन्मान्तरीयशुद्धसंस्कारतया शुद्धमनस्कः सद्गुरुसकाशात् लब्धाध्यात्मविद्यश्चिद्घनानन्दीयरसं झटित्यास्वादते इति । **साहस्री.** ५१६.

---

# फ

' **फलमत उपपत्तेः** ' ( ३।२।८।३८ ब्रसू. ) इत्यधिकरणन्यायेन अतिथेः फलदातृत्वासंभवात् ईश्वर एव फलदाता । **परिमल.** ४।१।४।५ ब्रसू. * फलं अनुपादेयं कर्मभेदकम् । तस्य उदाहरणम् ' आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः ' इत्यादि । वा. २।३।१२।२५. * फलं अपि पुरुषं प्रति शेषः इति जैमिनिः । भा. ३।१।३।५. * ' **फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्** ' ( ४।३।८।१८ ) । ' पुरुषार्थे तु निर्देशात् फलमात्रेयदर्शनात् । ' पुरुषार्थस्य नियमस्य अवश्यकल्पनीयप्रयोजनत्वात् अर्थवादोपात्तमेव फलमाश्रयणीयम् । **वा.** १।३।८।२७ पृ. २८३. * अध्ययनकरणिकायां भावनायां नियोगः प्रतीयमानः नियोज्यविशेषं विना अपर्यवस्यन् अश्रुतस्वर्गादिपरित्यागेन ' **फलमात्रेयो निर्देशात्०** ' इति **न्यायेन** घृतकुल्यादिकमवलम्बते । **सिद्धान्तचन्द्रिका.** १।१।१. * सत्यपि चार्थवादसरूपत्वे पारार्थ्यानवधारणात् ' दुर्वर्णोऽस्य भ्रातृव्यो भवति ' इत्यादीनां फलविधित्वं वक्ष्यति ' फलमात्रेयो निर्देशात् ' **इति न्यायात्** । वा. ३।४।८।२४. * फलं करणमन्त्रप्रकाश्यं कर्मोपयोगि ऋत्विग्गामि । **भा.** ३।८।१४। २८-२९. * फलं करणमन्त्रप्रकाश्यं याजमानम् । ३।८।१३।२६-२८. * फलं क्रतुना इतिकर्तव्यताथित्वलक्षणेन प्रकरणेन गृह्यते, तदवश्यं क्रत्वर्थं भवति । **रत्न.** ५।१।१।१.

⌛ **फलं चाकर्मसंनिधौ** । २।३।१२।२५ ॥

अनारभ्य किञ्चित् श्रूयते ' आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः, अग्नीषोमीयमेकादशकपालं निर्वपेद् ब्रह्मवर्चसकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः ' इति । तत्र संदिह्यते किं प्रकृतेष्वाग्नेयादिषु फलं विधीयते उत प्रकृतेभ्यः कर्मान्तरं इति । इदानीं यो नाम पूर्वोदाहरणे प्रकरणान्तरकृतं च कर्मभेदं मन्यते, न बुद्धिविच्छेदानुपादेयं प्रत्युपादनयोरेव, ( अत्र ग्रन्थः अविस्पष्टः । अत्र अनुमितः ग्रन्थः एवं स्यात्— यो नाम पूर्वोदाहरणे प्रकरणान्तरकृतमेव भेदं मन्यते, न बुद्धिविच्छेदानुपादेयवस्तुसंबन्धकृतम्, तं प्रति अनयोरेव- ) भेदकत्वप्रतिपादनार्थमिदमारभ्यते । तत्र पञ्चस्वनुपादेयेषु कालदेशयोरनुपादेयत्वं स्वभावादेव सुसंज्ञानम् । निमित्तस्यापि निमित्त-

त्वादेव । यस्मिन् देयनिष्पन्ने कर्मण्यस्य कार्यता तत् निमित्तम् (? यस्मिन् निष्पन्ने कर्मणीऽस्य कार्यता तत् निमित्तम्)। न च तदुपादेयं संभवति। तेनैतेषां तुल्यत्वात् पूर्वाधिकरणविषयत्वमेव। तत्र कालस्योदाहरणमुक्तमेव। देशस्यापि 'दक्षिणेन तीरेण सरस्वत्या आग्नेयेनाष्टाकपालेन' 'शम्यापरासमीयात्' इत्यादि। अत्र च यद्यप्यतिरात्रादिवत् यजिश्रवणं नास्ति, तथापि द्रव्यदेवतासंबन्धस्य यज्यनुमानव्यतिरेकेणापर्यवसानादग्निहोत्रादितुल्यत्वमेव इति कर्मान्तरत्वमेव। निमित्तस्यापि 'सत्रायावगूर्य विश्वजिता यजेत' 'साम्युत्थाने विश्वजित्' इत्याद्यपि पूर्वाधिकरण एव द्रष्टव्यम्। इह तु फलसंस्कार्ययोरेव वचनीयमस्तीति विचारविषयत्वम्। तत्र फलोदाहरणमुक्तमेव। तत् तुल्यन्यायतया संस्कार्यस्याप्यनुक्तमपि द्रष्टव्यम्। 'त्रैधातवीया दीक्षणीया भवति' इत्यादि।

अत्र अयं पूर्वपक्षिणोऽभिसंधिः। फलस्य तावत् सुव्यापारनिष्पाद्यत्वान्नानुपादेयत्वम्। संस्कार्यस्यापि यजमानादेः क्रियासिद्ध्यर्थमुपादेयत्वमेव। तेन एतयोरनुपादानाभावात् न कर्मभेदः। ननु उपादेयत्वेऽप्येतयोः प्राप्तत्वेनाविधेयत्वात् कर्मैवात्र विधातव्यम्। तच्च न संविहितमिति अग्निहोत्रादितुल्यमेवेति। मैवम्, अग्निहोत्रे खलु जुहोतीत्याख्यातेन नामासंबद्धः प्रयोगो विधीयते। नामधेयं च तत्परतन्त्रत्वान्न पूर्वकर्मोत्पत्त्युपस्थापकमिति कर्मान्तरत्वम्। इह तु पूर्वावगतस्य कर्मणो द्रव्यदेवतासंबन्धेनैवोपस्थापितत्वात् तदेव कर्मफलस्य काम्यमानत्वेन उपादेयस्य च प्राप्तत्वेनाविधेयत्वेऽपि तस्मिन् विधीयमानं कर्म न भिद्यते इति वैषम्यम्। एवं 'त्रैधातवीया दीक्षणीया भवति' इत्यत्रापि 'मासं दर्शपूर्णमासाभ्यां यजेत' इतिवत् यज्यश्रवणात् त्रैधातवीयानाम्नस्तत्परतन्त्रत्वाभावात् पूर्वसिद्धस्य स्थानस्थितत्रैधातवीयोपस्थापकत्वमेव। तथाच प्रकरणं बाधित्वा वाक्येन पूर्वसिद्धैव त्रैधातवीया संस्कार्यभूता यजमानसंस्कारत्वेनैव दीक्षणीया ... ('कार्ये' इति त्रुटितं कल्प्यते) विधीयते। तेन प्रकरणान्तरन्यायस्याप्यनुपादेयं प्रत्युपादानबुद्धिविच्छेदरूपस्याभावात् अत्राप्यकर्मान्तरत्वमेवेति। एवं प्राप्ते, अभिधीयते। भवेदेवं यदि देशकालयोरिव फलसंस्कार्ययोरपि स्वभावसिद्धं अनुपादेयत्वं ब्रूमः। किं तर्हि? समभिव्याहृतक्रियापेक्षम्। तथाहि अन्यार्थमनुत्पाद्यत्वं ह्यनुपादेयत्वम्। तत् देशकालनिमित्तानामेव परं स्वभावसिद्धम्। फलसंस्कार्ययोस्तु न समभिव्याहृतक्रियार्थमुत्पाद्यत्वम्। किं तर्हि? क्रियाया एव तदर्थमुत्पादनमिति तदपेक्षमनुपादेयत्वमेव। नापि पूर्वावगतस्य कर्मणो द्रव्यदेवतासंबन्धेनोपस्थापनम्। यतो ह्यनुमानद्वारेण द्रव्यदेवतासंबन्धस्य यागप्रतिपादकत्वम्। न चैकस्यैव यजिपदस्य पूर्वोत्पत्त्युपस्थाने फलं प्रति विनियोगे चैकदा करणत्वं संभवतीति फलसमभिव्याहृतस्य कर्मणः श्रुतस्येवानुमितस्यापि अग्निहोत्रादिवत् अनुपादेयं प्रत्युपादान......शब्दाभ्यां कर्मान्तरत्वमेव इति। ननु 'त्रैधातवीया दीक्षणीया भवति' इत्यत्र न यजिः श्रूयते। नापि द्रव्यदेवतासंबन्धेनानुमीयते, तदभावात् त्रैधातवीयापदस्य आख्यातपरतन्त्रत्वाभावात् अतिरात्रादिवाक्यवत् पूर्वकर्मोपस्थापकत्वमव्याहतमेवेति कथं कर्मान्तरत्वम्। उच्यते। स्यादेवं यदि सकृदुच्चरितत्रैधातवीयापदं पूर्वकर्मोपस्थापनं कार्यान्तरे च विनियोगं कर्तुमुत्सहते। तदत्र कार्यान्तरविनियोगस्य आवश्यकत्वात् अनपेक्षितपूर्वकर्मोपस्थापनं कर्मान्तरमेव विनियुक्तम्। अतिरात्रादिवाक्येषु विनियोजकोपस्थापकशब्दभेदोपपत्तिरिति प्रागेवैतदुक्तम्। एतच्च 'साम्युत्थाने विश्वजित्' इत्यत्रापि समानमिति सिद्धमत्रापि प्रकरणान्तरादेव कर्मभेद इति।

**प्रयोजनम्**—पूर्वपक्षे दर्शपूर्णमासप्रयुक्तेन अपवर्गसंबन्धद्वयमेव फलान्तरमिति न पृथगनुष्ठानम्। सिद्धान्ते तु दर्शपूर्णमासप्रयोगाद्बहिरेव आग्नेयधर्मानुष्ठानमिति। सूत्रं तु अकर्मसंनिधौ श्रूयमाणं फलं कर्मभेदं करोतीत्यर्थः। तौता.

**फलं चाकर्मसंनिधौ। २।३।१२।२५॥**

अनारभ्य श्रूयते 'आग्नेयमष्टाकपालं निर्वपेत् रुक्कामः' 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्यादि। अत्र प्राकृतेषु आग्नेयादिषु फलविशेषो विधीयते इति पूर्वपक्षे सिद्धान्तमाह। अकर्मसंनिधौ प्राकृताग्नेयादिकर्मसंनिध्यभावे प्रकरणादन्यत्र श्रूयमाणं फलं कर्मभेदकं भवति। अनुवादे सति न शक्येत फलं विधातुम्।

तस्मात् दार्शपौर्णमासिकात् कर्मान्तराण्येतानि इति सिद्धान्तः । एवं अश्वमेधे 'त्रैधातवीया दीक्षणीया' इति श्रूयते । तत्रापि संस्कार्यस्य यजमानस्य संस्कारार्थी त्रैधातवीया कर्मान्तरमेव । **के.**

* अग्निहोत्रवाक्यं हि केवलगुणविधिः इति पक्षे एव परं 'सायं जुहोति' 'प्रातर्जुहोति' इति वाक्ययोः अनुपादेयकालसंबन्धात् कर्मविधिसंभवः, न तु अग्निहोत्रवाक्यं कर्मविधिः इति पक्षे । तदा 'सायं जुहोति' 'प्रातर्जुहोति' इत्यनयोः सत्यपि अनुपादेयकालसंबन्धे न कर्मान्तरविधायकत्वं 'फलं चाकर्मसंनिधौ' इति न्यायस्य कर्मभेदप्रयोजकस्याभावात् । **सोम.** १।४।४ पृ. ६४ . * अनुपादेयत्वे 'फलं चाकर्मसंनिधौ' इति न्यायेन कर्मान्तरविधिरेव स्यात् नाभ्यासविधिः । 'शतोक्थ्यं भवति' इत्यादौ शताभ्यासस्य । ८।३।४. * फलं तावत् पुरुषस्योपकरोति न कर्मणः । उक्तं हि **'फलं च पुरुषार्थत्वात्' ( ३।१।३।५ ) इति । भा. ८।१।१३।२१.**

* **'फलं तु तत्प्रधानायाम्' ( ४।३।१।३ )** इति च कामपदोपबद्धायां ( चोदनायां ) तदर्थत्वं ( कामार्थत्वं ) वक्ष्यते । **वा. ३।४।५।१५ पृ. ९४६,** * अवघातादिवदेव **'फलं तु सह चेष्टया ( शब्दार्थोऽभावाद् विप्रयोगे स्यात्' ३।१।४।१० )** इत्येषोऽर्थः योजयितव्यः । ३।१।८।१७. * फलं देशः कालः निमित्तं संस्कार्यं इत्यनुपादेयपञ्चकम् । **बाल. पृ. ८८.**

**फलं न विधेयम् ॥**

**यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभागात् । ४।१।२।२ वर्णकं २ ॥**

**शा—** ( विचारशास्त्रे लक्षणकथनं नात्यन्तसंगतं इत्यनुशयेन भाष्यानुक्तमपि वर्णकान्तरमाह— ) अथवा, फलांशस्य किं विधिः प्रयोजको वेति चिन्त्यते । विधेयभावनाविशेषणत्वात् करणादिवत् फलस्यापि विधेयत्वशङ्का । रागतस्तु प्रवृत्तिसिद्धेः अभिधेयत्वम् ।

**सोम— प्रयोजनम्—** पूर्वपक्षे श्येनयागफलस्याभिचारस्य हिंसात्मकस्य विधेयत्वेन तत्र 'न हिंस्यात्' इति निषेधाप्रवृत्तिः । सिद्धान्ते तु तत्प्रवृत्तिरिति ।

**सूत्रार्थः—** यस्मिन् स्वर्गादौ अनुभूयमाने पुरुषस्य प्रीतिः तृप्तिर्भवति, तस्य लिप्सा अर्थलक्षणा स्वारसिकी इति यावत् । फलस्य प्रीत्या अविभागात् इति ।

**वि—** 'फलं विधेयं नो वा, ऽऽद्यो भावनांशत्वतोऽन्यवत् ।, न भाव्यांशो विधेयः स्याद् रागात् तत्र प्रवर्तना ॥'

**भाट्ट—** यद्वा नानेन लक्षणकरणम् । अपि तु फलस्यापीतरांशवत् भावनाविशेषणत्वाद्विधेयत्वम् । न ह्यन्यांशयोरपि विशेषणत्वातिरिक्तं विधेयत्वम् । यदि तु विशिष्टभावनाविधौ अर्थादितरांशयोर्विधिरुच्येत तत् फलस्याप्यविशिष्टम् । इति प्राप्ते, विशिष्टभावनाविधाने आर्थिकविशेषणविधेरावश्यकत्वात्, तस्य च यदंशे अप्राप्तिस्तदंशे एव कल्पनात्, फलस्य च रागप्राप्तत्वेन तत्कल्पने प्रमाणाभावादविधेयत्वम् । **प्रयोजनं** पूर्वपक्षे श्येनफलस्याभिचारस्य विधेयत्वान्निषेधाविषयत्वम् । सिद्धान्ते तु रागप्राप्तत्वात् 'न हिंस्यात्' इति निषेधविषयत्वम् । न च हिंसाशब्दस्य मरणानुकूलव्यापारवाचित्वात्, तस्य च वैरिमरणाख्याभिचारफलकश्येनरूपस्य विहितत्वात् कथं निषेधविषयत्वमिति वाच्यम् । 'अभिचरन् यजेत' इति सामानाधिकरण्यात् श्येनसमानकर्तृकत्वावगतेः अभिचारपदस्य मरणानुकूलश्येनकर्तृनिष्ठविषदानादिरूपव्यापारवाचित्वावगतेस्तस्यैव श्येनफलत्वावसायात् रागप्राप्तस्य निषेधविषयत्वोपपत्तेः । एवं चावश्यं श्येनेन विषदानाद्युत्पत्तिः तेन वैरिमरणम्, न तु श्येनेनैव साक्षादिति ध्येयम् । यत्तु वैरिनिष्ठो मरणाकूलव्यापार एवाभिचारपदार्थः, तत्र च यजमानस्य श्येनद्वारा प्रयोजककर्तृत्वमिति तस्य निषेधाविषयत्वेऽपि यजमानस्य पापोत्पत्तिरिति केनचिदुक्तम्, तत् श्येनस्यैव प्रयोजकव्यापारत्वात्, तस्य च विहितत्वात् तत्कर्तृत्वेन यजमाने पापोत्पत्त्यनुपपत्तेरुपेक्षितम् । यत्र तु 'वैरिमरणकामो यजेत' इति श्रुतम्, तत्र वैरिमरणानुकूलकर्तृनिष्ठलौकिकव्यापाराभावेऽपि वैरिमरणरूपपरानिष्टचिन्तनादेव पापमिति ध्येयम् । अभिचारार्थकर्मणस्तामसधर्मत्वस्मरणाद्वा तथा । प्रकृतेऽपि तथैवास्तु ।

शंकर— ' विधेयं न फलं मतम् । ' ३.

* फलं प्रति कर्माणि शेष इति जैमिनिः । भा. ३।१।३।४, * फलं प्रयोजकं गोदोहनस्य, न क्रतुः ।४।१। २।२ वर्णकं २. * फलं ' भद्रं ' इति मन्त्रोक्तं अध्वर्यु-यजमानोभयगामि ज्योतिष्टोमे उपरवेषु । वि. ३।८।१६. * फलं यागादिकर्मणां स्वर्गादिकम् । ६।१।१।१–३. * फलं साध्यं प्रधानम् । वि. १।४।६. * उद्दिश्यमानं हि सर्वत्र फलं भवति । वा. १।४।५।८. * कर्मप्रयोगेण फलं भाव्यते । कथं ज्ञायते ? प्राक् कृतात् कर्मणः फलं नास्ति । यदि भवेत् कर्मानर्थक्यं स्यात् । कर्मोत्तरकाले च अस्तीति श्रुतितोऽवगम्यते । यच्च प्राक् कर्मणो नास्ति, कर्मोत्तरकालं च भवति, तत् तेन कर्मणा भाव्यते । कृषिवत् । भा. ११।१।४।२०, * यस्यैव प्रधानकर्मफलं तस्यैवाऽऽनुषङ्गिकमपि भवितुमर्हति । ६।२।२।१०, * साङ्गाद्धि फलं श्रूयते प्रधानात्, न केवलात् । शब्दश्च साङ्गात् फलमाहेति वक्ष्यामः । ६।३।२।९. * स्वातन्त्र्येण ( अन्येच्छाधीनेच्छाया अविषयत्वेन अन्येच्छानधीनेच्छा-विषयत्वेन वा ) यन्मुख्यया वृत्त्या काम्यते तदेव काम-शब्दोपबन्धात् फलं प्रतीमः । विस्तरेण चैतत् ' असाधकं तु तादर्थ्यात् ' ( ६।१।१।२ ) इत्यत्र वक्ष्यामः । वा. १।४।२।२ पृ. ३३०. * फलेन व्याप्यमानः कर्ता भवति । टुप्. ६।३।८।२२. * ' फलेभ्यो याति ' इयं कर्मणि चतुर्थी कारकसुप्विभक्तिरूपा विनियोक्त्री श्रुतिः । बाल. पृ. ४४. * फलस्य अविधेयत्वम् । वा. २।२।११। २५ पृ. ५४१, वि. पृ. ४३७. * फलस्य अवेष्टि-यागेन संबन्धो विधीयते, न कर्मान्तरम् 'एतयाऽन्नाद्यकामं याजयेत् ' इति । वि. २।३।१३. * फलस्य उद्देश्य-तायाः स्वर्गकामाधिकरणसूत्रोक्तत्वात् भेदहेतुत्वं संभवति । सु. पृ. ९५८. * फलस्य कृत्स्नस्य भोक्तृत्वं सत्रे सर्वे-षाम् । ६।२।१।१–२. * फलस्य पुरुषार्थत्वं कामपदो-पादानादेव गम्यते । वा. ३।१।३।५. * फलस्य पुरुषार्थत्वव्यवहारो भाक्त इत्युक्तम् (३।१।३) । तदुद्देशेन विधीयमानयागादिस्तु भवति पुरुषार्थः । भाट्ट. ४।१।२. * फलस्य प्रकृतिगतस्य विकृतौ नातिदेशः । वि. ८।१।१३. * फलस्य प्रयोजनाकाररूपेण उद्देश्यत्वात् न विधेयत्वोपपत्तिः । सु. पृ. ९५८. * फलस्य यागं प्रति प्राधान्यात् तत्साधनं पुरुषमपि प्रति प्राधान्यम्, पुरुषं प्रति गुणत्वात् तदनुष्ठेये यागेऽपि गुणत्वम् । वा. ३।१।३।६. * फलस्य वृष्टिरूपस्य कामना यजमानस्यैव, ज्योतिष्टोमे सदोमाने । वि. ३।८।६. * विधित एव सर्वत्र फलस्य कर्तृगामित्वसिद्धिः । सोम. ६।२।२. * फलानां ऐहिका-मुष्मिकोभयार्थता । बिन्दु. ४।३।१०. * फले एकस्मिन् चोदितानां तन्त्रेण इतिकर्तव्यता भविष्यति । टुप्. ११।४। ५।१७. * फले पुरुषः सौन्दर्यं जानन् स्वयं रागादेव प्रवर्तते इति व्यर्थस्तत्र विधिः, यथा स्वर्गे । वि. ४।१।२ वर्णकं २. * फले यश्चोद्यते स इतिकर्तव्यतया संबध्य-मान इतिकर्तव्यतां प्रति प्रधानम् । टुप्. ७।१।१।२. * फले हि निसर्गसुन्दरे स्वयमेव लिप्सा भवति । तत्साधने तु दुःखाकारे स्वतस्तावत् द्वेष एव, अवश्यं च साधने प्रवर्तमानस्य तत्रैव रुच्या भवितव्यम् । शा. १।२।१ पृ. ७. * फले हि स्वतः प्रवृत्तिः । फलार्थि-तया च प्रधाने । प्रधानोपकारकतया चाङ्गेषु । ऋजु. पृ. ३१.

* फलापूर्वं येन साक्षात् स्वर्गादिफलं जन्यते तत् । वि. २।१।२.

* फलार्थं वर्जनीयस्यानुष्ठानं न दोषापादकम् । सु. पृ. १६६.

* फलार्थता पुरुषप्रयत्नस्य स्वभावतः । भा. ६।१।१।१.

* फलार्थत्वात् अत्यग्निष्टोमादिसंस्थानां क्रतुभाव-नान्तर्भावो नास्ति, अग्निष्टोमसंस्था तु क्रतुभावनान्तर्गता । शा. ५।३।१३.

## ⌛ फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यात् । ६।१।२।४॥

' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इत्यादि शास्त्रं सर्वाधिकारं सर्वस्य प्राणिजातस्य अधिकारो यस्मिन्, तादृशं स्यात् । प्राणिमात्रस्य सुखकामुकत्वात् कर्मणश्च सुखरूप-फलार्थत्वात् । योयः फलं कामयते तस्य सर्वस्य फल-साधनकर्मविधायके शास्त्रे अधिकारः स्यात् । तिरश्चां वनस्पतीनां देवानामृषीणां मनुष्याणामिति च । इति

पूर्वपक्षः। फलार्थित्वात् इति पाठे तु कर्मणः विधायकं शास्त्रं सर्वाधिकारं स्यात् सर्वस्य प्राणिमात्रस्य फलार्थित्वात् फलकामुकत्वात् इति सूत्रार्थः।

**कर्तुर्वा श्रुतिसंयोगात् विधिः कार्त्स्न्येन गम्यते। ५॥**

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन प्रत्याख्याय सिद्धान्तमाह। कार्त्स्न्येन कर्तुः साङ्गप्रधानानुष्ठानसमर्थस्य एव विधिः कर्मविधानं गम्यते। श्रुतिसंयोगात् उक्तेऽर्थे विधितात्पर्यात्। अथवा श्रुतिशब्दः कर्मणि क्तिन्नन्तः। तथा च श्रुतेन फलेन साङ्गस्य प्रधानस्यैव संयोगात् साधनत्वेन संबन्धात्। तस्मात् साङ्गप्रधानानुष्ठानसमर्थस्य कर्तुरेव शास्त्रे अधिकारः। न तिरश्चाम्, न वनस्पतीनाम्, न मनुष्याणामपि अन्धपङ्ग्वादीनाम्। **के.**

* **फलार्थ-स्वतन्त्रार्थवादकल्प्यो** विधिर्यथा— 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति। अत्र 'पर्णेन जुहूं कुर्यात्' इति विधिः कल्प्यः **बाल.** पृ. १२.

* **फलावगम्या** शब्दशक्तिः। **वा.** ३।४।४।१३ पृ. ९१४.

* **फलादेः** संनिधौ कर्मभेदकत्वाभावः (देशकालनिमित्तफलसंस्काराणाम्)। **भा.** २।३।१३।२६.

* **फलादीनां** अनतिदेशः। ८।१।१३।२०-२२.

* **फलादिसंबन्धेन** समुदायत्वापादनं भवति, यथा राजसूयेन स्वाराज्यकामः। **वा.** २।२।१।१ पृ. ४६३.

* **फलेच्छायां** वीतायां अवाप्ते वा फले समाप्तिनियमो दृश्यते वृष्टिकामेष्टयाम्, 'यदि वर्षेत् तावत्येव जुहुयात्, यदि न वर्षेत् श्वोभूते जुहुयात्' इति। **भा.** ४।३।९।२१.

* **फलोत्पत्तिः** निर्व्यापारात् जातिविशेषात् नावकल्पते। **वा.** ३।६।१।१.

* **फलोत्सर्गन्यायात्** (सर्वं फलं यजमानस्य इति) कर्तृत्सर्गन्यायो दुर्बलः प्रधानवाक्यगतात्मनेपदश्रुतेः। **परिमल.** ३।४।१३।४४ ब्रसू.

* **फलोद्देशपूर्वकस्य** अनुष्ठानस्य कादाचित्कत्वेऽपि तन्निरपेक्षानुष्ठानस्य नित्यता उपपन्ना। **सु.** पृ. ८७३.

* **फलोपहितं** कारणत्वं सहकार्यन्तरसाहित्यम्। **मणि.** पृ. ४५.

* **फलैक्यं** सौभरनिधनयोः (सौभरं साम)। अत्र निधनविशेषनियमविधिः। २।२।१३।२८-२९.

* **फलकल्पना** विश्वजिति अन्यथानुपपत्त्या। **टुप्.** ७।१।१।२. * **फलकल्पनायाः** प्रकरणसंबन्धकल्पना ज्यायसी। **वा.** ३।३।९।१८. * **गुणे फलकल्पनायां** यजतेर्न विवक्षा। **भा.** १।४।२।३.

* **फलकामनातः** विशेषग्रहणं काम्याग्निहोत्रेण नित्याग्निहोत्रस्य प्रसङ्गे। **बाल.** पृ. १४७.

* कर्मगोचरे अल्पस्य कर्मणः परिमाणसामान्येन **फलगोचरे** अल्पमेवोपतिष्ठते, मध्यमस्य मध्यमम्, महतो महत् इति स्थानमेव विनियोजकम्। **वा.**

* **फलचमसः** अनित्यः, ब्राह्मणपक्षे विधानाभावात् (राजन्यवैश्ययोरेव विधानात्)। **वा.** ३।६।१३।३६. * फलचमसः इज्याविकारः, न भक्षविकारः। भक्षस्तु फलचमसस्य अर्थादेव स्यात्। **भा.** ३।५।१९।४७-५१.

**फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात्। ३।५।१८।४७॥**

ज्योतिष्टोमे श्रूयते 'यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेत् न्यग्रोधस्तिमिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्' इति। तत्र संदेहः किं फलचमसः सोमभक्षविकारः उत इज्याविकारः इति। प्रसक्तसोमभक्षणानुप्रसङ्गेन इदानीं फलचमसोऽपि भक्षणसंबन्धेन श्रूयमाणो विचार्यते।

पूर्वपक्षस्तु, सोमस्य तावत् उभयसंबन्धः प्रतीयते यागसंबन्धो भक्षणसंबन्धश्च। तत्र तावद्यागसंबद्धस्य न सोमस्यायं फलचमसो विकारः, यागसंबन्धित्वेन अस्याश्रवणात्। किं तर्हि? यदि सोमं बिभक्षयिषेत् ततः फलचमसमस्मै भक्षं प्रयच्छेदिति श्रुतेर्भक्षणसंबन्धिसोमविकार एव। तथाहि, पशौ श्रूयते 'त्र्यङ्गैः स्विष्टकृतं यजति' इति। हृदयाद्यैकादशभिरङ्गैः प्रधानभूतः पशुयागो निर्वर्तितः। प्रकृतौ च सांनाय्ययागशेषस्यैव

स्विष्टकृतः प्रतिपादितत्वात् अत्राप्येकादशानां अवयवानां मध्ये यैः कैश्चित्त्रिभिरङ्गैरिष्टशेषैः स्विष्टकृद्यागः कर्तव्य इति पूर्वपक्षयित्वा, यागसंबन्धापेक्षस्य त्रित्वस्य अङ्गैः सह समासासंभवादेकादशसु मध्ये त्रयाणां अवान्तरसामान्यमङ्गानां निर्धारयितुमशक्तेर्न यागशेषाणामुपादानम्। किं तर्हि? 'दोष्णो दक्षिणस्य पूर्वार्धादग्नये समवद्यति, गुदस्य मध्यतः, श्रोण्या जघनतः' इत्येकेनाप्युद्देशेन संबन्धात् त्रीण्यवधारितानि। तैरेव विशेषैः स्विष्टकृद्यागः कर्तव्य इति सिद्धान्तितम्। तेन यथा शरैर्बर्हिषां विकारः, तथा इहापि इज्याशेषाणामनिज्याशेषैः विकार इति। तदुक्तं सूत्रकृता 'त्र्यङ्गैर्वा शरवद्विकारः स्यात्' (१०।७।३।११) इति। अतोऽत्राप्यनिज्याशेषेण फलचमसेनेज्याशेषस्य सोमस्य विकारो न विरोत्स्यते। एवं च सति उत्पत्तिशिष्टः सोमः प्रधानकर्मणि यागे बाधितो न भविष्यति। 'न सोमम्' इति अर्थप्राप्तभक्षणगतसोमनिवृत्त्यनुवादेनैव बाधात् अत्राप्युपपत्स्यते इति।

ये त्वारादुपकारकं फलचमससाधनं भक्षणं विधीयत इति पूर्वपक्षयन्ति, तैश्च पूर्वपक्षवार्तिकाक्षराणि अनाकलितानि। न चायं पक्षो युक्त्याऽपि संगच्छते, अनेकदोषदुष्टत्वात्। तथाहि, फलचमसान्तं भक्षं प्रयच्छेदिति विनियोगभङ्गि (?) न भक्षणं कुर्यादिति। तथा सोमभक्षणस्य फलचमसेनातुल्यकार्यत्वेन अनिवर्तितत्वान्न सोममिति नायमर्थप्राप्तानुवादः, निषेधपरत्वे च वाक्यभेदः। विहितसोमभक्षणप्रतिषेधाद्वा अष्टदोषदुष्टविकल्पापत्तिः। तथा अदृष्टकल्पनादयश्च दोषा अप्यभिहिताः। सिद्धान्तसमये पक्षविकल्पमात्रेण यच्चिन्तितं तदेवात्र तैः पूर्वपक्षीकृतं इत्युपेक्षणीयमेवेति। तस्मात् भक्षश्रुतिसंयोगात् राजन्यवैश्यनिमित्तकः फलचमसो भक्षविकार इति। **एवं प्राप्ते, अभिधीयते।**

**इज्याविकारो वा संस्कारस्य तदर्थत्वात्। ४८॥**

अयमभिप्रायः। भवेदेवं यदि पूर्वपक्षे फलचमसः प्रतिपत्तिसंबन्धार्हो भवेत्। द्विविधं हि द्रव्यमाकीर्णकरमिति प्रतिपत्तिमपेक्षते, कृतप्रयोजनत्वात् यथा सोमरसः पुरोडाशो वा, प्रयोजनार्थोपादाननान्तरीयकोपादानत्वात् यथा 'त्र्यङ्गैः स्विष्टकृतं यजति' इत्यादिषु त्र्यङ्गादि। न च पूर्वपक्षे फलचमसः कृतप्रयोजनः। नापि प्रयोजनार्थोपादाननान्तरीयकोपादान इति प्रतिपत्त्यपेक्षाभावान्न प्रतिपत्तिसंबन्धो घटते। त्र्यङ्गस्य तु पशुयागार्थोपात्तपशुनान्तरीयकोपादानस्य आकीर्णकरत्वेन प्रतिपत्त्यपेक्षायां वचनाभावे पुरुषेच्छाधीना या काचित् प्रतिपत्तिर्भवेत्। वचनसद्भावे तु यथावचनमेव प्रतिपत्तिर्भवति। तेन यागीयद्रव्यसंस्कारभक्षणसंबन्धान्यथानुपपत्त्या फलचमसस्य सोमवत् अवश्यं यागसाधनत्वं कल्पनीयम्। तत्रापि 'स यदि सोमं बिभक्षयिषेत्' इति यजमानसंबन्धिभक्षणकीर्तनात् यावत् त्र्यङ्गेऽनुपयुज्यमानो यजमानभक्षणसंस्कारः प्रतिपद्येत, तावतैव यज्ञभागेनार्थापत्त्या संबन्ध इति यजमानचमस एव सोमं विकरोति, न ग्रहचमसान्तरेष्विति स्थितम्। नैमित्तिकत्वादुत्पत्तिशिष्टसोमबाधोऽपि न दोषः। एवं च सति क्रयाभिषवादिसंस्कृतेनैव यष्टव्यमित्यन्यत्र पादे प्रतिपादनीयम्। एवं 'यदि सोमं न विन्देत् पूतीकानभिषुणुयात्' इत्यत्रापि सोमाभावे सोमसंबन्धिनोऽभिषवरूपसंस्कारस्य पूतीकेषु दर्शनात् पूतीकानां यागसाधनत्वमेतेनैव न्यायेनावगन्तव्यम्।

**प्रयोजनम्**— पूर्वपक्षे यजमानस्य चमसेऽपि सोमेनैव यष्टव्यम्। भक्षणमात्रं तु फलचमसस्य। सिद्धान्ते तु फलचमसेनैव यष्टव्यम्। सूत्रं तु इज्यायां फलचमसेन सोमस्य विकारेण भक्षणमात्रं संस्कारस्य भक्षणरूपस्य तदर्थत्वात् यागसाधनद्रव्यार्थत्वात् इति। **तौता.**

**फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात्। ३।५।१९।४७॥**

ज्योतिष्टोमे श्रूयते 'स (अध्वर्युः) यदि राजन्यं वैश्यं वा याजयेत्, स (राजन्यो वैश्यो वा) यदि सोमं बिभक्षयिषेत् न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत् न सोमम्' इति। बिभक्षयिषेत् भक्षयितुमिच्छेत्। न्यग्रोधानां स्तिभीः अङ्कुरान् (न्यग्रोधफलानि वा)। अनेन वाक्येन राजन्यस्य वैश्यस्य वा फलचमस उक्तः। (फलचमसपदार्थः तत्प्रयोगश्च 'फलचमसः, स्वरूपं प्रयोगश्च' इति

बिन्दौ द्रष्टव्यः । ) स किं भक्षविकारः उत इज्याविकारः, किं फलचमसं भक्षयेदित्यर्थः उत फलचमसेन यजेत इत्यर्थः इति संदेहे पूर्वपक्षमाह सूत्रम् । नैमित्तिकः राजन्येन वैश्येन वा निमित्तेन निर्वृत्तः फलचमसः भक्षस्यैव विकारः स्यात् नेज्यायाः । बिभक्षयिषेत् इति भक्षश्रुतिसंयोगात्, 'तमस्मै भक्षं प्रयच्छेत्' इति च भक्षपदश्रुतिसंयोगात् ।

**इज्याविकारो वा संस्कारस्य तदर्थत्वात् । ४८ ॥**

सिद्धान्तप्रतिपादनार्थं सूत्रम् । वाशब्दः भक्षविकारत्वनिवृत्त्यर्थः । फलचमसः प्लाक्ष– आश्वत्थ– औदुम्बरफलैरभिषुतैः युक्तः चमसः इज्याविकार एव । यागार्थः सः, न केवलं भक्षार्थः । संस्कारस्य क्रयाभिषवादिसंस्कारस्य तदर्थत्वात् यागार्थत्वात् । सोमचमसेषु तथा दर्शनात् । तस्मात् यागार्थः फलचमसः ।

**होमात् । ४९ ॥**

ज्योतिष्टोमे राजन्यस्य वैश्यस्य वा यजमानस्य सतः यजमानचमसः न्यग्रोधफलचमसो भवति न सोमचमसः । स चायं फलचमसो यागार्थ एव विधीयते, भक्षस्तु शेषस्य वाक्यान्तरेण प्राप्तः स्यात् इति सिद्धान्ते हेत्वन्तरं वक्तुं सूत्रमिदम् । 'यदा अन्यांश्चमसान् जुह्वति, अथैतस्य दर्भतरुणकेन उपहत्य जुहोति' इति होमात् होमस्य उक्तत्वात् यागविकार एव फलचमसः ।

**चमसैश्च तुल्यकालत्वात् । ५० ॥**

सिद्धान्ते हेत्वन्तरं वक्तुं सूत्रमिदम् । 'यदा अन्यांश्चमसान् उन्नयन्ति अथैनं चमसमुन्नयति' इति वचनेन इतरैः सोमचमसैः तुल्यकालत्वं फलचमसस्योक्तम् । यदा सोमचमसानां उन्नयनं क्रियते तदैव फलचमसस्यापि उन्नयनमुक्तम् । उन्नयनं नाम अन्यपात्रस्थितात् सोमरसस्य पिष्टानां दधिमिश्रितानां न्यग्रोधफलानां च चमसे होमार्थं ग्रहणम् । ततश्च यागार्थ एव फलचमसः । तुल्यः कालो यस्य स तुल्यकालः फलचमसः । तस्य भावः, तस्मात् ।

**लिङ्गदर्शनाच्च । ५१ ॥**

सिद्धान्ते हेत्वन्तरं वक्तुं सूत्रमिदम् । 'तमस्मै भक्षं प्रयच्छेत् न सोमम्' इति वाक्ये यागार्थस्य सतः सोमस्य ऋत्विजामिव राजन्यवैश्ययजमानस्यापि प्राप्तस्य भक्षस्य यः सिद्धो निषेधः तस्यानुवादः कुतो दृश्यते । तदिदं यागार्थत्वसाधकस्य लिङ्गस्य दर्शनम् । अस्मात् लिङ्गदर्शनाच्च सोमस्येव फलचमसस्यापि यागार्थत्वं सिध्यति । तस्मात् इज्याविकारः फलचमसो न भक्षविकारः । के.

* फलचमसः राजन्यस्य वैश्यस्य च ज्योतिष्टोमे, न सोमचमसः । 'स यदि राजन्यं वा वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधनि उन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्' इति । फलचमसः सोमचमसस्य विकारः । भा. ३।६। १३।३६. * फलचमसः, स्वरूपं प्रयोगश्च । **ऐतरेय ब्राह्मणे** — औदुम्बराणि आश्वत्थानि प्लाक्षाणि च फलानि 'एतानि अस्य (क्षत्रियादेरर्थे) पुरस्तात् (सोमक्रयात् प्रागेव) उपक्लृप्तानि भवन्ति, अथ सोमं राजानं क्रीणन्ति, ते (ऋत्विजः) राज्ञ एव आवृता (सोमस्य एव पद्धत्या) औपवसथात् (दिनात् पूर्वे) प्रतिवेशैश्चरन्ति (पूजां नैवेद्यसमर्पणं च कुर्वन्ति)' । ३५।६।१–४ । 'तद्यत्र एतान् (सोमस्य) चमसान् उन्नयेयुः तदेतं यजमानचमसं उन्नयेत्, तस्मिन् (फलचमसे) द्वे दर्भतरुणके (द्वौ दृढौ दर्भौ) प्रास्ते स्याताम् (एकं प्रास्य ततो द्वितीयं इति रीत्या) तयोः (मध्ये) वषट्कृते अन्तःपरिधि पूर्वं (प्रास्तं दर्भं) (प्रास्येत्) 'दधिक्राव्णो अकारिषं' इत्येतया ऋचा सस्वाहाकारया, अनुवषट्कृते अपरं (चमसे पश्चात् प्रास्तं दर्भं) 'आ दधिक्राः शवसा पञ्च कृष्टीः' इति । ३५। ७।१। 'तद्यत्रैतान् चमसान् (सोमचमसान् भक्षार्थं) आहरेयुः, तदेतं यजमानचमसमाहरेत्, तान् यत्र उद्गृह्णीयुः तदेनं उपोद्गृह्णीयात् । तद्यदा इळां होता उपह्वयेत यदा चमसं भक्षयेत् (होता सोमचमसं,) अथ एनं (फलचमसं यजमानः) एतया भक्षयेत्' 'यदत्र शिष्टं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः । इदं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामि' इति । ३५।७।२–३ । 'शं न एधि हृदे पीतः प्र ण आयुर्जीवसे सोम तारीः' इति आत्मनः प्रत्यभिमर्शः । ५ । 'आप्यायस्व समेतु ते, सं ते पयांसि समु यन्तु वाजाः'

इति (द्वाभ्यां) चमसमाप्याययति अभिरूपाभ्याम्' । ७ । 'तद्यत्र एतान् चमसान् सादयेयुः, तदेतं यजमानचमसं सादयेत्, तान् यत्र प्रकम्पयेयुः तदेनमनु प्रकम्पयेत्, अथैनमाहृतं भक्षयेत् 'नराशंसपीतस्य देव सोम ते मतिविद ऊमैः पितृभिर्भक्षितस्य भक्षयामि' इति प्रातःसवने नाराशंसो भक्षः, 'ऊर्वैः' इति माध्यंदिने, 'काव्यैः' इति तृतीयसवने' (ऊहः कर्तव्यः) । ३५।८।१ । 'समान आत्मनः प्रत्यभिमर्शः, समानमाप्यायनं चमसस्य' । ५ । इति । अथ सत्याषाढस्तु आह– 'न वैश्यराजन्ययोः सोमभक्षणं विद्यते ८।७।४२ । यदि अब्राह्मणः सोमं पिपासेत् न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधनि उन्मृज्य यदन्यांश्चमसानुन्नयति अथैतं यजमानचमसं अत उन्नयति । यदन्यांश्चमसान् जुह्वति अथैतस्य दर्भतरुणेन उपहत्य अन्तःपरिधि आहवनीयादङ्गारं निर्वर्त्य 'अहं त्वदस्मि' इति जुहोति । यदन्यांश्चमसान् भक्षयन्ति अथैतस्य चमसस्य यजमानो भक्षयति' ८।७।४३ । इति । * फलस्य न्यग्रोधमुकुलरूपस्य पिष्टं चम्यते भक्ष्यते यत्र स फलचमसः । वि. ३।६।१३. * फलचमसेन सोमस्य अगत्या बाधः । सु. पृ. ८८३. * फलचमसस्य सोमधर्माः स्युः, सोमविकारत्वात् । ३।६।१३।३६. * फलचमसस्य स्थानापत्त्या सोमधर्मलाभः । वक्ष्यति हि 'नैमित्तिकमतुल्यत्वादसमानविधानं स्यात्' (३।६।१३।३७) 'धर्मस्यार्थकृतत्वात्' (९।२।१२।४०) इति च । वा. ३।५।२०।५३. * फलचमसस्य होमः दर्भतरुणकेन क्रियते 'दर्भतरुणकेनोपहत्य जुहोति' इति । वि. ३।५।१९. * फलचमसे ऊहोऽपि कर्तव्य इत्युक्तं भवति । 'इन्द्राय त्वा वसुमते सोमं गृह्णामि' इति सोमपदस्थाने फलचमसपदप्रक्षेपः कर्तव्यो भवति । वा. ३।६।१३।३६ टिप्पणी च. * फलचमसे गुणकामानां अप्रवृत्तिः । भा. ३।६।१३।३६.

**फलचमसाधिकरणम् ॥**

**फलचमसो नैमित्तिको भक्षविकारः, श्रुतिसंयोगात् । ३।५।१९।४७॥**

**भाष्यम्**– ज्योतिष्टोमे श्रूयते 'स यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्' इति । तत्र संदेहः किं फलचमसो भक्षविकारः, उत इज्याविकार इति । किं फलचमसं भक्षयेदित्यर्थः, उत फलचमसेन यजेतेति । किं प्राप्तम्? फलचमसो नैमित्तिको भक्षविकारः । भक्षणेन हि श्रुतेनैकवाक्यता भवतीति । तमस्मै भक्षं प्रयच्छेदिति, न तेन यजेतेतिशब्दोऽस्ति । तस्माद्भक्षविकारः ।

**वा**— योऽयं ज्योतिष्टोमे राजन्येन वैश्येन च निमित्तेन नैमित्तिकः फलचमसः श्रूयते, न्यग्रोधस्तिभीः न्यग्रोधाङ्कुरान् न्यग्रोधफलानि वा, ताः संपिष्य दधनि उन्मृज्य तमस्मै भक्षं प्रयच्छेत्, इति । स किं भक्षविकारः, उतेज्याविकार इति संदेहे, बिभक्षयिषेदिति श्रुतिसंयोगात् तमिति प्रकृतग्राहिश्रुतिसंयोगात् पुनरपि भक्षश्रुतिसंयोगात्, आनन्तर्यश्रुतेः समानवाक्योपादानाच्च भक्षो भूत्वा तत्समानस्थानं भक्षगतमेव सोमं विकुर्यान्न यागगतम् । नह्यन्यत्र श्रुतं अन्यविषयस्य बाधने समर्थम् । यागसंबन्धश्चास्य प्रकरणाद्विज्ञायते । तच्च दुर्बलम् । एवं च उत्पत्तिवाक्यशिष्टः सोमो यागादर्थकर्मणो न निवर्तिष्यते । प्रतिपत्तिबाधे तु विनाऽपि तावत् श्रुत्या मन्दोऽपराधः किमुत श्रुतावेव सत्याम् । तस्मात् भक्षविकारः ।

**इज्याविकारो वा, संस्कारस्य तदर्थत्वात् । ४८॥**

**भाष्यम्**— इज्याविकारो वा फलचमसः । फलचमसेन यजेतेत्यर्थः । कथम्? यदेतद्भक्षणम्, एतत् सोमसंस्कारार्थम् । फलचमसस्यापि यदि भक्षणं फलचमससंस्कारार्थम्, फलचमसस्य अन्यत्रानुपयोगात् अनर्थकम् । अथ भक्षणं प्रधानं तथा 'न सोमम्' इत्यनुवादो नावकल्पते । यदि तु इज्याविकारो भवेत् ततः फलचमससंस्कारोऽवकल्पते । तस्मादिज्याविकारः । आह । कथं यजिसंबन्धे असति, इज्याविकारो भविष्यतीति । उच्यते । अस्ति यजिसंबन्धः । कथमिति? 'यदि राजन्यं वैश्यं वा याजयेत्, न्यग्रोधस्तिभीः संपिष्य तमस्मै भक्षं प्रयच्छेत्' याजयितुमिति गम्यते । भक्षसंबन्धे हि न पूर्वमुत्तरेण संबध्यते । यदि सोमं भक्षणेन संस्कर्तुमिच्छेत्, न्यग्रोधस्तिभीः संस्कुर्यादिति । तस्मान्न

भक्षणसंबन्धः। यागो हि प्रकृतोऽस्ति, तेन सह संभन्त्स्यते, न दोषो भविष्यति। ननु 'तमस्मै भक्षं प्रयच्छेत्' इति वचनात् भक्षसाधनमिति गम्यते, न यागसाधनमिति, भक्षशब्दानन्तर्यात्। उच्यते। श्रूयमाणे संबन्धे अनर्थकमिति कृत्वा प्रकृतसंबन्धः इत्युच्यते। कथं तु भक्षसंबन्धः इति। यद्धि यागद्रव्यम्, भक्षयितव्यं तच्चोदकेन भवति, तस्मात् भक्षसंबन्धं लभते, भक्षसंबन्धेन च यागसंबन्धः एव लक्ष्यते। यदि तेन इज्यते ततः स भक्षो भवति। तस्मात् भक्षवचनात् सुतरां तेनेज्यते इति गम्यते। सैषा व्यवधारणकल्पना। तमस्मै भक्षं प्रयच्छेत् तमस्मै भक्षं कुर्यादित्यर्थः। यथा स भक्षो भवति, तथा कुर्यादिति। यदि च तेन इज्यते, ततोऽयं भक्षो भवति। तस्मात्तेन यष्टव्यमिति।

वा— लिङ्गदर्शनेन तावत् भाष्यकार उपक्रमते। सति हि इज्याविकारत्वे सौमिकभक्षसंबन्धोऽस्य लभ्यते। ततश्च तत्स्थानापत्त्या निराकृतत्वात्। 'न गिरा गिरेति ब्रूयात्' इतिवत् 'न सोमम्' इत्यनुवादः सेत्स्यति। लिङ्गं तु एतत् नासत्यां यागसंबन्धप्राप्तौ साधकमिति मन्यमान आह 'कथमसति यजिसंबन्धे' तद्विकारत्वमिति। इतरस्तु दर्शयति, 'स यदि राजन्यं वैश्यं वा याजयेत्, न्यग्रोधस्तिभीराहृत्य, ताः संपिष्य, दधन्युन्मृज्य, ताभिर्याजयेत्' इति संबध्यते। नह्यवश्यं परत्रैव श्रुतेन आख्यातेन सह संबन्धो भवति। न च पाठापेक्षया पूर्वकालत्वं क्त्वाशब्देनोच्यते। भवति हि गच्छति भुक्त्वेत्यपि गमनमपेक्ष्य भोजनस्य पूर्वकालत्वम्। अतो वाक्येनैव यजिसंबन्धः। सत्यपि याजयतिसंबन्धे यजिसंबन्धः एवायं द्रष्टव्यः 'ग्रामकामं याजयेत्' इतिवत्। अङ्गकर्तुः प्राप्तत्वादेव निष्फलत्वेन चानुपदेश्यत्वात्। एवं च सति 'तमस्मै भक्षम्' इति 'न सोमम्' इति च उभयमपि प्राप्तमनुवदिष्यते।

**न त्वेषा योजनाऽवकल्पते। कथम्? 'व्यवधानात् तमित्यस्य बाधादविधिशक्तितः। निमित्तत्वोपयुक्तस्य पुनश्च विधिकल्पना॥ तृतीयार्थश्च कल्प्यः स्याद् द्वितीयार्थस्य बाधनम्। समस्तसोमबाधश्च यजिनिष्कर्षकल्पना॥'** 'स यदि सोमं बिभक्षयिषेत्' इत्येतद्व्यवधाने सति याजयतिसंबन्धः कल्पयितव्यः, 'तमस्मै' इति च सर्वनाम्नः श्रुत्यैव प्रकृतग्रहणसामर्थ्यमानन्तर्यं च बाध्येयाताम्। 'स यदि राजन्यं वैश्यं वा याजयेत्' इत्यस्य यदिशब्दसंबन्धात् उपहतविधिशक्तिर्न फलचमससंयोगं विधत्ते। निमित्तत्वेन चोपयोगे सति निराकाङ्क्षीभूतस्य सतः पुनरत्यन्तविपरीतं विधित्वं कल्पनीयम्। ताभिर्याजयेदिति च। अत्यन्ताश्रुततृतीयार्थः कल्प्येत। तमस्मै इति च प्राधान्येन निर्देशः अवगम्यमानः अपह्नूयेत। प्रयच्छेदिति च अनन्यपरे विस्पष्टे विधौ सति नानुवादत्वाङ्गीकरणं युक्तम्। न च याजयतिशब्दात् उपसर्जनीभूतं यजिं निष्कृष्य फलचमससंबन्धो युक्तः। सर्वेण च ज्योतिष्टोमेन संबन्धात् समस्तं सोमं बाधित्वा तेनैव यागः क्रियेत, सर्वं विरुद्धं चैतत्। भाष्यकारोऽपि 'याजयितुमिति गम्यते' इत्याह, न याजयेदित्यनेन संबन्धम्। सूत्रकारोऽपि च 'संस्कारस्य तदर्थत्वात्' इति हेतुमाह, न याजयतिसंबन्धादिति। तस्मादयुक्तमेतत्।

अन्ये तु— यागो हि प्रकृतोऽस्ति, इत्यतः वचनात् यागसंबन्धानवक्लृप्तिं मन्यमानाः 'तमस्मै प्रयच्छेत्', किमर्थम्? प्रकरणात् 'याजयितुम्' इति गम्यते — इति वर्णयन्ति। तेषामपि तु समस्तसोमविकारत्वं तच्छब्दोपनीतस्ववाक्यावगतभक्षसंबन्धबाधः, 'तं' इति च पुंलिङ्गनिर्देशो न घटते। भक्ष्यव्यवहितेन च 'प्रयच्छेत्' इति आख्यातेन संबन्धः। तस्मात् भक्षसंबन्धापरित्यागेनैव सिद्धान्तोऽपि व्याख्येयः। कथम्? **'अपूर्वो वैष चोद्येत भक्षः प्रकृत एव वा। संस्कारोऽर्थक्रिया (आराादुपकारिका) न स्यात् संस्कारो यागसाधनम्॥'** यदि तावत् अपूर्व एव भक्षः चोद्यते, ततोऽपि आरादुपकारकत्वं न भवति, अदृष्टकल्पनात् प्रकरणविनियोगविप्रकर्षात् असंबद्धोपकारित्वाच्च। तथा 'तं प्रयच्छेत्' इति द्वितीयया विस्पष्टं संस्कार्यत्वं गम्यते। अन्यथा हि तेनेति प्राप्नोति। तस्मात् संस्कारः। संस्कारस्य चैष स्वभावो यदुपयुक्तं उपयोक्ष्यमाणं वा द्रव्यमवलम्बते। तत्रापि भक्षितस्य पुनरुपयोगासंभवात् उपयुक्तसंस्कारत्वमेव ज्ञायते।

तेन फलचमसः संस्कारभूतं भक्षमुपसर्पन्नेव शक्यो नियोक्तुम्, 'यदि क्वचिदुपयोगं गच्छसि, ततो भक्षणेन संस्क्रियसे नान्यथा' इति। स चोपयुज्यमानत्वं प्रार्थयमानः प्रकरणात् यागोपयोगित्वं प्रतिपद्यते। तत्रापि यावति अनुपयुज्यमानो यजमानभक्षसंस्कारार्थत्वं न प्रतिपद्यते, तावतैव यज्ञभागेन अर्थापत्त्या संबध्यते इत्यवधारणात् यजमानचमसाभ्यासेनैव एकेन संबध्यते। नहि ग्रहचमसान्तरेषु अनुपयुज्यमानस्यास्य यजमानभक्षत्वं अनुपपन्नम्। अतः सोमोऽपि अनुग्रहीष्यते। यद्वा ज्योतिष्टोमप्रकरणेन संबद्धोऽयं भक्षशब्दः उच्चार्यमाणः प्रकृतं सोमभक्षमेव अवलम्बते। स च यागोपयुक्तद्रव्यशेषसंस्कारत्वेन प्रज्ञातः इति फलचमसमपि तादृशमेव संस्कर्तुं शक्नोति। न तु असौ इदानीं अन्यप्रयोजनः शक्यः कल्पयितुम्। न च तस्य कर्मान्तरत्वे किञ्चित् शब्दान्तरादिकारणमस्ति। अपि च 'स यदि सोमं बिभक्षयिषेत्' इति स्ववाक्योपात्तेनैव सोमभक्षणेन संबन्धो विज्ञायते। अन्यथा हि तदुपादानं व्यर्थमेव स्यात्। न च 'न सोमम्' इत्यनुवादः अवकल्पते। यदि भक्षान्तरमेवेदं आरात् उपकारकं चोद्येत, ततः समानकार्यत्वाभावात् नैव सोमं निवर्तयेत्। अनिवर्तिते च तस्मिन् न प्रतिषेधानुवादः स्यात्। न च विधिर्युक्तः, वाक्यभेद-अनेकादृष्टकल्पनाप्रसङ्गात्। असंबद्धं च वाक्यं भवेत्। यदि सोमं भक्षणेन संस्कर्तुमिच्छेत्, ततः फलचमसभक्षणं आरादुपकारकं कुर्यात्, फलचमसं वा संस्कुर्यात् इति। यदा तु अयमर्थो गृह्यते 'येन भक्षणेन यथाभूतं सोमं संस्कर्तुमिच्छेत्, तेन तथाभूतमेव फलचमसं संस्कुर्यात्' इति, तदा अर्थापत्त्या यजमानचमसयागाभ्यां असंबन्धः कृतो भवति। तस्मात् इज्यायामयं सोमविकारः इति सिद्धम्।

'सैषा व्यवधारणकल्पना' इति (भाष्यम्)। यथैव अश्वप्रतिग्रहेष्ट्यां 'यावतोऽश्वान् प्रतिगृह्णीयात्' इति श्रुते प्रतिग्राहयेत् इति व्यवधार्य कल्पितम्, तथैवात्र 'भक्षं प्रयच्छेत्' इति श्रुते यागसाधनं प्रयच्छेत् इति कल्प्यते। एतेन 'पूतीकानभिषुणुयात्' इत्यादीनि व्याख्यातानि।

**होमात्। ४९॥**

**भाष्यम्**-- होमविशेषवचनं भवति 'यदा अन्यान् चमसान् जुह्वति, अथैतस्य (फलचमसस्य) दर्भतरुणकेन (किञ्चित्स्थूलेन दृढेन प्रादेशमात्रेण दर्भेण) उपहत्य जुहोति' इति। इज्याविकारे सति दर्भतरुणकेन इति जुहोतौ गुणवचनमवकल्पते। तस्मादपि इज्याविकारः।

**वा**-- होमानुवादेन दर्भतरुणकविधिः इज्याविकारत्वे अवकल्पते।

**चमसैश्च तुल्यकालत्वात्। ५०॥**

**भाष्यम्**-- 'यदाऽन्यांश्चमसानुन्नयन्ति, अथैनं चमसमुन्नयन्ति' इति। इज्याविकारे सति, उन्नयनदर्शनं युज्यते, न भक्षविकारे। तस्मादपि इज्याविकारः।

**वा**— संदिग्धयागसाधनोन्नयनैकवाक्यता चैतत्तुल्यत्वे अवकल्पते, नान्यथात्वे।

**लिङ्गदर्शनाच्च। ५१॥**

**भाष्यम्**— इतश्च पश्यामः इज्याविकारः इति। कुतः? लिङ्गदर्शनात्। किं लिङ्गं भवति? सोमप्रतिषेधानुवादः। 'तस्मै भक्षं प्रयच्छेन्न सोमम्' इति। इज्याविकारे सति सोमो न भक्ष्यते। तस्मात् पश्यामः इज्याविकारः इति।

**वा**— सोमप्रतिषेधानुवादश्च लिङ्गमिति व्याख्यातम्।

**शा**-- '**यागार्थद्रव्यसंस्काररूपभक्षणसंगतेः। स्तिभिनीचमसो यागे द्रव्यमित्यवधार्यते॥**'
(न्यग्रोधस्तिभिनीः न्यग्रोधफलानि तत्कल्कयुक्तः चमसः)।

**सोम**— पूर्वत्र संपूर्णयष्टृत्वश्रवणात् यजमानस्य वषट्कारसंबन्धेऽपि इह फलचमसस्य न यागसंबन्धः अश्रवणात् इति प्रत्यवस्थानात् **संगतिः। सूत्रे** श्रुतिसंयोगात् श्रुतौ फलचमसस्य भक्षेणैव संयोगस्य अवगमात् इत्यर्थः।

**वि**-- 'न्यग्रोधपिष्टं सोमस्य स्थाने क्षत्रियवैश्ययोः। भक्षमात्रे विकुर्यात् तत् सोमयागेऽपि वा तथा॥, बिभक्षयिषया वाक्यमुपक्रम्योपसंहृतम्। भक्षं यच्छेदिति ततो विकारो भक्षमात्रगः॥, फलाख्यचमसेनासौ यजेतेति श्रुतत्वतः। इज्यायां च विकारोऽस्ति यागार्थो भक्षसंस्कृतिः॥'

**भाट्ट**— तत्रैव 'यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिमिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत्, न सोमम्' इति श्रुतम्। तत्र द्वितीयो यदिशब्दो निसंदिग्धत्वपरः। आद्यस्तु निमित्तत्वपर एव। स्तिमिनीः अङ्कुरान् फलानि च। तत्रैतस्य फलचमसपदाभिधेयस्य किं भक्षणमात्रम्, किंवा यागोऽपीति चिन्तायाम्, निमित्तत्वेन अपक्षीणस्य यागस्य फलचमसान्वयित्वानुपपत्तेः तच्छब्दपरामृष्टस्य च तस्य भक्षान्वयश्रवणात् प्राप्तयागानुवादेन अनेकपेषणादिरूपगुणविधाने वाक्यभेदापत्तेश्च अनेकगुणविशिष्टं भक्षान्तरमेव फलचमसकरणकं विधीयते। फलचमसस्य विनियोगाभावेन संस्कार्यत्वानुपपत्तेः सक्तुन्यायेन विनियोगभङ्गस्य आवश्यकत्वात्। तदपि आरादुपकारकमपि यजमानसोमभक्षस्य बाधकम्, 'न सोमम्' इत्यनुवादबलात्, 'न गिरा गिरेति ब्रूयात्' इतिवत् एककार्यकारित्वाभावेऽपि बाधकत्वरूपाया एव स्थानापत्तेरङ्गीकारात्। अस्तु वा अयं स्वतन्त्र एव तन्निषेधः। **इति प्राप्ते**, यद्यपि भक्षान्तरमिदम्, तथापि तस्य न आरादुपकारकत्वम्, 'तम्' इति द्वितीयानिर्देशेन फलचमससंस्कारार्थत्वप्रतीतेः। अनुपयुक्तस्य च संस्कारायोगेऽपि 'अध्वर्युं वृणीते' इत्यादिवत् विनियोगकल्पना। तत्रापि 'स यदि सोमं बिभक्षयिषेत्' इत्याद्यनुवादबलात् यजमानकर्तृकसोमभक्षस्य च तावतैवोपपत्तौ सर्वत्र सोमबाधेन सर्वार्थत्वकल्पने प्रमाणाभावात् यजमानचमसयागाभ्याससाधनत्वमेव फलचमसस्य कल्प्यते इति न काचिदनुपपत्तिः। **वस्तुतस्तु**, भक्षान्तरत्वे प्रमाणाभावात् सोमभक्ष एव यजमानकर्तृकः पेषणदध्युन्मृज्युत्तरकालद्वयविशिष्टः फलचमससंस्कारकत्वेन विनियुज्यते। 'राजा राजसूयेन' इतिवत्, 'तस्य वायव्यासु' इतिवच्च विनियोगविशिष्टप्रयोगविधानात् अवाक्यभेदः। तस्य च यजमानचमसाभ्यासीयद्रव्यसंस्कारकभक्षसंस्कार्यत्वात् पूर्वोक्तयुक्तेश्च तदीयत्वानुमानात् कल्पितवाक्येन फलचमसस्य उक्तयागाभ्याससाधनत्वसिद्धिः। नैमित्तिकत्वाच्च तत्र नित्यसोमबाधकत्वम्। एवं च स्थानापत्त्यैव फलचमसे इतरसोमसंस्कारवत् यजमानभक्षस्यापि प्राप्तिसंभवे पूर्वप्रवृत्त्या तद्विध्यङ्गीकरणं गुणद्वयविधानार्थम्, फलचमसस्य यागसाधनत्वसिद्ध्यर्थं चेति द्रष्टव्यम्। एतेन 'यदि सोमं न विन्देत् पूतीकानभिषुणुयात्' इत्यत्र अभिषवयुक्तपूतीकानामपि यागसाधनत्वं व्याख्यातम्। १५.

**मण्डन**— 'फलस्य भक्षणादि स्यात्।'

**शंकर**— 'स्तिमिनीचमसो यजौ।'

* **फलचमसाधिकरणे** स्थानापत्त्यतिदेशः निरूपितः। **बाल.** पृ. ११८.

* **फलचमसादौ** यत्र यागान्तरविध्यसंभवः प्रमाणान्तरप्रमितः तत्र निरवकाशेन नैमित्तिकेन नित्यापनयाभावेऽपि नित्यस्य बाधः। **भाट्ट.** ६।५।१ पृ. २८७.

* **फलचमसन्यायः** (३।५।१९।४७–५१) आग्नेयहविःश्रपणसाधनत्वस्य नैमित्तिकसहश्रपणप्रयुक्तत्वेन नैमित्तिकतुल्यत्वात् फलचमसन्यायेन स्थानापत्त्यैव दधिशृतयोः प्रणीताधर्मप्राप्तिः, न तु व्रीहियवन्यायेन। **भाट्ट.** ९।२।१३।४४–४५.

* **फलचमसविधिः**। अयं विशेषविधिः दृष्टार्थः। **बाल.** पृ. २१.

* **फलतः** वाचनिको व्यवस्थितविकल्पो यथा, ज्योतिष्टोमसंस्थासु सौभरे 'हीष् इति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय' इति। **बाल.** पृ. १६०, * फलतः वाचनिकी व्यवस्था यथा 'मृण्मयेन प्रतिष्ठाकामस्य प्रणयेत् कांस्येन ब्रह्मवर्चसकामस्य' इति। स्मार्ते तु– ब्रह्मयज्ञ एव फलविशेषार्थं ऋग्यजुःसामाध्ययनविधिः। पृ. १९, * फलतः व्यवस्थारूपः प्रतिषेधो यथा, 'यो ब्राह्मणायावगुरेत् तं शतेन यातयात्, यो निहनेत् सहस्रेण, यो लोहितं कुर्यात् यावतः प्रस्कन्द्य पांसून् संगृह्णीयात् तावतः संवत्सरान् सुवर्गं लोकं न प्रजानीयात्, तस्मान्न ब्राह्मणायावगुरेत् न हन्यात् न लोहितं कुर्यात्' इति। पृ. ३५, * फलतो व्यवस्थितविकल्पो यथा– ज्योतिष्टोमे षोडशिसंस्थे 'सौभरमुक्थ्यानां ब्रह्मसाम भवति' इत्युक्थ्यत्रयब्रह्मस्तोत्रसाधनत्वेन नित्यं सौभरं विहितम्। ज्योतिष्टोमातिरात्रे तु 'यदि बृहत्सामातिरात्रः स्यात् सौभरमुक्थ्यानां ब्रह्मसाम कार्यम्' इति ब्रह्मसामत्वेनैव नैमित्तिकं

'यदि रथंतरसामा सौभरं कुर्यात्' इति चोक्थ्यत्रयेऽपि नैमित्तिकं विहितम्। ततो नित्यं नैमित्तिकं च सौभरं पुनः फलत्रयसाधनत्वेन विहितम् 'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत' इति। सौभरस्य च नानाशाखीयस्य नानानिधनकस्याव्यवस्थितविकल्पे प्राप्ते 'हीषिति वृष्टिकामाय निधनं कुर्यात् ऊर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाय' इति तत्तत्फले तत्तन्निधनकस्य सौभरस्य विधानात् फलतो व्यवस्थितविकल्पः। पृ. १६०.

* 'फलदेवतयोश्च' (९।१।३।४) इत्यत्र लिङ्गेन ये संयुक्ताः ते अपूर्वार्था न संभवन्ति इति पूर्वपक्षः। टुप्. ९।१।२।२. * 'फलदेवतयोश्च' कर्तव्यं इति साध्यभूतमपूर्वम्, अथवा विधेयत्वानुष्ठेयत्वाभ्यां भाव एव प्रत्ययवाच्योऽभिधीयते। (शङ्कते) साध्यांशोपनिपातात् स्वर्गादिफलं कर्तव्यमिति चेन्न। तस्य कालान्तरभावित्वेन प्रयोगासमवायित्वे सति तत्सिद्ध्यर्थापूर्वस्यैव कर्तव्यत्वावधारणात्। तेन अपूर्वं कृत्वा नान्यथेति। तथा च...... फलदेवतयोश्च इत्युपन्यस्य निराकरिष्यते (उपन्यस्य फलदेवतयोश्च इति निराकरिष्यते इत्यन्वयः। सुधा. पृ. १२५६ द्रष्टव्यम्)। वा. ३।३।७।१४ पृ. ८५१.

**फलदेवतयोश्च। ९।१।३।४॥**

दर्शपूर्णमासयोः 'अगन्म स्वः सं ज्योतिषाऽभूम' इति फलसंबन्धो धर्मः श्रुतः। तथा 'अग्नेरहमुज्जितिमनूज्जेषम्, सोमस्याहमुज्जितिमनूज्जेषम्' इति देवतासंबन्धः। तत्र किं एते मन्त्राः स्वर्गाग्न्यादिप्रयुक्ताः उत अपूर्वप्रयुक्ताः इति विचारे पूर्वपक्षमाह। फलदेवतयोः फलस्य स्वर्गस्य, देवताया अग्न्यादेश्च मन्त्रप्रयोजकत्वं स्यात्। तथा च सौर्ययागे स्वर्गरूपफलस्य अग्निरूपदेवतायाश्च अभावेन प्रयोजकाभावात् मन्त्रनिवृत्तौ ऊहो न संभवति इति।

**न चोदनातो हि ताद्गुण्यम्। ५॥**

सिद्धान्तसूत्रमिदम्। दर्शपूर्णमासयोः 'अगन्म स्वः सं ज्योतिषाऽभूम' इति मन्त्रः स्वर्गरूपफलप्रयुक्तः, 'अग्नेरहमुज्जितिमनूज्जेषम्' इत्यादिमन्त्रश्च अग्न्यादिदेवताप्रयुक्त इति पूर्वपक्षिणा यदुक्तम्, तन्न। हि यस्मात् चोदनातः अपूर्वस्यैव फलवत्त्वेन चोदनात् ताद्गुण्यं तद्गुणत्वं मन्त्राणां फलवदपूर्वशेषत्वम्। तस्मात् अपूर्वप्रयुक्तत्वमेव मन्त्राणाम्। तथा च सौर्ये चरौ 'अगन्म ब्रह्मवर्चसम्, सूर्यस्याहमुज्जितिमनूज्जेषम्' इत्यूहसिद्धिः अपूर्वप्रयुक्तत्वस्य तत्रापि समानत्वात्। **के.**

**फलदेवताधिकरणम्।** दर्शपूर्णमासयोः धर्माः फलप्रयुक्ताः॥

**फलदेवतयोश्च। ९।१।३।४॥**

**भाष्यम्**— दर्शपूर्णमासौ स्तः, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। तत्र फलसंबद्धो धर्मो देवतासंबद्धश्च श्रूयते। फलसंबद्धस्तावत् 'अगन्म स्वः सं ज्योतिषाऽभूम' इति। देवतासंबद्धोऽपि 'अग्नेरहमुज्जितिमनूज्जेषम्' 'सोमस्याहमुज्जितिमनूज्जेषम्' इत्यादिः। तत्र संशयः, किं स्वर्गसंबद्धस्य कर्मणः स्वर्ग एव प्रयोजकः, अग्न्यादिसंबद्धस्य अग्न्यादयः एव, उत उभयत्रापि अपूर्वं प्रयोजकमिति। यदि एवमभिसंबन्धः क्रियते गताः स स्वर्गम्, अग्न्यादीनां चोज्जितिमनूज्जेषं इति, ततः स्वर्गाग्न्यादिप्रयुक्तः। अथ एवं क्रियते आगता दर्शपूर्णमासफलम्, दर्शपूर्णमासदेवतायाश्च उज्जितिमनूज्जेषं इति ततः अपूर्वप्रयुक्तः। किं प्राप्तम्? स्वर्गाग्न्यादिप्रयुक्त इति। कुतः? मन्त्राम्नानसामर्थ्यात्। यस्य मन्त्रो वाचकः स इह वदितव्य इति गम्यते। श्रुत्या च स्वर्गाग्न्यादीनां वाचको मन्त्रः। लक्षणया दर्शपूर्णमासफलदेवतयोः। तस्मात् यत्फलदेवतं इति समधिगतं स्वर्गाग्न्यादि, तत्प्रयुक्तो धर्मः स्यादिति।

**टुप्**— (चतुष्कोणकंसात् बहिष्ठः अस्मल्लिखितपाठः, कंसस्थस्तु आनन्दाश्रमीयः अधिकाक्षरकः इति ज्ञेयम्। के.) दीक्षणीयापूर्वप्रयुक्तो वाङ्नियमः, न परमापूर्वप्रयुक्त इति पूर्वाधिकरणापवादोऽयम्। दीक्षणीयासिद्धान्तेनैव [ फलदेवतयोश्च ] इति अत्र पूर्वपक्षः। अग्निस्वरूपप्रयुक्तोऽयं [ मन्त्रः ] स्वर्गप्रयुक्तश्च, [ लिङ्गेन हि अत्र विनियोगः। सामर्थ्यं च लिङ्गम्। स्वरूपे च मन्त्राणां सामर्थ्यम्, नापूर्वीयस्वरूपे। लक्षणा हि तथा स्यात्। न च प्रकरणवशेन लिङ्गबाधो युक्तः। तेन कामं वाक्यं

प्रकरणेन बाध्यताम् । लिङ्गं च ततो बलवत्तरम्, न ततो बाधितुं युक्तम् । तेन यथा वाङ्नियमो ज्योतिष्टोमार्थे-दीक्षणीयार्थः तथा मन्त्रोऽपि । ] अथवा अयं [मन्त्रः] स्वसामर्थ्यादेव [ 'स्वसामर्थ्येन' इति पाठः तन्त्ररत्ने तु पञ्चम्यन्त एव पाठः ] अग्निप्रकाशकः । तत्र योयोऽग्निः स सामर्थ्याविशेषात् प्रकाशनीयः । एवं प्रकरणबाधं सामर्थ्येन मन्यमानः पूर्वपक्षं करोति [ 'आरभते' इति पाठः । तन्त्ररत्ने तु करोति इत्येव पाठः ] प्रोक्षणवत् तु उत्तरम् ।

**न चोदनातो हि तादूगुण्यम् । ५ ॥**

**भाष्यम्**— नैतदस्ति स्वर्गाग्न्यादिप्रयुक्त इति । चोदनातः तादूगुण्यं स्यात् । यत् फलवत् चोद्यते तत् इति-कर्तव्यतया अनुबध्यते । अपूर्वं च फलवत्, न स्वर्गा-ग्न्यादि । तदर्थे वचनं सत् अदृष्टार्थं कल्प्येत । लक्षणया च अपूर्वफलदेवतावचने दृष्टोऽर्थः स्यात् प्रोत्साहनात् । एतस्मिन् पक्षान्तरे दृष्टे सति न स्वर्गाग्न्यादिवचनस्य अपूर्वकल्पना न्याय्या । शब्दार्थस्य च फलदेवतत्वेन संप्रतिपन्नत्वात् लक्षणा अदुष्टा । तस्मात् अपूर्वप्रयुक्त एवंजातीयको धर्म इति । किं भवति विचारस्य प्रयो-जनम् ? यथा पूर्वः पक्षः, सौर्ये कर्मणि अविकारेण मन्त्रः प्रयोक्तव्यः । यथा तर्हि सिद्धान्तः ऊहेन, 'अगन्म ब्रह्मवर्चसम्' 'सूर्यस्योज्जिति( स्याहमुज्जिति )मनू-ज्जेषम्' इति । फले पर्यवसितम् । देवतायामुत्तरा चिन्ता वर्तिष्यते ।

**शा**— 'तत्र स्वर्गादिशेषत्वं भवेल्लिङ्गेन मन्त्रयोः । फलस्यादृष्टरूपत्वात्प्रधानत्वाच्च सर्वतः ॥ अग्न्यादेर्याच्यमानस्य फलदायित्वसंभवात् । तादर्थ्यमेव मन्त्रस्य युक्तम्, नापूर्वशेषता ॥ ( सिद्धान्तमाह- ) सत्यं फलस्य सर्वस्मात् प्राधान्यं न तु तावता । मन्त्रस्तद्रूपशेषः स्यादानर्थक्य-प्रसङ्गतः ॥'

**सोम**— पूर्वत्र यथा परमापूर्वार्थदीक्षणीयाऽपूर्वार्थत्वं वाङ्नियमस्य न परमापूर्वार्थत्वम्, एवं मन्त्रस्यापि अग्न्याद्यर्थत्वं न तद्द्वारा दर्शपूर्णमासार्थत्वं इत्युत्थितेः संगतिः ।

**वि**— 'अगन्मादेः स्वर्गदेवौ हेतू यद्वाऽत्र चोदि-तम् ।, आद्यो लिङ्गात्, मैवमङ्गस्यापूर्वाकाङ्क्षितत्वतः ॥'

**भाट्ट**—पूर्वोक्ताया अपूर्वसंबन्धित्वेन उद्देश्यतायाः क्वचिदाक्षिप्य समाधानार्थं इदमधिकरणम् । दर्शपूर्ण-मासयोः 'अगन्म सुवः सुवरगन्म' इति स्वर्गप्रति-पादको मन्त्रः । 'अग्नेरहमुज्जितिमनूज्जेषम्' इत्यादिश्च अग्न्यादिप्रकाशको मन्त्रः श्रुतः । तयोश्च स्वर्गत्वाग्नि-त्वादिनैव स्वर्गाग्न्योः लिङ्गकल्प्यश्रुतौ उद्देश्यता उप-स्थितत्वात्, न तु अपूर्वसंबन्धित्वेन मुख्ये एवार्थे विनि-योगस्य औत्सर्गिकतायाः साधितत्वेन तेन रूपेण स्वर्गादि-पदैः अनभिधानात् । न च स्वर्गादिस्वरूपे आनर्थक्यम्, साक्षात् फलरूपस्य तस्य अनिर्ज्ञातोपायत्वाविशेषेण तद-र्थत्वे वैयर्थ्याभावात् । मन्त्रजन्यप्रकाशनव्यतिरेकेण इतरा-ङ्गयुक्तप्रधानमात्रादेव उत्पत्तिसिद्धेः आनर्थक्यं अपूर्वे-ऽपि तुल्यम् । प्रयोगविधिना सर्वाङ्गसाहित्यावगतेः मन्त्रजन्यप्रकाशनव्यतिरेकेण अपूर्वानुत्पत्तिः इति तु स्वर्गेऽपि तुल्यम् । एवं देवतायामपि मन्त्रार्थवादेति-हासादिवशात् सत्यपि अपूर्वे तज्जनितदेवताप्रसादादेव फलोत्पत्त्यवगतेः प्रसादस्य च मन्त्रजन्यप्रकाशनव्यति-रेकेण उत्पत्तौ प्रमाणाभावात् तदर्थत्वम् । अत एव लिङ्गकल्प्यश्रुतिविनियोगविधौ उपस्थितत्वात् प्रसादा-श्रयीभूताग्नेरेव तत्त्वेन उद्देश्यता, न तु अपूर्वीयदेवतात्वेन इति न सौर्यादौ ब्रह्मवर्चससूर्यादिपदोहः । इति **प्राप्ते,** न तावत् सर्वेषामेव अवघातादीनां अपूर्वार्थत्वमपहाय स्वर्गार्थत्वं शङ्कितुं शक्यम्, व्रीह्यादिपदेन प्रत्यासन्नतया तेषामर्थाधिकरणन्यायेन आग्नेयाद्युत्पत्त्यपूर्वसाधनत्वस्यैव लक्षणात् । एवं अपूर्वाङ्गीकारेण देवताप्रसादार्थत्वं अव-घातादीनां निराकर्तव्यम् । देवताप्रसादस्य अपूर्वजन्यत्वेना-प्रत्यासन्नत्वात् । उदाहृतमन्त्रस्थलेऽपि च न स्वर्गमन्त्रस्य स्वर्गार्थत्वसंभवः । तद्धि किं दर्शपूर्णमासजन्यस्वर्गव्यक्तिं प्रत्येव मन्त्रजन्यप्रकाशनस्योपयोगः, उत स्वर्गव्यक्त्यन्तरं प्रति । नान्त्यः, तथात्वे दर्शपूर्णमासाङ्गत्वाभावात्सामान्य-संबन्धबोधकप्रमाणाभावेन लिङ्गकल्प्यश्रुतेरेव अकल्पनेन स्वर्गार्थत्वे एव प्रमाणाभावात् । न च स्वर्गाधिकार एव सामान्यसंबन्धबोधकं प्रमाणम्, स्वर्गस्य यागाख्य-

करणेनैव निराकाङ्क्षतया तदधिकारस्य अकल्पकत्वात् । न च मन्त्रस्य प्रयोजनाकाङ्क्षयैव लिङ्गेन श्रुतिकल्पनम्, वाचस्तोमे विनियोगेनैव तस्य निराकाङ्क्षत्वात् । अत एव लिङ्गमात्रेणापि न श्रुतिकल्पनम् । पाके समर्थस्यापि देवदत्तस्य आकाङ्क्षाऽभावे विनियोगादर्शनात् । नाद्यः । तथात्वे हि दर्शपूर्णमासजन्यस्वर्गव्यक्तीनां न स्वर्गत्वादिना उद्देश्यता, अतिप्रसङ्गात् । नापि दर्शपूर्णमासजन्यस्वर्गत्वेन, तस्यापूर्वद्वारकत्वेन गुरुभूतत्वात् । किंतु विजातीयापूर्वसंबन्धित्वेनैव । अत एव संनिपत्योपकारकत्वेऽपि स्वर्गप्रत्यासन्नत्वात् अपूर्वमपि परमापूर्वमेव, न तु अवान्तरापूर्वं उद्देश्यतावच्छेदककोटिप्रविष्टम् । स्वर्गत्वस्य तु व्रीहित्वादिवदेव अप्रवेशः गौरवात् । अतश्चैव मन्त्रलिङ्गकल्प्या श्रुतिः अनेन मन्त्रेण शक्तिजन्यबोधद्वारा परमापूर्वसाध्यं संस्कुर्यादिति । शक्तिजन्यबोधश्च वस्तुतः स्वर्गत्वप्रकारकः स्वर्गविशेष्यक एव द्वारतायां शक्तिजन्यबोधनत्वेन प्रविष्टः, न तु अपूर्वसंबन्धित्वप्रकारकः, तथात्वे शक्तिजन्यत्वानुपपत्तेः । अत एव ब्रह्मवर्चसादौ द्वाराभावात् स्वर्गपदलोपे ब्रह्मवर्चसविषयकशक्तिजन्यबोधसिद्ध्यर्थं ब्रह्मवर्चसपदोहः । इतरथा प्रकृतावेव लक्षणया स्वर्गपदेनापूर्वसंबन्धित्वप्रकारकबोधजनने ब्रह्मवर्चसस्यापि तेनैव रूपेण बोधोपपत्तेः ऊहानुपपत्तिः । अत एव पुत्राद्यर्थदर्शपूर्णमासप्रयोगेऽपि मन्त्रलोपः । तत्रापूर्वसाध्यफलस्य स्वर्गत्वेन बोधानुपपत्तेः । अत एव च ' मुख्य एवार्थे मन्त्राणां विनियोगः' इत्यप्युपपन्नम् । शक्तिजन्यबोधेन च अपूर्वसाध्ये ज्ञातताया आधानात् तस्य संस्कार्यत्वं उद्देश्यत्वापरपर्यायं नानुपपन्नम् । तादृशबोधस्य च स्वजन्यश्रद्धाजन्यादृष्टद्वारा परमापूर्व एव फलोत्पत्त्यनुकूलयोग्यताजननात् फले उपयोगः, न तु फलोत्पादकत्वम्, तथात्वे समप्राधान्यापत्त्या प्रकरणबाधापत्तेः इत्याद्यन्यत्र विस्तरः ।

एवं अग्न्यादिप्रकाशकमन्त्रेष्वपि स्वतन्त्राग्निप्रकाशनार्थत्वस्य अनुपयुक्तत्वात् सामान्यसंबन्धबोधकप्रमाणाभावाच्च पूर्ववत् तत्कल्पनाऽनुपपत्तेः अवश्यं आग्नेयसंबन्ध्यग्निप्रकाशनार्थत्वस्यैव कल्पनीयत्वात् आग्नेयस्वरूपे चानर्थक्येन प्रत्यासन्नतया तदुत्पत्त्यपूर्वीयदेवतात्वेनैव अग्न्यादेः उद्देश्यत्वकल्पना । न तु प्रसादाश्रयत्वेन, प्रसादस्य परमापूर्वजन्यत्वेन विप्रकृष्टत्वात्तद्वदेव प्रयोजकत्वानुपपत्तेः । अत एव नाग्नित्वादेरपि उद्देश्यताऽवच्छेदककोटिप्रवेशः गौरवात् । एवं च प्रसादाश्रयत्वस्यापि उद्देश्यताऽवच्छेदकत्वकल्पने ऊहसिद्धिः अप्रत्यूहैव । परन्तु प्रसादसामान्याश्रयत्वस्य अग्निहोत्रादौ अतिप्रसङ्गात् नोद्देश्यतावच्छेदकत्वम्, आग्नेयापूर्वजन्यप्रसादाश्रयत्वापेक्षया तदीयदेवतात्वस्य लघुत्वाच्च । अतश्चात्रापि अनेन मन्त्रेण शक्तिजन्यबोधद्वारा आग्नेयोत्पत्त्यपूर्वीयदेवतां संस्कुर्यात् इति लिङ्गकल्प्यश्रुतिं कल्पयित्वा ऊहसिद्धिः पूर्ववत् उपपादनीया । उपयोगोऽपि निर्वापादिमन्त्रेषु स्मृतिदार्ढ्येन त्यागकाले झटिति देवतास्मृतिद्वारा उत्पत्त्यपूर्वानुकूलयागनिष्ठयोग्यतासंपादने एव इत्यन्यत्र विस्तरः ।

**मण्डन** — ' स्वर्गस्तथाग्निश्च नहि प्रयोक्ता । ' ( धर्मस्य ) ४.

**शंकर**— ' निमित्ततोक्ताऽपूर्वस्य । '

* **फलदेवताधिकरणेन** प्रोक्षणादीनामपूर्वप्रयुक्तताधिकरणस्य अगतार्थता । **सोम.** ९।१।५. * प्रोत्साहनार्थानामपि ' अगन्म सुवः ' इत्यादीनां श्रद्धाजननार्थं अनुष्ठेयस्यापि कर्मसमवेतस्य फलादेः स्मृतेरपेक्षितत्वात् तदर्थत्वेन दृष्टविधयैवोक्तव्यापारसिद्धिः नवमे भाष्ये **फलदेवताधिकरणे** एवोपपादिता । **कौ.** १।२।४।४२.

* **फलदेवताप्रकाशकयोर्मन्त्रयोः** अपूर्वप्रयुक्तत्वम् । ९।१।३।४–५.

* **फलनियमकर्तृसमुदाया** उदाहरणम् । फलं स्वर्गः, नियमो यावज्जीविकोऽभ्यासः, कर्ता स्वर्गकामः, समुदायो दर्शपूर्णमासौ । तेषां सौर्यादिषु न प्रवृत्तिः । ८।१।१३।२०–२२. **मीको.** पृ. २५० ' अतिदेशो न फलनियम० ' इत्यत्र द्रष्टव्यम् ।

* **फलपरत्वे** संभवति न स्तुतिपरत्वं इति न्यायः यदि आश्रीयेत तथा सति प्रयाजादिष्वपि वर्मकरणवादस्य फलपरतैव स्यात् । ( पूर्वपक्षे ) । **आभरणम्.** ३।३।२७।४२.

* फलप्रयुक्तत्वं नास्ति द्रव्यसंस्कारकर्मणाम्, तत्र फलश्रुतिरर्थवादः । ४।३।१।१–३.

* फलभवनकालः नासत्प्रत्यक्षः । वा. २।२।३।३ पृ. ४८३, सु. पृ. ७३३.

* फलभाज एव प्रधानकर्तृत्वं इति न्यायः । परिमल. ३।४।१३।४४ ब्रसू.

* फलभावनाकरणत्वं एकस्यैव । मीन्या.

फलभूमाधिकरणम् । अङ्गानां प्रयाजादीनां एकस्मिन् प्रयोगे सकृदनुष्ठानम् ॥

**क्रतुवद्वाऽनुमानेनाभ्यासे फलभूमा स्यात् । ११।१।७।२९॥**

**भाष्यम्**— प्रयाजादीनि उदाहृत्य चिन्त्यते । किं सकृत् प्रयोग एषां उत अश्रुताभ्यासोऽपि कर्तव्य इति । तत्र 'धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात्' ( ११।१।६।२८ ) इत्यनेन न्यायेन सकृत् प्रयोगे प्राप्ते एवमुच्यते, 'क्रतुवद्वाऽनुमानेनाभ्यासे फलभूमा स्यात्'। अभ्यासः कार्यः । कुतः ? यतः अभ्यासे फलभूमा स्यात् । कथं ज्ञायते ? अनुमानेन । किं तदनुमानम् ? प्राक् अङ्गप्रयोगात् प्रधानोपकारो नासीत् ऊर्ध्वं ततो भवति, तेन विज्ञायते नूनं अङ्गेन क्रियते इति । क्रियते चेत् पुनःपुनरपि करिष्यते । क्रतुवत्, तद्यथा कर्मसु सौर्यादिषु फलं कर्मणा क्रियते इति कर्माभ्यासे फलभूयस्त्वम्, एवमिहापि ।

**सकृद्वा कारणैकत्वात् । ३० ॥**

**भाष्यम्**— सकृत् वा अङ्गं प्रयोक्तव्यम्, नावृत्त्या । कुतः ? कारणैकत्वात् । एकं कारणमङ्गानां प्रधानेषूपकारः । कः पुनरसौ ? येन प्रधानानि फल ददति । तच्चेत् सकृत्प्रयुक्तेनाङ्गेन कृतं जानाति प्रधानानि फलवन्तीति, पुनरङ्गस्याप्रयोगः । अथ न कृतम्, सुतरामप्रयोगः । येन सकृत्कृतेन नोपकृतम्, स पुनःक्रियमाण उपकरिष्यति इति का आशा ।

**परिमाणं चानियमेन स्यात् । ३१ ॥**

**भाष्यम्**— यदि चानियमः सकृदसकृद्वा प्रयोगः, ततः 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्' इति योऽयं नित्यवदाहुतिपरिमाणानुवादः, स न स्यात् । स तावत् भवतां पाक्षिकः कल्प्येत तथा चास्य रूपं बाध्येत । तस्मादनभ्यासः ।

**फलस्यारम्भनिष्पत्तेः क्रतुषु स्यात् फलान्यत्वम् । ३२ ॥**

**भाष्यम्**— यत्तु क्रतुवदिति, युक्तं यत् क्रतुषु अभ्यासः । फलस्य आरम्भनिष्पत्तेः । कर्मारम्भेण तत्र फलं निष्पद्यते । आरम्भान्तरेण अपरं निष्पत्स्यते इति । अङ्गस्य पुनः उक्तपरिमाणं फलं प्रधानानां फलवत्तासंपादनम् । तच्चेत् सकृत्कृतेन कृतम्, न भूयः क्रियाऽस्तीति । एवमपदिष्टो हेतुः । तस्मादनुपन्यासः ( अभ्यासे दृष्टान्तस्य ) ।

**अर्थवांस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात् प्रधाने च क्रियार्थत्वादनियमः स्यात् । ३३ ॥**

**भाष्यम्**— यदुक्तं सकृत्कृतेन अङ्गेन कृतत्वात् अर्थस्य अनर्थकोऽभ्यास इति । अत्र ब्रूमः ! अर्थवांस्तु अभ्यासः अङ्गग्रामस्य, नानर्थकोऽभ्यासः । कथं कृत्वा ? एकत्वादभ्यासः स्यादनर्थकः । यदि एकमेवार्थं अभ्यस्यमानमपि अङ्गं करोति, ततः अभ्यासोऽनर्थकः स्यात् । यथा भोजनमेकस्मिन् काले अभ्यस्यमानं एकमेव फलं तृप्तिं करोतीति नाभ्यस्यते । अथेह अर्थस्य अपरिमाणत्वम् । इयन्तमुपकारं करोत्यङ्गं इति न ज्ञायते । ननु यावता प्रधानं फलवद्भवति तावत् करोति इति गम्यते । सत्यमेवम् । किन्तु प्रधाने क्रियार्थत्वात् अनियमः स्यात् । प्रधानस्य फलक्रियार्थमङ्गम् । तत्तु प्रधानफलमपरिमितम् । तदङ्गोपकारस्य भूयस्त्वे भूयो भविष्यति । अल्पत्वे अल्पम् । अभ्यासे च असंशयं भूयानुपकारः स्यात् कार्यत्वात् तस्य । तस्मादनियमः स्यात् सकृद्वा प्रयोगः, अभ्यासो वेति ।

**पृथक्त्वाद्विधितः परिमाणं स्यात् । ३४ ॥**

**भाष्यम्**— यत्तु आहुतिसंख्या विरुध्यते इति, पृथक्त्वादुपकारस्य अभ्यासे न्यायप्राप्ते योऽयं आहुतिसंख्यानुवादः स विधितः स्यात्, आहुतिविधीनभिप्रेत्य 'चतुर्दश पौर्णमास्यां आहुतिविधयः, त्रयोदश अमा-

वाख्यायाम्' इति। नहि आहुतिसंख्या युज्येत। आहुतिविधिसंख्या तु लक्षणया उपपद्यते।

**अनभ्यासो वा प्रयोगवचनैकत्वात् सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात् क्रियार्थत्वात्। ३५॥**

**भाष्यम्**— अनभ्यासो वा अङ्गानाम्। कुतः? प्रयोगवचनैकत्वात्। एकः प्रयोगवचनः अङ्गानां प्रधानानां च। तस्यैकत्वात् सर्वस्य युगपच्छासनं 'अनेन कर्मणा साङ्गेन यजेत' इति। सकृत्कृतैश्चाङ्गैः तत् साङ्गं जातमिति न पुनः क्रियायां हेतुरस्ति। ननु उपकारभूयस्त्वं भविष्यति। यदि अङ्गानि अदृष्टमुपकारं कुर्युः, ततः तदभ्यासे उपकारभूयस्त्वमनुमीयेत। दृष्टमेव तु अर्थं अङ्गानि कुर्वन्ति प्रधानस्याङ्गवत्ताम्। सा च अभ्यासेऽपि तावत्येव अङ्गवत्ता। सा चेह फलसंबद्धा साङ्गेन यजेत इति, नाङ्गानि। अङ्गानि तत्संपादनेन अर्थवन्ति। ननु एतदयुक्तमिव। यदा हि प्रयाजाः, न तदा प्रधानयजिः अपूर्वं वा। यदा च यजिः अपूर्वं च, न तदा प्रयाजाः। तदेवं अदृष्टरहिते समिदादिमात्रे सति अङ्गवत्तैव नास्ति, कुत उपकारः? अपि च यदि यजिमात्रमेवाङ्गेषु, नापूर्वफलमस्ति, ततः सोमाङ्गभूतानां इष्टिपशुबन्धानां चोदक एव नास्ति। असति हि अपूर्वे इतिकर्तव्यताकाङ्क्षा नास्ति। यजतेः प्रज्ञातेतिकर्तव्यताकत्वात् इतिकर्तव्यतां चोदको नातिदिशेत्। तत्रैतानि दर्शनानि नोपपद्येरन्। 'तस्यैकशतं प्रयाजानुयाजाः, न च समिष्टयजूंषि जुहोति, प्रहृत्य परिधीन् जुहोति हारियोजनम्' इति। तस्मादियं **अन्या व्याख्या।** अनभ्यासो वाऽङ्गानां प्रयोगवचनैकत्वात्। एकः प्रयोगवचनः अङ्गानां प्रधानानां च। तस्यैकत्वात् सर्वस्य अङ्गप्रधानकलापस्य युगपच्छासनम्। तत्र प्रधानानामनभ्यासः। कस्य हेतोः? सकृत्कृतैः प्रधानैः कृतः श्रुत्यर्थः, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। कृते श्रुत्यर्थे यत् शास्त्रविहितं फलं तल्लब्धं इति न पुनः क्रियायां हेतुरस्ति। एवमङ्गेष्वपि सकृत्कृतेषु यदङ्गानां प्रापकं शास्त्रं तस्यार्थः कृतः। तस्मिन् कृते यत् शास्त्राधिगतं अङ्गफलं तल्लब्धमिदानीं इत्यवगन्तव्यम्। तथा च सति अभ्यासोऽनर्थकः। यत्तु फलभूयस्त्वं भविष्यतीति। तदयुक्तम्। दर्शपूर्णमासयोर्यत् फलं तद्भावनायां अङ्गोपकार उपयुज्यते, नापूर्वस्य फलस्योत्पत्तौ। यदि अपूर्वं फलं अङ्गैरुत्पाद्येत, अङ्गफलमेव तत् स्यात्। न चाङ्गानि फलवन्ति। प्रधानानां स्वकार्यं साधयतां अदृष्ट उपकारः तैः क्रियते। सकृत्कृतैश्चासौ कृतः। तस्मात् नाङ्गावृत्तौ फलभूयस्त्वमस्ति।

**टुप्**— भाव्यः स्वर्गः भावको यागः। इतिकर्तव्यता यागस्यानुग्रहं करोति, न फलसाधिका। तस्याः फलं न श्रूयते, करणात् फलमिति। सत्यम्, करणस्य फलं साधयतः अभ्यस्यमाना इतिकर्तव्यता महान्तमुपकारं करोति। तच्च महता उपकारेण अनुगृहीतं महत् फलं करोति। अत्राह, सकृत् इतिकर्तव्यता। कुतः? भावनया करणेतिकर्तव्यते आकाङ्क्षिते। तत्र करणं फले व्याप्रियते, इतिकर्तव्यता करणमनुगृह्णती आकाङ्क्षिता। सकृत्कृतया च निराकाङ्क्षीकृता भावना। द्वितीयादिप्रयोगः केन आकाङ्क्ष्यते। तस्मात् सकृत् अत्र ग्रन्थः 'यदा प्रयाजाः, न तदा प्रधानयजिः अपूर्वं वा, यदा च यजिः अपूर्वं च न तदा प्रयाजाः' इति (भाष्यग्रन्थः) एतदयुक्तम्। कथम्? यस्मिन्नेव क्षणे स्वर्गो भवने कर्तृत्वं प्रतिपद्यते, तस्मिन्नेव करणमपि भावकत्वेन व्याप्रियते। इतिकर्तव्यताऽपि तस्मिन्नेव करणमनुगृह्णाति। यदि अन्यस्मिन् क्षणे स्वर्गो भवने कर्तृत्वं प्रतिपद्येत, करणमपि अन्यस्मिन् भावकम्, तथा सति भाव्यभावकसंबन्ध एव न स्यात्। तस्मात् यौगपद्यं स्वर्गयागयोः। एवमेव करणेतिकर्तव्यतयोः। तस्मादेषां तुल्यकालता। न च अवान्तरक्रियाः परस्याभिप्रेताः। भिन्नकाला अपि सत्यः प्रयाजादिक्रिया एवाभिप्रेताः। तच्चायुक्तम्, स्वरूपाणां भिन्नत्वादिति।

**अभ्यासो वा छेदनसंमार्गावदानेषु वचनात् सकृत्त्वस्य। ३६॥**

**भाष्यम्**— अभ्यासो वा अङ्गानाम्। कुतः? पितृयज्ञे श्रूयते 'सकृदाच्छिन्नं बर्हिर्भवति' इति। तथा अनुयाजे 'सकृत् परिधीन् संमार्ष्टि' इति। स्विष्टकृति

च ' उत्तरार्धात् सकृदवद्यति ' इति । तद्यत् असकृदङ्गानां प्रयोगः ततः एतानि वचनानि उपपद्यन्ते । तस्मादभ्यासः ।

**अनभ्यासस्तु वाच्यत्वात् । ३७ ॥**

**भाष्यम्**— अनभ्यासस्तु अङ्गानां यथोक्तेन न्यायेन । यत्तु छेदनादिषु वचनात् सकृत्त्वस्य अन्यत्र अभ्यासो विज्ञायते इति । अत्र ब्रूमः । यद्यपि अनभ्यासः, तथापि छेदनादिषु वाच्यं सकृत्त्वम् । दर्शपूर्णमासयोः ' असकृदाच्छिन्नं बर्हिर्भवति ' इति वचनात् । तत्प्रकृतित्वात् पितृयज्ञेऽपि असकृत् प्राप्तम् । तथा प्राप्ते सकृत्त्वं वाच्यम् । एवं प्रयाजेषु त्रिः संमार्ग उक्तः । सोऽनुयाजेषु पुनरावर्तते । तत्रापि त्रित्वे प्राप्ते सकृत्त्वं विधातव्यम् । तथा 'द्विर्हविषोऽवद्यति' इत्यविशेषेणोक्ते स्विष्टकृत्यपि द्वित्वं प्राप्तं तत्र सकृत्त्वं विधीयते । तस्मात् छेदनादिषु सकृद्वचनात् नान्यत्र अभ्यासो विज्ञातुं न्याय्यः इति ।

**शा**— फलभूमार्थिना कर्माणि पुनःपुनः प्रयोक्तव्यानि इति स्थिते चिन्त्यते, किं एकस्मिन् प्रयोगे अङ्गानि पुनः पुनः प्रयुञ्जानस्य फलभूयस्त्वं भवति, नेति । तत्र अभ्यस्यमानानि अङ्गानि बहूनुपकारान् जनयन्ति, बहूपकारयुक्तं च प्रधानं फलभूयस्त्वाय भवति इति मन्वानस्योत्तरम् । समग्रकारणावृत्त्या हि कार्यमावर्तते, प्रधानं च साङ्गं फलसामग्री नाङ्गमात्रम्, अतस्तन्मात्रावृत्त्या न भूयः फललाभः । न च उपकारभूयस्तया फलभूयस्त्वं प्रमाणाभावात् । न चात्र अङ्गाभ्यासः शास्त्रीयः । नचाशास्त्रीयेण प्रयासगौरवेण फलभूमा शक्यते कल्पयितुम् । अतः फलभूमार्थिना साङ्गं प्रधानं अभ्यसितव्यम् , नाङ्गमात्रम् , नापि प्रधानमात्रम् ।

**सोम— सूत्रार्थस्तु**— अङ्गं फलभूमार्थमभ्यासमर्हति सफलत्वात् , सौर्यादिवत् इत्यनुमानेन अङ्गाभ्यासे फलभूमा स्यात् इति ।

**वि**— '**अङ्गेऽभ्यासो न वा, भूम्नाऽभ्यासो, नाङ्गे पृथक् फलम् । अङ्ग्यावृत्त्यैव भूमाऽतः प्रयोगेऽङ्गं सकृद्भवेत् ॥** '

**भाट्ट**— एकस्मिन्नेव प्रयोगे पुनः पुनः क्रियमाणैरङ्गैः प्रयासगौरवेण फलाधिक्यं मन्वानस्योत्तरम् । न तावत् फलान्तरोत्पत्तिः, एकस्मात् प्रधानात् एकस्यैव फलस्य उत्पत्तिनियमेन प्रधानावृत्त्यभावे सामग्र्यभावेन फलान्तरोत्पत्तौ प्रमाणाभावात् । नापि तस्यामेव फलव्यक्तौ अतिशयमात्रम् ' अतिरात्रे षोडशिनं गृह्णाति ' इत्यादिवत् फलभूमा । स हि यत्र तद्व्यतिरेकेण क्रतूपकारसिद्धिः प्रमाणप्रमिता, तत्रैव तद्विधिवैयर्थ्यभिया कल्प्यते, यथा षोडशिग्रहणात्, यथा वा 'एका देया, षड् देयाः' इत्यादौ । प्रकृते तु अङ्गविधीनां सकृत्करणेन चरितार्थत्वात् क्रतोश्च एकक्रतूपकारमात्रापेक्षितया पुनरावृत्त्यनाक्षेपकतया पुरुषेच्छामात्रेणैव आवृत्तौ फलाधिक्ये प्रमाणाभावः । यत्र हि ' पशुमालभेत ' इत्यादौ महान् पशुरालभ्यते, यत्र स्वल्पः, तत्रापि न फले तारतम्यं इत्युक्तं भाष्ये ( ११।१।९।४४ अक्षरभेदेन ) । तत्र प्रयाजादीनां पुनःकरणे का संभावना ? ' गां दद्यात् ' इत्यादौ तु समीचीनगोदाने फलाधिक्यमस्त्येव इति ध्येयम् ।

**मण्डन**— ' अङ्गं प्रयाजादि सकृत् प्रकुर्यात् । '

**शंकर**— ' नाङ्गावृत्त्या फलं बहु । '

* **फलभूमार्थी** बहुकृत्वः प्रयोगे प्रवर्तेत, संतुष्टः सकृत् । **भा.** ११।१।४।२४.

* **फलभेदः** कर्मभेदहेतुः । **सु.** पृ. ९१२.

**फलमुखगौरवं न दोषावहमिति न्यायः ।** यत्र गौरवे फलसंपत्तिर्भवेत् तत्रायं प्रवर्तते । यथा चायं न्यायो मुक्तावल्यां समासलक्षणानिरूपणप्रस्तावे निरूपितस्तथाहि, अत एव ' निषादस्थपतिं याजयेत् ' इत्यत्र न तत्पुरुषो लक्षणापत्तेः, किन्तु कर्मधारयः लक्षणाभावात् । न च निषादस्य संकरजातिविशेषस्य वेदानधिकाराद्याजनासंभव इति वाच्यम्, निषादस्य विद्याप्रयुक्तेस्तत एव कल्पनत्वात् लाघवेन मुख्यार्थान्वये तदनुपपत्त्या कल्पनायाः फलमुखगौरवतया इति दिक् । **साहस्री.** ४७६ .

* **फलमुखप्रतिपत्तिविधिकल्पनानुमतिः** श्रौतविधेः धारणाद्याक्षेपशक्तिकल्पनागौरवपरिहारार्थम् ( ' प्रयाजशेषेण हवींष्यभिघारयति ' इत्यत्र ) । **भाट्ट.** ४।१।१४.

* **फलवत्** यचोद्यते तत् इतिकर्तव्यतया अनुबध्यते । **भा.**९।१।४।५ .

🕮 **फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् । ४।४।४।७।।**

'वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः' इति विधाय 'आमनमस्यामनस्य ( आमनं असि आमनस्य इति पदच्छेदः ) देवा इति तिस्र आहुतीर्जुहोति' इति आमनहोमा उक्ताः । ते किं सांग्रहणीष्ट्या समप्रधाना उत तस्या अङ्गं इति विचारे समप्रधाना इति उत्सूत्रं पूर्वपक्षे प्राप्ते वाशब्देन तं निरस्य सिद्धान्तयति । फलवत् सफलं सांग्रहणीकर्म इतरस्य आमनहोमत्रयस्य प्रधानं स्यात् आमनहोमत्रयं च अङ्गं स्यात् । उक्तहेतुत्वात् 'फलवत्संनिधावफलं तदङ्गम्' इति हेतोरुक्तत्वात् । उक्तो हेतुरस्य इति उक्तहेतु तादृशत्वात् । **के.**

* फलवद्धि अफलस्य प्रधानम् । **भा.** ४।४।४।७, * यत् **फलवत्** तत् पुरुषस्य चिकीर्षितम् । १०।६।१८।६७, * यो हि आरभ्य परिसमापयति स **फलवान्** । एष हि आख्यातार्थः । स हि उपक्रमप्रभृति अपवर्गपर्यन्तमाह । ६।३।९।२४ पृ. १४२२, * **फलवति** च प्रयासो विधीयमानोऽर्थवान् भवति । ७।१।१।१.

* **फलवदफलन्यायेन** अग्निहोत्रस्य अन्यलभ्यस्वर्गसंबन्धबोधनद्वारा तत्संनिधिसमाम्नातानां अनिर्दिष्टफलानां कर्मणां तदङ्गत्वप्राप्तिः। ('फलवत्संनिधौ अफलं तदङ्गम्' इति न्यायस्वरूपम् । 'पृथक्त्वे त्वभिधानयोर्निवेशः ०' ४।४।११।३४ इति सूत्रोन्नीतश्चायं न्यायः) । **रसायनम्. पृ.** ६७ . * कर्मान्तरत्वे ( रथंतरसामा, बृहत्सामा इति ज्योतिष्टोमात् कर्मान्तरं इति पक्षे ) तस्य **फलवदफलन्यायेन** ज्योतिष्टोमाङ्गत्वात् ज्योतिष्टोमाङ्गत्वेन केवलरथंतरसामकं कर्मान्तरमनुष्ठेयम् । ( इति पूर्वपक्षे ) । **सोम.** २।३।१ .

* **फलवत्त्वं** मुख्यलक्षणम् । 'तत्पुनर्मुख्यलक्षणं यत् फलवत्त्वम्' । **सूत्रं** ४।४।११।३४ . * फलवत्त्वं विश्वजिदादीनाम् । ४।३।५।१०-१२.

* **फलवन्निगदा** अपि विधेयस्तावकाः । १।२।२ . **मीको.** पृ. १३३६ 'औदुम्बराधिकरणम्' इत्यत्र द्रष्टव्यम् ।

* **फलवन्निगदाधिकरणं** अर्थवादाधिकरणस्यैव शेषः । **सु.** पृ. ९३ .

* '**फलवद्व्यवहाराङ्गभूतार्थप्रत्ययाङ्गता** । निष्फलत्वेन शब्दस्य योग्यत्वादवधार्यते ॥' ( श्लोवा. शब्दनित्यताधिकरणम् श्लो. २३८ ) इति न्यायः । **सु.** पृ. २३. अत्र **रत्नाकरः**- फलवतः गवानयनादिव्यापारस्य अङ्गभूतः अर्थप्रत्ययः तत्फलत्वेनैव फलवान्, शब्दस्योच्चारणसंस्कारभाजः स्वयमफलस्य फलवत्प्रत्ययाङ्गता अवगम्यते इति ।

* '**फलवत्संनिधावफलं तदङ्गम्**' **इति न्यायः** । [ 'पृथक्त्वे त्वभिधानयोर्निवेशः, श्रुतितो व्यपदेशाच्च, तत्पुनर्मुख्यलक्षणं यत् फलवत्त्वम्, तत्संनिधावसंयुक्तं तदङ्गं स्यात्, भागित्वात् कारणस्य, अश्रुतश्चान्यसंबन्धः' ४।४।११।३४ इति सूत्रम्, तदवयवः 'तत्संनिधावसंयुक्तं तदङ्गं स्यात्' इति । तदर्थ एव फलवत्संनिधावफलं तदङ्गमिति न्यायः । **के.** ] इतरत्तु ( यागेभ्यः ) फलवत्संनिधानात् तदङ्गं भवति । **शा.** ४।४।१. * 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायः । ननु अन्योन्यविशेषणविशेष्यभावरहितानामपि अङ्गाङ्गिभावो भवतु । नेति ब्रूमः 'फलवत्०' इति न्यायवैषम्यात् । **नृसिंहपूर्वतापनीयोपनिषद्भाष्यम्** १।१. * सगुणवाक्यस्य निर्गुणवाक्यसंनिधौ पठितस्य '**फलवत्संनिधौ अफलं तदङ्गम्**' **इति न्यायेन** तदनुगुणतया नेयत्वम् । **अद्वैत.** २।४।२५९ . * 'फलवत्संनिधावफलं तदङ्गम्' **इति न्यायात्** फलवद्विद्यासंनिध्याम्नातानां तदङ्गता । **न्यायनि.** ३।३।१४।२५ **ब्रसू.** * 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायात् स्वतन्त्रफलवतः सोमस्य दर्शपूर्णमासाङ्गत्वासंभवः । **वि.** ४।३१६ . * निष्प्रपञ्चवाक्येष्वेव फलश्रवणात् 'फलवत्संनिधावफलं तदङ्गम्' **इति न्यायात्** सप्रपञ्चवाक्यानां तदेकवाक्यता इति ( वृत्तिकारमतम् ) । **न्यायनि.** ३।२।५।२१ **ब्रसू.** * सफला हि सर्वा विद्या आम्नाताः । तत्संनिधौ मन्त्राः कर्माणि च समाम्नातानि 'फलवत् संनिधावफलं तदङ्गम्' इति न्यायात् विद्याङ्गभावेन विज्ञायन्ते । **भामती.** ३।३।१४।२५ **ब्रसू.** * 'फलवत्संनिधौ अफलं

तदङ्गम्'। फलवत्संनिधेस्तु आधारादीनि आरादुपकारकाणीति। भा. २।२।३।३, * फलवत्संनिधौ अफलं तदङ्गम्। लोकेऽपि निष्पन्नकार्यादिषु प्रयोजनवत्सु यदसंयुक्तं फलेन श्रूयते तत् तदङ्गं विज्ञायते इति मन्यमानाः उपवासं जपं वा उपदिश्यैव कृतिनो मन्यन्ते, न ब्रुवन्ते इदमस्य प्रयोजनवतोऽङ्गमिति। ४।१।३।६. * फलवत्संनिधौ अफलाम्नानं प्रधानकथंभावग्रहणहेतुः। सु. पृ. १०७०.

⌛ **फलवत्सहकारन्यायः**। यथा आपस्तम्बसूत्रम्, तद्यथा— 'आम्रे फलार्थे निर्मिते छायागन्धे अनूत्पद्येते, एवं धर्मं चर्यमाणे अर्थादयोऽनूत्पद्यन्ते'। यथा 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यभिधानादतिसौरभ आम्रवृक्षोऽतिमधुरपक्वफलनमितशाखः समुपसन्नाय छायार्थिने जनाय फलं परिमलं चाप्रार्थितमपि ददाति, तथैकफलाकाङ्क्षया स्वेष्टदेवताराधनमन्यदपि फलं प्रयच्छतीति। एतत् समानविषयकलौकिकव्यवहारान्तरेष्वपि बोध्यम्। **साहस्री. ४.**

* **फलवाक्यस्य** स्वरूपेण फलविधिमात्रार्थत्वम्, उत्पत्तिविनियोगवाक्यैकवाक्यतया च प्रयोगविधानार्थत्वम्। सु. पृ. ७३५.

* **फलविधानमपि** वाक्यान्तरस्थेन विधिशब्देनापि भवति। भा. ४।३।५।१२. * फलविधानं हि ईदृशेन शब्देन ('प्राणापानावेवात्मन् धत्ते' इत्यादिना) न क्रियते इति वक्ष्यामः (४।३।१।१–३ इत्यत्र)। वा. ३।४।५।१५.

* **फलविधिः** अर्थवादः 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति। बाल. पृ. ५३. * फलविधिः 'खादिरं वीर्यकामस्य यूपं कुर्यात्, पालाशं ब्रह्मवर्चसकामस्य, बैल्वमन्नाद्यकामस्य' इति। भा. ४।३।१।१. * फलविधिः मन्त्रः त्रिविधः यजमानगामिफलविधिः, ऋत्विग्गामिफलविधिः, उभयगामिफलविधिश्चेति। बाल. पृ. ६२.

* **फलविधिसरूपः** अर्थवादः 'यस्य पर्णमयी जुहूर्भवति' इति। बाल. पृ. ५३, * फलविधिसरूपः मन्त्रः 'आयुर्दा अग्नेऽस्यायुर्मे देहि' इति। पृ. ६३.

* **फलश्रुतिः** अङ्गेषु स्तुतिरेव, न फलविधिः। भा. ४।३।८।१९. * फलश्रुतिः अन्यानर्थक्यप्रसङ्गविज्ञातपारार्थ्यापादितार्थवादत्वात् न फलप्रतिपत्तिक्षमा विज्ञायते। यथा 'योऽश्वमेधेन यजते, य उ चैनमेवं वेद' इति ज्ञानमात्रादेव ब्रह्महत्यातरणं यदि सिध्येत् को जातु चित् बहुद्रव्यव्ययायाससाध्यमश्वमेधं कुर्यात्। वा. १।३।८।२७ पृ. २८७. * फलश्रुतिः अर्थवादः आघारयोः। आघारो हि अङ्गकर्म क्रत्वर्थम्। भा. ४।३।१।१–४.

* '**फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मयोगित्वात्**' (२।२।११।२५–२६) इत्यधिकरणे गुणकरणत्वं व्युत्पाद्यते। सु. पृ. ८४८.

⌛ **फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मयोगित्वात्। २।२।११।२५ ॥**

'अग्निहोत्रं प्रकृत्य दध्नेन्द्रियकामस्य जुहुयात्' इति समामनन्ति। तत्र किं अग्निहोत्रहोमात् होमान्तरं दध्यादिहोमः उत दध्यादेर्गुणात् फलं इति विचारे पूर्वपक्षमाह। 'दध्ना जुहुयात्' इति कर्म होमान्तरं स्यात्, फलश्रुतेः। इन्द्रियपाटवं फलमत्र श्रूयते, तच्च कर्मणो न्याय्यम्। फलस्य कर्मयोगित्वात् फलस्य धात्वर्थभाव्यत्वात्। तस्मात् दधिविशिष्टो होमः फलाय विधीयते इति कर्मान्तरमेतत्। तुशब्दः पूर्वाधिकरणसिद्धान्तात् वैषम्यमाह।

**अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत। २६ ॥**

पूर्वपक्षं तुशब्देन व्यावर्तयन् सिद्धान्तमाह। वाक्ययोः 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'दध्नेन्द्रियकामस्य जुहुयात्' इति वाक्ययोः अतुल्यत्वात् तुल्यत्वाभावात् तस्य अग्निहोत्रहोमस्य गुणे दधिरूपे फलसंबन्धः प्रतीयेत गुणात् फलं इति। स्वर्गकामवाक्ये होम एव स्वर्गार्थत्वेन विधीयते। इन्द्रियकामवाक्ये तु होमाश्रितस्य दध्नः इन्द्रियार्थत्वेन विधिः इति अतुल्यत्वम्। तस्मात् न कर्मान्तरविधिः किन्तु फलाय गुणविधिः। के.

⌛ **फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मयोगित्वात्। २।२।१०।२५॥**

अग्निहोत्रं प्रकृत्य समामनन्ति 'दध्नेन्द्रियकामस्य जुहुयात्' इत्येवमादि। तत्र संदेहः किं अग्निहोत्रहोमात्

होमान्तरं दध्यादिहोमः उत दध्यादेर्गुणात् फलं इति । इदानीं पूर्वप्रतिपादितस्य गुणनिमित्तस्य भेदस्यापवादः क्रियते ।

अत्रायं **पूर्वपक्षिणोऽभिसंधिः ।** भावार्थाधिकरणे ह्येतदवस्थितम्, आख्यातशब्दाः फलपदसंबन्धिनो न द्रव्यगुणशब्दाः । तदत्रापि तेनैव न्यायेन 'इन्द्रियं भावयेत्' इतीन्द्रियभावना साधनाकाङ्क्षिणी समानपदोपात्तं होम-(रूपधात्वर्थ)मेव करणतया गृह्णाति, न विप्रकृष्टं द्रव्यम् । न चैवं सति फले होमविधानाद्धोमे च दधिविधानाद्वाक्यभेदः, अगत्या 'दशापवित्रेण ग्रहं संमार्ष्टि' इतिवत् दधिमता होमेनेन्द्रियं भावयेदिति मत्वर्थलक्षण-(या विशिष्ट-)विधानेनैव कर्मान्तरविधानोपपत्तेः । **ननु** भवतु होमात् फलम्, तथापि प्रकृत एव होमः 'संनिधौ त्वविभागात्फलार्थेन पुनः श्रुतिः' (२।३।१३।२६) इति न्यायेन स्वर्गायावज्जीवयोरिवेन्द्रियफले विधीयताम् । **मैवम्** । दधिविशि(ष्टेन) होमेन उत्पत्तिवाक्यगतहोमस्वरूपाप्रत्यभिज्ञानात् । तदुक्तम्-- '**होमो हि प्रकृतः शुद्धः स्ववाक्यादवधारितः । सोऽस्मिन् दधिविशिष्टत्वान्नाविभागेन गम्यते ॥**' इति (वा. पृ. ५४०) । **न च** 'दध्ना जुहोति' इति दधिविशिष्टोऽपि होमो विद्यत एवेति तत्प्रत्यभिज्ञानमिति **वाच्यम्** । यतो गुणवाक्यं ह्येतत् । न च गुणवाक्यफलवाक्ययोरुत्पत्तिवाक्यापेक्षयोः परस्परनिरपेक्षत्वात् संबन्धोऽस्ति । तदुक्तम्-- '**तान्युत्पत्तिमपेक्षन्ते सा चाव्यवहिता यतः । गुणादीनां त्वसंबन्धाव्यवधिः स्यात् परस्परम् ॥**' इति । (वा. पृ. ५४१) ।

**न च** उत्पत्तिवाक्यावगतमेव कर्म गुणवाक्यापादितदधिसंबद्धं फले विधास्यतीति **वाच्यम्** । नित्यानित्यसंयोगविरोधात् । एवं ह्यत्र वचनव्यक्तिः । यदेन्द्रियकामः स्यात्तदा नित्यं केवलदधिविशिष्टहोमं (भावये-)दिति दधि वैकल्पिकत्वेन दशमे पक्षे संबध्यते । अतो यथाभूतो नित्यदधिविशिष्टो होम इन्द्रियकामवाक्ये प्रतीयते, तादृशस्याप्रत्यभिज्ञानात्, अनुपादेयं फलं प्रत्युपादानात् कर्मान्तरमेवेति । तदुक्तम् '**दध्यत्र दशमे पक्षे तद्धोमस्य विशेषणम् । नित्यं चेन्द्रियकामस्य तेनापि न निरूप्यते ॥**' इति (वा. पृ. ५४१) । **न च** प्रकृतहोमाश्रितस्यैव दध्नः फले विधानमस्ति, किं विधिगौरवमत्वर्थलक्षणाश्रयणेनेति **वाच्यम्** । दध्नः फलसंबन्धविधाने आश्रयसंबन्धविधाने च वाक्यभेदप्रसङ्गात् । **न च** प्रकरणादाश्रयलाभ इति **वाच्यम्** । 'असंयुक्तं प्रकरणात्' इति न्यायेन फलार्थस्य दध्नः प्रकरणग्रहणासंभवात् । **न च** विधिलक्षणप्रकरणादाश्रयलाभो भवतीति **वाच्यम्** । यतः शब्दो हि संनिधिवशात् विशेषान्वये प्रमाणम् । न तु संनिधानं नाम यागस्य प्रमा(णम)स्ति । न चात्र प्रकृताश्रयसंबन्धप्रतिपादकः शब्दः कश्चिदस्ति, श्रौतेन्द्रियकामवाक्यस्य उभयसंबन्धकरणे वाक्यभेदस्योक्तत्वात् । कल्पितशब्दस्य चाऽऽश्रयसंबन्धकरणे कल्पनैव दोष इति श्रुतस्यैव वाक्यस्य विशिष्टकर्मविधायकत्वमेव युक्तम् । तेनात्रेन्द्रियकामवाक्ये फलस्य श्रुतत्वात् कर्मान्तरमेव विधेयं भवेदिति । **एवं प्राप्तेऽभिधीयते ।**

**अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ।२६॥**

**अयमभिप्रायः,** भवेदेवं यदि भावार्थाधिकरणवदेव भावार्थविषयो विधिर्भवेत् । सर्वत्र खलु भावनास्थ एव विधिस्तादर्थ्यभेदेन तत्र तत्र भिद्यते । यत्र फलवतीं भावनामासाद्य धात्वर्थपरो विधिर्भवति, तत्र धात्वर्थमेव फलकारणं करोति । यत्र तु स्ववाक्योपात्तविधेयगुणान्तरोपादानमप्यस्ति, तत्र विशिष्टविधिगौरवभिया गुणमात्रविधानलोलुपो यदि धात्वर्थप्राप्तिं पश्यति, तदा समस्तमनूद्य गुणमात्रमेव फले विधत्ते । अथ न पश्यति, तदा विशिष्टविधानं मत्वर्थलक्षणां च स्वीकुरुते इति स्थितम् । '**यावद्धि विधिसामर्थ्यं धात्वर्थादनपोद्धृतम् । तावद्यः फलसंबन्धः स धात्वर्थस्य गम्यते ॥ भवेत्फलश्रुतिर्या तु गुणसंचरिते विधौ । सा तद्गतविधिस्पृष्टा तेन यात्येकवाक्यताम् ॥**' (वा. पृ. ५४६) । तदिहापि प्रकृतधात्वर्थप्रत्यभिज्ञानात् तमुपेक्ष्य गुणसंक्रान्तो विधिः गुणमेव फले विधत्ते । धात्वर्थस्तु प्रत्ययप्रयोगार्थः प्रयुक्तः । (स च पूर्वो-)क्तेन धातुना प्रकरणप्राप्तोऽनूद्यते । एवं सति मत्वर्थलक्षणादोषो विशिष्टविधिगौरवं च न भविष्यति । **ननु** भवतु धात्वर्थस्य होमरूपस्य प्राप्तत्वात् अनुवादः, दधिहोमसंबन्धोऽप्यत्र

प्रतीयते । अवश्यं प्रतिपत्तव्यश्चासौ । न ह्यनाश्रित-क्रियस्य फलसाधनत्वं संभवति । तदत्र 'दध्नेन्द्रियकामस्य जुहुयात्' इति वाक्ये प्रतीयमानो दधिहोमसंबन्धो न तावदनूद्यते, प्रागप्राप्तत्वात् । विधीयते चेत् तदैकस्य दध्नः फलसंबन्धविधाने होमसंबन्धविधाने च वाक्यभेदः स्यादिति । उच्यते, दधिहोमसंबन्धोऽप्यत्र प्राप्त एव अनूद्यते । तथाहि, दध्नेति तृतीयया करणत्वेनोपात्तं दधि विधीयते । कारकत्वं च धात्वर्थरूपक्रियाविशेषनिर्वर्तक-त्वम् । तत्र कोऽसौ धात्वर्थरूपः क्रियाविशेषः । यन्निर्वर्तयतोऽस्य कारकीभूतस्य फलसाधनत्वमित्यपेक्षायां संनिधिप्रकरणोपनीतहोमरूप एव धात्वर्थः संबध्यते । तेन कारकीभूतदधिपदार्थपरामर्शादेव प्रकृतहोमसंबन्धो-ऽप्यस्य वाक्यात् प्रतीयमानोऽनूद्यत एव, फलसंबन्धः परं विधीयत इति कुतो वाक्यभेदः ? तदुक्तम् 'दधि-संबन्धोऽपि चास्य प्रकरणादेवाश्रयाश्रयिरूपः प्राप्तोऽनु-वदिष्यते' ( वा. पृ. ५४८ ) इति ।

न च वाच्यं केयमाश्रयसंबन्धविशेषापेक्षा, किं कारणत्वेन इतिकर्तव्यतात्वेन वा इति । यतो लब्ध-करणभावस्य या तदनुग्रहाकाङ्क्षा भवति सा इह क्रिया-विशेषान्वयिरूपं करणत्वमेव क्रियाविशेषान्तर्भावमन्तरेण प्रतीयत इति करणाकाङ्क्षेयं प्रविततरेत्यवधातव्यम् । इदं त्विह वक्तव्यम्— किं धात्वर्थवद्भावनाऽप्यत्र सैवानूद्यते अन्या वा विधीयते ? न तावत् सैवानूद्यते, फलभेदेन साधनभेदेन च तस्याः प्रत्यभिज्ञानासंभवात् । न चान्या विधीयते, कर्मभेदप्रसङ्गादिति । उच्यते । न हि फलभेदेन साधनभेदेन भावना भिद्यते । किं तर्हि ? अनुबन्धभूत-धात्वर्थभेदेन । तत्र तत्र अग्निहोत्रमित्युत्पत्तिवाक्यावगता-नुबन्धभूतजुहोतिधात्वर्थावच्छिन्नरूपस्य स्वर्गकामवाक्ये यावज्जीववाक्ये इन्द्रियकामवाक्ये च प्रत्यभिज्ञानात् सैव भावना । फलकरणादिभेदेन तु भेदः तस्या उपकारक एव । न च वाच्यं कथं प्राप्तायां भावनायामिन्द्रिय-संबन्धो दधिसंबन्धश्च विधीयते इति । यतो न क्वचि-दपि भावनायाः फलसंबन्धो विधीयते । लिप्साधिकरण-( ४।१।१ ) न्यायेन रागतः प्राप्तफलसंबन्धानुवादेन साधनमात्रविधानम् । तदुक्तं कारिकायाम्— '**फलांशे भावनायाश्च प्रत्ययो न विधायकः । वक्ष्यते जैमिनिश्चात्र तस्य लिप्सार्थलक्षणा ॥**' इति । अतो नात्र प्रकृतहोमाश्रयस्यैव दध्नः फले विधान-मिति सिद्धं कर्मान्तरत्वम् ।

**प्रयोजनम्**— पूर्वपक्षे दधिहोमत्वेनापूर्वत्वात् सकृ-देव केवलदधिसाधनकहोमानुष्ठानम् । सिद्धान्ते तु होम-भेदात् सायंप्रातरभ्यस्तो दधिसाधनको होम इति । **सूत्रे** तु— कर्मफलसंबन्धगुणफलसंबन्धवाक्ययोः अतुल्यत्वात् तस्येन्द्रियफलस्य संबन्धो गुणे प्रतीयते । गुणादेव फलमित्यर्थः । **तौता.**

* **फलसंबन्धः** हेतुरपूर्वप्रतिपत्तेः । **वा. २।१।१।१ पृ. ३७३ .** * **फलसंबन्धेन** प्रतीयमाना मुख्याः, निष्फलाः शेषाः । वि. ४।४।११ . * **फलसंबन्धस्य** अवेष्टौ 'एतयाऽन्नाद्यकामं याजयेत्' इति विधिः, न कर्मान्तरस्य । २।३।१३।२६ .

* **फलसंबन्धाभावे** प्राधान्यायोगः । वि. ४।४।४.

**फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् । ४।३।१६।३८॥**

'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति विधाय आम्नायते 'यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति । तत्र संशयः, इयमिष्टिः कर्तुः पितुः फलाय पुत्रस्य फलाय वेति । कर्मकर्तुः कर्मफलेन संबन्धात् पितुः फलाय इति उत्सूत्रे पूर्वपक्षे प्राप्ते सिद्धान्तमाह । अचोदिते वाक्यशेषे अनुक्ते पितरि पूतत्वादिकस्य फलस्य संयोगो न स्यात् । अशेषभूतत्वात् पितुः फलवचने शेषत्वा-भावात् । 'यस्मिन् जाते स पूतो भवति' इति च स्पष्टमेव जातस्य पुत्रस्य फलं ब्रूते । कर्तुः फलं इति तु उत्सर्गः । अत्र वचनेन अकर्तुरपि फलम् ।

**अङ्गानां तूपघातसंयोगो निमित्तार्थः । ३९ ॥**

ननु 'यद्येकं कपालं नश्येदेको मासः संवत्सरस्यापेतः स्यात् । अथ यजमानः प्रमीयेत द्यावापृथिव्यमेककपालं निर्वपेत्' इति कपालनाशे निमित्ते आत्मनिःश्रेयसफलं कर्म एवं जातेष्टिरपि इति पूर्वपक्ष्याशङ्कां निराकरोति । अङ्गानां कपालादीनां उपघातसंयोगः नाशवचनं

निमित्तार्थः निमित्तार्थतयैव उपपद्यते, नान्यथा । न हि कपालनाशे तदन्वेषणार्थं इष्टिः क्रियते । जातेष्टेः तु अन्यथापि उपपद्यमानत्वात् पूतत्वादि फलं पुत्रगतमेव, न तु कर्तुः इति सिद्धान्तः ।

अथवा अनेन एकेन सूत्रेण वर्णकं द्वितीयम् । 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति श्रुता इष्टिः किं पुत्रे जातमात्रे कर्तव्या उत जातकर्मोत्तरं इति संशये जातमात्रे इष्टिः इति च पूर्वपक्षे प्राप्ते, सिद्धान्तयति । तुशब्दः पूर्वपक्षं निरस्यति । अङ्गानां कालरूपस्याङ्गस्य उपघातः उदरान्निर्गमनं पुत्रजननं इति यावत् । उपघातस्य संयोगः केवलं निमित्तार्थः निमित्ते सति विधानार्थः । तस्मात् जातेष्टिः जातकर्मानुष्ठानोत्तरं कर्तव्या ।

अथ अनेनैव सूत्रेण तृतीयं वर्णकम् । इयं जातेष्टिः किं अन्तर्दशाहे कर्तव्या किंवा जननाशौचसमाप्त्युत्तरं पौर्णमास्याममावास्यायां वा कर्तव्या इति विचारे नियामकाभावात् अन्तर्दशाहे कर्तव्या इति पूर्वपक्षे प्राप्ते, सिद्धान्तयति । अङ्गानां उपघातसंयोगः कार्त्स्न्येन संयोगः निमित्तार्थः कामनानिमित्तविहितकर्मार्थः, काम्यकर्मसु सर्वाङ्गोपसंहारस्य आवश्यकत्वात् । के.

* 'फलसंयोगात्तु स्वामियुक्तं प्रधानस्य' (३।७।२।६) इत्यनेनैव गतार्थत्वात् दीक्षाणामनुदाहरणत्वम् । वा. ३।७।५।११.

**फलसंयोगात्तु स्वामियुक्तं प्रधानस्य । ३।७। २।६॥**

ज्योतिष्टोमे वपनं पयोव्रतं तपश्चाम्नातानि । तेषां याजमानत्वं तृतीयस्याष्टमे पादे द्वितीयाधिकरणे सेत्स्यति । ते वपनादयो धर्माः किं कर्तरि संबद्धाः सन्तः अङ्गप्रधानार्थाः उत भोक्तरि संबद्धाः सन्तः केवलप्रधानार्था इति संशये कर्तृत्वांशेन अङ्गप्रधानार्था इति पूर्वाधिकरणन्यायेन पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रमिदम् । तुशब्दः पूर्वाधिकरणसिद्धान्तप्रत्युदाहरणत्वसूचकः । स्वामियुक्तं यजमानसंयुक्तं यत् वपनादिधर्मजातं तत् भोक्तरि संबद्धं सत् प्रधानस्य केवलस्य भवितुमर्हति नाङ्गानाम् । फलसंयोगात् फलेन संयोगात् । एते हि धर्माः यजमानं फलभोगसमर्थं कुर्वन्ति । तस्मादेते प्रधानार्था एव । के.

**फलसंयोगात्स्वामियुक्तं प्रधानस्य । ३।७। २।६ ॥**

ज्योतिष्टोमे केशश्मश्रुणोर्वपनम्, पयोव्रतानि, तपश्च आम्नातानि । तेषु संदेहः किमङ्गप्रधानार्थानि उत प्रधानार्थानि इति । अस्मिन्नधिकरणे येषां संस्काराणां यजमानगामित्वं व्यवस्थास्यते, तेषामेव विषयत्वम् । अत्रायं पूर्वपक्षः । यद्यपि यजमानस्य द्वैरूप्यमस्ति यागकर्तृत्वं फलभोक्तृत्वं च, तथापि कर्तृत्वावगमपूर्वकत्वाद्भोक्तृत्वावगमस्य सर्वेषामेवाङ्गप्रधानानां उपकारापेक्षित्वात् कर्तृत्वांशोपनिपाते च यजमानस्य साक्षात्प्रयुक्तया च साङ्गप्रधानकर्तृत्वेन साङ्गप्रधानोपकारोपपत्तेः कर्तृत्वांशोपनिपातात् अङ्गप्रधानार्थत्वमेव वपनादिसंस्काराणामिति । एवं प्राप्ते, अभिधीयते । भवेदेवं यदि कर्तृत्वांशोपनिपातिनः संस्कारा भवेयुः । भोक्तृत्वांशनिपातिनश्च ते । कर्तृत्वस्य संस्कारैर्विनापि अध्ययनमात्रनिष्पत्तित्वेनैव सर्वलोकसिद्धत्वात् । फलभोक्तृत्वं तु न संस्कारैर्विना भवतीति न प्रमाणान्तरसिद्धम् । तेन फलभोक्तृत्वांशे एव यजमानस्य योग्यतामादधानाः क्रियाः संस्कारा इत्युच्यन्ते । फलापूर्वस्य च प्रधानजन्यत्वात् प्रधानार्था एव यजमानसंस्काराः । तेन यथा यानि अदृष्टार्थान्यङ्गानि तैः फलभोक्तृत्वम्, न तत्र न्यायेन पूर्वपक्षो विशेषणम् (?) दृष्टार्थान्यङ्गानि दैक्षादीनि फलयोग्यतामादधान्येवाङ्गानि भवन्ति, तथैतेऽपि संस्कारा इति सिद्धं यजमानसंस्काराणां केवलप्रधानार्थत्वमिति ।

**प्रयोजनम्**— पूर्वपक्षे यद्यङ्गार्थत्वमपि संस्काराणाम्, तदा दैक्षादयो ज्योतिष्टोमाङ्गानि विकारेष्वपि कर्तव्याः । सिद्धान्ते तु नेति । सूत्रं तु फलभोक्तृत्वात् स्वामिभूतयजमानसंयुक्तं वपनादि प्रधानस्यैवेति । तौता.

**फलसंयोगाधिकरणम् ।** जातेष्टिः पुत्रगतपूतत्वादिफलप्रयुक्ता ॥

**फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् । ४।३।१६।३८॥**

**भाष्यम्**— 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे

जाते' इति विधाय आम्नायते, 'यस्मिन् जाते एतामिष्टिं निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति। तत्र संदेहः किमात्मनिःश्रेयसाय, उत पुत्रनिःश्रेयसायेति। आत्मनिःश्रेयसायेति ब्रूमः। नेमानि फलदानि परस्य भवन्ति कर्माणि। कुतः? आधाने आत्मनेपदनिर्देशात्। यथा 'यद्येकं कपालं नश्येदेको मासः संवत्सरस्यापेतः स्यात्। अथ यजमानः प्रमीयेत, द्यावापृथिवीयमेककपालं निर्वपेत्। यदि द्वे नश्येतां द्वौ मासौ संवत्सरस्यापेतौ स्याताम्। अथ यजमानः प्रमीयेत, आश्विनं द्विकपालं निर्वपेत्। संख्यायोद्वासयति, यजमानस्य गोपीथाय' इति कपालनाशे निमित्ते आत्मनिःश्रेयसफलं कर्म दर्शयति। एवमिहापि द्रष्टव्यम्। तस्मात् आत्मनिःश्रेयसार्थमिति। **एवं प्राप्ते, ब्रूमः।** फलसंयोगो न स्यात् पितुः। फलवचनं शेषभूतं पुत्रस्य, न पितुः। कथम्? एवं श्रूयते, 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते। यदष्टाकपालो भवति, गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति। यन्नवकपालो भवति, त्रिवृतैवास्मिंस्तेजो दधाति। यदेकादशकपालस्त्रिष्टुभैवास्मिन् इन्द्रियं दधाति। यद् द्वादशकपालः, जगत्यैवास्मिन् पशून् दधाति। यस्मिञ्जाते एतामिष्टिं निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति। यो जातस्तत्र फलं श्रूयते। नास्ति वचनस्यातिभारः। तस्मात् पुत्रस्य फलमिति। यदुक्तं न परस्य फलदान्येतानि कर्माणीति। तदुच्यते। यत् पुत्रस्य फलम्, आत्मनः सा प्रीतिः। तस्मादात्मनेपदं न विरुध्यते। एतामेव आत्मनः प्रीतिमभिप्रेत्य भवति वचनम्, 'आत्मा वै पुत्रः' इति। '**अङ्गादङ्गात्संभवसि हृदयादभिजायसे। आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम्॥**' इति।

**टुप्**— अर्थवादो रात्रिसत्रन्यायेन फलप्रतिपत्त्यर्थ इति स्थिते, किं पुत्रजन्मनिमित्तं पितुः फलमुत पुत्रस्येति। पुत्रस्यैव। कुतः? 'यस्मिञ्जात एतामिष्टिं निर्वपति, पूत एव सः' इति सर्वनाम्ना पुत्रस्य फलं प्रतिपाद्यते, पूत एव सः। कः? यो जातः इति। अतो वचनसामर्थ्यात् पुत्रस्यैव फलम्। पवनादिसंयुक्तः पुत्रः इष्यते एव इत्यात्मनेपदमविरुद्धम्।

**अङ्गानां तूपघातसंयोगो निमित्तार्थः॥ ३९॥**

**भाष्यम्**— अथ यदुक्तम्, 'यद्येकं कपालं नश्येत्' इत्येवमादि। तत्रोच्यते। अङ्गानां उपघातसंयोगो निमित्तार्थ उपपद्यते, नान्यथा। नहि कपाले नष्टे तदन्वेषणार्था इष्टिर्युक्ता। नहि काकिन्यां नष्टायां तदन्वेषणं कार्षापणेन क्रियते।

**शा**— '**येनैव वाक्यशेषेण फलमेतत् प्रकल्प्यते। तेनैव पुत्रगामित्वप्रतिपत्तिरपि स्फुटा॥**' १७.

**सोम**— सोमस्य दर्शपूर्णमासोत्तरकालत्वे अभिहिते तत्प्रसङ्गात् उत्तराधिकरणे वैश्वानरेष्टेः कालो निरूपयिष्यते। तत्र कुमारविपत्तिप्रसङ्गात् जातकर्मानन्तरं इति करिष्यमाणः सिद्धान्तः पूतत्वादेः पुत्रगतत्वं विना नोपपद्यते इति तदुपयोगितया पुत्रगतत्वनिरूपणात् **संगतिः।** **ननु** पुत्रजननिमित्तकत्वात् अस्या इष्टेः प्रत्यवायपरिहार एव फलम्, न तु पूतत्वादिकमिति चेत्, **उच्यते,** विधेः फलाकाङ्क्षायां श्रुतत्वात् आर्थवादिकं पूतत्वादिकमेव फलत्वेन स्वीक्रियते। पूतत्वादिफलसंबन्धानन्तरं तावता नैमित्तिकत्वानिर्वाहात् तन्निर्वाहार्थं पश्चात् प्रत्यवायपरिहारः अश्रुतोऽपि फलत्वेन कल्प्यते इति पूतत्वादिकं प्रत्यवायपरिहारश्च इत्युभयमपि अत्र फलम्। तत्र च उत्पत्तौ निमित्तसंयुक्तस्यैव पूतत्वादिकं फलं इति निमित्तप्रयुक्तानुष्ठानानुसारितया पूतत्वादेः स्वातन्त्र्याभावात् एकस्मिन्नेव प्रयोगे पूतत्वादिफलपञ्चकं (पूतत्व-तेजस्वित्व-अन्नादत्व-इन्द्रियावित्व-पशुमत्त्वरूपं) भवति, न तु योगसिद्धिन्यायात् (४।३।१२) एकैकं फलम्। **सूत्रार्थस्तु**— वाक्यशेषगतफलभाक्त्वेन अचोदिते पितरि फलसंयोगो न स्यात्, तद्गतत्वेन अप्रतिपादितस्य फलस्य तं प्रति शेषत्वाभावात् इति। १७.

**वि**— 'वैश्वानरेष्ट्या पूतत्वं पितुः पुत्रस्य वा, ऽग्रिमः। कर्तुरेव फलं युक्तं कर्तृत्वं पितुरेव हि॥ जाते यस्मिन्निष्टिमेतां निर्वपेत् तस्य पूतता। तच्चेप्सितं पितुस्तेन पिता तत्र प्रवर्तते॥'

**भाट्ट**— वैश्वानरेष्टिस्तावत्पूतत्वाद्यार्थवादिकफलार्था, सत्यपि निमित्तसंयोगेन अकरणे प्रत्यवाये भावनाभाव्यत्वेन

पापक्षयापेक्षया पूतत्वादेरेव लघुभूतस्यान्वयात् । सा च पुत्रगतपूतत्वादिफलप्रयुक्ता, उत कर्तृगतपूतत्वादिफलप्रयुक्तेति चिन्तायाम् , विधिना कर्तृसमीहितस्यैव आक्षेपात् आधानगतात्मनेपदेन च अग्निप्रयोज्यफलस्य आत्मगामित्वावगतेः इष्टिकर्तर्येव फलम् । न च 'यस्मिन् जाते' इत्यादिना धर्मिग्राहकप्रमाणेन पूतत्वादेः पुत्रगतत्वावसायः, तस्यापि 'स तेजस्वी' इति सर्वनाम्ना निर्वपतिकर्तुरेव समानाधिकरणविभक्तिनिर्दिष्टस्य परामर्शनाविरोधित्वात् । इति प्राप्ते, यच्छब्दसमभिव्याहारे सति तच्छब्दस्य तदर्थपरामर्शित्वनियमेन पुत्रगतपूतत्वादेरेव फलत्वावसायात् , तस्यापि कर्तृसमीहितत्वेन विध्यात्मनेपदयोः अविरोधात् पुत्रगतपूतत्वादिप्रयुक्तैव सा । अकरणे प्रत्यवायस्तु कर्तृनिष्ठ एव । प्रयोजनं पुत्रमरणेऽपि जातेष्टिः, पितरि फलसंस्कारश्च पूर्वपक्षे । सिद्धान्ते नेति । १४.

**मण्डन**— 'पुत्रे फलं स्यात् जातेष्टेः ।' १७.

**शंकर**— 'जातेष्टौ पुत्रपूतता ।' फलम् । १७.

**फलसंस्कार्याधिकरणम्** । फलसंस्कार्यौ कर्मभेदकौ ॥

**फलं चाकर्मसंनिधौ । २।३।१२।२५ ॥**

**भाष्यम्**— अनारभ्य किञ्चित् श्रूयते 'आग्नेयमष्टाकपालं निर्वपेद् रुक्कामः' 'अग्नीषोमीयमेकादशकपालं निर्वपेद् ब्रह्मवर्चसकामः' 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इति । अत्र संदिह्यते, किं प्राकृतेषु आग्नेयादिषु फलं विधीयते उत प्राकृतेभ्यः कर्मान्तराणि एतानि इति । किं प्राप्तम् ? प्राकृतेषु फलविधिरिति । कुतः ? विदिता आग्नेयादयः प्रत्यभिज्ञायन्ते । तस्मात् तेषामनुवादः फलसंबन्धार्थ इति । **एवं प्राप्ते, ब्रूमः ।** फलं च भेदकं अकर्मसंनिधौ श्रूयमाणम् । कथम् ? अनुवादे सति न शक्येत फलं विधातुम्, विधायकस्याभावात् । न हि अविधीयमान उपायो रुचो भवतीति गम्यते । अपि च रुक्कामेऽत्र विधीयमाने कामस्यानित्यत्वात् आग्नेयादीनां नित्यत्वात् संबन्धो नावकल्पेत । एवं सर्वत्र । तस्मात् कर्मान्तराणि ।

**वा**— एवं ( षडपि भेदहेतवः पर्यवसिताः । ) संप्रति प्रकरणान्तरस्यैव प्रकारान्तरप्रदर्शनं क्रियते । यो नाम प्रकरणान्तरकृतमेव कालसंबन्धकृतं वा भेदं मन्यते, न असंनिधानानुपादेयवस्तुसंबन्धमात्रकृतम्, तं प्रति विस्पष्टीकरणार्थं 'फलं चाकर्मसंनिधौ' इत्यारभ्यते । तत्तु एतत् सप्तमं भेदाधिकरणम् । तत्र देशनिमित्तयोः अनुपादेयत्वं सुज्ञानं इति पूर्वाधिकरणे सिद्धत्वात् इहानुदाहरणम् । पूर्वत्रैव तु एवमादि दर्शयितव्यम् । 'सत्रायागूर्य विश्वजिता यजेत' 'साम्युत्थाने विश्वजित्' इत्यादीनि निमित्ते । देशेऽपि 'दक्षिणेन तीरेण सरस्वत्या आग्नेयेनाष्टाकपालेन' 'शम्यापरासमीयात्' इत्यादीनि । यद्यप्यत्रातिरात्रादिवदेव यज्यश्रवणं तथापि प्राक् यज्यनुमानात् तद्धितान्तपदयुक्तवाक्यापरिसमाप्तेः वाक्यान्तरस्य अनपेक्षणात् कर्मान्तरत्वम् । फलसंस्कार्ययोस्तु तुल्यहेतुत्वात् इह विचारः । तत्र फलमुदाहृतमेव । संस्कार्यमपि उदाहर्तव्यम् 'त्रैधातवीया दीक्षणीया' इति । यजमानसंस्कारार्थत्वेन उपादानात् । अनारभ्य किञ्चित् इति ( भाष्यं ) .प्रकरणान्तरावरोधाभावज्ञापनार्थम् । तत्र यागोद्देशेन आहवनीयादिवत् फलं विधेयम् । शक्यं हि तत् पुरुषेण दर्शपूर्णमासस्येनापि कामयितुं इति मत्वा आह ( भाष्ये पूर्वपक्षी ) प्राकृतेषु फलविधिरिति । सिद्धान्तवादी तु स्वर्गकामाधिकरणसिद्धं ( ६।१।१ ) 'प्रत्यर्थं चाभिसंयोगात्' ( ६।१।१।३ ) इति फलोद्देश्यत्वं मत्वा वदति 'न शक्येत फलं विधातुम्' इति । विधीयमानं क्रियाङ्गत्वात् अफलमेव प्राप्नोति । क्रियाऽपि वा विधीयमाना तादर्थ्यं प्रतिपद्यमाना निष्फलैव स्यात् । न च उभयोः उद्दिश्यमानयोः उपादीयमानयोर्वा संबन्धोऽस्ति इत्येकान्तेन फलमुद्दिश्य कर्म विधातव्यम् । ततश्च पूर्ववदेव सिद्धो भेदः । एतेन संस्कार्यमपि व्याचक्षीत । किञ्च '**न चानित्यस्य काम्यस्य नित्यैरन्यादिकर्मभिः । कथञ्चिदपि संबन्धः साध्यसाधनरूपतः ॥**' तस्मात् कर्मान्तराणीति सिद्धम् ।

शा— ' आग्नेयमष्टाकपालं निर्वपेद् रुक्कामः ' इत्यनारभ्य श्रुतम्, तथा ' त्रैधातवीया दीक्षणीया ' इत्यश्वमेधे । अत्रापि कर्मभेदः इति सिद्धान्तः ।

सोम— पूर्वन्यायातिदेशात् संगतिः । प्रयोजनं पूर्वपक्षे रुक्कामार्थं न पृथक् प्रयोगः, किन्तु गुणफलवत् दर्शपूर्णमासप्रयोगेणैव तत्सिद्धिः । सिद्धान्ते तु कर्मान्तरत्वात् पृथक् प्रयोग इति ।

वि— ' अष्टाकपालमाग्नेयं रुक्कामः प्राकृते फलम् । कर्मान्यद्वा, फलं भानात् पूर्वन्यायाप्रवेशनात् ॥, मा भूद् भिन्नं प्रकरणं कर्मान्तरमसंनिधेः । अनारभ्याधीतमेतद् रूपं त्वन्यूनमीक्षते ॥ '

भाट्ट— फलस्य ' आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः ' इति ( कर्मभेदकत्वम् ) । संस्कार्यस्य तु ' औदुम्बरीं प्रोक्षति ' इति व्रीहिप्रोक्षणात् कर्मान्तरम् ।

मण्डन— ' आग्नेयोऽन्यो रुगर्थिनः । '

शंकर— ' फलसंस्कार्ययोस्तथा । ' भेदकत्वम् ।

* फलसिद्धिः आदित आरभ्य कृत्स्नाङ्गोपेतप्रधानप्रयोगाधीना । कु. ६।३।९।२४.

* फलस्वाम्यं कर्मजन्यफलभोक्तृत्वम् । मीन्या. * फलस्वाम्यं पुरुषविशेषणत्वेन श्रूयमाणाधिकारिविशेषणविशिष्टस्यैव । ' राजा राजसूयेन स्वाराज्यकामो यजेत ' इत्यत्र राज्ञः सतः स्वाराज्यकामस्य फलस्वाम्यम् । मीन्या.

* फलीकरणहोमः पिष्टलेपहोमश्च प्रतिपत्तिकर्मणी । भा. ८।४।५।२७. * फलीकरणहोमः । व्रीह्यवघाते ये अवशिष्टाः कणाः, तान् जुह्वां चतुर्गृहीते आज्ये प्रक्षिप्य दक्षिणाग्नौ ' अग्नेऽदब्धायो० ' ( तैसं. १।१।१३।३ ) इति मन्त्रेण जुहोति । फलीकरणाः तण्डुलकणाः । ( फलीकरणाः तण्डुलेषु क्रियमाणेषु अपनेया मालिन्यांशाः— तैसंभा. ) । वि. ५।१।१५, * फलीकरणहोमः सवनीयपुरोडाशे अनुयाजैः सह आग्निमारुतादूर्ध्वं नोत्क्रष्टव्यः । ५।१।१५. * पिष्टलेपफलीकरणहोमयोः प्रकृतितोऽपि अनूयाजोत्तरत्वं नास्ति । भाट्ट. ५।१।१५.

* फाल्गुनानि नाम लताविशेषः सोमस्य प्रतिनिधिर्भवति । ' आदारांश्च फाल्गुनानि चाभिषुणुयात् ' ( तैब्रा. १।४।७ ) । सादृश्येन प्रतिनिधितया अनेकेषु द्रव्येषु प्राप्तेषु फाल्गुनानां नियमविधिरयम् । फल्गुनीनक्षत्रयुक्तपूर्णिमामासे येषां फलपर्णादिभिर्वृद्धिस्ताद्दशवल्लीविशेषाः फाल्गुनानि इति अस्माकं मतम् । सायणाचार्यः तु लोकव्यवहारे फल्गु स्वल्पमेव प्रयोजनं येषां आर्द्रदूर्वाङ्कुरादीनां तृणानां तानि फाल्गुनानि इति । के. ( वि. ६।३।१३ ). * ' फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते ' इति वाक्येन चातुर्मास्यारम्भः विहितः । संकर्ष. ३।१।१८.

* फाल्गुनीप्रतिपद्वसन्तोत्सवादीनां न शास्त्राद्दते नियमक्रियाप्रमाणमस्ति । बा. १।३।३।७ पृ. २०५ । फाल्गुनीपौर्णमास्यनन्तरायां प्रतिपदि वसन्तनिमित्त उत्सवः । सु. पृ. १८७.

## ब

⌛ बकबन्धनन्यायः । बकबन्धनाय बकस्य शिरसि नवनीतस्थापनायासो यथा वृथा । नवनीतस्थापनकाले एव बन्धनस्य सुसाध्यत्वात् । ( के. )

⌛ बकवृत्तिन्यायः । स्पष्टोऽर्थः । साहस्री. ९५७.

⌛ बधिरान्मन्दकर्णः श्रेयानिति न्यायः । स्पष्टार्थोऽयम् । साहस्री. ९९९.

⌛ बधिरकर्णजपन्यायः । यत्र क्रिया निष्फला तत्र अस्य प्रवृत्तिः । साहस्री. ३०८.

* बबर इति शब्दानुकृतिः ( यथा मर्मरः ) । भा. १।१।८।३१.

* बभ्रुः सौम्यः ऐकादशिनेषु तृतीयः पशुः अश्वमेधे ज्योतिष्टोमे च । वि. ८।१।७.

* बर्करत्वं महिषत्व– (? मेषत्व)एकार्थसमवायिनी बाल्यावान्तरजातिः । सु. पृ. १४११.

* बर्कुः वार्ष्णिः । 'इति ह स्माह बर्कुर्वार्ष्णिः, माषानेव मह्यं पचत, न वा एतेषां हविर्गृह्णाति' । दर्शपूर्णमासप्रकरणे एतत् । वि. ६।७।१२.

* बर्हिः आतिथ्यायाः उपसदां अग्नीषोमीयस्य च साधारणं ज्योतिष्टोमे, न परद्रव्यस्योपदेशः न निरिष्टकस्य न वा धर्मविधिः । ४।२।१४।२९–३०. मीको. पृ. ८८४ 'आतिथ्योपसदग्नीषोमीयपशूनाम्' इत्यत्र द्रष्टव्यम् । * बर्हिः कुशमयं दर्शपूर्णमासयोः । वि. १०।४।२. * बर्हिश्च अङ्गप्रधानार्थम् । टुप्. ४।२। १४।२९. * बर्हिः दर्शपूर्णमासयोः असकृदाच्छिन्नं भवति । भा. ११।१।७।३७. * 'बर्हिर्देवसदनं दामि' इति मन्त्रः जातिविधिसरूपः । बाल. पृ. ६४. * 'बर्हिर्देवसदनं दामि' इति लवनमन्त्रः मुख्यस्य कुशमयादेर्लवनस्याङ्गम्, न तु उलपराजिशब्दितस्य गौणस्य लवनस्य । वि. ३।२।१. * बर्हिः निशियज्ञे अमावास्यातन्त्रात् पृथक् कार्यम् । भा. १२।२।५।१८. * 'बर्हिः प्रति समानयते जुह्वामौपभृतम्' इत्यनेन जुह्वामौपभृताज्यस्य समानयने कालमात्रं विधीयते । भाट्ट. ४।१।१५. * बर्हिः 'यज्ञस्य घोषदसि' इत्यस्मिन्ननुवाके (तैमं. १।१।२) प्रोक्तैर्मन्त्रैर्दात्रच्छिन्नं सत् संपद्यते दर्शपूर्णमासयोः, राजसूये रत्निनां हविःषु मैत्राबार्हस्पत्ये तु 'स्वयंदितं (नं) बर्हिः' न तत्र छेदनादि मन्त्रा वा । वि. १०।१।१. * बर्हिः वेदिस्तरणार्थम् । भा. १२।२। ५।१८. * बर्हिः वैश्वदेवपर्वणि 'त्रेधा संनद्धं बर्हिर्भवति' इति विहितम् । वि. ७।१।३, * बर्हिः सर्वे संस्कृतं वेदेरुपस्तरणे समाप्तं भवति इति कृत्वा पवित्रकरणं परिभोजनीयादर्भैः । ३।८।१८.

**'बर्हिः स्तृणीहि' इति प्रैषः सोमार्थः ॥**

सवनीयस्य पशोः क्रमे 'अग्नीदग्नीन् विहर, बर्हिः स्तृणीहि, पुरोडाशानलंकुरु, पशुनोदेहि' इति प्रैषः श्रुतः । तत्र बर्हिःस्तरणं पश्वर्थं पुरोडाशार्थं च, उभयोरविशेषेण संनिधानात् आकाङ्क्षितत्वाच्च । मध्यंदिनतृतीयसवनयोरप्येवमेव प्रैषदर्शनात् तत्र च पशोरभावात् तदैकरूप्याय केवलपुरोडाशार्थमेव वा । इति प्राप्ते, ऐष्टिकेषु प्रत्यक्षस्य बर्हिर्विधेरभावात् 'अनुपृष्ठ्यं बर्हिः स्तृणाति' इति सौमिकबर्हिर्विधेः सत्वाच्च तस्यैवायं स्तरणार्थः प्रैषः । संकर्ष. १।३।१५

* पितृयज्ञे 'सकृदाच्छिन्नं बर्हिर्भवति' । भा. ११।१।७।३६. * सौमारौद्रे चरौ आभिचारिके 'शरमयं बर्हिर्भवति' । वि. १०।४।२. * बर्हिषा उपलक्षितकालस्य पौर्णमासे व्रतार्थं विधानं वत्सेन च दर्शे । ६।४।१२।३४–४०. मीको. पृ. २०६० 'दर्शपूर्णमासयोः व्रते' इत्यत्र द्रष्टव्यम् । * 'बर्हिषा पूर्णमासे व्रतमुपैति' इत्याद्युक्तकालस्य संनयदसंनयदुत्तमसाधारणत्वम् । ६।४।१३।४१–४३. * 'बर्हिषा यूपावटमवस्तृणाति' इति पशुगतं बर्हिः दर्शपूर्णमासगतबर्हिर्धर्माणां न ग्राहकम् । भा. ७।३।७।१८, * 'बर्हिषा यूपावटमवस्तृणाति' इति बर्हिषि प्राकृतबर्हिर्धर्मा न कर्तव्याः ज्योतिष्टोमे अग्नीषोमीये पशौ । ३।८।१६। ३१. * बर्हिषः आतिथ्याङ्गस्य अग्नीषोमीयार्थे स्तरणकाले स्तरणमन्त्रस्यावृत्तिः कर्तव्या ज्योतिष्टोमे । १२।१। २०।४५. * बर्हिषः आतिथ्यादेशात् अग्नीषोमीयदेशे नयनकाले संनहनमन्त्रस्य हरणमन्त्रस्य च नावृत्तिः । १२।१।२१।४६–४७. * बर्हिषः प्रयाजस्य चतुर्थतां दर्शयति, 'चतुर्थोत्तमयोः प्रति समानयति' इत्युक्ते सति 'अतिहायेडो बर्हिः प्रतिसमानयति' इत्युक्तत्वात् । भा. ५।१।४।७. * बर्हिषः प्रसूनस्य नियम आग्रयणे जघन्यद्यावापृथिव्यानुरोधेन मुख्यस्याप्यैन्द्राग्नादेः विरोधाभावात् । १२।२।१४।३४. * बर्हिषः बर्हिर्धर्माणां च वेद्याः वेदिधर्माणां च विधिः विनियोगसाधारण्यविधिः । बाल. पृ. २०. * बर्हिषः लूनस्य संनहनहरणे उपादानार्थे । तत्र मन्त्रौ स्वीक्रियमाणस्यैव उपवर्णनारूपौ । भा. १२।१।२१।४६, * बर्हिषः वेदिस्तरणयोग्यस्य उपसादनं लवने प्रयोजनम् । ११।४।१४।४४, * बर्हिषः संस्काराः प्रोक्षणम्, अग्राणामुपपायनम्, मूलानामवसेचनम् । १२।१।१९।४२.

* बर्हिरधिकरणम् । ३।२।१।१–२. 'बर्हिर्न्यायः' इत्यत्र द्रष्टव्यम् ।

* **बर्हिरनुयाजः** नास्त्यवभृथे 'अपबर्हिषावनुयाजौ यजति' इति । **वि. १०।७।१५.**

**ꕥ बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः । १।४।७।१०॥**

'बर्हिर्लुनाति' 'आज्यं निर्वपति' इति बर्हिराज्यशब्दौ संस्कारनिमित्तौ जातिशब्दौ वा इति विचारे सिद्धान्तमाह । असंस्कारे संस्काराभावेऽपि लोकप्रसिद्धयोः बर्हिराज्ययोः पदार्थयोर्विषये शब्दलाभात् बर्हिःशब्दस्य आज्यशब्दस्य च लाभात् । अतच्छब्दः न संस्कारवाचकः बर्हिःशब्दः आज्यशब्दो वा । एवं पुरोडाश–आमिक्षा–धानादिशब्दा अपि द्रष्टव्याः । **के.**

**ꕥ बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः । १।४।८।१०॥**

बर्हिराज्ययोः पुरोडाशे च संदेहः किमेष संस्कारशब्द उत जातिनिबन्धन इति । अत्र **प्रभाकरेण** संगतिलोभात् अतःप्रभृति अधिकरणत्रयमेतत् इत्थमुपवर्णितम् । जातिनिमित्तसंस्कारनिमित्तयौगिकत्वानध्यवसायात् अप्रामाण्यं पूर्वपक्षे, सिद्धान्ते तु यथाभाष्यं प्रामाण्यमिति । **तदयुक्तम्** । वक्ष्यमाणपूर्वपक्षन्यायेनैव सर्वत्राध्यवसायसंभवात् यत्किञ्चिदेतत् । इति यथावार्तिकमेवाधिकरणं प्रस्तूयते । इदानीं कर्मनामधेयप्रसङ्गेन द्रव्यनामस्वपि प्रवृत्तिनिमित्तं अधिकरणत्रयेण निरूप्यते । तत्रैतदधिकरणे तावत् अयं पूर्वपक्षिणोऽभिसंधिः । 'बर्हिर्लुनाति' इत्येतद्वाक्यविहितलवनसंस्कृते कुशे बर्हिःशब्दं याज्ञिकाः प्रयुञ्जाना दृश्यन्ते । तथा 'आज्यं विलापयति' इत्येतद्वाक्यविहितविलापनसंस्कृते घृते आज्यम् । एवं 'पुरोडाशं प्रथयति' इत्येतद्वाक्यविहितप्रथनसंस्कृते पिष्टके पुरोडाशशब्दम् । तेन यथा 'यूपं छिनत्ति' इत्येतद्वाक्यविहितछेदनजनितसंस्कारवति काष्ठे यूपशब्दप्रयोगदर्शनात् यत् छिद्यते स यूपः इति संस्कारवचनत्वं यूपशब्दस्य, तथा यत् लूयते तद् बर्हिः, यद् विलप्यते तदाज्यम्, यत् प्रथ्यते स पुरोडाशः इति सर्वत्र संस्कारवचनत्वमेव । **ननु** यूपशब्दस्य अलौकिकार्थत्वेन संस्कृतेष्वेव प्रयोगदर्शनात् भवतु संस्कारवचनत्वम् । बर्हिरादिशब्दानां तु असंस्कृतेष्वपि प्रयोगदर्शनात् कथं संस्कारवचनत्वम् । **मैवम्**, 'शास्त्रस्था वा तन्निमित्तत्वात्' इति न्यायेन शास्त्रस्थानामेव याज्ञिकानां प्रसिद्धिर्बलीयसी । सा तु संस्कृतगोचरैव । अतस्तद्विरोधवशात् शास्त्रस्थप्रसिद्धेर्गौणत्वेनाप्युपपत्तौ संस्कारवचनत्वं बर्हिरादिशब्दानामिति । **एवं प्राप्ते, अभिधीयते** । भवेदेवं यदि शास्त्रस्थाशास्त्रस्थप्रयोगयोर्विरोधो भवेत् । न चैतदस्ति । तथाहि, यस्यामेव कुशजातौ बर्हिःशब्दं अशास्त्रस्थाः प्रयुञ्जते सा जातिः शास्त्रस्थप्रयोगेऽपि अनपगतैव । तेनैव उभयप्रयोगानुगतैकजातिवचनत्वेनैव अविरोधात् सकलप्रयोगोपपत्तौ न क्वचित् गौणत्वम्, क्वचित् संस्कारवचनत्वं इत्युपपद्यते । तदुक्तम् '**एकदेशेऽपि यो दृष्टः शब्दो जातिनिमित्तकः ।** ( जातिनिबन्धनः इति मूले पाठः ) **तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पना ॥**' इति ( वा. पृ. ३४३ ) । एवं च सति 'बर्हिर्लुनाति' पूर्वसिद्धबर्हिरुद्देशेन लवनविधानात् 'यद् बर्हिः, तत् लुनाति' इति यथावस्थितवचनोपपत्तौ 'यत् लुनाति, तद् बर्हिः' इतिवचनव्यक्तिविपर्यासोऽपि न भविष्यति । यूपे तु गत्यन्तराभावात् तथाश्रितम् । तदुक्तम्, '**न च यूपादितुल्यत्वमन्यथाऽप्युपपत्तितः । लोकादलभ्यमानार्थास्ते ह्यगत्या तथाऽऽश्रिताः ॥**' ( वा. पृ. ३४३ ) इति ।

**प्रयोजनम्** – पूर्वपक्षे '**बर्हिषा यूपावटमवस्तृणाति**' इति संस्कृतैरेवास्तरितव्यम् । सिद्धान्ते तु कुशमात्रेणैवेति । **सूत्रं तु** बर्हिराज्यपदार्थयोः असंस्कारे असत्यपि संस्कारे शब्दलाभात् बर्हिराज्यशब्दप्रयोगात् अतच्छब्दः असंस्कारशब्दो बर्हिःशब्दः आज्यशब्दश्चेति । **तौता.**

**ꕥ बर्हिराज्याधिकरणम्** । आज्याधिकरणम् । बर्हिराज्यशब्दौ जातिवचनौ तेन यूपावटस्तरणबर्हिः यूपाञ्जनाज्यं च लौकिकमेव असंस्कृतं ग्राह्यम् ॥

**बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः । १।४।७।१०॥**

**भाष्यम्**— बर्हिराज्ययोः पुरोडाशे च संदेहः किमेते संस्कारशब्दाः, उत जातिशब्दा इति । संस्कारशब्दा इति ब्रूमः । संस्कृतेषु तृणेषु बर्हिःशब्दमुपचरन्ति सर्वत्र, नासंस्कृतेषु । संस्कृते च घृते आज्यशब्दम् । तथा संस्कृते

पिष्टे पुरोडाशशब्दम्। नन्वसंस्कृतेऽपि कस्मिंश्चिद्देशे उपचर्यते यथा बर्हिरादाय गावो गता इति भवन्ति वक्तारः। तथा आज्यं क्रय्यमिति, पुरोडाशेन मे माता प्रहेलकं ददातीति। सादृश्यात् तेषु प्रयोगः। यथोपशये यूपशब्दः। कुत एतत्? यत एकदेशे हि शब्दप्रयोगः। तस्मात् संस्कारशब्दा इत्येवं प्राप्तम्। **एवं प्राप्ते, ब्रूमः।** बर्हिरादिषु असंस्कृतेष्वपि शब्दलाभान्न संस्कारशब्दाः। ननूक्तं सादृश्यादेकदेशे भविष्यन्ति। तन्न। प्रसिद्धे हि संस्कारशब्दत्वे, सादृश्यादिति शक्यते वक्तुम्। तच्चाप्रसिद्धम्। कथम्? बर्हिरादिशब्दैरुद्दिश्य संस्कारा विधीयन्ते। तेन सत्सु शब्देषु संस्कारैर्भवितव्यम्, सति च संस्कारे शब्दलाभः इतीतरेतराश्रयं भवति। न च अविहिताः संस्कारा भवन्ति, यानालोच्य लोकः प्रयुञ्जीत। तस्मान्न लोकाः संस्कृतेषु बर्हिरादीन् प्रयुञ्जते। तत एकदेशेऽपि जातिनिमित्ता दृष्टाः, सर्वत्र जातिनिमित्ता भवितुमर्हन्ति। न चालौकिकानां सतां वेदादेव पूर्वोत्तरपदसंबन्धमनपेक्ष्य शक्यतेऽर्थोऽध्यवसातुम्। पूर्वोत्तरपदे अनर्थके मा भूतामित्येवं स परिकल्प्येत। अशक्यस्तु अनवगम्यमानः परिकल्पयितुम्। अर्थवती च ते पदे पूर्वोत्तरे लौकिकेन असंस्कृतप्रयोगेण भविष्यतः। तस्माज्जातिशब्दा एवंजातीयकाः। **प्रयोजनम्** 'बर्हिषा यूपावटमवस्तृणाति' इति संस्कृतैरेव स्तरितव्यं यदि पूर्वः पक्षः, विपरीतं सिद्धान्ते।

**वा**— नामधेयप्रस्तावेन द्रव्यनामसु निमित्तं प्रति अधिकरणत्रयमारभ्यते। तुल्यहेतुत्वात् पुरोडाशोऽपि उदाहृतः। तत्र 'शास्त्रस्था वा तन्निमित्तत्वात्' (१।३। ४।९) इति याज्ञिकानां संस्कृतेषु प्रयोगात् सार्वत्रिकत्वादविगीतत्वाच्च संस्कारनिमित्तता। तथाहि, '**पुरोडाशादिभिर्लोके व्यवहारो न दृश्यते। तस्माद् यूपादिवद्वेदात्तेषां संस्कारहेतुता॥**' तन्नास्ति। कुतः? '**एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः। तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पना॥**' 'ये एव लौकिकाः शब्दास्ते एव वैदिकास्ते एवामीषामर्थाः' इति स्थितत्वात् (१।३।९ वर्णकं १) लोकप्रसिद्धिप्रतीक्षे वेदे यत्र एकदेशेऽपि जातिनिमित्तता लभ्यते, न तत्र पुनर्निमित्तान्तरशक्तिकल्पना संभवति। संस्कृतेष्वपि जातेरनपगमात् तन्निमित्ततातिक्रमो न शक्यो वक्तुम्। अतश्च शास्त्रस्थैरप्यविरोधान्न बाधः। किंच, '**वेदेनापि च संस्कारात् प्रागेव च्छेदनादिकात्। तद्विधौ जातिशब्दत्वमाश्रितं लोकसंमतम्॥**' तेन जातिमेते न व्यभिचरन्ति। व्यभिचरन्ति तु संस्कारान्, अविहितत्वात् लोकव्यवहारवेलायां संस्काराणामभावात्। '**न च यूपादितुल्यत्वमन्यथाऽप्युपपत्तितः। लोकादलभ्यमानार्थास्ते ह्यगत्या तथाऽऽश्रिताः॥**' यदि हि छेदनविधिवेलायां बन्धनविधौ वा कश्चिल्लौकिकोऽर्थो लभ्येत, ततः किमेवं व्यवस्थितवचनव्यक्तिविपर्ययेण कल्प्येत 'यच्छिद्यते स नूनं यूपः' इति। अस्ति च बर्हिरादेर्गतिस्तस्मादतुल्यता।

**शा**— कर्मनामप्रसङ्गात् द्रव्यनाम्नां बर्हिराज्यपुरोडाशशब्दानां संस्कृतेषु शास्त्रस्थैः सर्वैः प्रयुज्यमानानां असंस्कृतेऽपि जातिमात्रे कैश्चिदशास्त्रस्थैः प्रयुक्तानां किं संस्कारनिमित्तता यूपादिवत्, उत जातिवाचिता इति चिन्त्यते। तत्र पील्वादिवत् अश्ववालादिवच्च शास्त्रस्थयाज्ञिकप्रसिद्धिः सार्वलौकिकी च अशास्त्रस्थम्लेच्छकतिपयप्रसिद्धेर्बलीयसी, इति संस्कारनिमित्तता। **इति प्राप्ते, ब्रूमः।** '**अन्वयव्यतिरेकाभ्यामेतेषां जातिवाचिता। व्यभिचारान्न संस्कारनिमित्तत्वं प्रकल्प्यते॥**' तस्मात् जातिवचनाः। ८.

**सोम**— पूर्वत्र पुरोडाशविषयाग्नेयशब्दस्य विचारितत्वात् तत्प्रसङ्गेन पुरोडाशशब्दस्य, तत्तुल्ययोगक्षेमतया बर्हिराज्यशब्दयोश्च बुद्ध्युपारूढत्वात् तद्विषयो विचार इदानीं क्रियते इति समनन्तराधिकरण**संगतिः** प्रासङ्गिकी। **प्रयोजनम्**— संस्कारवाचित्वे 'बर्हिषा यूपावटमवस्तृणाति' इति यूपावटस्तरणबर्हिषि समन्त्रका लवनादयः, 'आज्येन यूपमनक्ति' इति यूपाञ्जनार्थे आज्ये विलापनावेक्षणादयः, रौहिणपुरोडाशादौ समन्त्रकप्रथनादयश्च कर्तव्याः, जातिमात्रवाचित्वे तु न कर्तव्या इति। **सूत्रार्थस्तु**— असंस्कारे संस्काराभावेऽपि बर्हिराज्ययोः शब्दलाभात् प्रयोगलाभात् अतच्छब्दः संस्कारव्यतिरिक्तजातिवाचकः बर्हिरादिशब्दः

इति । अत्र न्यायसाम्यात् सूत्रे बर्हिराज्यशब्दग्रहणमुपलक्षणं इत्याश्रित्य पुरोडाशोऽप्युदाहृतः ।

**वि**— ' बर्हिराज्यपुरोडाशशब्दाः संस्कारवाचिनः । जात्यर्था वा, शास्त्ररूढेस्ते स्युः संस्कारवाचिनः ॥ , जातिं त्यक्त्वा न संस्कारे प्रयुक्ता लोकवेदयोः । विनाऽपि संस्कृतिं लोके दृष्टत्वाज्जातिवाचिनः ॥ ' **गुरुमतमाह**— ' बर्हिरादौ निमित्तस्य दुर्वचत्वान्न मेति चेत् । , जातेस्तत्र निमित्तत्वात् तद्युक्ता चोदना प्रमा ॥ ' न मा प्रमाणं इति चेत् । ८.

**भाट्ट**— बर्हिराज्य-पुरोडाशादिशब्दानां संस्कृतेषु शास्त्रस्थैः प्रयुज्यमानत्वात् यूपादिशब्दवत् संस्कारमात्रवाचित्वे संस्कारविशिष्टकुशादिवाचित्वे वा प्राप्ते, जातिं विहाय कैरप्यप्रयुज्यमानत्वात् संस्कारं विनाऽपि लोके ' बर्हिरादाय गावो गताः ' ' आज्यं क्रय्यम् ' ' पुरोडाशेन मे माता प्रहेलकं ददाति ' इत्यादौ प्रयुज्यमानत्वात् अव्यभिचाराल्लाघवाच्च कुशादिजातिवाचित्वमेव ।

**प्रयोजनं** यूपावटास्तरणार्थबर्हिरादौ पूर्वपक्षे संस्कारकरणम् , सिद्धान्ते नेति ।

**मण्डन**— ' बर्हिःशब्दस्तृणं वक्ति । '

**शंकर**— ' बर्हिराज्यादि जात्यर्थम् । ' ८.

* **न च बर्हिराज्याधिकरणन्यायेन** ( १।४।७। १० ) अनार्यव्यवहारादपि राजपदस्य क्षत्रियजातिपरत्वं स्यात् इति वाच्यम् । बर्हिराज्यस्थले अनार्यव्यवहारादपि जात्यर्थत्वम्, आर्यव्यवहारस्य जात्यव्यभिचारित्वात् , इदं पूर्वपक्षे । कु. २।३।२।३.

* **बर्हिराज्याधिकरणवार्तिकोक्तन्यायः** । ' एकदेशेऽपि यः शब्दो दृष्टो जातिनिबन्धकः । तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पना ॥ ' इति । तेन राज्यरहिते क्षत्रिये जातिनिमित्तत्वेनाभ्युपगतस्य राजशब्दस्य राज्ययोगिन्यपि क्षत्रिये जात्यत्यागात् अक्षत्रियेऽपि च क्षत्रियकार्यापत्त्या प्रयोगोपपत्तिः । सु. पृ. ९००.

* **बर्हिराज्यादिशब्देषु** एकदेशेऽपि जातिनिमित्तत्वे लभ्यमाने निमित्तान्तरं न कल्पनीयम् । **वा.** २।३।२।३ पृ. ५८१.



* **बर्हिरादीनि** यागद्रव्यधारणेन दृष्टेन उपकारसंबन्धेन उपकुर्वन्ति । **भा.** ११।२।१०।४५. * **बर्हिरादीनां** अङ्गप्रधानसाधारण्यम् । ३।७।१।१ – ५ . ' वेदिबर्हिर्धर्मन्यायः ' इत्यत्र द्रष्टव्यम् ।

* **बर्हिरास्तरणमन्त्रः** आतिथ्यायां ' ऊर्णाम्रदसं त्वा स्तृणामि ' इत्यादिः स चाग्नीषोमीयबर्हिषि पुनरावर्तनीयो देशभेदात् , बर्हिस्तु स्वरूपेण तदेव । **वि.** १२।१।२०.

* **बर्हिर्धर्मा** अङ्गप्रधानार्थाः न केवलं प्रधानार्थाः दर्शपूर्णमासयोः । वेदिबर्हिर्धर्मन्यायः । ३।७।१।१–५ । द्रव्यसंस्कारन्यायः । ३।८।१५।३१ ( वेदिबर्हिर्धर्मन्याये द्रव्यसंस्कारन्याये च समानो विचारः । उत्तरविवक्षया च प्रापणात् न दोषः ) ।

⌛ **बर्हिर्न्यायः** । गौणमुख्याधिकरणम् । मन्त्रविनियोगो मुख्यार्थे । लिङ्गविनियोगाधिकरणम् । लिङ्गाधिकरणम् ॥

**अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेषभावः स्यात् , तस्मादुत्पत्तिसंबन्धोऽर्थेन नित्यसंयोगात् । ३।२। १।१॥**

**भाष्यम्**— इह मन्त्रा उदाहरणम् ' बर्हिर्देवसदनं दामि ' इत्येवमादयः । किं मुख्ये एवाभिधेये मन्त्राणां विनियोगः, उत गौणेऽपीति । कः पुनर्मुख्यः को वा गौण इति । उच्यते । यः शब्दादेव अवगम्यते, स प्रथमोऽर्थो मुख्यः । मुखमिव भवतीति मुख्यः इत्युच्यते । यस्तु खलु प्रतीतादर्थात् केन चित् संबन्धेन गम्यते, स पश्चाद्भावात् जघनमिव भवतीति जघन्यः । गुणसंबन्धाच्च गौण इति । यद्येवं सर्व एव मुख्यः । सर्वो हि शब्दाद्गम्यते । यथैव हि अग्निर्ज्वलतीत्युक्ते ज्वलनसंप्रत्ययः । एवमेव अग्निर्माणवक इति शब्दे एवोच्चारिते माणवके संप्रत्ययः । अथोच्येत । यस्मिन् निरुपपदाच्छब्दात् संप्रत्ययः स मुख्यः, यस्मिन् सोपपदात् स गौण इति । नैतद्युक्तम् । यस्य हि शब्दस्य रूपं कस्य चिदर्थस्य निमित्तम्, सोपपदस्यापि तदेव रूपं निरुपपदस्यापि । न च शक्यं निमित्ते सति नैमित्तिकेन न भवितुम् । किमतः ? यद्येवम्, इदं न शक्यते वदितुं उपपदादृते न सोऽर्थो

ह्यहर्गणादन्यदहान्यहीनमुच्यते ॥' श्रुतिक्रमविरोधे किमुदाहरणमिति । 'उच्यते रशनाधर्मा दर्भमय्यादयः क्रमात् । अग्नीषोमीयशेषाः स्युः श्रुत्या यूपाङ्गतां गताः ॥ एतद्यूपपरिव्याणशेषो हि रशना श्रुता । सह धर्मैर्न सा याति क्रमेण पशुशेषताम् ॥ यावत् प्रकरणादीनि तस्याः कल्पयति क्रमः । चतुर्भिस्तैर्व्यपेतत्वाच्छ्रुत्या तावत् स जीयते ॥ आकाङ्क्षामात्रमेवैकं यावत् कल्पयति क्रमः । दूरेण तावदप्राप्तां रशनां हरति श्रुतिः ॥'

श्रुतिसमाख्ययोर्विरोधे किमुदाहरणम् । पौरोडाशिकमिति समाख्याते दर्शपूर्णमासकाण्डे पठितो मन्त्रः साधारणे प्रकरणे वर्तमानः क्रमेण चानुन्मीलितलिङ्गेन अविनियुज्यमानः पुरोडाशस्यैव वा प्राथम्यात् प्राप्नुवन्, श्रुत्या सांनाय्यार्थशाखाङ्गत्वेन विधीयते 'इषे त्वेति शाखां छिनत्ति' इति । तत्रापि यावत् समाख्यया किञ्चित् सामान्यं कल्प्यते, तावत् श्रुत्या विनियुक्तत्वात् प्रकरणवाक्यसामर्थ्यश्रुतिषु अकल्पितास्वेव बाधः । (पृ. ८३५–८३६)।

एवं तावदेकस्य शेषस्य अनेकं शेषिणं प्रति नीयमानस्य विरोध उदाहृतः । एतयैव तु दिशा अनेकस्य शेषस्य एकं शेषिणं प्रति नीयमानस्य विरोध इदानीमुदाहर्तव्यः । तद्यथा श्रुतिलिङ्गयोर्विरोधे 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इति मन्त्रकरणकव्यापारविधाने कृते लिङ्गात् कस्मिंश्चिदाग्नेये मन्त्रे शेषत्वेन प्राप्नुवति श्रुत्यैन्द्री विनियुज्यते । तदवरुद्धे चोपस्थाने नेतरस्यावकाशो विद्यते । श्रुतिवाक्ययोर्विरोधे यज्ञायज्ञीयप्रगाथैकवाक्यभूतगिरापदप्राप्तौ इरापदविधानमुदाहरणम् । तथा विश्वेषां देवानां श्रुत्या आमिक्षैव, शेषो हि तेषां वाक्येन वाजिनम्, तत् दुर्बलप्रमाणत्वात् तया श्रुत्या निराकृतम् । श्रुतिप्रकरणयोर्विरोधे प्रतिष्ठाकामदर्शपूर्णमासप्रयोगे प्रकरणात् पञ्चदशसंख्यासामिधेन्यनुवचने अङ्गत्वेन प्राप्ते श्रुत्या एकविंशतिसंख्यानुवचनान्तराङ्गत्वावगमात् प्राकरणिकनित्यानुवचनबाधः । श्रुतिक्रमविरोधे 'पशुकामप्रयोगे च क्रमेण चमसाङ्गता । श्रौताद् गोदोहनात्तत्र चमसस्य निराक्रिया ॥' श्रुतिसमाख्याविरोधे 'वाजपेयः समाख्यानात् प्राप्नोत्यध्वर्युकर्तृकः । श्रुत्या स्वाराज्यकामस्य तथाऽध्वर्योर्निराक्रिया ॥' तथा 'यजमानस्य याज्या' इत्युदाहरणम् । ऋतुयाजेषु हि हौत्रसमाख्यया होतुः प्राप्ता याज्या यजमानकर्तृकत्वेन कर्तृसंबन्धवाचिन्या षष्ठीश्रुत्या प्रतिपाद्यते । (पृ. ८३८)।

शा— ननु लिङ्गवाक्ययोरेव (अत्र) विरोधः, न श्रुतिलिङ्गयोः । अत्राभिधीयते— 'सत्यं वाक्यविरोधोऽस्ति श्रुतिश्चापि विरुध्यते । सहिते हि विरुध्येते, न तु लिङ्गेन केवले ॥' इति श्रुतिलिङ्गयोरेवैष विरोधः । 'तत्र स्वतःप्रमाणत्वं लिङ्गादेः श्रुतिवन्मतम् । सामर्थ्यालोचनादेव तादर्थ्यं हि प्रतीयते ॥ गार्हपत्यार्थता श्रुत्येत्युभयोस्तुल्यकक्षता । तेन द्वयोरुपस्थानं विकल्पेन भविष्यति ॥ समुच्चयेन वा मन्त्रः प्रयुज्येत द्वयोरपि । प्रतिप्रधानमावृत्तिर्गुणानां न विरुध्यते ॥ यद्यपि स्याद् बलीयस्त्वं श्रुतेर्लिङ्गात्, तथापि तु । अविरोधादबाधः स्यात् संभवी हि समुच्चयः ॥ यद्वा सामर्थ्यरूपत्वात् लिङ्गं स्यात् प्रबलं श्रुतेः । वस्तुशक्त्यनुसारी हि सर्वः शब्दः प्रवर्तते ॥', अत्राभिधीयते सत्यं यद्यत्यन्तमशक्यता । गार्हपत्ये तु सामर्थ्यं गौणं मन्त्रस्य विद्यते ॥ गुणाद्वाऽप्यभिधानं स्यादित्यत्रैतद्धि साधितम् । तन्न तावद् बलीयस्त्वं लिङ्गस्य न च तुल्यता ॥ विनियोगः श्रुतेः पार्श्वे (समीपे) लिङ्गस्यारादसौ स्थितः । यावदेव हि मन्त्रार्थो मन्त्रेण प्रतिपाद्यते ॥, तावदेव श्रुतिर्मन्त्रं गार्हपत्यार्थतां नयेत् । मन्त्रार्थं मन्त्रतो बुद्ध्वा पश्चाच्छक्तिं निरूप्य च ॥ मन्त्राकाङ्क्षावशेनेन्द्रशेषत्वे श्रुतिकल्पना । श्रुत्या प्रत्यक्षया पूर्वं गार्हपत्याङ्गतां गते ॥ निराकाङ्क्षीकृते मन्त्रे निर्मूला श्रुतिकल्पना । तेन शीघ्रप्रवर्तिन्या श्रुत्या लिङ्गस्य बाधनम् ॥ प्रत्यक्षे चानुमाने च यथा लोके बलाबलम् । शीघ्रमन्थरवृत्तित्वात् तथेह श्रुतिलिङ्गयोः ॥ अविरोधादबाधो यो वर्णितः स न युज्यते । लिङ्गस्य हि प्रमाणत्वं मन्त्राकाङ्क्षानिबन्धनम् ॥ तां च श्रुतिर्निकृन्तन्ती नाविरोधेन

गच्छति । विरोधे च श्रुतिर्लिङ्गं बलीयस्त्वेन बाधते ॥ '

**सोम** -- एवं श्रुत्यादिभिः विनियोगप्रकारे कथिते सति अध्यायादौ उपक्षिप्तः बलाबलविचारः प्राप्तावसरः ( इति संगतिः ) ।

**वि**-- 'ऐन्द्योपस्थीयतां वह्निरितीन्द्राग्न्योर्विकल्पनम् । समुच्चयो वोत शक्र एवाग्निः केवलोऽथवा ॥, विकल्पः श्रुतिलिङ्गाभ्यां गुणावृत्त्या समुच्चयः । श्रुतिः शक्त्यनुसारेति शक्र एकोऽत्र लिङ्गतः ॥, शक्तिरुक्ता श्रुतिः शीघ्रा लिङ्गं श्रुत्यनुमापकम् । नैराकाङ्क्ष्यात्मके बोधे श्रुत्याऽग्नौ केवले स्थितिः ॥ '

**भाट्ट**-- तदेवं षट्प्रमाणेषु निरूपितेषु अधुना विरोधे बलाबलं निरूप्यते । विरोधश्चैकस्य शेषस्य शेषिद्वये प्रमाणद्वयसत्त्वे यथा ऐन्द्रीमन्त्रस्य श्रुत्या गार्हपत्याङ्गत्वे लिङ्गाच्च इन्द्राङ्गत्वे । यथा वा एकस्मिन् शेषिणि शेषद्वयविनियोजकप्रमाणद्वये यथा गार्हपत्ये श्रुत्या ऐन्द्रीमन्त्रः, लिङ्गादाग्नेयः । अयं च शेषद्वयविनियोगो द्वारैक्ये सत्येव बलाबलप्रयोजकः, न तु तद्भेदेऽपि, वाक्यप्रकरणाभ्यां वैमृधप्रयाजादीनां एकशेष्यर्थत्वेऽपि तदभावात् । यत्र तु एकस्य शेषस्य एकस्मिन्नेव शेषिणि प्रमाणद्वयम्, तत्र वैषम्ये प्रबलस्यैव प्रयोजनार्थं विनियोजकत्वम् । साम्ये तु एकस्य विनियोजकत्वम्, इतरस्य पुनःश्रुतित्वेन प्रयोजनान्तरकल्पनम् । नियामकाभावे द्वयोरभ्युदयशिरस्कत्वकल्पनं कर्मान्तरबोधकत्वं वा । एवं यत्र ' अरुणया क्रीणाति ' इत्यादौ आरुण्यस्यापूर्वसाधनीभूतक्रयार्थत्वे प्रमाणत्रयम्, तत्रापि श्रुतेरेव विनियोजकत्वम्, न त्वन्यस्य, वाक्योद्देश्यसमर्पकत्वमात्रत्वात् । अत एव न ' ऐन्द्या ' इत्यत्र लिङ्गवाक्यविरोधः । वाक्यस्य उद्देश्यमात्रसमर्पकत्वेन श्रुतिसहकारित्वेऽपि कृतिकारकत्वबोधकत्वरूपविनियोजकत्वाभावात् । प्रकरणं तु अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकमात्रम् । न तु तदपि विनियोजकम्, गौरवात् । अत एव विनियोजकप्रमाणबलाबलमपि निरूप्यमेव ।

तदिह श्रुत्योर्विरोधे ऐन्द्रीमन्त्रस्य तृतीयया गार्हपत्याङ्गत्वमेव, न तु तद्धितश्रुत्या इन्द्राङ्गत्वम् । तस्य सूक्ततद्धितत्वेन प्राधान्येन कृतिकारकत्ववाचित्वाभावात् । अतश्च तस्य मुख्यश्रुतित्वाभावाद्दुर्बलत्वम् । एवं च तस्यैव मन्त्रस्य लिङ्गात् इन्द्राङ्गत्वमिति । **लिङ्गविरोधे**ऽपि एतदेव उदाहरणम् । अत्र हि सर्वत्र उत्तरोत्तरस्य पूर्वपूर्वकल्पकत्वेन प्रामाण्यस्य तत्तन्निरूपणावसरे स्थापितत्वादुत्तरोत्तरस्य श्रुतिकल्पनं यावदवगतस्यैव पूर्वपूर्वेण शेषशेषिणो निराकाङ्क्षत्वापादनेन बाधः । न च अङ्गानां प्रकृत्यर्थत्वेन निराकाङ्क्षाणामपि विकृत्याकाङ्क्षयैवातिदेशकल्पनवत् इन्द्राद्याकाङ्क्षयैव लिङ्गस्य श्रुतिकल्पकत्वोपपत्तिः, तस्य ध्यानाद्युपायान्तरेणापि स्मृतिसिद्धेर्नियमेन विकृतिवदनाकाङ्क्षत्वात् । अतः श्रुत्या गार्हपत्याङ्गत्वमेव । न च श्रुतेः करणत्वमात्राभिधायकत्वेन गार्हपत्यनिरूपितत्वस्य वाक्याधीनत्वात् नायं श्रुतिलिङ्गविरोध इति वाच्यम् । तथात्वेऽपि ब्राह्मणवाक्यत्वेन मन्त्रलिङ्गापेक्षया ' यद्यप्यन्यदेवत्यः पशुः ' इतिवत् प्रबलत्वोपपत्तेः । वस्तुतस्तु यथा न केवलया श्रुत्या विरोधो नैवं वाक्येनापि, तस्यापि गार्हपत्यसमीपे इत्येवमुपपत्तेः । अतश्च उभयविरोधसत्त्वेऽपि ' प्रधानेन व्यपदेशा भवन्ति ' इति न्यायेन श्रुतिलिङ्गविरोधोदाहरणत्वम् ।

**मण्डन** — ' बलीयसी श्रुतिर्लिङ्गात् । '

**शंकर**-- ' श्रुत्या लिङ्गस्य बाधः स्यात् । '

**( लिङ्गबलाबलविचारः-- ) भाष्यम्-- लिङ्गवाक्ययोर्विरोधे** किमुदाहरणम् ? ' स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः ॥ ' इति । अत्र संदेहः किं कृत्स्नो मन्त्र उपस्तरणे पुरोडाशासादने च प्रयोक्तव्यः, उत कल्पयाम्यन्त उपस्तरणे, ' तस्मिन् सीद ' इत्येवमादिः पुरोडाशासादने इति । यदि वाक्यं बलीयस्ततः कृत्स्न उभयत्र । कथम् ? ' सुशेवं कल्पयामि ' इत्येतदपेक्ष्य ' तस्मिन् सीद ' इत्येवमादिः पूर्वेणैकवाक्यतामुपैति यत् कल्पयामि तस्मिन् सीदेति । अथ लिङ्गं बलीयः, ततः कल्पयाम्यन्तः सदनकरणे । कथम् ? ' स्योनं ते सदनं कृणोमि ' इति सदनकरणमभिवदितुमयमलमिति । ' तस्मिन् सीद ' इत्ययमपि पुरोडाशं सादयितुमिति सादने विनियुज्यते । किं तावत्

प्राप्तम् ? तुल्यबले एते कारणे इति । यथा लिङ्गं प्रति श्रुतेर्बलीयस्त्वमुक्तम्, न तथा वाक्यं प्रति लिङ्गस्य उच्यते । अथवा वाक्यमेव लिङ्गात् बलीयः । कुतः ? तद्धि श्रुत्याऽपि बाध्यते । न च बलीयः कारणं शक्यते बाधितुम् । तेनास्य भङ्गुरतामध्यवस्यामः । यस्त्वेकेन बाध्यते, शक्योऽसौ अन्येनापि बाधितुमिति । एवं प्राप्ते, ब्रूमः । लिङ्गवाक्ययोः लिङ्गं बलीय इति । कुतः ? अर्थविप्रकर्षात् । कोऽत्र अर्थविप्रकर्षः ? प्रकरणवतः संनिधौ आम्नानात् दर्शपूर्णमासाङ्गमयं मन्त्र इत्यवगम्यते । 'तस्मिन् सीद' इति पुरोडाशासादनाभिधानसामर्थ्यात् सादने विनियुज्यमाने कृतसामर्थ्यं मन्त्राम्नानमिति नास्ति प्रमाणम्, येन उपस्तरणेऽपि विनियुज्येत । तथा, 'स्योनं ते सदनं कृणोमि' इत्येषोऽपि प्रकरणाम्नानसामर्थ्यादेव दर्शपूर्णमासाङ्गतामापन्नः सामर्थ्यादेवोपस्तरणे विनियोगात् कृतप्रयोजनो न पुरोडाशासादने विनियोगमर्हति । न ह्यस्मिन् विनियुज्यमानस्य किञ्चिदपि प्रयोजनमस्ति । एवं उपस्तरणे 'तस्मिन् सीद' इत्यस्य नास्ति सामर्थ्यम्, पुरोडाशासादनेऽपि 'स्योनं ते' इत्यस्य । पूर्वेणैकवाक्यतामुपेत्योपस्तरणे सामर्थ्यम् । पूर्वस्य परेणैकवाक्यत्वात् सादने, न तु स्वरूपेणोभयोः । तदेषोऽर्थविप्रकर्षः, यत् 'स्योनं ते' इत्यस्य प्रत्यक्षं सदनकर्मणोऽभिधानसामर्थ्यं तन्मुखम् । 'तस्मिन् सीद' इत्यस्य पुनः पूर्वेण सहैकवाक्यतामुपगतस्य भवति जघन्यम् । तदत्र पूर्वस्य मन्त्रस्याभिधानसामर्थ्यादुपस्तरणे विनियोग उक्तो भवतीति संनिकृष्टो लिङ्गस्य श्रुत्यर्थः । उत्तरस्य तूपजनितेऽभिधानसामर्थ्ये ततः श्रुत्यर्थ इति लिङ्गान्तरितो विप्रकृष्टो भवति । एवमुत्तरस्य सादने संनिकृष्टः पूर्वस्य च लिङ्गान्तरितः । तस्मादर्थविप्रकर्षात् लिङ्गवाक्ययोर्लिङ्गं बलवत्तरम् । ततः स्योनमित्येष शब्दो यद्यप्युत्तरेण आकाङ्क्षित इति सादनेऽपि प्रयोगमर्हति, तथापि भित्त्वा वाक्यमुपस्तरणे एव विनियोक्तव्यः । 'तस्मिन् सीद' इत्येष च सादने । ननु 'स्योनं ते' इत्यस्य शब्दस्य यथैवोपस्तरणाभिधानसामर्थ्यं एवमुत्तरेणैकवाक्यतामुपगन्तुं सामर्थ्यम् । सामर्थ्यं च लिङ्गमित्युच्यते । तस्माद्भिद्यमाने वाक्ये लिङ्गमेव बाधितं भवतीति । **सत्यमेवम्** । एतदपि लिङ्गम् । लिङ्गमपि खल्वेतदेवंलक्षणकं विप्रकृष्टार्थमेव भवति । लिङ्गादेकवाक्यता, तस्मादभिधानसामर्थ्यम्, ततः श्रुत्यर्थः इति विप्रकृष्टार्थता । विप्रकृष्टार्थता च बाधने हेतुभूता । तस्मान्नोत्तरेणैकवाक्यतां यास्यतीति । एवं 'तस्मिन् सीद' इत्युत्तरं न पूर्वेणापि । अपि चोत्तरेणैकवाक्यतामुपगतस्य न किञ्चिदपि दृष्टमस्ति कार्यम् । उपस्तरणप्रत्यायनं तु दृष्टम् । कुतः ? श्रुतत्वादुपस्तरणस्य सादनस्य च । एवमुत्तरस्य सादनप्रत्यायनम्, न तु पूर्वेणैकवाक्यतायाम् । न चैतौ पूर्वोत्तराभ्यामेकवाक्यतामन्तरेण पृथग् यथायथं कार्ये न कुरुतः । तस्मात् पूर्वः पूर्वत्र विनियोजनीयः, उत्तरः उत्तरत्रेति । अथ यदुक्तं श्रुत्याऽपि तद्बाधितमिति वाक्येनापि तद्बाधितव्यमिति । नैतदेवम् । नहि बाधितस्यान्येनापि बाधनमेव न्याय्यम् । बाधितं ह्यनुग्रहीतव्यमर्थवत्त्वाय । श्रुतिं प्रति विप्रकृष्टार्थम्, वाक्यं प्रति संनिकृष्टार्थम् । तस्माल्लिङ्गं बलीय इति ।

वा — **लिङ्गद्वयविरोधे** 'स्योनं ते सदनं कृणोमि' इत्येवोदाहरणम् । द्वे हि तत्र लिङ्गे । परस्परैकवाक्यतागमनसामर्थ्यात्मकमेकम्, अभिधानशक्तिरूपमपरम् । एतच्च श्रुत्यनुमानस्य प्रत्यासन्नम्, विप्रकृष्टमितरत् वाक्यादपि जघन्यत्वात् इत्युक्तं भाष्ये (लिङ्गवाक्यविरोधोदाहरणे) । पृ. ८४० ।

**लिङ्गवाक्ययोर्विरोधे** एकं तावदिदं उदाहरणम् । ज्योतिष्टोमे हौत्रप्रवचनाधीताः प्रैषा वाक्येन मैत्रावरुणस्य विधीयन्ते 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाऽऽह' इति । तेषां मध्ये कश्चित् प्रैष एवं पठ्यते 'प्रशास्तर्यज' इति । सोऽयं स्वसामर्थ्येन मैत्रावरुणं नियुङ्क्ते । तत्र यदि वाक्यं बलीयः, ततो मैत्रावरुणः प्रेष्येत् । आत्मनि च प्रैषासंभवात् होता यजेत् । अथ तु लिङ्गं बलीयः, ततो मन्त्रेण मैत्रावरुणो नियोक्तव्यः । न चाऽऽत्मनैवाऽऽत्मानं नियोक्तुमर्हतीति परेण विनियोक्तव्यः । स च 'तेषां यतो विशेषः स्यात्' (३।८।१०।२२) इत्येवं विज्ञायते । सामान्यसमाख्यया पूर्वमयं होतुरेव प्रापितः सन् वाक्येन बाधितः आसीत् । तद्यदा वाक्यं लिङ्गेन बाध्यते, तदा समाख्ययैव प्रतिप्रसूतया होतृकर्तृकत्वं

विज्ञायते । प्रैषार्थकारी तु मैत्रावरुणो विज्ञायते एव । यद्यपि 'तस्मान्मैत्रावरुणः' इत्येतद्ब्राह्मणम्, तथाऽपि पदसंनिधिमात्रात्मकत्वेनाश्रुतित्वात् प्रत्यासन्नतरश्रुतिकल्पनेन लिङ्गेन बाध्यते । यदि हि मैत्रावरुणः प्रेष्येत्, ततः प्रशास्तृशब्दो होतरि अनर्थकः स्यात् । ननु च मैत्रावरुणोऽपि प्रेष्यमाणः 'होता यक्षत्' इत्यादिरेव अर्थशून्यः स्यात् । गौण इति चेन्न । प्रशास्तृशब्देऽप्येवं प्रसङ्गात् । अपि च पश्चात्तनत्वादुपजातविरोधः प्रशास्तृशब्द एव वरं गौणः, न प्रथमोच्चारितो विनैव विरोधेन होतृशब्दः । तस्माल्लिङ्गयोरेवैष विरोधो न लिङ्गवाक्ययोरिति । अत्र ब्रूमः । सर्वथा तावदनयोरन्यतरस्य विरोधे गौणत्वं कल्पनीयम् । तत्र प्रशास्तृशब्दस्य होतरि अत्यन्तमनिमित्तः प्रयोगः, होतृशब्दस्य तु होतृकार्यापन्नमैत्रावरुणेऽस्ति निमित्तम् । सर्व एव प्रधानर्त्विग्वचनाः तत्पुरुषेषु प्रयुज्यमाना दृष्टाः, न तु विपर्ययः । तस्मात् प्रशास्तृलिङ्गत्वात् मन्त्रस्तमेव विनियुञ्जीत । न चैतद्वाक्यमत्यन्तमनर्थकमेव भवति । प्रैषान्तरेषु चरितार्थत्वात् । अतोऽस्मिन्विषये बाध्येतेति । 'स्योनं ते सदनं कृणोमि' इत्यत्रोदाहरणे (भाष्योक्ते) चोद्यते । **'भिन्ने एते यतो वाक्ये पुरस्तात्प्रतिपादिते । तस्मान्न समुदायोऽयं वाक्येन विनियुज्यते ॥'** सत्यपि विभज्यमानसाकाङ्क्षत्वे अर्थभेदाद्भिन्नवाक्यत्वेन एते पुरस्तात्प्रतिपादिते । तस्मान्न समुदायस्यैव सदनाभिघारणे पुरोडाशप्रतिष्ठापने च समुच्चयेन विकल्पेन वा विनियोग आशङ्कितव्यः । तत्र **केचिदाहुः** । नैवात्र सकलेन वाक्येन सह विचारः, किं तर्हि ? अंशेनैव सह । (अन्यथा समाधत्ते–) अथवा **'साकाङ्क्षावयवत्वेन प्रायेणेष्टैकवाक्यता । सिद्धा लिङ्गबलीयस्त्वात् प्रत्युक्ता भिन्नवाक्यता ॥'** 'तस्मिन् सीद' इत्येतत्कृतं साकाङ्क्षत्वमाश्रित्यैकवाक्यत्वेनोदाहृतमिदमेव प्रधानकारणम् । शक्यते हि तद्दर्शनं यथेष्टं विशेषणविशेष्यभावं कल्पयित्वा एकार्थत्वेनैकवाक्यत्वम् । यद्यथा, पूर्वस्य तावदुत्तरेण सह यदहं घृतस्य धारया सुसुखं तव सदनं कल्पयामि तस्मिन्नेवमितिकर्तव्यताके प्रतितिष्ठ त्वमितीतिकर्तव्यताविशिष्टपुरोडाशप्रतिष्ठापनमेकं प्रयोजनम् । अथवा पुरोडाशप्रतिष्ठापनफलं सदनाभिघारणं करोमीत्येवं विशिष्टफलसदनकरणं प्रकाशनं प्रयोजनमिति शक्यमेकवाक्यत्वम् । यत्तु पुरस्तादर्थनानात्वात् नानावाक्यत्वमुक्तम्, तदिह स्थितं लिङ्गबलीयस्त्वेन । यदि हि लिङ्गं बलीयः, ततः संभवदन्यतरविशेषणत्वेनैकवाक्यत्वं परित्यज्योभयोः प्रत्येकं स्वप्राधान्यं लिङ्गावगतमाश्रित्य विशेषणबुद्धितिरस्कारेण प्रयोजनभेदाद्वाक्यभेदो भवति । तेन अयं विनियोगद्वारेण वाक्यात्मलाभस्य लिङ्गप्राधान्यस्य अत्र बलाबलविचारः । तत्रापि प्रतीतेः लब्धात्मके वाक्ये सति बाधकप्रत्ययसदसद्भावविचार इति द्रष्टव्यम् । किं प्राप्तम् ? 'तुल्यबले' इति । तदा चेद्दृशं कर्म, कदा चिद्विभज्य मन्त्रौ प्रयोक्तव्यौ, कदा चित् समुदायोऽन्यतरत्र, कदा चित्स एवोभयत्रेति, 'कथं पुनरयम्' इत्थमनवस्थितः शास्त्रार्थो भवति ? सर्वथा यदि प्रमाणत एवमवगम्यते किं नो बाध्यते ? लिङ्गवाक्यतुल्यबलत्वालोचने सर्वमेतत् प्रतिभाति । यदा तु श्रुतिवत् लिङ्गात् प्रमाणान्तरत्वाद्वाक्यमेव बाधकमित्यवधार्यते, तदा नियत एव समुदायप्रयोग इति । एवं प्राप्ते, ब्रूमः । **'स्योनादिः कल्पयाम्यन्तः स्वसामर्थ्येन शक्यते । निराकाङ्क्षः स्वकार्याय साकाङ्क्षत्वं पराश्रयम् ॥'** सर्वस्तावदादित आरभ्य विनियोगं निरीक्षते । तदिह कल्पयाम्यन्तः अस्य न कदा चित् परत्रापेक्षा दृश्यते इति तावति पर्यवसानं निश्चित्य प्रयोजनाकाङ्क्षानिवृत्तेः अभिघारणाङ्गत्वेनाऽऽश्रीयते । तेनैष तावत् प्रतिष्ठापनं यावन्न कदा चिन्नीयते, न च परस्य एतेन विना अनर्थकत्वापत्तिः, यतस्तच्छब्देन नीयते, सोऽपि हि प्रतिष्ठापनाङ्गत्वेनार्थवान् भविष्यति । यद्यपि च तच्छब्दः पूर्वापेक्षः, तथापि प्रकाशितं निर्वृत्तं च पूर्ववाक्यार्थमालोच्य भिन्नस्यापि प्रवर्तमानस्य न कश्चिद्विरोधः । तद्यथा 'तप्ते पयसि दध्यानयति' इति संस्कारविधाने पर्यवसिते 'सा वैश्वदेव्यामिक्षा' इति वाक्यान्तरेणैव द्रव्यदेवतासंबन्धः क्रियते । तस्माद्भेदेन विनियोगस्य प्रत्यासन्नतरश्रुतित्वान्नेतरेतरविषयसंक्रान्तिर्विद्यते । एवमुपस्तरणे 'तस्मिन् सीद' इत्यस्य नास्ति सामर्थ्यमिति पूर्वेणैव गतार्थप्रायं सत् निरूपणदार्ढ्यार्थं पुनः परामृश्यते । यच्चैकत्रोक्तम्,

तस्येतरत्राभावं दर्शयित्वा पुनरात्मधर्ममुपनीय इतरधर्मनिराकरणमिति ग्रन्थो निराकुलीकर्तव्यः । पूर्वः प्रस्तावः प्रमाणसदसद्भावाभ्याम्, मध्यमः शक्त्यशक्तिभ्याम्, अन्त्यश्च दृष्टार्थत्वाद्दृष्टार्थत्वाभ्यामिति विवेकः । तस्मात् वाक्याल्लिङ्गं बलीय इति सिद्धम् । (पृ. ८४७–८५१) ।

अथ लिङ्गवाक्यादीनां अनुमीयमानश्रुतित्वात् अविशेषे सति किंकृतं बलाबलमिति ? तदुच्यते । '**एकद्वित्रिचतुष्पञ्चवस्त्वन्तरणकारितम् । श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनामपीष्यते ॥**' श्रुतिमात्रानुमानान्तरितो हि लिङ्गस्य श्रुत्यर्थः । वाक्यस्य पुनः लिङ्गश्रुत्यनुमानव्यवहितः । कथम् ? '**वाचकेनैकवाक्यत्वादिहातद्वाचिनां सताम् । कल्पयित्वाऽभिधाशक्तिं श्रुतिः पश्चात् प्रकल्प्यते ॥**' सर्वत्र हि मन्त्रे किञ्चिदेव पदं कर्मसमवेतमर्थं वदति । यथा 'अग्नये जुष्टं निर्वपामि' इत्यग्निनिर्वपामिपदे । शिष्टानि तु असमवेतार्थाभिधायित्वादप्रयोगार्हाणि सन्ति दृश्यमानैकवाक्यताऽन्यथाऽनुपपत्त्या अनुमितसामर्थ्याभिधानानि सन्ति स्वार्थमुपसर्जनीकृत्य तद्विशिष्टसमवेतार्थप्रकाशनेन प्रयोगार्थत्वं प्रतिपद्यन्ते । ततश्च श्रुतिमनुमाय विनियुज्यन्ते । तच्चाविरोधे सति सर्वमभ्यनुज्ञायते । यदा दृश्यमानैकवाक्यत्वयोर्मन्त्रयोः पृथक् पृथक् प्रकाशयितव्यौ अर्थौ कर्मसमवेतौ दृश्येते, तदा उभयोरपि भेदेन प्रकाशकापेक्षणात् प्रकाशकयोश्च प्रकाश्यापेक्षणात् विनियोगाय प्रस्थिते सति यस्य यत्र क्लृप्तं सामर्थ्यम्, स तत्र शीघ्रतरं प्राप्नुवन् नान्यत्रैकवाक्यतया नेतुं शक्यते । नाप्यन्येभ्यः तत्राऽऽगच्छद्भ्यः स्रोऽवकाशं ददाति । कथम् ? '**एकवाक्यतया यावत् सामर्थ्यमनुमीयते । सामर्थ्येन श्रुतिस्तावत् कल्प्यते विनियोजिका ॥**' समुदायो हि विनियुज्यमानो नावयवान् अविनियुज्य विनियोक्तुं शक्यते । तत्र पूर्वोत्तरयोर्भागयोरेकवाक्यत्वं प्रत्यक्षम्, नैकार्थाभिधानसामर्थ्यम् । भिन्नार्थाभिधानसामर्थ्यं तु आर्थे प्रत्ययदर्शनात् सिद्धम् । तत्र समुदायावयवविनियोगाय वाक्यसामर्थ्ययोः सहप्रस्थितयोः असमर्थविनियोगासंभवात् यावद्वाक्येन पूर्वो भाग उत्तरार्थाभिधानसमर्थः, उत्तरो वा पूर्वसमर्थः इत्यनुमीयते, तावत् प्रत्येकभागवर्तिना सामर्थ्येन पूर्वस्यापि स्वार्थे, परस्यापि स्वार्थे, श्रुतिरनुमिता । ततश्च यावदितरत्र विनियोजकश्रुत्यनुमानाय प्रयत्यते तावदिह विनियोगे सिद्धे निराकाङ्क्षत्वात् प्रकरणाम्नानस्य, न कश्चिदपि हेतुः श्रुत्यनुमाने इत्यनुपजातमूलो विनियोगो बाध्यते । मन्त्रस्यापि हि पूर्वस्य पूर्वत्रार्थे शीघ्रं विनियोगः, उत्तरस्य चिरेण । तथोत्तरोत्तरस्य शीघ्रं पूर्वस्य तत्र चिरेण । शीघ्रविनियुक्तश्च मन्त्रः चिरविनियोगं नाऽऽद्रियते । तथाऽर्थोऽपि प्रथमावगतमन्त्रावरुद्धो नेतरं गृह्णाति । स्वप्राधान्ये च संभवति न परोपसर्जनत्वं प्रतिपद्यते । तस्माल्लिङ्गं बलीयः, इति भित्त्वा वाक्यं विनियोग इति । नन्वेवं सति 'निर्वपामि' इत्यादिना क्लृप्तसामर्थ्येन शीघ्रतरप्राप्तेनावरुद्धेऽर्थे विप्रकृष्टप्राप्तानां 'देवस्य त्वा' इत्यादीनां बाधादविनियोगः प्राप्नोति । न चैषां भिन्नप्रयोजनत्वात् समुच्चयः, तथा सत्येकवाक्यत्वाभावात् । अवश्यं चैतैर्यथाकथञ्चिन्निर्वाप एव प्रकाशयितव्यो नान्यप्रकाशनम्, कर्मानङ्गत्वप्रसङ्गात् । अतः समानविषयत्वात् समवाये सति वाक्यप्राप्यपदान्तरबाधेन भवितव्यमिति । अत्रोच्यते । '**पदान्तराणि यत्रार्थं वदेयुः कर्मवर्तिनम् । तत्रैवमितरेषां तु वाक्यमप्यगतेर्वरम् ॥**' यानि ह्यसमवेतार्थवचनानि, तानि यदि स्वतन्त्रीक्रियन्ते, ततोऽनर्थकानि भवन्ति । तेन क्लृप्तसंबन्धैर्निराकाङ्क्षीकृतोऽप्यर्थ इतरेषां साकाङ्क्षत्वात् पुनस्तत्प्रकाश्यत्वं प्रतिपद्यते । यथा प्रकरणपूरितानामपि क्रमेण पुनस्तद्धर्मप्राप्तिर्भवति । यथा प्रकृतौ निराकाङ्क्षीभूता धर्मा विकृतीर्गमिष्यन्ति । तथा च क्लृप्तौ व्याख्यातम् । तस्मादेवमादीन्यपि संबध्यन्ते । येषां तु प्रकाश्योऽर्थः समवेतो दृश्यते, तेषामनभिधेयेनासंबध्यमानानामपि अर्थवत्ताऽस्तीति नाऽऽनर्थक्यनिमित्तमवकाशं लभन्ते । सर्वेषामेव च श्रुत्यादीनामानर्थक्यप्रतिहतानां दुर्बलैरपि बाध्यत्वमिष्यते । तद्यथा व्रीह्यादीनां प्रोक्षणादीन् प्रति श्रुत्या शेषित्वं प्राप्नुवदपि अतिलङ्घ्य प्रकरणलभ्यापूर्वसाधनत्वकृतः संबन्धो भविष्यति । तेनावस्थितं वाक्यात् लिङ्गस्य बलीयस्त्वम् । तथा च भक्षानुवाके दर्शितम् । (पृ. ८३१–८३३) ।

एवं लिङ्गस्य प्रकरणादिविरोध उदाहर्तव्यः । तत्र **प्रकरणविरोधे** तावत् पूषानुमन्त्रणानि उदाहर्तव्यानि ।

यावच्च प्रकरणेनैकवाक्यत्वं कल्प्यते, तावल्लिङ्गेन श्रुतिः। तथा यावदितरत्र प्रकृताग्न्यादिप्रकाशनसामर्थ्यम्, तावदिह विनियोग इति बाधः। लिङ्गक्रमयोर्विरोधः स्तुतशस्त्राधिकरणे दर्शितः 'अर्थेन त्वपकृष्येत' (२।१।५। १४) इति। स्थितोदाहरणमपि यथा अभ्यनुज्ञापनाभ्यनुज्ञयोः प्रज्ञातक्रमयोः 'उपहूत उपह्वयस्व' इत्येवं मन्त्रावाम्नातौ। तौ देशसामान्यात्तथैवाङ्गतया प्राप्नुतः 'उपहूत' इति अनुज्ञापने 'उपह्वयस्व' इति अनुज्ञायाम्। न तु तथा सामर्थ्यमस्तीति विपरीतं शेषत्वम्। यावद्धि स्थानेन प्रकरणमुत्पाद्य एकवाक्यत्वं कल्प्यते, तावल्लिङ्गेन श्रुतिं कल्पयित्वा साधितो विनियोगः, इत्यकल्पितलिङ्गश्रुतिपदकस्यैव क्रमस्य बाधः। तथा परिव्याणकरणक्रियमाणानुवादिनोः 'परिवीरसि' 'युवा सुवासाः' इति अग्नीषोमीयपरिव्याणाङ्गत्वे प्राप्ते लिङ्गात् सवनीयार्थद्वितीयपरिव्याणाङ्गत्वमपि। कथं न मनोता अग्नीषोमीयक्रमबाधनसमर्थेन लिङ्गेन आग्नेयसवनीयपशुयागाङ्गमिति चेत्। न। 'वचनात्त्वयथार्थमैन्द्री स्यात्' (३।२।२।३) इतिवत् बलवत्तरश्रुतिकृतविनियोगकल्पितलक्षणाद्वारेणाग्नीषोमीयाङ्गत्वात्। एवं ह्याह 'यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या' इति। अनया हि श्रुत्या लिङ्गेनोत्कृष्यमाणा मनोता वारिता। द्विदेवत्येऽपि एकदेवत्यैव, न केवलाग्निदेवत्यत्वेनाग्नीषोमीयादुत्तारणीयेत्यर्थः। यद्वा एवकारं स्वस्थानादपनीय यथाक्रमं कार्यैवेत्यत्र संयोजना कार्येत्यवधार्यते। लिङ्गसमाख्याविरोधे तु भक्षानुवाके ग्रहणादिवाक्यानि समाख्यानाद्भक्षाङ्गत्वेन संबन्धसामान्यादिकल्पनया भक्षाङ्गत्वविनियोगाय प्रस्थितानि लिङ्गेन ग्रहणावेक्षणसम्यग्जरणेषु विनियुज्यन्ते इति स्थितम्। याज्यासमाख्याबाधेन च मनोर्ऋचां पृथुपाजवत्योश्च लिङ्गेन सामिधेनीत्वेन विनियोगः इत्युक्तम्। (पृ. ८३६–८३७)।

(अनेकस्य शेषस्य शेष्येकत्वे) लिङ्गवाक्यविरोधे 'स्योनादेरपि शेषत्वं वाक्येन सदनं प्रति। सीदेत्यस्यैव लिङ्गेन तेनायं पूर्वबाधनः॥ तथाऽभिघारणे तस्मिन्सीदेत्यस्यापि शेषता। स्योनादेरेव लिङ्गेन तस्मात्स परबाधनः॥ अनेकशेषिशेषत्वात् पूर्वमेतावुदाहृतौ। अनेकशेषसंबन्धात् संप्रत्येकस्य शेषिणः॥ पूर्वं स्योनं त इत्यादि सदने साभिघारणे। वाक्येनाङ्गतया प्राप्तं लिङ्गाच्छुद्धेऽभिघारणे॥ तस्मिन्सीदेत्ययं वाक्यात् प्राप्तः शेषोऽभिघारणे। लिङ्गात्तु सदनस्यैव तत्रैवातः प्रयुज्यते॥ एकैकस्मिंस्तु शेषत्वं वाक्यात्प्राप्तं द्वयोर्द्वयोः। एकैकस्य तु लिङ्गेन तच्च संप्रति गृह्यते॥ एकस्मिन्नेव मार्गे तु यत् संकीर्णचतुष्टयम्। अभाणि भाष्यकारेण विवेक्तव्यं तदात्मना॥' लिङ्गस्य प्रकरणक्रमसमाख्याविरोधे निर्वापादिषु लिङ्गेन 'देवस्य त्वा' इत्यादिना प्रकरणप्राप्तमन्त्रान्तरबाधः। प्रथमस्य काम्यस्य ऐन्द्राग्नस्य क्रमात् सामिधेनीकार्यप्राप्तस्य याज्यानुवाक्यायुगलस्य लिङ्गेन बाधः। समाख्यया मनोर्ऋचां सोमारौद्रियेषु याज्यानुवाक्यात्वेन प्राप्तानां सोमरुद्रलिङ्गाभिर्याज्यानुवाक्याभिर्बाध इत्युदाहरणानि। (पृ. ८३८–८३९)

शा— 'यावन्ति हि प्रयुज्यन्ते पदानि सति संभवे। तेषां स्यादेकवाक्यत्वम्, वाक्यभेदो न युज्यते॥ तस्मिन् सीदेति पूर्वोक्तसापेक्षत्वाच्च गम्यते। वाक्यैकत्व, मतः सर्वमुभयत्र प्रयुज्यते॥ यद्वा तुल्यबलत्वं स्यादुभयोर्लिङ्गवाक्ययोः। श्रुत्या प्रत्यक्षया लिङ्गं कल्प्यश्रुति निराकृतम्॥ कल्प्यश्रुतित्वमिह तु समानमुभयोरपि। तेन तुल्यबलत्वं स्यादिति प्राप्तेऽभिधीयते॥ सत्यं कल्प्या श्रुतिः किन्तु लिङ्गादह्नाय कल्प्यते। वाक्येन प्रथमं लिङ्गं कल्पयित्वा ततः श्रुतिः॥ कल्पनीये, त्यतो वाक्यात् श्रुत्यर्थो विप्रकृष्यते। संनिकृष्टस्तु लिङ्गस्य तेनैतत् प्रबलं ततः॥'

वि— 'स्योनं त इति पूर्वार्धं तस्मिन् सीदेति चोत्तरम्। सदने सादने चायं सर्वो वाऽर्थे व्यवस्थिते॥, तच्छब्दादेकवाक्यत्वे भवेदाद्यः, श्रुतिं प्रति। लिङ्गस्य संनिकृष्टत्वाद् वाक्यबाधे व्यवस्थितिः॥, उदाहृतिरियं वाक्यबाधे न त्वैन्द्रियेत्यसौ। बाधादूर्ध्वं निरर्थत्वादप्रामाण्यप्रसङ्गतः॥' ८.

भाट्ट— **लिङ्गयोर्विरोधे** मुख्यसामर्थ्येन गौणस्य बाधः । **लिङ्गवाक्ययोस्तु** 'स्योनं ते' इति सदनकरणप्रकाशकस्य पूर्वार्धस्य 'तस्मिन् सीद' इत्युत्तरार्धेन सादनप्रकाशकेन 'तस्मिन्' इति विभागे साकाङ्क्षेणैकवाक्यत्वात् सकलस्य मन्त्रस्य सदनसादनयोरन्यतरत्रोभयत्र वा प्रतिष्ठापने एव 'तस्मिन्' इति पदसंनिधिरूपेण वाक्येन विनियोगे प्रारीप्सिते ततः पूर्वप्रवृत्तेन लिङ्गेन तत्तदाख्यातस्य मुख्यविशेष्यकत्वेन स्वार्थबोधकस्य परोपसर्जनत्वकल्पने प्रमाणाभावात् तच्छब्दस्य च 'सा वैश्वदेवी' इतिवद्वाक्यान्तरोपस्थितार्थपरामर्शकत्वेनापि चरितार्थत्वात् प्रत्येकमेव विनियोगः इति ।

मण्डन— 'लिङ्गं वाक्यस्य बाधकम् ।'

शंकर— 'वाक्यस्यापि च लिङ्गतः ।' बाधः । ८.

**( वाक्यबलाबलविचारः — ) भाष्यम् – अथ वाक्यप्रकरणयोर्विरोधे** कथमिति । किं पुनः प्रकरणं नाम ? कर्तव्यस्येतिकर्तव्यताकाङ्क्षस्य वचनं प्रकरणम् । प्रारम्भो हि स तस्या वचनक्रियायाः । स एष विध्यादिर्विध्यन्तापेक्षः । वाक्यं तूक्तमेव । तयोर्विरोधे किमुदाहरणम् ? सूक्तवाकनिगदः । तत्र हि पौर्णमासीदेवता अमावास्यादेवताश्चाऽऽम्नाताः । ताः परस्परेणैकवाक्यतां नाभ्युपयन्ति । तत्र लिङ्गसामर्थ्यात् पौर्णमासीप्रयोगादिन्द्राग्निशब्द उत्क्रष्टव्योऽमावास्यायां प्रयोक्तव्यः । अथेदानीं संदिह्यते योऽस्य शेषः, 'अवीवृधेतां महोज्यायोऽक्राताम्' इति, स किं यावत्कृत्वः सूक्तवाके समाम्नातः तावत्कृत्व उभयोः पौर्णमास्यमावास्ययोः प्रयोक्तव्यः प्रकरणं बलवत्तरमिति, उत यत्रेन्द्राग्निशब्द उत्कृष्य नीतस्तत्रैव प्रयोक्तव्यो वाक्यं बलवत्तरमिति । एवं सर्वेषु संशयः । किं तावत् प्राप्तम् ? तुल्यबले एते कारणे इति । कुतः ? इतरत्राप्याकाङ्क्षा, इतरत्रापि । तुल्यायामाकाङ्क्षायां नास्ति विनिगमनायां हेतुः । तस्मात्तुल्यबले इति । अथवा वाक्यं दुर्बलम् । बाधितं हि तल्लिङ्गेनेति । **एवं प्राप्ते, ब्रूमः** । प्रकरणाद्वाक्यं बलीयः । कथम् ? अर्थविप्रकर्षात् । कोऽत्रार्थविप्रकर्षः ? । वाक्ये एकैकं पदं विभज्यमानं साकाङ्क्षं भवति, कृत्स्नं परिपूर्णं भवति । तत्र प्रत्यक्ष एकवाक्यभावः । प्रकरणे तु अप्रत्यक्षः । कथम् ? इतिकर्तव्यताऽऽकाङ्क्षस्य समीपे उपनिपतितं पूर्णमिति तस्य प्रकृतस्य साकाङ्क्षत्वमवगम्यते । नैकवाक्यभूतमित्यनुमीयते । एकवाक्यतया चाभिधानसामर्थ्यमवकल्प्याभिहितोऽयमेवं भवतीति परिकल्पना । एषोऽत्रार्थविप्रकर्षः, यद्वाक्यस्य समासन्ना श्रुतिः, प्रकरणस्य विप्रकृष्टा । तस्मात् सूक्तवाकेन प्रस्तरं प्रहरति इति पौर्णमासीदेवतावाचिनाममावास्यादेवतावाचिनां च निष्कृष्य प्रयोगे, तच्छेषाणामपि निष्कृष्य प्रयोगः । तेन यद्यपि प्रकरणसामर्थ्यात् पौर्णमासीदेवतापदशेषाणाममावास्यादेवतावाचिभिः सह एकवाक्यताऽनुमीयते, प्रत्यक्षा तु अमावास्यादेवतापदैः सह । न च प्रत्यक्षविरोधेऽनुमानं संभवति । अर्थवति च प्रकरणे संजाते, न निराकाङ्क्षाणामाकाङ्क्षा शक्योपपादयितुम् । अथ यदुक्तम्, लिङ्गेनापि हि तद्बाध्यते । अतः प्रकरणेनापि बाधितव्यमिति । न यदन्येनापि बाध्यते, तद् भङ्गुरमन्यत्रापीत्यवगन्तव्यम् । अथ भङ्गुरं प्रमाणमेव नाभविष्यत् । किं चित्तु प्रति कस्य चित् प्रभावः । वाक्यस्य प्रकरणं प्रति बाधकशक्तिः, न तु लिङ्गं प्रति । लिङ्गं प्रति विप्रकृष्टार्थमेतत्, प्रकरणं प्रति संनिकृष्टार्थम् । तेन वाक्येन प्रकरणं बाध्यते इति ।

वा— **वाक्ययोर्विरोधे** 'पञ्चदश सामिधेनीरनुब्रूयात्' 'सप्तदश वैश्यस्य' इत्येतदुदाहरणम् । उभयत्रापि हि सामानाधिकरण्यादेकवाक्यत्वे कृते विनियोगे सति निमित्तविशेषसंयोगात् साप्तदश्यं बलीयो भवति । (पृ. ८४०)।

किं पुनः प्रकरणं नामेति । सर्वत्र सिद्धवत्प्रकरणेन व्यवहारः, न चैतत्क्वचिन्निरूपितपूर्वम्, तदिहापि तावदस्य स्वरूपं निरूप्यताम् । निर्ज्ञातस्वरूपस्य हि बलाबलं सुज्ञायते इति । अथवा नैवास्य वाक्यक्रमाभ्यां भेदः । साकाङ्क्षपदसंनिधिमात्रं हि वाक्यमित्युच्यते । तच्च प्रकरणेऽप्यविशिष्टम् । न च वाक्यस्य पदेयत्तायां प्रमाणमस्ति । विभज्यमान– साकाङ्क्षसंहन्यमानैकप्रयोजन-मात्रोपलक्षणत्वात् । तेन वाक्यमेवैकमल्पपदं अपरं बहुपदम् । अवान्तरार्थवशीकृतानां महाप्रयोजनवशेन महासंघातापत्तेः । वक्ष्यति हि वाक्यं ह्येकं दर्शपूर्णमासाभ्यां सहधर्माणामिति । अथवा संनिध्यात्मकः क्रम इत्युच्यते । स च प्रकरणेऽप्य-

चश्यम्भावी संनिधिः। अतः क्रमादप्यभिन्नं प्रकरणमिति मन्यते। तदिदानीं तत्त्वभेदपर्यायैर्निरूपयति। तत्र तत्त्वं तावदुच्यते 'कर्तव्यस्येतिकर्तव्यताकाङ्क्षस्य वचनं प्रकरणम्' इति। कर्तव्यमिति साध्यभूतमपूर्वं अथवा विधेयत्वानुष्ठेयत्वाभ्यां भाव एव प्रत्ययवाच्योऽभिधीयते। साध्यांशोपनिपातात् स्वर्गादिफलं कर्तव्यमिति चेन्न। तस्य कालान्तरभावित्वेन प्रयोगासमवायित्वे सति तत्सिद्ध्यर्थापूर्वस्यैव कर्तव्यत्वावधारणात्। तेनापूर्वं कृत्वा नान्यथेति। तथा 'यज्ञकर्म प्रधानं तद्धि चोदनाभूतम्' (९।१।१।१) इति तस्यैव प्रयोजकत्वं वक्ष्यते। 'फलदेवतयोश्च' (९।१।३।४) इत्युपन्यस्य निराकरिष्यते। तत्र कथमित्यनुग्रहोपायाकाङ्क्षणमाकाङ्क्षेति घञन्तं व्याख्यायते। यद्वा इतिकर्तव्यतां आकाङ्क्षतीतिकर्तव्यताकाङ्क्षं भावापूर्वयोरेवैकम्, तस्य यद्वचनमिति समानाधिकरणे षष्ठ्यन्ते। वचनमिति शब्देन प्रत्यायनम्। एतदुक्तं भवति वस्तुरूपेण विद्यमानाऽप्याकाङ्क्षा न प्रकरणमित्यभिधीयते। किं तर्हि? प्रतीयमाना। साऽपि च कर्तव्यतार्थोपसर्जनत्वेन गृह्यमाणा, न स्वातन्त्र्येण। तेन आकाङ्क्षाऽभिधीयमाना प्रकरणम्, आकाङ्क्षावती वा भावनेति द्रष्टव्यम्। इदानीमवयवव्युत्पत्त्यात्मकेन भेदेन कथयति। तत्र प्रशब्दस्तावत्प्रारम्भमाह, करणशब्दः क्रियाम्, प्रकरणं प्रक्रियेत्यर्थः। का पुनरिह क्रिया गृह्यते, तामाह 'वचनक्रियायाः' अर्थाभिधानक्रियाया इति यावत्। भावनाभिधानक्रियाया हि प्रयोगवाक्यप्रवृत्तिरारम्भः। फलकरणांशपूरणं पदद्वयमात्रसाध्यम्, इतिकर्तव्यतालाभस्त्वनेकवाक्यान्तरायत्तसिद्धिः। अतस्तत्समस्तालोचनापेक्षया कथम्भावः प्रकरणमभिधानविधानक्रिययोरारम्भ इत्युच्यते। करणशब्दश्च क्रियामात्रवाच्यपि सन् आगमविषयः प्रयुज्यमानोऽभिधानक्रियायां वर्तते। 'स एष विध्यादिः' इति पर्यायकथनम्। आद्यन्तयोः संबन्धिशब्दत्वात् किमपेक्ष्य आदित्वमित्यत आह 'विध्यन्तापेक्षः' इति। विध्यन्तो नाम इत्थम्भावरूपमितिकर्तव्यतावधारणम्। तस्य चानेकाङ्गवाक्यतदर्थ—तत्प्रयोजनालोचनमध्यस्य कथम्भाव आदिरित्याचार्याणां विध्यादित्वेन प्रसिद्धिः। तत्र च स्वपदगणेन कियत्यपि प्रयोजनेऽवसितानामेव वाक्यानां पुनः कार्यान्तरापेक्षावशेन संबन्ध इति वाक्याद्विशेषः। तत्र आदितः क्वचिदपि प्रयोजनलेशे विभज्यमानानां वृत्तिर्नास्ति, संबन्धेनैव अर्थलाभः। क्रमेण तु सह वैलक्षण्यमनन्तरमेव वक्ष्यामः। तस्मात् प्रमाणान्तरं प्रकरणम्। 'किमिह उदाहरणमिति' तेनैकवाक्यतानयनाभिप्रायेण पृच्छति। सिद्धान्तवादी तु विधायकस्मारकत्वेन भिन्नवृत्तित्वात् मन्त्रब्राह्मणयोर्न कथञ्चिदेकवाक्यता घटत इति सूक्तवाकमुदाहरति। लिङ्गाद्देवतापदेषु निष्कृष्टेषु तच्छेषाः किमुत्कृष्यन्तामथ तद्रहिता अपि प्रयुज्यन्तामिति। प्रकरणेन तावत् सर्वशेषा उभयत्र प्राप्नुवन्ति। लिङ्गमपि साधारणम्। द्विवचनैकवचनयोरुभयत्र विद्यमानार्थत्वात्। ननु चाऽऽत्मीयेनैव शेषेणावरुद्धेषु देवतापदेषु शेषान्तरमनवकाशमेव स्यात्। सत्यम्। एवमपि तु वाक्यप्रकरणयोर्विरोधो नैवापैति। प्रकरणेन ह्यपनीतदेवताकोऽपि शेषः प्रयोज्यः प्राप्नोति वाक्येनेतर इति वाक्यबलीयस्त्वादेव तदाश्रयणम्। असकृद्वा प्रकरणेन तावत्प्रयोगः प्राप्नोति। वाक्येन तु यथादेवतापदानुसारात् सकृदिति विरोधः। क्लृप्तसंबन्धत्वाच्च वाक्यं बलीयः। कथम्भावेन हि, इत्थं यजेतेति प्रकरणिना सह संबन्धमनुमाय यावदाम्नानं शेषप्रयोगः। तथा क्लृप्तप्रयोगशेषैरात्मीयैर्देवतापदैः सह पुनः संबन्धकल्पनमिति विप्रकर्षः। तस्माद्बाधः। ततश्च देवताशेषाणां नित्यमेवापकर्षः न पाक्षिकः। सर्वदा वा विनियोग इति सिद्धम्। (पृ. ८५१-८५४)।

वाक्यप्रकरणयोः प्रकरणं अर्थविप्रकर्षात् दुर्बलम्। तथाहि, 'प्रत्यक्षा संगतिर्वाक्ये न च प्रकरणेऽस्त्यसौ। आकाङ्क्षातोऽनुमातव्या तावता विप्रकृष्टता॥' प्रकरणे हि स्वार्थपरिपूर्णानामङ्गाङ्गिवाक्यानामुपकार्योपकारकत्वाकाङ्क्षामात्रं दृश्यते। वाक्ये तु प्रत्यक्षः संबन्धः। ततश्च सहप्रस्थितयोर्यावत् प्रकरणेनैकवाक्यता कल्प्यते, तावद्वाक्येन अभिधानसामर्थ्यम्। यावदितरत्र वाक्येन सामर्थ्यम्, तावदिह सामर्थ्येन श्रुतिः। यावदितरत्र सामर्थ्येन श्रुतिः, तावदितरत्र श्रुत्या विनियोगोऽभिहित इति विच्छिन्नायामाकाङ्क्षायां श्रुत्यनुमाने मूलाभावाद्विहते।

कल्पितमपि शेषत्वं निष्पत्तिमगत्वा अन्तरैव विलीयते। तस्माद्वाक्यं बलीयः।(पृ. ८३३)।

**वाक्यक्रमयोर्विरोधे** परिव्याणकरणक्रियमाणानुवादि-परिवीरसिपरिवीतपदव्यतिरिक्तपदानां 'युवा सुवासा आगात्, स उ श्रेयान्' इत्येवमादीनां लिङ्गविनियुक्त-परिवीतपदैकवाक्यत्वात् सवनीयपरिव्याणे विनियोगः। **वाक्यसमाख्ययोर्विरोधे** भक्षानुवाके एव 'सध्यासम्' इत्येवमादिषु ग्रहणादौ विनियुज्यमानेषु तदेकवाक्यगत-शेषपदावृत्तिरुदाहर्तव्या। तथा आध्वर्यवादिसमाख्यानात् ज्योतिष्टोमादिप्रधानेषु तदर्थेष्वेव प्राप्नुवत्सु स्वर्गकामाद्ये-कवाक्यत्वादर्थिमात्रविषयत्वं विज्ञायते। ननु च श्रुति-रेवैषा भवेत्। नात्र कस्य चित् श्रवणादेतत् विज्ञायते लिङा कर्तुरनभिधानात्। किं तर्हि? पदद्वयसंनिकर्षादेव एतत् लक्षणया सामानाधिकरण्यादवगम्यते। तस्मात् वाक्येनैव समाख्या बाध्यते इति। (पृ. ८३७)।

(अनेकस्य शेषस्य शेष्येकत्वे **वाक्यप्रकरणयोर्विरोधे** 'पूर्वेद्युरमावास्यायां वेदिं करोति' इत्युदाहरणम्। प्रकरणेन हि हविरभिवासनोत्तरकालं यत् विधानं तस्य ग्रहणं प्राप्नोति। अमावास्यासमभिव्याहारेण तु पूर्वेद्युः। न चात्र श्रुतित्वम्। नहि सप्तमी शेषशेषिसंबन्धं वदति। यत्तु अधिकरणत्वमभिधत्ते, तत् तत्कर्मणोऽनुपपन्नमेव। तस्मात् पदसंनिधानेनैष संबन्धः। स च शीघ्रतरं भवतीत्युक्तम्। **वाक्यक्रमयोर्विरोधे** किमुदाहरणम्? ज्योतिष्टोमे काम्यनैमित्तिकेषु प्रतिपत्कल्पेषु प्रतीकग्रहणात् पादमात्रं श्रुत्या विनियुज्यते। तत्र द्वितीयपादात् प्रभृति यथासंख्य-क्रमेण नित्यानामेवर्चां प्रसङ्गः। तद्यथा 'वृषा पवस्व धारया इति राजन्याय प्रतिपदं कुर्यात्' इत्यत्र 'पवमा-नायेन्दवे। अभि देवां इयक्षते' इत्येतावेव द्वितीय-तृतीयपादौ प्राप्नुतः। वाक्याच्च 'मरुत्वते च मत्सरः। विश्वा दधान ओजसा' इति। ननु विभक्तिभेदादत्र लिङ्गविरोधः स्यात्। नैष दोषः। सर्वेषां सोमलिङ्गत्वात् विभक्ति-भेदेन तु एकवाक्यत्वमेव नोपपद्यते। तद्यावत् आकाङ्क्षा-पूर्वकमेकवाक्यत्वादि कल्प्यते, तावदितरेण आनन्तर्यात् समानविषयत्वाच्च सामर्थ्यादि कल्पयित्वा विनियोगः कृत इति बलीयस्त्वम्। **वाक्यसमाख्ययोर्विरोधे** 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाऽऽह' इति हौत्रसमाख्याते प्रवचने प्रैषानुवचनमाम्नातम्। तस्य कर्तृविशेषाकाङ्क्षिणः समाख्यया होता प्राप्नोति, वाक्येन मैत्रावरुणः। एकेन च कृतार्थस्य न कर्त्रन्तरापेक्षा भवति। तत्र शीघ्रतरप्राप्ते मैत्रावरुणे प्रकरणकल्पनां यावत् प्राप्ता समाख्या बाध्यते। न चायं श्रुतिविरोधः। आख्यातपदेन कर्तुरनभि-धानात्, मैत्रावरुणपदे च कारकविभक्तिप्रयोगाभावात्। (पृ. ८३९)।

**शा**-- (**वाक्यप्रकरणयोर्विरोधे**) ये तु (प्राभाकराः) आरादुपकारकेष्वेव प्रकरणस्य व्यापारः, संनिपातिनां तु ग्राहकग्रहणाख्येन प्रमाणेन तार्तीयश्रुत्याद्यतिरिक्तेन अपूर्वार्थत्वम्, द्वारैदमर्थ्यं श्रुत्यादिभिः औपादानिकं क्रत्व-र्थत्वम्, प्रकरणस्य तु न कश्चित् व्यापारः इति मन्यन्ते, **तेषामेवायं** सूक्तवाकपदानां श्रुत्या प्रकरणविनियुक्तानां प्रकरणाविनियुक्तत्वात् नेदं वाक्यप्रकरणविरोधोदाहरणं युक्तं इत्युपालम्भो नास्माकम्।

द्वयोरपि वाक्यप्रकरणयोः प्रमाणत्वात् श्रुतिकल्पना-धीनत्वसाम्यात्, अन्यस्य च विप्रकर्षकारणस्य अद्याप्य-कथितत्वात् तुल्यबलतां मन्यन्ते। यद्वा प्रधानाकाङ्क्षा प्रकरणम्, प्रधानार्थं च सर्वम्, इति तन्निबन्धन एव विनियोगो बलीयान्। **इति प्राप्ते, अभिधीयते। 'येनैकवाक्यता तत्र सामर्थ्यं गम्यते मनाक्। सामर्थ्याच्च श्रुतिः, श्रुत्या विनियोगो, ऽपरत्र तु॥ पूर्वयोरेकवाक्यत्वं कल्प्यं स्यात् प्रक्रियावशात्। ततो लिङ्गं, श्रुतिः पश्चाद्, विनियोगस्ततः परः॥'** इति दुर्बलं वाक्यात् प्रकरणम्।

**वि**— 'अग्नीषोमाविदं हव्यमजुषेतामितीरितात्। अपच्छिद्येदमित्यादिः सर्वशेषो भवेन्न वा॥, प्रक्रि-यातो भवेत्, मैवं प्रक्रियाऽन्तरिता त्रिभिः। वाक्यं द्व्यन्तरितं तेन भवेत् प्रकरणाद् बलि॥' ९.

**भाट्ट**-- **वाक्ययोर्विरोधे** उपांशुत्वस्य 'त्सरा वा एषा यज्ञस्य' इति वाक्येन यज्ञपदैकवाक्यत्वात् यज्ञ-भागधर्मत्वं 'तस्माद्यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेनो-पांशु चरन्ति' इत्यनेन संनिहितयत्किञ्चित्पदैकवाक्यतया

अवगतपदार्थधर्मत्वेन बाध्यते । वाक्यप्रकरणविरोधे च वैमृधस्य वाक्यावगतेन पौर्णमास्यङ्गत्वेन प्रकरणावगतदर्शाङ्गत्वबाधः ।

यत्तु अग्नीषोमादिपदैकवाक्यतापन्नानां ' इदं हविः ' इत्यादिपदानां अमावास्याङ्गदेवताप्रकाशनार्थत्वं प्राकरणिकं वाक्येन बाध्यते इति उदाहरणमुक्तं मूले । तत् श्रुतिलिङ्गविनियुक्तस्य सिद्धरूपत्वेन प्रकरणाविषयस्य च सूक्तवाकस्य मुख्यप्रकरणविनियोज्यत्वप्रसक्त्यभावे अपि अधिकाराख्यगौणप्रकरणस्य अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वस्य प्रसक्तत्वात् तद्बाधाभिप्रायेण द्रष्टव्यम् ।

मण्डन— ' वाक्येन प्रक्रिया बाध्या । ' ९.

शंकर— ' वाक्यात् प्रकरणं बाध्यम् । ' ९.

( प्रकरणक्रमाधिकरणम् ) भाष्यम्— अथ प्रकरणस्य क्रमस्य च विरोधे किमुदाहरणम्? राजसूयप्रकरणे अभिषेचनीयक्रमे शौनःशेपाख्यानाद्याम्नातम् । यदि प्रकरणं बलवत् सर्वेषां तदङ्गम्, यदि क्रमः अभिषेचनीयस्यैव । किं तावत्प्राप्तम्? तुल्यबले एते कारणे इति । कुतः? न तावद्विशेषमुपलभामहे, येनावगच्छाम इदं बलीय इति । तस्मात्तुल्यबले एते कारणे इति । अपि च प्रकरणं वाक्येन बाधितम् । तस्माद्बाध्येत क्रमेणापीति । एवं प्राप्ते, ब्रूमः । प्रकरणं क्रमाद्बलीयः । कुतः? अर्थविप्रकर्षात् । कोऽत्रार्थविप्रकर्षः । प्रकरणवतः साकाङ्क्षत्वात् तत्संनिधौ आम्नातेन परिपूर्णेनापि अवकल्पतैकवाक्यत्वम्, न तु क्रमवतः क्रमे आम्नातेन । अनेकस्य आम्नायमानस्य संनिधिविशेषाम्नानमात्रं हि क्रमः । तत्र संनिधिविशेषाम्नानसामर्थ्यात् क्रमवतः संनिधौ आम्नातस्यानुपलभ्यमानमेव आकाङ्क्षावत्त्वमस्तीत्यवगन्तव्यम् । प्रकरणे तु प्रकरणवतः प्रत्यक्षम् । न च प्रकरणवता क्रमवता च यौगपद्येनैकवाक्यता संभवति आम्नातस्येति विरोधः । तत्र प्रकरणे प्रत्यक्षं साकाङ्क्षत्वम्, क्रमे आनुमानिकं बाधितुमर्हति । साकाङ्क्षत्वादेकवाक्यत्वम्, एकवाक्यत्वादभिधानसामर्थ्यम् , सामर्थ्यात् श्रुत्यर्थ इति संनिकृष्टः प्रकरणस्य श्रुत्यर्थः, विप्रकृष्टः क्रमस्य । तस्मात् क्रमप्रकरणयोः प्रकरणं बलवत्तरमिति । अथ यदुक्तं वाक्येनापि हि तद्बाधितमतोऽन्येनापि तद्बाधितव्यमिति । नैतत् । बाधितस्यानुग्रहो न्याय्यो न बाधितव्यमिति ।

वा— प्रकरणयोर्विरोधे ' अभिक्रामं जुहोति ' इत्युदाहरणम् । महाप्रकरणेन हि अस्य दर्शपूर्णमासार्थता । अवान्तरप्रकरणेन तु प्रयाजार्थता, तच्च बलीयः । तत्र हि प्रत्यासत्तेः अननुभूते महाप्रकरणसंस्पर्शे पूर्वतरं वाक्यस्थानीयः संबन्धः अवकल्पते । ( पृ. ८४० ) ।

अथ क्रमप्रकरणयोर्विरोधे किमुदाहरणमिति । यथासंख्यलक्षणक्रमविरोधोदाहरणासंभवात् पुरस्तात् परस्ताद्वा आम्नातस्य संनिधिलक्षणेन अवान्तरप्रकरणेन प्राप्तेनैव किञ्चिदुदाहरणमिति विपर्ययदृढत्वेन अज्ञानसंशयौ अतिक्रम्यापि प्रश्नः । शक्यं तु इहावान्तरप्रकरणत्वप्रसङ्गनिराकरणमित्यभिप्रेत्योदाहरणोपन्यासः । राजसूयप्रकरणे अभिषेचनीयस्योपरि ' शौनःशेपमाख्यापयति ' ' राजन्यं जिनाति ' ' पष्ठौहीं दीव्यति ' ' अभिषिच्यते ' इत्येवमादीन्याम्नायन्ते । तेषां चाङ्गत्वे नैवं कस्य चित् संदेहो विप्रतिपत्तिर्वा इति शेषिविशेषसंबन्धनिश्चयार्थमिदं विचार्यते किं समस्तराजसूयस्य एतान्यङ्गानि, उताभिषेचनीयस्यैव, अथ विकल्पः समुच्चयपक्षासंभवादिति । प्रकरणस्य क्रमस्य च बलाबलात् एतद्विज्ञातव्यम् । ननु चाभिषेचनीयस्यावान्तरप्रकरणात् प्राप्तिरिति महाप्रकरणं बाध्येत । नैष दोषः । यदि अनिराकाङ्क्षीकृतेऽभिषेचनीये तेषां पाठः स्यात् , ततोऽवान्तरप्रकरणमवगम्येत । स तु प्रागेव विदेवनादिभ्यः प्राकृतैर्धर्मैः निराकाङ्क्षीकृतः । सत्यामपि प्रत्यासत्तौ अक्लृप्तोपकारानेतानुपकारापेक्षः क्रतुः उल्लङ्घ्य प्रकृतिमपेक्षते । तया च योग्योपकारप्रदानेन पूरिते कथम्भावे निवृत्तं प्रकरणम् । समीपाम्नातधर्मानर्थक्यापत्तिभयादेव पुनरुत्पाद्येत, ततश्च क्रमत्वं भवति । निराकाङ्क्षस्य हि सत आकाङ्क्षा यावदभिषेचनीयस्योत्पाद्यते तावत् राजसूयकथम्भावेन प्रत्यक्षेण सिद्धो विनियोगः । तदीयो हि कथम्भावः पवित्रादारभ्य क्षत्रस्य धृतिं यावदनुसृतः शक्नोति विदेवनादीनि संस्प्रष्टुम् । ( पवित्रः क्षत्रस्य धृतिश्च सोमयागौ राजसूयान्तर्गतौ । तत्र क्षत्रस्य धृतिः अन्तिमः) । अतो नास्त्यत्र अवान्तरप्रकरणमभिषेचनीयस्य । यस्यां तु विकृतौ प्राकृतं किञ्चि-

दङ्गं संकीर्त्य तस्य पुरस्तात्परस्ताद्वा वैकृतमङ्गमाम्नायते, तत्र कथम्भावगृहीताङ्गमध्यवर्तित्वात् प्रकरणपाठो विज्ञायते। न चेह तदस्तीति क्रमस्यैव व्यापारः। 'संनिधावाम्नातेन परिपूर्णेनापि' इति-वाक्यार्थपूर्णत्वाभिप्रायम्। 'अनेकस्याऽऽम्नायमानस्य संनिधिविशेषाम्नानमात्रं हि क्रमः' इति केन चित्संनिधानस्य नान्तरीयकत्वं दर्शयति। यो हि बहूनामर्थेन आम्नायते, तस्य सर्वप्रधानप्रत्यासन्नप्रदेशासंभवादवश्यम्भाविनी केन चित्सह प्रत्यासत्तिः। न तु प्रकरणपाठस्य एवं नान्तरीयकत्वम्। अतः सह प्रवृत्तयोः क्रमप्रकरणयोः प्रकरणस्य शीघ्रतरं श्रुत्यर्थप्राप्तिरिति बलीयस्त्वम्। (पृ. ८५५)।

तथा **क्रमप्रकरणयोः** क्रमस्य अर्थविप्रकर्षः। कथम्? **'आकाङ्क्षातः प्रभृत्येकं श्रुत्यर्थं प्रति गच्छति। तमपि त्वन्यतो लब्ध्वा श्रुतिरेकस्य कल्प्यते॥'** क्रमो नाम निरपेक्षाणां सतां पाठानुष्ठानदेशसाम्यमात्रम्। यदि तु आकाङ्क्षावतः संनिधौ आम्नायेत, ततः प्रकरणमेव स्यात्। अत्र च प्रायेण महाप्रकरणोपनिपातिन्यो विकृतय उदाहरणम्। तासु हि यत् प्राकृताङ्गमध्यपातित्वेन नोत्पन्नं तत् पुरस्तात् परस्ताद्वा अवस्थितक्रमभाग्भवति। प्रकरणस्य क्लृप्तोपकारैः प्राकृतैर्व्यावर्तितत्वात्। तत्र यन्निवृत्ताकाङ्क्षस्य कस्य चित् समीपे पठ्यते, अन्यस्य चाकाङ्क्षा, ततस्तदुभाभ्यां गृह्यमाणं यावत् क्रमवतो निवृत्तमसतीमाकाङ्क्षामुपजनयति, तावत् प्रकरणवता सहैकवाक्यतां गच्छति, यावच्च इतरत्र एकवाक्यता भवति, तावत् प्रकरणिनं प्रति उपकारसामर्थ्यकल्पना। यावत् इतरत्रासौ, तावदिह श्रुत्यनुमानम्। यावत् इतरत्र श्रुतिरनुमास्यते, तावदिह सिद्धे विनियोगे अनुमानबीजहीनेन अक्लृप्तश्रुति सर्वं अप्रमाणी भवति। (पृ. ८३३-८३४)।

(अनेकस्य शेषस्य शेष्येकत्वे) **प्रकरणक्रमयोर्विरोधे** गिरापदेरापदे एव स्तोत्रापेक्षयोदाहरणम्। अग्निष्टोमसाम्नः क्रमेण गिरापदं प्राप्नोति, प्रकरणादिरापदम्। तच्च बलीयः। पूर्वं तु सामापेक्षयोदाहृतमासीदित्यसंकीर्णविषयत्वम्। **प्रक्रियासमाख्ययोर्विरोधे** 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाऽऽह' इत्येतदेव ज्योतिष्टोमं प्रति उदाहरणम्। तस्य हि समाख्यया होतृकर्तृकं प्रैषानुवचनं प्राप्नोति, प्रकरणात्तु मैत्रावरुणकर्तृकं निर्णीयते। प्रैषानुवचनस्वरूपापेक्षं च पूर्वत्रोदाहरणमिति भेदः। (पृ. ८३९-८४०)। (एकस्य शेषस्य शेष्यनेकत्वे तु) **प्रकरणसमाख्ययोर्विरोधे** पौरोडाशिकसमाख्यातब्राह्मणाम्नातानां प्रयाजादीनां प्रकरणात् सांनाय्योपांशुयाजार्थत्वं इत्युदाहरणम्। (पृ. ८३८)।

**सोम—** तैत्तिरीयशाखायां अभिषेचनीयप्रयोगमध्ये 'दिशोऽभ्ययं राजाऽभूत् इति पञ्चाक्षान् प्रयच्छन्ति' 'शौनःशेपमाख्यापयते' इति विदेवनादीनाम्नाय तदनन्तरम् 'मारुतस्य चैकविंशतिकपालस्य वैश्वदेव्याश्चामिक्षायाः अग्नये स्विष्टकृते समवद्यति' इत्यभिषेचनीयाङ्गेषु इष्टिविशेषमाम्नाय 'अपां नप्त्रे स्वाहा, ऊर्जो नप्त्रे स्वाहा, अग्नये गृहपतये स्वाहा इति तिस्र आहुतीर्जुहोति' इत्यभिषेचनीयाङ्गहोमविशेष आम्नायते। तेन विदेवनादीनां अभिषेचनीयाङ्गसंदष्टतया आम्नातानां तदवान्तरप्रकरणेन अभिषेचनीयमात्रार्थत्वात् तेषां क्रमप्रकरणविरोधोदाहरणत्वं नोपपद्यते इति। न च शाखाऽन्तरे अभिषेचनीयप्रयोगपरिसमाप्त्युत्तरं आम्नानात् तदभिप्रायेण उदाहरणत्वमुपपद्यते इति **वाच्यम्**। अवान्तरप्रकरणस्य बलवत्त्वेन क्वचिच्छाखायां अवान्तरप्रकरणेन अभिषेचनीयमात्रार्थानां तेषां शाखान्तरे महाप्रकरणेन सर्वार्थत्वानुपपत्तेः। तस्मात् कृत्वाचिन्तया इदमुदाहरणं इत्याहुः। पृ. २४६.

**वि--** 'राजसूयेऽभिषेच्याख्ययागे ये देवनादयः। तच्छेषास्तेऽखिलार्था वा, तच्छेषास्तस्य संनिधेः॥, राजसूयकथम्भावानुवृत्तेः सर्वशेषता। कल्प्याकाङ्क्षाऽभिषेच्यस्य प्रक्रिया प्रबला ततः॥' १०.

**भाट्ट— प्रकरणयोर्विरोधे** महाप्रकरणं अवान्तरप्रकरणेन। **प्रकरणक्रमयोर्विरोधे** 'अक्षैर्दीव्यति' इत्यादिविदेवनादीनां संनिधानात् अभिषेचनीयाख्यसोमयागाङ्गत्वप्रसक्तौ प्रकरणात् राजसूयाङ्गत्वम्। न च अभिषेचनीयस्यापि फलवत्त्वेन प्रकरणाशङ्का, तस्य विकृतित्वेन क्लृप्तोपकारप्राकृताङ्गनिराकाङ्क्षस्य तदभावात्। **न च** विकृतावपि यत् प्राकृताङ्गानुवादेन वैकृतमङ्गं वाचनिकं विधीयते यथा पृषत्तादि, तस्यापि विकृतिगताङ्गाकाङ्क्षा-

यामनिवृत्तायामेवं विधेयत्वात् तत्संदष्टस्य तत्पूर्वभावित्वे सति प्रधानोत्तरभाविनः अपूर्वाङ्गस्य वा प्रकरणेनैव ग्रहणोपपत्तेः, विदेवनादीनां च अभिषेचनीयोत्तरसुक्तविधाभिषेकपूर्वभावित्वेन पाठात् प्रकरणग्रहणोपपत्तिरिति वाच्यम्। प्राकृताङ्गानुवादेन विहितस्याप्यपूर्वाङ्गस्य उपहोमवत् विकृत्याकाङ्क्षायां निवृत्तायामेव विधानात्। यस्य हि प्राकृतकार्यापन्नतया वैकृताङ्गस्य विधानं यथा औदुम्बरत्वशरादेः, तस्यैवानिवृत्ताकाङ्क्षायां विधानं तत्संदष्टस्यैव च तत्पूर्वभाविनो वा प्रधानोत्तराङ्गस्य विकृतिप्रकरणेन ग्रहणम्। अभिषेकस्य तु प्राकृतकार्यापन्नत्वाभावान्न तत्पूर्वपठितानां विदेवनादीनामभिषेचनीयप्रकरणग्राह्यत्वोपपत्तिः। वस्तुतस्तु अभिषेकस्य अपि स्वतन्त्रोत्पन्नस्य प्रकरणात् राजसूयाङ्गत्वावगतेः 'माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते' इत्यत्र प्रतिशब्दयोगेन कालार्थसंयोगः इति वक्ष्यते। अतो विदेवनाद्यभिषेकान्तानां सर्वेषामेव संनिधानादभिषेचनीयाङ्गत्वप्रसक्तौ प्रकरणेन तद्बाधः। न च राजसूयस्यापि प्रत्येकं विकृतित्वात् प्रकरणाभावः, पवित्रादारभ्य क्षत्रस्य धृतिं यावत् राजसूयत्वधर्मपुरस्कारेण वाचनिकाङ्गाम्नानात् तत्संदष्टविदेवनादीनां प्रकरणग्राह्यत्वोपपत्तेः। एवं प्रकरणस्य क्रमान्तरैरपि उदाहरणानि ऊह्यानि।

**मण्डन**— 'प्रक्रिया बाधते क्रमम्।' १०.

**शंकर**— 'स्थानं प्रकरणेन च।' बाध्यम्। १०.

**( क्रमबलाबलविचारः ) भाष्यम्— अथ क्रमसमाख्ययोर्विरोधे** किमुदाहरणम्? किं बलवत्तरमिति। पौरोडाशिकमितिसमाख्याते काण्डे सांनाय्यक्रमे 'शुन्धध्वं दैव्याय कर्मणे' इति शुन्धनार्थो मन्त्रः समाम्नातः। तत्र संदिह्यते किं समाख्यानस्य बलीयस्त्वात् पुरोडाशपात्राणां शुन्धने विनियोक्तव्यः, उत क्रमस्य बलीयस्त्वात् सांनाय्यपात्राणामिति। किं तावत् प्राप्तम्? तुल्यबले एते कारणे स्याताम्। कुतः? अविशेषात्। यदि वा समाख्यैव बलीयसी। बाधितो हि क्रमः प्रकरणेनापीति। **एवं प्राप्ते, ब्रूमः**। क्रमो बलीयान्। कुतः? अर्थविप्रकर्षात्। कः पुनरत्र अर्थविप्रकर्षः। निर्ज्ञाते प्रकरणेन केनापि सहैकवाक्यत्वे यत्संनिधावाम्नायते, तत्र आकाङ्क्षां परिकल्प्य तेनैकवाक्यतेत्यवगम्यते। लौकिकश्च शब्दः समाख्या। न च लोक एवंविधेष्वर्थेषु प्रमाणम्। तस्मात् क्रमो बलीयानिति। यद्येवं भवति एवंलक्षणकेषु क्रमेण विनियोगः, न त्वर्थविप्रकर्षात् क्रमो बलीयान्। कथम्? द्वयोर्हि प्रमाणयोर्बलीयस्त्वं प्रति संप्रधारणम्। न चैवं सति समाख्या प्रमाणम्। लौकिकत्वाच्छब्दस्य पुरुषस्य प्रमाणता भवतीति। नैष दोषः। नात्राङ्गभावः पुरुषप्रामाण्याद्गम्यते। पौरोडाशिकशब्द एतस्य काण्डस्येत्येतदत्र पुरुषप्रमाणकम्। भवति चास्मिन्नर्थे पुरुषः प्रमाणम्। यथा सांनाय्यक्रमे आम्नानं पुरुषप्रमाणकम्। यथाप्रकरणमेकवाक्यत्वं वेदशब्दश्चायमिति। नह्येतेऽनिन्द्रियविषया अर्थाः। उपपद्यते एष्वभियुक्तानां प्रामाण्यम्। ये तु अनिन्द्रियविषयाः तेष्वभियुक्ता न प्रमाणम्। तस्मात् समाख्या कारणम्। कारणत्वे च सति बलीयस्त्वं परीक्ष्यमिति।

उच्यते। अर्थविप्रकर्षस्तर्हि वक्तव्यः समाख्यायाः। अयमर्थविप्रकर्षः। उपदिश्यते हि क्रमे समाम्नानात् सांनाय्यसंबन्धः, नोपदिश्यते समाख्यायाम्। शब्दमुच्चार्यमाणमुपलभ्य अर्थापत्त्या नूनं अस्तीति कल्प्यते। तस्मात् पूर्ववदेवार्थविप्रकर्षात् क्रमेण समाख्या बाध्यते इति।

**वा— क्रमयोर्विरोधे** काम्ये एव याज्याकाण्डे पौर्वापर्यप्रत्यासत्तिक्रमेण तयोरेव ऐन्द्राग्नीययोः युगलयोः अनियमेन इष्टिद्वयेऽपि अनियमेन प्राप्नुवतोः यथासंख्यक्रमेण अत्यन्तदेशसामान्येन प्रत्यासन्नत्वात् विनियोगो भवति। (पृ. ८४०)।

**'क्रमसमाख्ययोर्विरोधे किमुदाहरणम्'** इति। अत्रापि अज्ञानसंशयकृतप्रश्नानन्तरं यौगिकत्वात् समाख्यायाः श्रुतिवत् शाब्दं संबन्धहेतुत्वमिति बलीयस्त्वं मन्यमानस्य विपर्यस्तमतेः प्रश्नः। पौरोडाशिकमिति समस्तमेव दर्शपूर्णमासकाण्डमभिधीयते। तत्र सांनाय्यपात्रशुन्धनक्रमे शुन्धध्वमिति मन्त्रः पठितः। स च प्रकरणाल्लिङ्गाच्च दार्शपौर्णमासिकपात्रशुन्धनार्थः इति सामान्येनावधारिते तद्विशेषे जिज्ञासायां संदिह्यते किं समाख्यया पुरोडाशपात्रार्थो भवति अथ क्रमेण सांनाय्यपात्रार्थ इति। यतरद्बलीयः, तेन विनि-

योक्ष्यते । तुल्यबलत्वाद्विकल्पः, विरोधाभावाद्वा समुच्चयः। क्रमस्य च दृष्टबाधस्य संबन्धानभिधायिनश्च अदृष्टबाधया संबन्धाभिधायिन्या च समाख्यया बाधः, इति प्राप्ते। अर्थविप्रकर्षात् समाख्या बाध्यते इति ब्रूमः। तथाहि,

**'वैदिकं देशसामान्यं प्रत्यक्षं दृश्यते क्रमे । समाख्यायां तु सामान्यं कल्प्यत्वाद् विप्रकृष्यते ॥'**

'कः पुनरत्रार्थविप्रकर्षः' इति । समाख्यायामन्तर्णीतसंबन्धसंबन्ध्यभिधायित्वात् न संभवतीति मन्यते । 'निर्ज्ञाते प्रकरणेन केनापि सहैकवाक्यत्वे' इति । प्रकरणाविरोधिनं क्रमविनियोगं केवलसमाख्याप्रतियोगित्वेन च दर्शयति । कथं पुनः प्रकरणं न विरुध्यते, यदा तेन सर्वार्थत्वं ज्ञायमानमुत्सृज्य क्रमवशेन केवलसांनाय्यार्थत्वं विज्ञायते । नैष दोषः । यदि हि अप्रकृते वयं क्रमविनियोगमभ्युपगच्छेम, तत एवं स्यात् । इह तु प्रकरणेन दर्शपूर्णमासान्यतरार्थत्वेऽवधारिते तद्विशेषाकाङ्क्षायां केवल एव क्रमो व्याप्रियते इत्यविरोधः । ननु सर्वार्थत्वेनावधारणात् यतः कुतश्चिदपि निवृत्तौ प्रकरणं बाध्यते । न चावश्यं सर्वार्थत्वं प्रकरणेनावधार्यते, मन्त्रस्य एकेनापि संबध्य कृतार्थत्वात्, प्रकरणिनां च मन्त्रान्तरैरप्यर्थसिद्धेः। सामान्यविनियोगश्रुतिमात्रमेव च इह क्रमात् पूर्वतरं निष्पद्यते । तत्र यावद्विशेषश्रुतिमेकैकं प्रति कल्पयति तावत् क्रमेणापि कल्पितैवेति प्राकरणिकी विशेषश्रुतिरुपसंह्रियते । समाख्या पुनः क्रमविपरीतार्थत्वाद्विरुध्यते, विप्रकर्षाच्च दुर्बला । सर्वो हि संबन्धः केन चिदवान्तरसामान्येन भवति । न च मन्त्रपुरोडाशयोस्तद्वदक्लृप्तं किञ्चिदस्ति, यथा सांनाय्येन सह देशसामान्यम् । 'लौकिकस्तु शब्दः समाख्या' इति । भक्षानुवाके परिहृतमपि सत् वैदिकसंबन्धविप्रकर्षार्थमुपन्यस्यते । परस्तु लिङ्गानिराकरणोक्तेनैव मार्गेण मूलोत्कर्तनेनैव समाख्यां निराकृतां मन्यमान आह यद्येवमित्यादि । सिद्धान्तवादी तु भक्षानुवाकोक्तमेवोत्तरं दर्शयति ।

**'यदि ह्यङ्गाङ्गिभावोऽत्र पुरुषप्रत्ययाद्भवेत् । ततः स्यादप्रमाणत्वं स तु वैदिक एव नः ॥'**

पौरोडाशिकशब्दो मन्त्रब्राह्मणयोरपठितत्वादवैदिको नाङ्गाङ्गिभावः । स च शब्दस्यावैदिकत्वेऽपि अनादिसंबन्धत्वाद्विद्यमानस्मृतिमूलत्वाच्च प्रमाणम् । पौरोडाशिकशब्दः अस्य वाचक इति नैतदतीन्द्रियम्, शब्दार्थव्यवहारिणां वृक्षादिष्विव प्रत्यक्षत्वात् । संभवति हि सर्वेषामन्यतं उपलभ्य प्रयोगः । तद्दर्शयति 'भवति चास्मिन्नर्थे पुरुषः प्रमाणम् । यथा सांनाय्यक्रमे आम्नातं प्रकरणमेकवाक्यत्वम्, वेदशब्दश्चायम्' इति । सर्वत्र हि पुरुषान्तरस्थदर्शनपूर्विका पुरुषान्तराणां प्रवृत्तिः । समानदेशाम्नानं प्रकरणपाठं पदानां परस्परसंनिधिं संबन्धं वा न वेदो वदति । किं तर्हि ? पुरुषेष्वामनत्सु तथा दृश्यते, तैरप्येवमन्येभ्यो दृष्टमित्यनादित्वेऽपि सर्वेषां दर्शनसंभवात् अन्धपरम्परान्याये निवृत्ते भवति प्रामाण्यम् । अन्यथा हि वेदावेदप्रकरणाप्रकरणादीनि अप्रमाणकान्येव भवेयुः । अनेकपुरुषस्थत्वाच्च नात्र कस्य चित् स्वातन्त्र्यम्, यद्दोषेण दोषाशङ्का स्यात् । तस्माद्बलवत्येवान्यत्र प्रामाण्ये अर्थविप्रकर्षादत्र बाधः । स चोक्तः सूत्रव्याख्यायाम् । एवमेतेषां यथाभाष्यमवस्थितानां श्रुत्यादीनां ( मध्ये )

**'बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा । मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया ॥'** ( पृ. ८५५–८५८ ) ।

**तथा क्रमसमाख्ययोः** क्रमे वेदकल्पितमेव अङ्गाङ्गिनोर्देशसामान्यनिमित्तं परस्परपर्युपस्थापनम् । सर्वत्र हि केन चिदभिन्नदेशेन संबन्धोऽवकल्पते । न च समाख्यानवतः किञ्चिद्देशसामान्यं वेदक्लृप्तमुपलभामहे । येन संबन्धाभिमुख्यसंभवः । ननु च समाख्या संबन्धमेवाभिदधाना प्रवर्तते, इति श्रुतितुल्या प्राप्नोति । नैतदेवम् ।

**'अन्य एव हि संबन्धः कल्प्यते यः समाख्यया । अन्यच्च शेषशेषित्वं यच्छ्रुत्या प्रतिपाद्यते ॥'**

अर्थानां प्रथमं केन चित् प्रकारेणानवगतसंबन्धानां समाख्या प्रवर्तते । सा च शेषशेषित्वं तावन्नैव प्रतिपादयति । केन चित् संबन्धेनोपपद्यमानत्वात् संबन्धमात्रमपि नैवाभिधत्ते । नहि यौगिकैः संबन्धोऽभिधीयते इत्युक्तम् । समाख्याऽन्यथाऽनुपपत्त्याऽनुमीयते । संबन्धमात्रस्य चैतद्रूपं किञ्चिदभिन्नमेषामस्तीत्यवगमः । ततश्चाऽऽपन्नं क्रमात् जघन्यत्वम् । नहि

किञ्चित्तत्र सामान्यमनुमातव्यम्, देशसामान्यस्य प्रत्यक्षत्वात्। इह तु तत्पदस्याप्रत्यक्षत्वात् आनुमानिकत्वमिति विप्रकर्षः। समाख्या हि यावत् किञ्चित् सामान्यमस्तीति कल्पयति, तावत् क्रमेण नूनमनयोः काचिदपेक्षाऽस्ति, येनेत्थं समानदेशौ पठितौ इति प्रकरणं कल्प्यते। यावच्च किञ्चित् सामान्यमपेक्षां कल्पयति, तावदितरत्रैकवाक्यता क्लृप्ता। तथा यावदिहैकवाक्यता भवति, तावदितरत्र उपकारसामर्थ्यसिद्धिः। यावच्च इहोपकारसामर्थ्यकल्पना, तावदितरेण श्रुतिरुत्पादिता। ततश्च यावदिह श्रुतिमनुमातुमुपक्रमते, तावदितरत्र विनियोगे सिद्धे निराकाङ्क्षीभूते प्रकरणपाठे, सर्वमेतत् प्रचितमपि अपरिपक्वविच्छेदादामसस्यमिव लूनं निर्बीजं भवति। तस्मादर्थविप्रकर्षात्तु परं परं बाध्यत इति सिद्धम्। आह च। '**निःश्रेण्यारोहणप्राप्यं प्राप्तिमात्रोपपादि च। एकमेव फलं प्राप्तुमुभावारोहतो यदा॥ एकसोपानवर्त्येको भूमिष्ठश्चापरस्तयोः। उभयोश्च जवस्तुल्यः प्रतिबन्धश्च नान्तरा॥ विरोधिनोस्तदैको हि तत् फलं प्राप्नुयात्तयोः। प्रथमेन गृहीतेऽस्मिन् पश्चिमोऽवतरेन्मुधा॥ तेन यद्यपि सामर्थ्यं प्रत्येकं सिद्धमन्यदा। तथाऽपि युगपद्भावे जघन्यस्य निराक्रिया॥ अन्यथैव हि शून्येषु दुर्बलैरपि चर्यते। अन्यथा बलवद्ग्रस्तैः सर्वशक्तिक्षये सति॥**' तस्मान्नैतदालम्बनं युक्तम्, यत् क्वचिदुत्तरेषां प्रामाण्यमिष्टम्। तस्माद्बलवद्विरोधेऽपि तेन भवितव्यमिति। यत्तु प्रमाणाभासो बाध्यते न प्रमाणमिति, तत्र ब्रूमः, अयमपि प्रमाणाभास एव। कथम्? '**नैवैतेषां प्रमाणत्वमासीदत्र कदा चन। अन्यत्र दृष्टमेतत्तु समारोपेण कल्पितम्॥**' नहि यत्र विषये बाधस्तत्रैषां प्रमाणत्वम्। किं तर्हि? प्रदेशान्तरे केवलानामुपलक्षितं सामान्यतोदृष्टरूपेण अत्रापि प्रतिभाति। तत्तु बलीयसा अपहृतविषयत्वात् सीदतीति पश्चाद्भ्रान्तित्वेन अध्यवसीयते। अथवा यस्तत्रास्य व्यापार आसीत्तमिहापि प्रक्रमते एव। स तु जववताऽन्येन विषयेऽपहृते मूलच्छेदाद्यदा तं न गच्छति, तत् किं क्रियताम्। तेन मृगतृष्णादिवदेवाप्राप्य प्रमाणमेव बाध्यते। अनुत्पन्नमेव चेह श्रुत्यभावात् शेषज्ञानं बाध्यते आन्तरालिकज्ञानमिथ्यात्वकल्पनया, इति नोत्पत्तिसामान्येन तुल्यबलत्वम्। अतश्च ज्ञानसंकरोच्छेदनादिरूपो बाधो नैव आशङ्कितव्यः। योऽपि च उत्पन्नबाधः, तमपि फलवियोगात्मना उपपादयिष्यामः।

एवं तावत् द्वयोर्द्वयोर्विरोधे वर्णितम्। अर्थसिद्धत्वात्तु भाष्यकारेण इतरैः सह न प्रदर्शितम्। (पृ. ८३४–८३५)।

(अनेकस्य शेषस्य शेष्येकत्वे) **क्रमसमाख्ययोर्विरोधे** किमुदाहरणम्। काम्ययाज्याकाण्डाधीतयोरैन्द्राग्नयुगलयोरुभयोरपि विकल्पेन कर्मद्वयेऽपि प्रयोगः समाख्यानुरोधेन प्राप्नोति। क्रमबलीयस्त्वात्तु प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमेवेति व्यवस्था। लिङ्गं तु पक्षद्वयेऽपि तुल्यार्थमिति क्रमसमाख्ययोरेव विरोधः। (एवं शेषैकत्वे शेष्येकत्वे च श्रुत्यादिसमवायश्चिन्तितः)। (पृ. ८४०)।

**समाख्ययोस्तु विरोधे** सामान्यविशेषसमाख्ययोः सूत्रबद्धः एव बाधो भविष्यति 'तस्योपदेशसमाख्यानेन निर्देशः' इति (३।७।२०।४१, अधिकरणं तु **मीको.** पृ. १२५१ 'ऋत्विजां अनियतपदार्थे०' इति बिन्दौ द्रष्टव्यम्)। पृ. ८४१।

शा— (क्रमसमाख्ययोर्विरोधे) '**विशेषाग्रहणात् तुल्यबलत्वमुभयोर्भवेत्। संबन्धवाचिनीत्वेन समाख्या वा बलीयसी॥ नैतदेवं समाख्या हि न संबन्धाभिधायिनी। यद्यपि त्वभिधात्री स्यात्, प्रमाणं न तु तत्र सा॥**' नहि यौगिकैः शब्दैः संबन्धोऽभिधीयते।

वि— 'शुन्धध्वमिति मन्त्रोऽङ्गं पौरोडाशिकशोधने। सांनाय्यपात्रशुद्धौ वा, प्रथमोऽस्तु समाख्यया॥, पौरोडाशिकमित्यत्र प्रकृत्या तद्धितेन वा। संनिध्युक्तिः कल्प्यः क्लृप्तत्वाच्चरमः क्रमात्॥' ११.

**भाट्ट— एवं क्रमयोर्विरोधे** संनिधानेन याज्याद्वयस्य काम्यैन्द्राग्नद्वयाङ्गत्वे अनियमेन प्रसक्ते यथाक्रमं पाठात् आद्यस्य आद्याङ्गत्वम्। **क्रमसमाख्ययोर्विरोधे** पौरोडाशिकसमाख्याते काण्डे समाम्नातस्य 'शुन्धध्वम्' इति मन्त्रादेः संनिधानात् सांनाय्याङ्गत्वम्। न च महाधि-

कारेण संनिधिबाधः, तस्यापि वाचनिकाङ्गसंदष्टत्वेन बलवत्वात्। न चैवं तस्य प्रकरणत्वापत्तिः, मन्त्रस्य सिद्धरूपत्वेन लिङ्गविनियोज्यत्वेन च प्रकरणाविषयत्वात्। संनिधानस्यापि समाख्यावदपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वे एव बलाबलम्, न तु विनियोगे। तत्र तु उदाहरणान्तरं मृग्यम्।

एवं **समाख्ययोर्विरोधे** आध्वर्यवमिति सामान्यसमाख्यायां याजमानमितिविशेषसमाख्यया बाधः। एवं द्व्यन्तरितत्र्यन्तरितादिप्रमाणस्य पूर्वैः सह विरोधे शेषानेकत्वे च उदाहरणानि कौस्तुभे द्रष्टव्यानि।

**मण्डन**— 'क्रमः समाख्यां बाधेत।' ११.

**शंकर**— 'स्थानात् समाख्या बाध्या स्यात्।' ११.

**( बाधयोग्यताधिकरणम्। प्राप्तबाधाप्राप्तबाधविचारः— ) भाष्यम्— अथ यत्तत्र तत्रोच्यते, इदमनेन बाध्यते, इदमनेनेति**। तत्र यत् बाध्यते, तत् किं बाधकविषयं प्राप्तम्, उत अप्राप्तमिति। किं चातः? यद्यप्राप्तम्, किं बाध्यते? अथ प्राप्तम्, कथं शक्येत बाधितुम्? प्राप्तं बाधकविषयं पूर्वविज्ञानमिति ब्रूमः। कथम्? सामान्यस्य कारणस्य विद्यमानत्वात्। अथ कथं निवर्तते? नैव हि तत् निवर्तते। कथं तर्हि? मिथ्याज्ञानमिति प्रत्ययान्तरं भवति।

किं नु खल्वमिथ्याज्ञानस्य स्वरूपम्। यस्य बाधकः प्रत्ययो विमृश्यमाणस्यापि नोपपद्यते न तत् मिथ्या। तदेतेषां श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वंपूर्वं यत् कारणम्, तत् परंपरं प्रति बलीयो भवति। नैतस्योत्पन्नस्य विमृश्यमाणस्य बाधकं विज्ञानान्तरमस्ति। तस्मात्तेषां समवाये विरोधे परदौर्बल्यमर्थविप्रकर्षादिति।

**वा— इदानीं बाधस्य स्वरूपमाक्षेपद्वारेण** कथयति 'अथ यत्तत्र तत्रोच्यते द्वयोर्द्वयोर्विरोध इदमनेन बाध्यत इदमनेन' इति। श्रुत्या लिङ्गं लिङ्गेन वाक्यमित्यादि। तद्बाधकविषयं प्राप्तं बाध्येत अप्राप्तं वा। तद्यदि तावदप्राप्तम्, ततः समवाय एव नास्तीति किं बाध्येत? समवायसिद्ध्यर्थं त्वथ प्राप्तं बाध्यते, तत उभयोरपि प्राप्तप्रमेयत्वात्तुल्यबलत्वमिति न बाधस्य प्रामाण्यम्। तत्रोत्तरम्। **'सामान्यकारणात् प्राप्तं पूर्वं बाधकगोचरम्। बाधकेन बलीयस्त्वान्मृषैतदिति कल्प्यते॥'** यथैव मृगतृष्णादिज्ञानान्युत्पन्नानि मिथ्यात्वकल्पनया बाध्यन्ते हानोपादानादिफलवियोगाच्च बाध्यव्यपदेशं लभन्ते तथा लिङ्गादिना ज्ञानमप्युत्पन्नं सत् श्रुत्यादिज्ञानेनानुष्ठानरूपात् फलाद्वियुज्यमानं बाधिष्यते। न त्वेतदप्युपपद्यते। कुतः? **'बाधस्योक्तप्रकारत्वात् प्रश्नस्तावन्न युज्यते। स्थिते चाप्राप्तबाधत्वे प्राप्तबाधोऽपि नोत्तरम्॥'** तत्र नाम प्रश्नो भवति यत्प्रथमं नोक्तम्। एतानि तु लिङ्गादीन्यर्थविप्रकर्षात् अननुमितश्रुतीनि बाध्यन्ते इति ज्ञातत्वान्नैव प्रश्नमर्हन्ति। यद्यपि च पृच्छ्यते तथाऽप्यपसिद्धान्ते- नोत्तरं न दातव्यम्। अननुमितश्रुतिबाधेन ह्यप्राप्तबाधः स्थितः। स इदानीं प्राप्तबाधोपवर्णनेन प्रत्युद्भिद्येत विनोपपत्त्या। यदुच्यते 'सामान्यस्य कारणस्य विद्यमानत्वात्' इति। तल्लिङ्गादीनां साक्षादप्रमाणत्वात् प्रमाणभूतायाश्च श्रुतेरविद्यमानत्वादनुपपन्नम्। अथ तु तामनुमाय प्राप्सिष्यते ततो लब्धात्मकत्वादानुमानिक्याः श्रुतेः प्रत्यक्षायाश्च न कश्चिद्विशेष इति तुल्यबलत्वमेव प्राप्नोति। यदि वा मिथ्यात्वकल्पनरूपबाधाभ्युपगमाद्विरोधे सति तत्कल्पनाद्विपरीतबाधप्रसङ्गः। कथम्— **'पूर्वं परमजातत्वादबाधित्वैव जायते। परस्यानन्यथोत्पादान्न त्वबाधेन संभवः॥'**

श्रुत्यादौ शीघ्रतरत्वात् प्रथमं प्रवृत्ते लिङ्गादीनि प्रवर्तन्ते। तत्र यदि प्राप्तबाधसिद्ध्यर्थं पश्चात् प्रवर्तमानमपि लिङ्गं श्रुतिमनुमापयति ततः सा तुल्यविषयसंनिविष्टां पूर्वामबाधित्वा नाऽऽत्मानं लभत इति मृगतृष्णादिष्विव मिथ्यात्वं कल्पयन्त्येव जायमाना बाधिका स्यात्। तस्मान्नैष श्रुत्यादिषु ग्रन्थो घटत इति। यद्यप्यधिकरणान्तोपसंहारात्तद्विषयः प्रतिभाति तथापि सामर्थ्यात् पूषाद्यनुमन्त्रणवदुत्कृष्यते। विज्ञातप्रकारत्वात् नैवायमथ यत्तत्र तत्रेति श्रुत्यादिषु बाधः संबध्यते। किं तर्हि? बाधाधिकारादिहाऽऽचार्यस्य यावन्तः शास्त्रोपनिबद्धा बाधभेदास्ते सर्वे हृदयमनुप्राप्ताः। तेषां च न श्रुत्यादिसदृशो बाध उपपद्यते। सर्वत्र चैकरूपेण बाधमार्गेण भवितव्यम्। अतो यदि वा तदीयः प्रकारः श्रुत्यादिष्वस्तु श्रुत्यादिप्रकारो वा तेषु। तत्र श्रुत्यादिगतस्तावत्संप्रत्येव कथित इति किं तेन

पृष्टेन । ये त्वेतद्व्यतिरिक्तास्तेषु कथमिति मन्यमानो वदति 'अथ यत्तत्र तत्रोच्यते इदमनेन बाध्यते' प्रत्यक्षेणानुमानं मृगतृष्णादिप्रत्ययाश्च, यथास्वं षड्भिरपि प्रमाणैः प्रमाणाभासः; श्रुत्या स्मृतिः, आप्ताविगीतस्मृत्या अनाप्तविगीतस्मृतिः, अदृष्टार्थया दृष्टार्था, श्रुतिप्रभवया लिङ्गादिप्रभवाऽर्थवादप्रभवा च, स्मृत्याऽप्याचारः, सोऽप्यभियुक्ततराचारेण, संदिग्धमसंदिग्धेन, दुर्बलाश्रयं बलवदाश्रयेण, उपसंहारस्थमुपक्रमस्थेन, अत्यन्तादृष्टार्थं नियमादृष्टार्थेन, आरादुपकारकत्वं सामवायिकत्वेन, अनेकार्थविधानमेकार्थविधानेन, अनेकशब्दार्थत्वमेकशब्दार्थत्वेन, बहुबाधोऽल्पबाधेन, वेदान्तरोत्पन्नं वेदान्तरविहितत्वेन, परशाखाविहितं स्वशाखाविहितेन, नित्यं नैमित्तिकेन, द्विप्रकारमप्येतत्क्रत्वर्थं पुरुषार्थेन, अनारभ्याधीतं प्रकरणाधीतेन, पौर्वापर्येण विरोधे पूर्वं परेण प्राकृतं वैकृतेन, प्रयोगवचनाश्रितं चोदकाश्रयेण, निष्प्रयोजनं सप्रयोजनेन, ब्राह्मणक्रमो मन्त्रक्रमेण, देवताश्रयं द्रव्याश्रयेण, पश्चादाम्नातं पूर्वाम्नातेन, अल्पं भूयसा, गौणं मुख्येन, समान्यविहितं विशेषविहितेन, सावकाशं निरवकाशेन, अङ्गं प्रधानेन, अङ्गधर्मः प्रधानधर्मेण, तत् सर्वमेव किं प्राप्तं बाध्यते, अथ श्रुत्यादिवदेव अप्राप्तमिति । तद्यदि तावत् श्रुत्यादिवत् सामान्यविशेषातिदेशोपदेशिकादिष्वपि अप्राप्तबाधः ततोऽवश्यं लिङ्गादाविव श्रुतेः विनियोजकस्य शास्त्रस्याभावोऽभ्युपगन्तव्यः । तथा सति तस्यैकत्वात् विरोधविषयवदितरत्राप्यभाव इति सार्वत्रिकबाधप्रसङ्गः । अथाविरोधापेक्षया सद्भावोऽभ्युपगम्येत तत इतरत्रापि सद्भाव एवेति तुल्यबलत्वापत्तिः । विशेषशास्त्राद्यनुपमर्देन चाऽऽत्मलाभाभावात् तदभ्युपगमे विपरीतबाधप्रसङ्गः । न ह्येकस्यैव शास्त्रस्य किञ्चित्प्रति सद्भावः किञ्चित्प्रत्यसत्त्वं इति युज्यते । तेन 'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय', 'प्रकृतिवत् कुर्याच्छरमयं बर्हिः' इत्यादौ प्रतिब्राह्मणं प्रत्यङ्गं च शास्त्राभावादेकं शास्त्रम् । तद्यदि शरतक्रालोचनेन कुशकौण्डिन्ययोर्नास्तीत्यवधार्यते ततः प्रयाजादिमाठरादिष्वप्यप्रवृत्तिः । अथ तेष्वस्ति ततः कुशकौण्डिन्ययोरपि भवितव्यम् । अथ तौ प्रति नास्ति इतरान् प्रत्यस्तीत्येतदप्येकवस्तुनि विप्रतिषेधान्निष्प्रमाणकम् । न चात्र प्रतिपत्तृभेदो विद्यते । येन संबन्धग्रहणाग्रहणवदविरोधः स्यात् । न च सकृद्गृह्यमाणत्वाच्छास्त्रभेदोऽवगम्यते, येनान्यस्यैव सत्त्वमन्यस्य चासत्त्वमित्यभिधीयेत । व्यक्तिपक्षे च कदाचिदेतद्भवेत् । आकृतिपक्षे तु यागगतव्यापारातिदेशपक्षे च विषयैकत्वाद्युगपदेकमेव शास्त्रं प्रवर्तते । एतेनैवोत्कालनबाधनं प्रत्युक्तम्, ब्राह्मणप्रकृतिवच्छब्दयोः तुल्यहेतुत्वेन किञ्चिद्वर्जनासंभवात् । तथा च 'तद्वर्जं तु वचनप्राप्ते' ( ३।६।१।३ ) इत्युक्त्वा 'न चोदनार्थकार्त्स्न्यात्' ( ३।६।१।८ ) । इत्युत्तरं दास्यति । पौरुषेयेऽपि तावद्वाक्ये हृदयार्थतया, विना शब्दव्यापारेणैव तद्वर्जं मया प्रयुक्तमित्येवमीश्वराज्ञानुरूपेण भवेत्, न त्वेतद्वेदेऽवकल्पते । न चेह सामान्यशास्त्रात्परतो विशेषशास्त्राणि कल्प्यन्ते, येन सामान्यशास्त्रस्य तत्प्रकृतित्वमात्रमाश्रित्य विशेषशास्त्रापेक्षया सदसद्भावविरोधः परिह्रियेत । तस्मादवश्यम्भाविन्यैकरूप्ये नाभिप्रेतबाधोऽवकल्पते । अथ कथञ्चित् प्राप्तबाधमेव मिथ्यात्वकल्पनया आश्रित्यैवमादिष्वविरोध इत्युच्यते, तत एवं श्रुत्यादीनामपि प्राप्तबाधोऽङ्गीकर्तव्यः । तत्र चोक्तम् 'अतो न बाधमार्गैकरूप्यं घटते' इति । तदुच्यते । '**न बाधस्यैकरूपत्वमेषितव्यं नियोगतः । न किञ्चिद्विरुणद्धीह नानारूप्यं प्रमाणवत् ॥**' यथैवैते पुरस्ताद्बाधगोचरा भेदा वर्णिता नैतेष्वैकरूप्यमङ्गीकृतं तथाऽत्र न बाधप्रकारनानात्वेऽपि गम्यमाने कश्चिद्विरोधः । तत्र श्रुत्यादिषु तावद्यथोक्त एवाप्राप्तबाधः । न च तत्र किञ्चिद्विरुध्यते । तद्विषयप्राप्त्यन्तरानभ्युपगमात् । येऽप्येतच्छायानुपातिनोऽर्थविप्रकर्षादेव स्मृत्यादिबाधा भवन्ति तेऽपि हेतुसामर्थ्यकथनात् श्रुत्यादिबाधेनैव व्याख्याताः । ये तु प्रमाणतदाभासनित्यनैमित्तिकक्रत्वर्थपुरुषार्थपौर्वापर्यप्राकृतवैकृतसामान्यविशेषनिष्प्रयोजनसप्रयोजनाल्पभूयस्त्वसावकाशानवकाशाङ्गप्रधानतद्धर्मबाधास्तेष्विदमुक्तं प्राप्तं बाध्यते इति । 'कथमिति' श्रुत्यादिवैलक्षण्यविस्मितस्य प्रश्नः । उत्तरमाह 'सामान्यस्य कारणस्य विद्यमानत्वात्' इति । दर्शितमेतद्ब्राह्मणप्रकृतिवच्छब्दयोः । यत्तु प्राप्तस्य ज्ञान-

स्यानुत्पादोच्छेदसंस्कारविच्छेदानामशक्यत्वान्नास्ति बाधनमिति । तत्राऽऽह ' नैव निवर्तते । किं तर्हि ? मिथ्याज्ञानमेतदिति प्रत्ययान्तरं भवति ' इति । शास्त्रान्तरं ह्यनन्यगति दृष्ट्वा मृगतृष्णादिवदेव सामान्यापहृतबुद्धेर्ममेयं भ्रान्तिः पूर्वमेतद्विषयपरिकल्पनया जातेत्यध्यवस्यति । तस्मात् प्रयाजादिमाठरादिप्राप्तिवेलायामुपजाताऽपि कुशकौण्डिन्यबुद्धिर्भ्रान्तिरिति निश्चित्य फलविमुक्तत्वानुबद्धमर्थं शास्त्रं वा बाधितुं मन्यते । किं नु खलु अमिथ्याज्ञानस्य रूपमिति— यद्युत्पन्ना अपि प्रत्ययाः प्रत्ययान्तरैरित्थं निराक्रियन्ते ततोऽन्यत्रापि क आश्वास इति मन्यते । तत् कथयति । यस्यान्वेषणेऽपि कृते बाधकप्रत्ययान्तरं नोत्पद्यत इति । यत्तु कारणदोषज्ञानं द्वितीयमुपलक्षणं तल्लोकविषयत्वान्न वेदे संभवतीति नोपन्यस्तम् । प्रासङ्गिकमुक्त्वा, इदानीमधिकरणमुपसंहृत्य अधिकरणान्तरमारभ्यते ।

**शा—** ' अथ यत् तत्रतत्र ' इत्यादिभाष्यस्य श्रुत्यादिविषयत्वं ( ' बाध्यस्योक्तप्रकारत्वात् प्रश्नस्तावन्न युज्यते । ) **स्थिते चाप्राप्तबाधत्वे प्राप्तबाधोऽपि नोत्तरम् ॥** ' इत्यनेन वार्तिकेन दूषितम् । के चन (प्राभाकरीयाः) अस्य दूषणस्य सामान्यतः प्राप्तिं मन्वानाः विशेषमपश्यन्तः स्मृतिप्रमोषनिमित्तं प्राप्तिज्ञानं व्यपदिशन्ति विशेषावगमात् तेषां निवर्तते इत्यनेन न कश्चिदपि परिहारलेशः । नहि विप्रकृष्टप्रमाणं संनिकृष्टप्रमाणात् प्राक् प्राप्तं व्यवहारमपि निवर्तयति । यतः तन्निवर्तकता संनिकृष्टस्य स्यात् । अतो नेदं उपदेशबाधविदां अभिधानम्, अपि तु अतद्विदां इत्युपरम्यते । ( **सोम**– अत्र ' सामान्यतः प्राप्तिं ' इत्यारभ्य ' निवर्तते ' इत्यन्तः गुरुग्रन्थः ऋजुविमलायां तथा लेखनात् । तत्र च गुरुग्रन्थे अपेक्षितं पूरयितुं ग्रन्थकारेण (शा.) ' के चन ' इत्युक्तम् । तस्य च ' व्यपदिशन्ति ' इत्यनेन अन्वयः । ' अस्य दूषणस्य ' इत्येतत् ' न कश्चित् परिहारलेशोऽभिहितः ' इत्यनेन संबध्यते । ' इत्यनेन ' इत्यादिः प्राभाकरग्रन्थदूषणार्थः । ) ' **श्रुत्यादीनामतः षण्णामेकार्थोपनिपातिनाम् । पूर्वंपूर्वं बलीयः स्यात् दुर्बलं चोत्तरोत्तरम् ॥** '

**वि—** ' बाधो न युक्तो युक्तो वा, प्राप्त्यप्राप्त्योर्न युज्यते ।, अप्रवृत्तं प्रसक्तं यद् धिया तस्यास्तु बाध्यता ॥ प्रमाणतः प्रसक्तस्य बाधो दाशमिकोऽत्र तु । विभ्रमेण प्रसक्तस्य तस्मादप्राप्तबाधनम् ॥ ' ३।३।१२.

**भाट्ट—** स चायं श्रुतिलिङ्गादिबाधोऽप्राप्तबाधः । तत्त्वं च अङ्गताबोधकलिङ्गादिकल्प्यप्रमाणप्रतिबन्धकत्वम् । पूर्वपूर्वप्रमाणेन हि अङ्गत्वेऽवधारिते निराकाङ्क्षत्वादुत्तरोत्तरतः पूर्वपूर्वप्रमाणकल्पनैव नोदेतीति सोऽयमप्राप्तबाधः । एवं गृहमेधीये ' आज्यभागौ यजति ' इत्यादावपि । अन्यत्र तु सामान्यविशेषनित्यनमित्तिकभावादौ प्राप्तबाधः । तत्त्वं च क्लृप्तस्य बोधकस्य विशेषविषयताप्रतिबन्धकत्वम् । सामान्यशास्त्रादेर्हि विशेषशास्त्रादिना पदहोमादिविषयतामात्रं प्रतिबध्यते, न तु सामान्यशास्त्रमपि । तस्य क्लृप्तत्वेनाकल्पनीयत्वात्, होमान्तरेष्वपि आहवनीयाभावापत्त्या मिथ्यात्वस्यापि कल्पयितुमशक्यत्वाच्च । अत एव येन सामान्यशास्त्रमेव पूर्वमालोचितम्, तस्य विशेषादर्शनजनितभ्रमः एव विशेषविषयताविषयको विशेषशास्त्रेण बाध्यते । एवं यत्रापि ' न तौ पशौ करोति ' इत्यादौ शास्त्रप्राप्तस्य निषेधः, तत्रापि प्रापकशास्त्रस्य यद्यपि निषेधस्य प्राप्तिसापेक्षत्वेनोपजीव्यत्वादत्यन्तबाधानुपपत्तेर्विशेषविषयत्वमावश्यकम् , तथापि तत्र विकल्पाङ्गीकारादभावपक्षे विशेषविषयत्वप्रतिबन्धान्नोक्तलक्षणाव्याप्तिः । यथा च तत्र रागप्राप्तनिषेधवत् भ्रान्तिप्राप्तस्य बाधमङ्गीकृत्य न विकल्पः , तथा कौस्तुभे द्रष्टव्यम् । वक्ष्यते च अत्रापि दशमे । अतः सिद्धं बाधस्य द्वैविध्यम् ।

**मण्डन—** ' बाधः प्राप्ते क्वचिद् भवेत् । ' १२.

**शंकर—** ' प्राप्तबाधस्तथेरितः । ' १२.

* **बलाबलाधिकरणे** प्रत्यक्षलिङ्गविरोधे स्मृतिकल्पितश्रुतेः याथार्थ्यनिश्चयाभावेन दुर्बलत्वं वार्तिककृतैव वक्ष्यते । कौ. १।३।४।९, * बलाबलाधिकरणे लिङ्गबलीयस्त्वं वक्ष्यते । ३।२।९।२४ पृ. २७०, * यत्तु **बलाबलाधिकरणे** शाखान्तरीयस्य दुर्बलत्वाभिधानं तत् मूलानवगमेऽपि यत्र परोक्तिमात्रेण पदार्था-

वगमः तत्र मूलावगमपर्यन्तं बाध्यते इत्येवंपरम् । २।४। २।२३.

* टीकायामपि ( भामत्यां ) **बलाबलाधिकरणानुक्रमणे** ऐन्द्रीमन्त्रादीनां प्रथमप्रवृत्तश्रुत्यादिभिः निराकाङ्क्षीकरणेन अप्राप्तबाध एव वर्णितः । **परिमल.** ३।३।१४।२५ पृ. ८०२.

* श्रुतिर्हि वाक्याद् बलीयसी **बलाबलाधिकरणोक्तन्यायात्** । **वैद्यनाथः**.

* प्रकरणोत्तरप्रमाणानां **बलाबलाधिकरणवक्ष्यमाणन्यायेन** मन्थरप्रवृत्तत्वात् अङ्गताबोधकत्वानुपपत्तिः । **कौ.** ३।३।४।११.

* **बलाबलाधिकरणवार्तिके** संदंशस्य भेदत्रयं उक्तम् । **बाल.** पृ. १०.

* तद्धितश्रुतिदौर्बल्यस्य **बलाबलाधिकरणसिद्धत्वेन** ऐन्द्र्यधिकरणविषयत्वाभावः । **कौ.** ३।२।२।३.

* **बलाबलचिन्तायाः** विरोधविषयत्वम् । **सु.** पृ. १२०६.

* **बलाबलपरीक्षा** चोदकनामधेययोः 'न वा क्रत्वभिधानात् ०' ( ७।४।२।१९ ) इत्यत्र सिद्धा । **भा.** १२।२।७।२२.

* **बलाबलविचारः** । 'भिन्नकक्षागते ये च प्रमाणे तत्र धावतः । तयोः शीघ्रेण निर्णीते मन्थरं न प्रवर्तते ॥ तद्धि दूरमपि प्राप्तमेकमप्यगतं पदम् । इतरेण गते नादावेकान्तेनैव जीयते ॥ यत्र शीघ्रतरं नास्ति तस्यार्थस्यापहारकम् । चिरेणापि व्रजेत्तत्र दुर्बलं न निवार्यते ॥ नहि येन प्रमाणत्वं लब्धपूर्वं कदा चन । तेन तत्सर्वदा लभ्यमित्याज्ञापयतीश्वरः ॥' **वा.** १।३। २।३ पृ. १७३.

* **बलभित्** । 'पञ्चदशो बलभिद्भवति रथंतरसामा उत्सेधब्रह्मसामा' ( तलवकारीयताण्डकादिब्राह्मणेषु ) । **कु.** १।४।६।७. * '**बलभिदा** यजेत' इति बलभिच्छब्दः कर्मनामधेयम् । **भा.** १।४।१।१–२.

* **बलभिच्छब्दस्य** यागनामतया प्रामाण्यम् 'बलभिदा यजेत' इत्यत्र । **वि.** १।४।१.

* **बलवत्** प्रयोगकालावगतक्रमात् देवतासामान्यं उत्पत्तिसमयावगतम् । **संकर्ष.** २।३।५. * 'नापेक्षा यस्य यत्रास्ति स तस्माद् **बलवान्** भवेत् । यः पराधीनवृत्तिः स तद्बाधं कथमाचरेत् ॥' श्रुत्यादीनां हि पूर्वं पूर्वं उत्तरोत्तरनिरपेक्षं प्रवर्तमानं बलवद्भवति, परंपरं तु पूर्वाधीनप्रामाण्यं न शक्नोति तस्यैव बाधं कर्तुम् । नहि श्रुतिमननुमाय लिङ्गादेः प्रामाण्यमध्यवसीयते । **वा.** ३।३।७।१४ पृ. ८३०. * **बलवता** **प्रमाणेन** प्रधानकथम्भावं बाधित्वा अङ्गगुणत्वावगमे संदंशसंभवः । सर्वेषां च अवान्तरप्रकरणित्वेनाभिमतानां श्रुत्यादिभिः प्राक् तदङ्गमुक्त्वा पश्चादपि तदङ्गपरामर्शसद्भावात् न क्वचित् संदंशाभावः शङ्कनीयः । **सु.** पृ. १०७०. * '**बलवति हेतौ प्रयुक्ते दुर्बलोपन्यासः क्लिष्टो भवति**' इति **न्यायः** । ननु 'प्रयोगचोदनाभावात्' ( १।३।१०।३० ) इत्यनेनैव शब्दार्थैकत्वसिद्धेः 'अविभागात्' इत्यनर्थकम्, हेत्वन्तराभिधानार्थत्वे वा शब्दैक्यमात्रविषयत्वेन अव्यापकतया दौर्बल्यात् 'बलवति भवति' इति न्यायेन पूर्वमुपन्यस्येत इत्याशङ्का । **सु.** पृ. ३३९.

* **बलवदाश्रयेण** दुर्बलाश्रयं बाध्यते । अप्राप्तबाधोऽयम् । **वा.** ३।३।७।१४ पृ. ८६०, **बाल.** पृ. १४०. * **बलवदाश्रयात्** दुर्बलस्यापि लिङ्गस्य प्रबलायाः श्रुतेरपि अन्यथानयनम् 'आकाशस्तल्लिङ्गात्' इत्यत्र 'शिष्टाकोपे यथोदितम्' इति न्यायेन । **पराक्रमः**. ६२।१–२.

* **बलवदाश्रितस्य** दुर्बलस्य प्रबलत्वम् । 'दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा । तदापि विपरीतत्वं शिष्टाकोपे यथोदितम् ( १।३।३ ) ॥ अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः । दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥' यदा पदार्थतद्धर्मविषये प्रमाणे विरुध्येते तत्र यद्यपि प्रमाणतोऽन्यादृशं बलाबलं तथापि प्रमेयानुरोधेन तदाश्रयणात् स्वरूपदुर्बलेनापि बलवद् बाध्यमानं तदानुगुण्यं प्रतिपद्यते । तदुक्तं आचमनादयः पदार्थाः क्रमः तेषां धर्मः । **वा.** ३।३।७।१४ पृ. ८४१.

* **बलीयः** देवताघटितसादृश्यापेक्षया द्रव्यघटितसादृश्यम् । ८।१।१७।३२-३४. * **बलीयानपि** हेतुः विरुध्यमानमबलीयांसं बाधितुमर्हति नाविरुद्धम् । भा. ३।३।७।१४ पृ. ८४३-८४४.

* **बलीयस्त्वं** श्रुतिलिङ्गादीनां पूर्वपूर्वस्य । भा. ३।३।७।१४.

* **बलीवर्दाभ्यर्चनं** तद्धावनादिकं च ज्येष्ठपौर्णमास्यां उदीच्याः कुर्वन्ति । अस्योत्सवस्य 'उद्वृषभयज्ञः' इति नामधेयम् । वि. १।३।८.

* **बल्वजाः** तृणविशेषः । सोम. २।१।४ पृ. १०८.

* **बहिरिन्द्रियाणि** प्राप्यकारीणि । ऋजु. पृ. २४२.

* **बहिष्पवमानं** ज्योतिष्टोमे प्रातःसवने स्तोत्रविशेषः। वि. १।३।५ वर्णकं ३. * बहिष्पवमानं पवमानार्थमन्त्रकत्वात् बहिःसंबन्धाच्च । भा. १।४।२।३. * बहिष्पवमानं सदसो बहिःप्रसर्पद्भिः प्रयुज्यते इति 'बहिष्पवमानम्' इत्युच्यते । वि. १।४।३, * 'त्रिवृद् बहिष्पवमानम्' अत्र त्रिवृच्छब्दस्य ऋचां नवकमित्यर्थः । १।३।५ वर्णकं ३ वार्तिकमतम्. * 'त्रिवृद्बहिष्पवमानम्' इति बहिष्पवमानशब्दः नामधेयम्, न गुणविधिः । भा. १।४।२।३. * **बहिष्पवमानस्य** अविवृद्धस्तोमः अग्निष्टोमे प्रातःसवने । वि. १०।५।७, * **बहिष्पवमाने**, अतिरात्रे चोदकप्राप्ते, 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामम्, त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इति कामभेदेन एकविंश-त्रिणव-त्रयस्त्रिंशाः स्तोमा विहिताः । ५।३।४. * बहिष्पवमाने अतिरात्रगते एकविंशादिकाम्यस्तोमेषु संख्यापूरणाय आगमिततृचानां अन्ते निवेशः । ५।३।४ मीको. पृ. २५८ 'अतिरात्रे काम्यस्तोमविवृद्धौ०' इत्यत्र द्रष्टव्यम् । * बहिष्पवमाने अतिरात्रगते एकविंश-त्रिणव-त्रयस्त्रिंशेषु काम्यस्तोमेषु ऊर्ध्वगानार्थं संख्यापूरणाय के चित् तृचाः आगमयितव्याः । वि. ५।३।४, * बहिष्पवमाने अतिरात्रगते काम्यस्तोमेषु ऊर्ध्वगानमेव। ऊर्ध्वगानं आवृत्तिं विना ऋचां पाठक्रमेण गानम् । ५।३।४, * बहिष्पवमाने अतिरात्रगते, माध्यंदिने विवृद्धस्तोमः एकविंशः । तत्र सामागमेन स्तोमपूरणम्, न ऋगागमेन । आगमितसामनिवेशश्च नान्त्ये त्रिष्टुपछन्दस्के तृचे, किन्तु 'उच्चा ते जातमन्धसः' इति गायत्रे तृचे एव । ५।३।५. * बहिष्पवमाने अपच्छेदे, द्वादशाहादौ अहर्गणे, सर्वोऽहर्गणो नावर्तनीयः, किन्तु तदेवैकं अहरावर्तनीयं प्रायश्चित्तत्वेन, यस्मिन्नपच्छेदः संजातः । ६।५।२१।५६. * बहिष्पवमाने आदौ उद्गात्रपच्छेदः, ततः प्रतिहर्त्रपच्छेदः एवं क्रमेणापच्छेदद्वये उत्तरापच्छेदनिमित्तकं सर्वस्वदानं तस्मिन्नेव प्रयोगे कर्तव्यम्, पुनः प्रयोगस्तु नास्त्येव । अपच्छेदन्यायः । ६।५।१९. * बहिष्पवमाने उद्गात्रपच्छेदनिमित्तकं प्रायश्चित्तम् 'यद्युद्गाताऽपच्छिद्येताऽदक्षिणो यज्ञः संस्थाप्यः, अथान्य आहूत्यः, तत्र तत् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात्' इति । वि. ६।५।१७. * बहिष्पवमाने उद्गातृ-प्रतिहर्त्रोः युगपदपच्छेदेऽपि अस्त्येव प्रायश्चित्तम् । ६।५।१७. * बहिष्पवमाने उद्गातृ-प्रतिहर्त्रोः युगपदपच्छेदे प्रायश्चित्तद्वयं प्राप्तमेव, तथापि विरुद्धत्वात् समुच्चयासंभवात् विकल्पेन किंचिदेकमनुष्ठेयम् । वि. ६।५।१८, * बहिष्पवमाने 'एकं हि तत्र साम' इति सामैकत्वम् । १०।५।७, * बहिष्पवमाने ज्योतिष्टोमीये तृचेषु त्रिषु ऊर्ध्वगानेन त्रिवृत् स्तोमो भवति, नात्र आवृत्तगानम् । ५।३।४, * बहिष्पवमाने ज्योतिष्टोमीये तृचात्मकेषु त्रिषु सूक्तेषु गायत्रं साम गीयते । १।४।३, * बहिष्पवमाने ज्योतिष्टोमीये त्रयस्तृचाः 'उपास्मै गायता०' 'दविद्युतत्या रुचा०' 'पवमानस्य ते०' इति स्तोत्रिय-अनुरूप-पर्यासनामकाः क्रमेण । तेषु ऊर्ध्वगानं त्रिवृत्स्तोमे । तासामेव ऋचां नवानां आवृत्तगानं तु पञ्चदशसप्तदशादिस्तोमेषु भवति । १।४।३.

**बहिष्पवमाने तु ऋगागमः सामैकत्वात् । १०।५।७।२६॥**

विवृद्धस्तोमकेषु एकविंशत्रिणवाद्यतिरात्रेषु बहिष्पवमाने तु न सामागमः, किन्तु ऋगागमः । 'यदुत्तरयोः पवमानयोस्तृचायतृचाय हिं करोति अथ कस्मात्

बहिष्पवमाने सकृदेव हिं करोतीति, एकं हि तत्र सामेति ब्रूयात् स्वारमेव गायत्रं ( स्वरसामैव ) गायति' इति वचनात् सामैकत्वात् सामागमो न संभवति । नापि अभ्यासेन संख्यापूरणं 'पराग्बहिष्पवमानेन स्तुवीत' इत्यनभ्यासवचनेन पराक्शब्देन अभ्यासस्य श्रुत्यैव निषिद्धत्वात् तस्मात् ऋगागमः । **के.**

* भाष्यकारेण विवृद्धस्तोमेषु क्रतुषु '**बहिष्पवमाने तु ऋगागमः सामैकत्वात्**' इति न्यायेन आगम्यमानानां ऋचां क्रमानियमः आशङ्कितः । **तन्त्ररत्न.** ५।१।६।१३. * बहिष्पवमाने द्वादशाहगतषाडहिके द्वितीयेऽहनि विवृद्धस्तोमके पञ्चदशे आगमितवृषण्वत्तृचाः अनुरूपपर्यासयोर्मध्ये निवेशनीयाः 'स्तोत्रियानुरूपौ तृचौ भवतः, वृषण्वन्तस्तृचा भवन्ति, तृचं उत्तमः पर्यासः' इति वचनात् । **वि.** ५।३।४, * बहिष्पवमाने प्रतिहर्त्रपच्छेदनिमित्तं प्रायश्चित्तं सर्वस्वदक्षिणत्वम् । 'यदि प्रतिहर्ताऽपच्छिद्येत सर्ववेदसं दद्यात्' । ६।५।१८, * बहिष्पवमाने प्रथमतः प्रतिहर्त्रपच्छेदः पश्चादुद्गात्रपच्छेदः तथा प्रथमप्रयोगः अदक्षिणः समापनीयः । द्वितीयः प्रयोगश्च कर्तव्यः, तत्र च सर्वस्वमेव देयम्, न तु द्वादशशतम् । ६।५।२०. * बहिष्पवमाने प्रातःसवने ऋत्विजः सदसो बहिः प्रसर्पन्ति । ( 'अत्र सूत्रं उदञ्चः प्रह्वाः बहिष्पवमानाय पञ्चर्त्विजः समन्वारब्धाः सर्पन्ति, अध्वर्युं प्रस्तोताऽन्वारभते, प्रस्तोतारं प्रतिहर्ता, प्रतिहर्तारमुद्गाता, उद्गातारं ब्रह्मा, ब्रह्माणं यजमानः' इति । तैसं. भा. ३।१।१० ) । अध्वर्युः प्रस्तोता उद्गाता प्रतिहर्ता ब्रह्मा यजमानः प्रशास्ता चेति एते क्रमेण पुरोगन्तुः कच्छं पाश्चात्त्यो गृहीत्वा पिपीलिकापङ्क्तिवद्गच्छन्ति । **वि.** ६।५।१७. "बहिष्पवमानस्तोत्रार्थं हविर्धानात् बहिर्गच्छतां अन्वारम्भः श्रुतः 'अध्वर्युं प्रस्तोता संतनुयात्, प्रस्तोतारमुद्गाता, उद्गातारं प्रतिहर्ता, प्रतिहर्तारं ब्रह्मा, ब्रह्माणं यजमानः, यजमानं प्रशास्ता' इति" । **सोम.** ६।५।१७. अध्वर्युं प्रस्तोताऽन्वारभते, प्रस्तोतारं प्रतिहर्ता, प्रतिहर्तारमुद्गाता, उद्गातारं ब्रह्मा, ब्रह्माणं यजमानः ( उद्गातारं यजमानः ), यजमानं ब्रह्मा इत्येकेषाम् । **सत्याश्रौ.** ८।४।४४. * बहिष्पवमाने रथंतरपृष्ठं विश्वजिति सर्वपृष्ठे । **भा.** ७।३।३।८. * बहिष्पवमाने विवृद्धस्तोमकेषु क्रतुषु साम अभ्यसितव्यम् । ऋगागमेन संख्या पूरयितव्या । १०।५।७।२६. 'विवृद्धस्तोमके क्रतौ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* माध्यंदिनार्भवपवमानयोः **बहिष्पवमानवत्** ऋगागमनं न भवति, किन्तु सामागमेन स्तोमपूरणं इति दशमे ( १०।५।६।१५–२५ ) वक्ष्यते । **वि.** ५।३।५.

* **बहु** । ननु आपेक्षिकमेतत् बहु अधिकं इति । यदेव हि बहु तदेव अन्यापेक्षया अबहु भवति । सत्यमेवम् । यत्तु यदपेक्ष्य बहु न तत् तदेव अपेक्ष्य अबहु । **भा.** ११।१।८।३८. * 'बहुः समुद्रः, बहुरोदनः' इत्यत्र वैपुल्यं महत्त्वं वा शब्दस्यार्थः । **वा.** ३।४।४। १३ पृ. ९२५.

⌛ **बहुभ्यः श्रोतव्यं बहुधेति न्यायः ।** अयं न्यायः सत्सु बहुषु गुरुष्वत्र कश्चिदेको ब्रह्मवित्तमो लभ्यते, ततः संसारभ्रमापनोदकं सम्यग्ज्ञानं सलक्षणं सिध्यतीत्यभिप्रायकोऽस्ति । न तु बहुभ्यो ज्ञानं संपादनीयमिति, 'श्रोत्रियं ब्रह्मनिष्ठम्' इत्येकवचनश्रवणात्, 'उपासीदेकमेव सद्गुरुं ब्रह्मवित्तमम्' इत्येकवचनात् चेति । **साहस्री.** ५३१.

⌛ **बहूनामनुग्रहो न्याय्य इति न्यायः ।** यथाहुः– 'बहूनामप्यसाराणां मेलनं कार्यसाधकम् । तृणैः संपाद्यते रज्जुस्तया नागोऽपि बध्यते ॥' इति । **साहस्री.** ३६५.

⌛ **बहूनामनुरोधो न्याय्य इति न्यायः । साहस्री.** ५६७.

⌛ **बहूनामनुसरणं न्याय्यमिति न्यायः । साहस्री.** ३६६.

⌛ **बहूनां तु प्रवृत्तेऽन्यमागमयेदवैगुण्यात् । ६।३।८।२२॥**

बहूनां स्वामिनां सत्ररूपे कर्मणि प्रवृत्ते, अन्यतमे स्वामिनि अपचरति सति अन्यमागमयेत् अपचरतः स्वामिनः प्रतिनिधिम् । अवैगुण्यात्, ल्यब्लोपे पञ्चमी,

अवैगुण्यं संपादयितुम् । प्रतिनिध्यभावे वैगुण्यं स्यात् । 'तथा स्वामिनः' इत्यस्य अपवादाधिकरणमिदम् । अपवादसूचनार्थमेव तुशब्दः । के.

* बहूनां पुरतो नृत्यन्नर्तकः सर्वेषां मुखं युगपन्निर्वर्तयति । वि. ११।१।१०. * 'बहूनां स्यात् सधर्मत्वम्' इति न्यायः ( 'भूयसां स्यात् सधर्मत्वम्' १२।२।७।२२ इति न्यायः इत्यर्थः ) । न च 'बहूनां स्यात् सधर्मत्वम्' इति न्यायेन अनेकेषु देशाद्यबाध एव अष्टानां तन्त्रित्वतात्पर्यग्राहकः इति वाच्यम् । भाट्ट.११।२।८. * बहुषु च सामान्यं विशेषाश्च भवन्ति । भा.९।१।६।२५.

* बह्वनुग्रहन्यायः ( भूयोऽनुग्रहन्यायः । १२।२।७।२२ ) । तस्मात् दहराकाशो ब्रह्म इति बह्वनुग्रहन्यायेन निर्णयः, नोपसंहारप्रावल्येन । पराक्रमः. ५७।१, * तस्मात् सिद्धमेतत् दहराधिकरणे नोपसंहारप्राबल्योपजीवनमस्ति न वा सूत्रकारमतिप्राप्तम्, उत्तरेभ्यः इति बहुवचनेन बह्वनुग्रहन्यायस्यैव सूचनात् । ६२।१.

* बह्वश्वप्रतिग्रहस्थले चतुष्कपालेषु काण्डानुसमयेनानुष्ठानम् 'काण्डानुसमयन्यायः' । ५।२।२.

* बहुकर्तृकत्वं सत्रस्य । १०।६।१४।४५–५०.

* बहुकृत्वोऽपि चोचार्यमाणो नान्यार्थो भवति । यत्प्रथमे उच्चारणे गम्यते शततमेऽपि तदेव गम्यते । भा. २।२।२।२. * प्राक्सिद्धचोदनाप्रामाण्यमेव 'बहुकृत्वोऽपि पथ्यं वेदितव्यम्' इत्येवं पुनः कथितमनेन सूत्रेण । शा. ५।१।१.

* बहुक्षीरादिवाक्येषु ( 'इयं गौः क्रेतव्या, बहुक्षीरा' इत्यादिषु ) रूपभङ्गेनापि पुरुषार्थपर्यवसायित्वं दृश्यते । सु. पृ. २१.

𝕏 बहुच्छिद्रघटप्रदीपन्यायः । अयं श्रीशंकराचार्यैः संक्षेपेण भाष्यतात्पर्यप्रकाशके श्रीमद्दक्षिणामूर्तिस्तोत्रेऽभिहितः । तथाहि 'नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं, ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते । जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्, तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥' इति । साहस्री. ३६३.

* बहुत्वं किमित्युच्यते । बहुत्वं वृद्धिः उपचयः आधिक्यम् । कथं कृत्वा ? बृंहतिरयं वृद्ध्यर्थः । तस्यौणादिक उकारः प्रत्ययः 'बृंहेर्नलोपश्च' इति । तस्य रूपं बहु इति । बहु–वृद्धं–अधिकं इत्यर्थः । भा. ११।१।८।३८, * बहुत्वं चापेक्षिकम्, किञ्चिदपेक्ष्य ततोऽधिकं बहु इत्युच्यते । असत्यामपेक्षायां अपरिपूर्णमेतत् । ६।७।११।२४. * बहुत्वं श्रूयमाणं यागभेदं कुर्यात्, यथा 'प्राजापत्यान्' इति 'वारुणान्' इति च । टुप्. ५।२।२।३.

* बहुत्ववत् । 'सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्' इत्यत्र बहुत्वं यथा अविवक्षितं तथा 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान्' इत्यत्र बहुत्वमविवक्षितम्, निमित्तेयत्ताप्रतिपादनेन नैमित्तिकेयत्ताया अवगतत्वात् । सोम. ५।१।१.

* बहुदेवत्ये पशौ एकवचनान्तमेधपतिशब्दस्य द्विवचनान्तेन विकल्पः । भा. ९।३।१३।४२–४३.

* बहु–द्वि–एकशब्दाः संख्यावचनाः, तामनभिधाय संख्येये वृत्त्यसंभवात् इत्याकृत्यधिकरणे स्थापितम् । वा. ३।४।४।१३ पृ. ९२४.

* बहुद्विपत्नीके दर्शपूर्णमासप्रयोगे प्रैषमन्त्रे पत्नीशब्दे ऊहो न । ९।३।६।२१.

* बहुपत्नीकः द्विपत्नीकश्चास्ति यजमानः । भा. ९।३।६।२०.

* बहुबाधः अल्पबाधेन बाध्यते, ( अप्राप्तबाधः ) यथा अश्वप्रतिग्रहेष्टौ । प्रतिग्रहीतृविषयत्वे 'वरुणाय' इति चतुर्थ्याः पञ्चम्यर्थत्वम्, 'अनयत्' इत्यस्य प्रतिग्रहार्थत्वम्, 'स त्वां देवताम्' इत्यत्र तच्छब्दस्य अप्राधान्यनिर्दिष्टवरुणपरामर्शित्वम्, वरुणस्य दातृत्वे च अदेवतात्वात् देवताशब्दायोगः इति बहुबाधः । दातुरिष्टिपक्षे तु प्रतिगृह्णातिमात्रस्य स्वार्थत्वत्यागः । बाल. पृ. १४०. * 'बहुबाधादल्पबाधो वरम्' इति न्यायः । यत्तु 'सृष्टीरुपदधाति' इत्यत्र उपसंहारानुसारेण समुदायलक्षणाश्रयणं तत् 'बहुबाधादल्पबाधो वरम्' इति न्यायात् । तल्लक्षणानाश्रयणे हि प्रत्येकं

असृष्टिलिङ्गकमन्त्रोपधेयेष्टकास्तुतीनां इष्टकासासदश्यकीर्तनस्य सर्वथा बाधः स्यात् । पराक्रमः. ४।१।१–२, ✽ बहुबाधस्य अन्याय्यत्वम् । ५५।२.

✽ बहुभवनकामस्य पञ्चशारदीयः अहीनः । भा. ११।२।१३।५४.

**बहुयाजी नाम सोमयाजी एव ॥**

बहुयाजिपदेन यागबाहुल्यप्रतीतेः बहुयष्टैव ग्राह्यः । सहस्रदक्षिणयागकर्तर्यपि सहस्रद इति प्रयोगदर्शनाद्बहुदक्षिणपौण्डरीकादियाजी वा ग्राह्यः । **इति प्राप्ते,** ऐष्टिकपाशुककर्माण्यपेक्ष्य सोमस्येतिकर्तव्यताबाहुल्याद्विश्वसृजामयनान्ताखिलविकृत्यनुगतत्वाच्च सोमयाज्येव बहुयाजी । अत एव ‘ यो ब्राह्मणो बहुयाजी स्यात् तस्य कुम्भ्यां गृह्णीयात् ’ इति विधाय ‘ स हि गृहीतवसतीवरीकः ’ इति विवरणमुपपद्यते । **संकर्ष.** ४।२।३.

**बहुराजकपुरन्यायः ।** यथा एकस्मिन्पुरे यदा बहवो राजानस्तदा तेषामैकमत्याभावेन प्रजानां क्लेशस्तथा एकस्मिन् देहे नानेन्द्रियाणां कर्तृत्वे स्वीकृते मिथो विरोधान्नैकमपि सिध्येत् । तथाहि, यदा चक्षुर्दर्शनाय प्रवर्तमानं भवति तदाऽन्यानि इन्द्रियाणि स्वस्वक्रियया निर्वोढुमुद्यतानि भवन्ति चेत् तदा दर्शनादि नैकमपि जायते, एवं विवक्षायामस्य प्रवृत्तिरिति । **साहस्री.** १९.

✽ **बहुलक्षणा** अल्पलक्षणया बाध्यते । **बाल.** पृ. १४३.

**बहुवृकाकृष्टमृगन्यायः ।** यथा बहूनां वृकाणां प्रत्येकं भोक्तृत्वे बहूनामैकमत्यासंभवेन विरुद्धादिक्रियया मृगदेहस्योन्मथनप्रसङ्गस्तथा प्रकृतेऽपि । **साहस्री.** १८.

✽ **बहुवैयर्थ्यं** दोषः । **वि.** ३।१।५.

✽ **बहुवचनं** एकस्यैव पूजार्थे । **भा.** १०।४।२५।५३ . ✽ बहुवचनं साधारण्येन वर्तते त्रित्वादिषु, यथा अक्षशब्दः साधारणवचनो विदेवनादिषु । अथवा यत्र एकत्वद्वित्वे न स्तः तत्रायं वर्तते । एतस्मिन् पक्षे सामान्यवचनोऽयम् । ( पूर्वस्मिंस्तु पक्षे बहुवचनस्य नानार्थत्वापत्तिः, अत्र तु द्वित्वाधिक्यं सामान्यं तदर्थः इति न नानार्थत्वम् ) । सिद्धान्तेऽपि अयमेव शब्दार्थो न व्यावर्तते । **टुप्.** ११।१।८।३८. ✽ यद् बहुषु प्रातिपदिकं वर्तते ततो **बहुवचनं** भवति । **भा.** ३।५।८।२३ , ✽ यथा लोके पृथक्त्वेनापि कुर्वाणानां बहुवचनं दृश्यते । ‘ देवश्चेद् वर्षेत् बहवः कृषिं कुर्युः , सस्यं चेत् संपद्येत बहवो ब्राह्मणा यजेरन् ’ इति । तथा वेदेऽपि प्रयोगदर्शनम् ‘ सत्रादुदवसाय पृष्ठशमनीयेन यजेरन् ’ इति । १०।६।१४।४५ । लोके अन्यतः प्रवृत्तस्य अर्थस्य अनुवादभूतः शब्द उच्चार्यमाणः सामान्यक्रियासंबन्धाभिसमीक्षया उच्चरितः इति गम्यते । तथा भिन्नानि उदवसानानि उपलक्ष्य क्रियामात्रं विधीयते तद्बहुत्वं च समानकर्तृत्वादेव प्राप्तमनूद्यते इत्युक्तमेव । १०।६।१४।४८. ✽ **बहुवचनेन** त्रय एव कपिञ्जला ग्राह्या नाधिकाः । ११।१।८।३८–४६ . ✽ बहुवचनेन त्रयश्चत्वारः पञ्च वा सर्वे एते संख्याविशेषाः प्राप्यन्ते । सर्वे तस्य वाच्याः सर्वत्र प्रयोगात् । ( प्राथम्यात्तु त्रित्वं नियम्येत, कारणादतिक्रमः स्यात् । ) । **भा.** ११।१।८।३८.

**बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् । ११। १।८।३८॥**

‘ वसन्ताय कपिञ्जलानालभते ’ इति श्रूयते । तत्र कपिञ्जलान् इति बहुवचनेन त्रित्वचतुष्ट्वादीनां सर्वासां संख्यानां प्राप्तेः बहुत्वे सर्वासामन्तर्भावात् कपिञ्जलसंख्यासु विकल्पः स्यात् त्रयो वा चत्वारो वा पञ्च वा आलब्धव्याः इति पूर्वः पक्षः ।

**दृष्टः प्रयोग इति चेत् । ३९ ॥**

बहुवचनस्य न त्रित्वमेव वाच्यम् , यतः ‘ चत्वारो ब्राह्मणाः ’ ‘ पञ्च भूतानि ’ इति चतुरादिषु बहुवचनस्य प्रयोगो दृष्टः । तस्मात् बहुवचनेन का संख्या विवक्षिता इति विचारः कर्तव्यः इति चेत् ।

**तथेह । ४० ॥**

तथा बहुवचनस्य चतुरादिषु प्रयोगवत् कपिञ्जलशब्दस्य कपोते मयूरे च प्रयोगो दृष्टः । तस्मात् ‘ वसन्ताय कपिञ्जलानालभेत ’ इति वाक्यस्थकपिञ्जलपदार्थस्य विचारः कर्तव्यः स्यात् । न तु स कृतः । ततः संख्याविचारोऽपि मा भूत् ।

**भक्त्येति चेत् । ४१ ॥**

मैवम् । महति कपोते अल्पे मयूरे च कपिञ्जलशब्दः भक्त्या गुणवृत्त्या प्रयुज्यते । तस्मात् कपिञ्जलप्रातिपदिकार्थो न विचार्यः । इति चेत् ।

**तथेतरस्मिन् । ४२ ॥**

यथा महाकपोतादौ कपिञ्जलशब्दो गौण्या प्रयुज्यते तथा बहुवचनमपि चतुरादिषु लक्षणया प्रयुज्येत । बहुत्वसामान्यं तु बहुवचनार्थः । तस्मात् कपिञ्जलेषु संख्याया विकल्पः इति पूर्वः पक्षः ।

**प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् । ४३ ॥**

वाशब्देन पूर्वपक्षनिरासः । बहुत्वान्तर्गतासु संख्यासु प्रथमं त्रित्वं नियम्येत । त्रय एव कपिञ्जला आलब्धव्या नाधिका इति । विशेषात् कारणात्तु त्रित्वस्य अतिक्रमः स्यात् । यथा 'षड् देया द्वादश देयाश्चतुर्विंशतिर्देयाः' इत्यादौ । तस्मात् अत्र बहुवचनस्य त्रित्वे पर्यवसानम् ।

**श्रुत्यर्थाविशेषात् । ४४ ॥**

कपिञ्जलानां त्रित्वे स्वीकृते श्रुत्यर्थस्य न कश्चित् विशेषः । त्रित्वस्यापि बहुवचनश्रुत्यर्थत्वात् । तस्मात् त्रय एव आलब्धव्याः । नेदं सूत्रं किन्तु भाष्यं इति बहवः ।

**तथा चान्यार्थदर्शनम् । ४५ ॥**

'कृष्णा याम्याः, अवलिप्ता रौद्राः, नभोरूपाः पार्जन्याः, तेषामैन्द्राग्नो दशमः' इति अन्यार्थे अश्वमेधे पशुविशेषविधानार्थं दर्शनं बहुवचनस्य उत्सर्गतः त्रित्वमर्थः इति दर्शयति । यदि याम्या यमदेवताकास्त्रयः रुद्रदेवताकास्त्रयः पर्जन्यदेवताकाश्च त्रयः स्युः तदैव नियोगेन ऐन्द्राग्नो दशमः स्यान्नान्यथा । तस्मात् त्रित्वनियमः ।

**प्रकृत्या च पूर्ववत् तदासत्तेः । ४६ ॥**

प्रकृत्या अग्नीषोमीयेण । प्रकृतिगतेन एकत्वेन तदासत्तेः तस्य त्रित्वस्य आसत्तेः संनिधानात् कपिञ्जलान् इति बहुवचनेन त्रित्वमेव निश्चीयते । पूर्ववत् इत्यनेन लिङ्गान्तरमुक्तम् । गृहमेधीये श्रूयते 'ओदनानुद्धरति' इति । तत्र मध्यमस्येति निरुपपदं त्रयाणां मध्यमस्य इति ज्ञायते । तस्मात् त्रीनेव कपिञ्जलानालभेत नाधिकान् इति सिद्धान्तः । के.

* **बहुवचनस्य** असति बाधके त्रित्वे पर्यवसानम् । ११।१।८।३८-४६. **मीको.** पृ. १३५८ 'कपिञ्जलाधिकरणम्' इत्यत्र द्रष्टव्यम् । * बहुवचनस्य पश्चात् श्रुतत्वेन प्रातिपदिकं प्रति गुणत्वम् । **सु.** पृ. १०४९.

* **बहुवचनान्तस्य** पाशमन्त्रस्य विकल्पेन प्रकरणे एव निवेशः । ९।३।५।१५-२०.

* **बहुवचनान्तैकवचनान्तपाशमन्त्रयोर्द्विवचनान्ते-**नोहः द्विपशुकायां विकृतौ । ९।३।४।१०-१४.

* **बहुवचनस्थले,** अवश्यम्भावित्वे प्रथमभावित्वे लाघवे च संभवति अधिकग्रहणे दोषवत्त्वे च सति त्रित्वमेव ग्राह्यं न चतुष्ट्वादि । **वि.** ११।१।८.

⌛ **बहुसपत्नीकन्यायः** । यथा बहुसपत्नीकः पुरुषः सर्वासां पत्नीनां युगपत् कामनाकरणेऽशक्तो दुःखमनुभवति, तथा नानेन्द्रियविषयभोगेन तत्तदिन्द्रियपरोऽपि युगपत्कार्यप्राप्तौ दुःखमनुभवतीति । यथा चोक्तम्- 'जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा, शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् । घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥' इति । **साहस्री.** ४६९.

* **बहुव्रीहिः** मतुबर्थकः इति केचित्, नेत्यन्ये । **मणि.** पृ. १५०. * बहुव्रीहिः समानाधिकरणानां इति स्मृतिः । **रत्नाकरः.** पृ. ४४६. * चित्राणां गवामयं इतीदृशेऽर्थे **बहुव्रीहिः** वर्तते । संबन्धविशिष्टाभिर्गोभिः देवदत्तादिर्विशिष्टः इति समासार्थो विज्ञायते । बहुव्रीहौ अपि न संबन्धप्राधान्यम् । स च अन्यपदार्थः संबन्धी योग्यतावशेन जातिद्रव्यगुणक्रियाणामन्यतमः परिगृह्यते । **वा.** ३।१।६।१२ पृ. ६७७. * **बहुव्रीहेः** अन्यपदार्थे शक्तिः इति निरूपणम् । अरुणाधिकरणे (३।१।६।१२) बहुव्रीहेः अन्यपदार्थे शक्तिः इत्युक्तं 'अतश्च दण्डिशब्देन संबन्ध्येवोच्यते यथा । तथैव यौगिकैः शब्दैः पिङ्गाक्ष्यादिपदैरपि ॥' इत्युपक्रमात् (वा. पृ. ६७७), 'तस्मादुपपन्नं पिङ्गाक्ष्यादीनां द्रव्यवचनत्वम्' इति चोपसंहारात् ( वा. पृ. ६७९ ) । इन्द्रपीत-निषादस्थपत्यधि-

करणद्वयपर्यालोचनात्तु ( ३।२।११, ६।१।१३ ) लाक्षणिकः अन्यपदार्थः इति भाति । तथाहि, आद्ये इन्द्रपीतशब्दः सोमविशेषणं तत्पुरुषः, तत्र पूर्वपदार्थमात्रलक्षणापत्तेः, न बहुव्रीहिः सवनविशेषणम्, तत्र पदद्वयेऽपि अन्यपदार्थलक्षणाऽऽपत्तेः इति पूर्वपक्षिते बहुव्रीहौ अन्यपदार्थः शक्यः इत्येवोत्तरं वाच्यम् । तत्तु अनुक्त्वा हुताहुतसमुदायवाचिनः इन्द्रपीतशब्दस्य तदवयवे लक्षणापत्तिं तत्पुरुषे वदतः सिद्धान्तिनः पूर्वपक्ष्युक्ता बहुव्रीहौ अन्यपदार्थलक्षणा अभिमतेति गम्यते । निषादस्थपत्यधिकरणे च तत्पुरुषात् कर्मधारयबलीयस्त्वेन सिद्धान्तितम् । तत्र बहुव्रीहौ अन्यपदार्थस्य शक्यत्वे विद्याप्रयुक्तिलाघवात् कर्मधारयं हित्वा निषादः स्थपतिर्यस्य इत्येवं बहुव्रीह्यापत्त्या पूर्वपक्षः परावर्तेतेति । तत्र लक्षणापक्षे बहुव्रीह्यादेः अरुणशब्दस्य च द्रव्यलक्षकत्वाविशेषे किं विनिगमकम्, यत् बहुव्रीह्यादेरेव द्रव्याभिधायिता, नारुणपदस्येति । प्रत्युत बहुव्रीहौ लक्षणायाः समस्यमानानेकपदालोचनापेक्षत्वेन विलम्बितत्वात् न तेन द्रव्यविधिः स्यात्, किन्तु गुणशब्देनैव इति क्रयसाधनद्रव्यनिवेशस्य पूर्वोत्तरपक्षयोः साम्यात् तदाक्षेपपूर्वपक्षस्य वाक्यीयतत्सिद्धिसिद्धान्तस्य च अयोगात् अरुणाऽधिकरणमनुपपन्नं स्यात् इति वाच्यत्वपक्ष एव संमतः । न च लक्षणा न्याय्या । तत्र हि किं आकृतिन्यायः 'नागृहीतविशेषणा' इत्ययं बीजम्, 'अनन्यलभ्यः शब्दार्थः' इति कर्त्रधिकरणन्यायो वा ? नाद्यः, आकृतिन्यायो हि तत्र प्रवर्तते, यः शब्दः कदाचिदपि विशेषणमात्रे दृष्टप्रयोगः । तेन पाचक—नप्तृ—स्नुषा—कुलालादिशब्दाः न तत्रोदाहरणं इत्युक्तम् । अतो बहुव्रीहेरपि विशेषणमात्रे कदा चिदपि अप्रयोगात् न आकृतिन्यायः इति विशिष्टवाचितैव । न द्वितीयः, तत्रापि हि आक्षेपतः अन्यलभ्यत्वं वा स्यात् लक्षणया वा ? नाद्यः, पिङ्गाक्ष्यादौ क्वचिद्व्यभिचारेण आक्षेपसंभवेऽपि चित्रग्वादौ व्यभिचारेण आक्षेपायोगात् । न द्वितीयः, नियमतः शक्तिग्रहापेक्षे शब्दे 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायस्याप्रवृत्तेः । अन्यथा पङ्कजादिपदे पद्मस्य लक्षणया प्रतीतिसंभवात् अनन्यलभ्यन्यायादवाच्यता स्यात् । अस्ति च चित्रग्वादिबहुव्रीहेः अन्यपदार्थबोधे शक्तिग्रहापेक्षेति । तत्पुरुषे तु न राजसंबन्धिनि राजशब्दस्य शक्तिग्रहापेक्षा । यत्तु इन्द्रपीत—निषादस्थपत्यधिकरणपर्यालोचनात् बहुव्रीहेः षष्ठीतत्पुरुषात् कर्मधारयाच्च इष्टं दौर्बल्यं न सिध्येदित्युक्तम्, तन्न । कर्मधारये तावत् यावन्तः श्रुतपदार्थाः तावतां वाक्यार्थे अन्वयः । बहुव्रीहौ तु एकस्यैव इति दौर्बल्यम् । षष्ठीतत्पुरुषादौ तु एकस्यैव उत्तरपदार्थस्य वाक्यार्थे अन्वयः, बहुव्रीहावपि एकस्यैव इति साम्यं यद्यपि, तथापि तत्पुरुषे एकस्यैव त्यागः, बहुव्रीहौ तु अनेकत्यागः इति दौर्बल्यम् । अतः 'सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते ।' इति वार्तिकं ( पृ. ६७५ ) बहुव्रीहिविषयमपि न कृत्तद्धितमात्रविषयं इति सर्वमनवद्यम् । 'गौतमीयैर्निरस्तान्यपदार्थस्येह वाच्यता । बहुव्रीहौ जैमिनीये मते त्विष्टोपपादिता ॥' इति बहुव्रीहौ अन्यपदार्थवाच्यतानिरूपणम् । बाल. पृ. ९३—९४. * बहुव्रीहेः अन्यपदार्थे शक्तिरेव, न तु लक्षणा इति अरुणाधिकरणवार्तिके ( ३।१।६।१२ ) व्यवस्थापितम् । सोम. ३।२।२०. * बहुव्रीहेः मत्वर्थो वा अभिधेयः द्रव्यं वा इति संशये 'बहुव्रीहिसमासोऽयं मतुबर्थे विधीयते' इति पूर्वः पक्षः । 'बहुव्रीहेरतो द्रव्यमभिधेयं न तद्गुणः' इति सिद्धान्तः । वा. ३।१।६।१२ पृ. ६७३—६७९, * बहुव्रीहेर्मत्वर्थविषयत्वात् एकहायन्यादिशब्दैः संबन्धोऽभिधीयते । इति पूर्वः पक्षः । पृ. ६७४. * बहुव्रीहेः सर्वनामार्थवृत्तित्वम् । सु. पृ. ७८०.

* **बहुव्रीहौ** अवयवार्थविशिष्टान्यपदार्थरूपे द्रव्ये एव शक्तिः इति प्राञ्चः । अन्यपदार्थे पदद्वयस्य लक्षणा इति तु बहवः । भाट्ट. ३।१।६ पृ. १९०. * बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । वि. ३।२।११.

* **बहुव्रीह्यभिधेयलाक्षणिकत्वविचारः** । मीको. पृ. ६०८ 'अरुणान्यायः' इति भाष्यीयाधिकरणे द्रष्टव्यः ।

* **बहुव्रीहिविचारः** 'समासवादः' इति चिन्दौ मणिग्रन्थे द्रष्टव्यः ।

* **बहुव्रीहिसमासार्थः** किमभिधेयः लाक्षणिको वेति चिन्तायां लाक्षणिक इति केचित्, अभिधेय इति सिद्धान्तः । **वा. पृ.** ६७८–७९.

* **बहुव्रीहिसमासार्थविचारः । मीको. पृ.** ६०८ 'अरुणान्यायः' इति भाष्यीयाधिकरणे द्रष्टव्यः ।

* **बह्वृचाः** अध्यापकाः महाव्रतप्रतिपादकं आश्वलायननिर्मितं कल्पसूत्रं अरण्येऽधीयानाः 'पञ्चममारण्यकं' इति वेदत्वेन व्यवहरन्ति । तच्च कर्तृविस्मरणमूलकम् । **वि.** ९।२।१ वर्णकं २. * **बह्वृचैरेव** वासिष्ठं धर्मसूत्रं परिगृहीतम् । **वा.** १।३।७।१५.

* **बह्वृचब्राह्मणे** (अध्वर्युब्राह्मणे इति वार्तिकं) 'यावज्जीवमग्निहोत्रं जुहोति' इति जीवनं निमित्तीकृत्य नित्योऽग्निहोत्रप्रयोगो विधीयते, न तु काम्ये कालरूपधर्मः । २।४।१।१–७.

⌛ **बाणोष्ट्रीन्यायः ।** यथा कश्चिदुष्ट्रपतिरजगरेण वेष्टितमुष्ट्रं रक्षन् बाणैरजगरं जघानेति लौकिकी गाथा, तथा निषेधवाक्यानि बाधावधित्वेनाऽऽत्मानं रक्षयन्ति अनात्मानं बाधन्ते इति । **साहस्री.** १०४.

* **बाणवन्तः** परिधयः यत्र तत्र बाणवन्त एव उत्पादयितव्याः सिद्धान्ते । पालाशास्तु पूर्वपक्षे । **भा.** २।१।४।१२.

* **बादरिः** आचार्यः सर्वाधिकारं (चातुर्वर्ण्याधिकारं) शास्त्रं मन्यते स्म । **भा.** ६।१।७।२७.

⌛ **बादर्यधिकरणम् ॥**

**द्रव्यगुणसंस्कारेषु बादरिः । ३।१।२।३॥**

**भाष्यम्**— बादरिराचार्योऽत्र द्रव्यगुणसंस्कारेष्वेव शेषशब्द इति मेने, न यागफलपुरुषेषु । द्रव्यं क्रियार्थम् । यदि प्रयोजनवती क्रिया व्यक्तं सा द्रव्येण निर्वर्तयितव्या । तस्या निर्वृत्तिर्द्रव्यादृते न भवतीति तन्निर्वृत्तये द्रव्यमेषितव्यं भवति । तस्मात् क्रियार्थं द्रव्यम् । गुणः शक्नोति विशिष्टं द्रव्यं चोदितं लक्षयितुम् । लक्षितेन च तेन प्रयोजनम् । विशिष्टस्य क्रियासाधनत्वात् । तस्मात् सोऽपि द्रव्यद्वारेण क्रियाया उपकरोतीति क्रियार्थ एव । संस्कारो नाम स भवति, यस्मिन् जाते पदार्थो भवति योग्यः कस्यचिदर्थस्य । तेनापि क्रियायां कर्तव्यायां प्रयोजनमिति सोऽपि परार्थः । तस्माद्द्रव्यगुणसंस्काराः परार्थत्वाच्छेषभूता न तु यागफलपुरुषाः । यागस्तावत्कर्तव्यः पुरुषस्य । न हि तस्मिन्निर्वर्तिते किञ्चिदपरमस्ति कर्तव्यम् । स हि पुरुषार्थः । यदन्यद् द्रव्यादि तत्, तदर्थं तस्य शेषभूतम् । स तु न किञ्चिदभिनिर्वर्तयितुं क्रियते । फलमपि न तेन क्रियते । तस्मिंस्तु कृते स्वयमेव तद्भवति । तस्मिन्कृते फलमस्य भवतीत्येतावद्गम्यते । नास्ति शब्दो यागेन क्रियते फलमिति । तस्माद्यागो न शेषभूतः कस्य चिदर्थस्य । फलमपि न पुरुषं प्रत्युपदिश्यते । यः स्वर्गं कामयते स यागं कुर्यादित्येतावच्छब्देनोपदिश्यते, नाऽऽत्मनः परस्य वेति । स्वर्गं प्रतीच्छामात्रेण स्वर्गकाम इति भवति । तस्मात् पुरुषं प्रति गुणभावेन न श्रूयते स्वर्गः । तस्मात्सोऽपि न शेषभूतः । न चेत् फलयागौ गुणभावेन चोद्येते, कस्य पुरुषः प्रधानभूतो भवति । प्रत्यक्षश्चास्य द्रव्यत्वात् कर्म प्रति गुणभावः । तस्माद्द्रव्यगुणसंस्कारेष्वेव शेषभावं बादरिर्मेने इति ।

**वा**—इदानीं शेषत्वस्य विषयं कथयति । तत्र बादरिमतेन तावत्त्रय एव शेषाः । द्रव्यं हि 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः' इति स्वभावत एव शेषभूतं नियमान्निष्प्रयोजनत्वेन केवलं व्यावर्त्यते । गुणोऽप्यरुणादिः क्रियायाः स्वसाधनभूतद्रव्यपरिच्छेदसामर्थ्यात् उत्पत्त्यैव शेषः । तथा संस्कारोऽप्यवहन्त्यादिः यागसाधनपुरोडाशादिनिर्वृत्तये चोदितानां व्रीह्यादीनां स्वरूपेणायोग्यत्वादवहतानां योग्यत्वादवहतानां योग्यत्वमापादयन् उत्पत्त्यैवाङ्गं भवतीति । न तु यागादावौत्पत्तिकं शेषत्वं दृश्यते । न च शब्देन चोद्यते । यागस्तावत् सर्वकारकैरनुष्ठीयते । न चान्यत्र व्याप्रियमाणो दृश्यते । फले इति चेत्, न । चिरनिर्वृत्ते यागे फलोत्पत्तिप्रतीतेः । ननु च भावार्थाधिकरणे करणत्वं यागस्योक्तम् । सत्यमुक्तं न तु साधितम् । स्वर्गकामाधिकरणाधीनसिद्धिना तेन नामपदकरणत्वमात्रनिराकरणात् । अत इदानीमसिद्धावस्थेनैव करणत्वेन व्यवहरति । फलमपि यागं प्रति साध्यमानत्वात् प्रधानम्, पुरुषं प्रति त्वस्य शेषभावो नैवोपात्तः, काम्यमानत्वेन सुतरां प्रधानत्वात् ।

पुरुष एव तु कामं द्रव्यत्वाद्यागे गुणत्वेन स्यात्। तस्माद् द्रव्यगुणसंस्कारेष्वेव शेषभाव इति।

**कर्माण्यपि जैमिनिः फलार्थत्वात्॥ ४॥**

**भाष्यम्**— जैमिनिस्तु खल्वाचार्यः कर्माण्यपि शेषभूतानि मन्यते स्म, न बादरिरिवावधारणामनुमेने। स हि ददर्श, न यागः कर्तव्यतया चोद्यते। फलकामस्य तु तत्साधनोपायत्वेनेति। एवं श्रुतोऽर्थः परिगृहीतो भविष्यति, अर्थवांश्चोपदेशः। एनमेवार्थं षष्ठेऽध्याये सूत्रैरेव साधयिष्यति। इह तु तत्सिद्धेनैव फलार्थत्वेन शेषभावं यागस्याऽऽपादयति स्म। तस्मादनवधारणा, द्रव्यगुणसंस्काराः शेषभूताः, यागोऽपि शेषभूतः फलं प्रतीति।

**वा**— गतार्थमेतत्।

**फलं च पुरुषार्थत्वात्॥ ५॥**

**भाष्यम्**— फलमपि पुरुषं प्रत्युपदिश्यते। यः स्वर्गो मे भवेदित्येवं कामयते तस्य यागः। न यः स्वर्गः स आत्मानं लभेतेति। कुतः? आत्मनेपदप्रयोगात्। कर्त्रभिप्राये एतद्भवति। क्रियाफलमनुभवेत् कथं पुरुष इति यागः प्रयुज्यते। तस्मात् फलं पुरुषार्थं यागात् श्रूयते, नाऽऽत्मनिर्वृत्त्यर्थम्। तस्माच्छेषभूतमिति।

**वा**— कामपदोपादानादेवं फलस्य पुरुषार्थत्वं गम्यते। न हि कश्चिद्बुद्धिपूर्वकार्येवं कामयते स्वर्ग आत्मानं लभतामिति। किं तर्हि? ममोपभोग्यः स्यादिति। पुनश्चाऽऽत्मनेपदनिर्देशात् कर्तुरेवोपभोग्यो नान्यस्य इति गम्यते। तेनोपभोक्तारं प्रति फलमपि शेषभूतम्।

**पुरुषश्च कर्मार्थत्वात्॥ ६॥**

**भाष्यम्**— पुरुषोऽप्यौदुम्बरीसंमानादिषु गुणभूतः श्रूयते। तस्मादनवधारणैषा द्रव्यगुणसंस्कारेषु शेषत्वं बादरिर्मेने इति। अथेदानीमत्र भगवान् वृत्तिकारः परिनिश्चिकाय। द्रव्यगुणसंस्कारेष्वेव नियतो यजिं प्रति शेषभावः, आपेक्षिक इतरेषाम्। यागस्य द्रव्यं प्रति प्रधानभावः, फलं प्रति गुणभावः। फलस्य यागं प्रति प्राधान्यम्, पुरुषं प्रति गुणता। पुरुषस्य फलं प्रति प्रधानता, औदुम्बरीसंमानादि प्रति गुणत्वम्। तस्मात् संमताऽवधारणा, द्रव्यगुणसंस्कारा यागं प्रति नियोगतो गुणभूता एवेति।

**वा**— पुरुषोऽपि यजेतेत्याख्यातेन गुणभूत आश्रितः। औदुम्बरीसंमानादौ विहित इति शेषः। एवं चतुःसूत्रेणाधिकरणेन समस्तः शेषत्वविषयः प्रतिपादितः। अत्र चोद्यते। यत्तावत् 'द्रव्यगुणसंस्कारेषु' इत्यत्र 'न तु यागफलपुरुषेषु शेषत्वम्' इत्यभिधायान्ते पुरुषस्य शेषित्वनिराकरणं तदसंबद्धम्। यत्तु 'प्रत्यक्षश्चास्य द्रव्यत्वात्कर्म प्रति गुणभावः' इति, तदपि व्याहतं पुनरुक्तं च, पूर्वमेवाभिहितत्वात्। न च यागफलाभ्यां शेषत्वनिराकरणवद्द्वयां सहास्यातुल्यप्रवृत्तित्वादुच्चारणं युक्तम्। तस्मादसदेतत्। यदप्यधिकरणसमाप्तावुक्तम् 'अथेदानीमत्र भगवान् वृत्तिकारः परिनिश्चिकाय' इति, तदपि प्रथममेव द्रव्यगुणसंस्काराणां निरपेक्षशेषत्वाभिधानात् कर्मफलपुरुषाणां च द्रव्यादीनि प्रति प्राधान्येऽवस्थिते सूत्रैरेव परस्परापेक्षशेषत्वप्रतिपादनादुक्तार्थमिति मन्दफलं दृश्यते। तेनैवं परिहर्तव्यम्। अस्याधिकरणस्य व्याख्यानद्वयं कृतम्। तत्र प्रथमं तावत् स्वमतेन 'शेषः परार्थत्वात्' इत्यभिहिते बादरिमतमुपकारलक्षणशेषत्वाभिप्रायेण द्रव्यगुणसंस्कारेष्वेव शेषत्वमित्येवं पूर्वपक्षीकृत्य जैमिनिमतमेव सिद्धान्तत्वेन वर्णितम्। तथा च पूर्वत्र दृष्टोपकारानुक्रमणमेव भाष्ये दृश्यते। तत्र च पुरुषस्य द्रव्यत्वात् प्रत्यक्षमेव क्रियानिर्वृत्तिहेतुत्वादिष्टमेव शेषत्वम्। यागफलयोस्तु न किञ्चित्प्रति प्रत्यक्षं साधनत्वमुपलभ्यते इत्यशेषत्वम्। यत्तु न यागफलपुरुषेष्विति त्रयाणामपि भाष्ये संकीर्तनम्, न तत् प्रकृतशेषपदानुषङ्गादेवं कल्पयितव्यं न तेषां शेषत्वमिति। किं तर्हि? यत्सिद्धान्तवादिसंमतं तन्न भवतीत्येवं संबन्धः। सर्वत्र हि पूर्वपक्षवादिना सिद्धान्तवादिमतं प्रतिषेद्धव्यं न यत्किञ्चित्। शेषत्वमेव हि असौ तदभिप्रेतमेवेति प्रतिषेधति, न स्वरूपमात्रेण। सिद्धान्तवादिनश्चैतन्मतं यदुत यागफलपुरुषाणां द्व्याकारत्वं किञ्चिदपेक्ष्य शेषत्वं किञ्चिदपेक्ष्य शेषित्वमिति, तत् बादरिमतानुसारी भाष्यकारः प्रतिषेधति, न तु यागफलपुरुषेषु सिद्धान्तवादिसंमतं द्व्याकारत्वम्। यागफलयोरेकान्तेनैव शेषित्वात् पुरुषस्य चात्यन्तशेषत्वात्। सर्वथा य एवैक आकारः प्रतिषिद्धस्तेनैव तद्द्व्याकारत्वनिराकरणं शक्यमिति त्रयाणामपि

एतावता तुल्यधर्मत्वात् सह निर्देशः । 'कर्माण्यपि जैमिनिः' इत्यादिभिरन्तर्णीतद्व्याकारमेव शेषत्वं प्रतिपादितम्, पारार्थ्यलक्षणशेषत्वाङ्गीकरणात् । नन्वेवं सति पुरुषस्य द्रव्यत्वात् पूर्वपक्षवादिनैवाभ्युपगम्य शेषत्वम्, शेषित्वे निराकृते सिद्धान्तवादिना तदेव प्रतिपादनीयमिति न वक्तव्यं 'पुरुषश्च कर्मार्थत्वात्' इति । नैष दोषः । तेन हि यागफलयोरशेषत्वात्तस्य शेषित्वं निराकृतम् । ततश्च यावदेव सूत्रद्वयेन यागफलयोः शेषत्वं प्रतिपादितं तावदेव यागोपसर्जनं फलं प्रति प्रधानत्वादुभौ प्रति केवलं शेषित्वमेव प्रसक्तमिति प्रलीने द्व्याकारत्वे पुनः शेषत्वप्रतिप्रसवार्थमुच्यते 'पुरुषश्च कर्मार्थत्वात्' इति । अथवा परेणोपकारद्वारेण शेषत्वमभ्युपगतम्, तदयुक्तं मन्यमानः फलयागयोरिवास्यापि पारार्थ्यकृतमेवेति प्रतिपादयिष्यन्नाह 'पुरुषश्च कर्मार्थत्वात्' न तदुपकारित्वादिति । वृत्तिकारमतेन सूत्रचतुष्टयमन्यथा व्याख्यास्यन्नाह 'अथात्र भगवान्' इति । नैवेदानीं बादरिमतं पूर्वपक्षः । किं तर्हि ? 'शेषः परार्थत्वात्' इति सामान्येन लक्षणमुक्त्वा तस्यैव विषयप्रदर्शनद्वारेणोत्तरः प्रपञ्चः क्रियते । तत्र पूर्वव्याख्यायां द्रव्यगुणसंस्कारेष्वेव शेषत्वमित्येवमवधारणं पूर्वपक्षे कृतम् । इदानीं तु सिद्धान्तरूपेणैव बादरिमतमप्रतिषेधेनानुमतं कृत्वा लक्षणप्रपञ्चाभ्यां शेषत्वं वर्णयिष्यते । द्रव्यगुणसंस्कारेषु शेषत्वमेवेत्यवधारयति । अतश्च द्रव्यगुणसंस्काराः शेषत्वेन नियताः शेषित्वं न प्रतिपद्यन्ते । शेषत्वं पुनरनियतत्वात् यागफलपुरुषेष्वप्यस्त्येवेति तत्प्रतिपादनार्थान्युत्तरसूत्राण्यवकल्पन्ते । तस्मादापेक्षिकशेषशेषित्वमात्रमेवैभिः सूत्रैः प्रतिपाद्यते । तथा च भाष्ये दर्शितम् । ततश्च द्विप्रकार एष शेषविषयो नैयमिक आपेक्षिकश्चेत्युक्तं भवति । ननु च द्रव्यगुणसंस्काराणामपि स्वाङ्गानि प्रति प्रधानत्वाद्यागं च प्रति गुणभावादापेक्षिकमेव शेषशेषित्वम् । तथा हि '**व्रीह्यादीनां प्रधानत्वमवघातादिषु स्थितम् । मुसलादीन्यपेक्ष्यैवमवघातप्रधानता ॥**' व्रीह्यादयो ह्यवघातादीन् प्रति प्रधानभूताः, पुरोडाशनिर्वृत्तिं प्रति गुणभूताः । तथा गुणः संख्यादिः संख्येयं प्रति परिच्छेदाच्छेषः । येषां तु गुणानां निष्पाद्या सा तान् प्रति शेषिणी । तथा संस्कारः संमार्गावघातादिरग्निव्रीह्यादेः शेषः, स्वसाधनानामिध्मसंनहनोलूखलमुसलादीनां शेषी । तस्मान्नावधारणं सिध्यतीति । तदुच्यते । '**द्रव्यादेर्यत्र शेषत्वं तत्र नैवास्ति शेषिता । फलयागनराणां तु द्व्याकारत्वं परस्परम् ॥**' द्रव्यगुणसंस्कारा हि फलवत्तं यागं प्रति नियोगतः शेषभूताः । सत्यपि स्वाङ्गानि प्रति शेषित्वे तं प्रति नास्तीत्यभिधीयते । अत एव भाष्यकारोऽपि 'नियोगतो यजिं प्रति शेषभावः' इत्याह, न ब्रवीति 'नियतः शेषभावः' इति । 'आपेक्षिक इतरेषाम्' इत्यत्रापि यजिं प्रतीत्यनुवर्तते । तथा ह्येकैकस्य द्वौ द्वौ प्रति गुणत्वं प्राधान्यं च दृश्यते । यागस्य तावद् द्रव्यात्मकं निर्वर्तकं पुरुषं प्रति प्राधान्यम्, फलं प्रति गुणता । यश्च फलं प्रति गुणः स शक्यते फलस्य स्वामिनं पुरुषमपि प्रति सुतरां गुण इति वक्तुम् । तथा यस्य पुरुषं प्रति प्राधान्यं तस्य तदुपसर्जनं फलं प्रति सुतरां तदित्यपि शक्यनिरूपणम् । एवं फलस्य यागं प्रति प्राधान्यात्तत्साधनं पुरुषमपि प्रति प्राधान्यम्, पुरुषं प्रति गुणत्वात्तदनुष्ठेये यागेऽपि गुणत्वम् । तथा पुरुषस्य फलं प्रति प्राधान्यात्तत्साधनं यागमपि प्रति प्रधानत्वम् । यागं च प्रति गुणभावात्तत्साध्ये फलेऽपि गुणत्वम् । नत्वेवं द्रव्यगुणसंस्कारेष्विति विशेषः । यत्त्विदं पारम्पर्येणापि शेषत्वं प्राधान्यं चोक्तम्, इदमर्थलक्षणं वस्तुमात्ररूपेणेत्यवगन्तव्यम् । न व्यवहारार्थम् । मा भूत् अङ्गत्वांशेन विकृतौ फलपुरुषयोरपि अतिदेशात्सिद्धान्तविरोधः । तस्मादेतावत्प्रकार एव वक्ष्यमाणप्रपञ्चशेषत्वविषयसंक्षेप इति सिद्धम् ।

शा-- '**बादरिर्द्रव्यसंस्कारगुणेष्वेवाह शेषताम् । श्रुत्यादेर्दर्शनाच्चैते कर्मणामुपकारकाः ॥**' जैमिनिस्तु उपकारलक्षणस्य शेषत्वस्य उक्तदोषत्वात् पारार्थ्यमेव शेषत्वं इत्यभिप्रेत्य कर्मणामपि पारार्थ्यात् शेषत्वमाह ।

वि-- 'किं द्रव्यगुणसंस्कारमात्रं शेषोऽथवा फलम् । पुमान् कर्म च पक्षौ द्वावाद्येयौ मतभेदतः ॥ शेषत्वमुपकारित्वं द्रव्यादावाह बादरिः । पारार्थ्यं शेषता तच्च सर्वेष्वस्तीति जैमिनिः ॥'

भाट्ट— यद्यपि पारार्थ्यमङ्गत्वं तथापि न यागादेर्लक्ष्यता, समानपदश्रुत्या यागादेरेव भावनाभाव्यत्वेन तस्य स्वर्गोद्देशेन विहितत्वाभावात्। विधेः प्रवृत्तिस्वरूपयोग्यत्वेनैव लिङर्थतया इष्टसाधनत्वानाक्षेपकत्वात्। आक्षेपकत्वेऽपि वा भ्रमप्रमासाधारण्येनेष्टसाधनत्वज्ञानस्यैव कारणतया इष्टसाधनत्वसिद्धौ प्रमाणाभावाच्च। स्वर्गकामपदस्य तु 'परस्त्रीकामः प्रायश्चित्तं कुर्यात्' इतिवत् कर्तृपरत्वादिनाऽप्युपपत्तेर्न भाव्यपरत्वावश्यकता। अतो न यागादेर्लक्ष्यत्वम्। वस्तुतस्तु उपकारकत्वमेव शेषत्वम्। तदर्थेऽप्यपकारके शेषत्वव्यवहाराभावात्। तच्च श्रुतिलिङ्गवाक्यरूपप्रमाणत्रयगम्यमेव। अत एव व्रीह्यादेर्द्रव्यस्य आरुण्यादेर्गुणस्य अवघातादेः संस्कारस्य चोपकारकत्वदर्शनाच्छेषत्वम्। प्रोक्षणादिसंस्कारस्य तु लिङ्गेनाङ्गत्वासंभवेऽपि श्रुतिवाक्याभ्यामङ्गत्वप्रतीतेस्तद्बलेनैव उपकारकत्वकल्पनया शेषत्वोपपत्तिरिति तेषामेव लक्ष्यत्वम्। इति प्राप्ते, नोपकारकत्वं शेषत्वम्, गोदोहनदध्यानयनादेरपि प्रणयनवाजिनयागाङ्गत्वापत्तेः। अपि तु पारार्थ्यमेव। अपकारकस्थले तु तदपकारस्यैवेष्टत्वेन उद्देश्यता, न तु तस्येति न तदर्थेऽप्यपकारके शेषत्वव्यवहारः। तदपि श्रुत्यादिषट्प्रमाणगम्यमिति वक्ष्यते। अतश्च वाक्याद्यागोऽपि फलाङ्गम्। तथा हि यद्यपि विधेः स्वरूपयोग्यतयैव प्रवृत्त्यनुकूलत्वं लिङाऽवगम्यते, तथापि कदा चिदपि प्रवृत्त्यभावे विधिवैयर्थ्यापत्तेः अवश्यं कदा चित् तथा भवितव्यम्। तथा चेष्टसाधनताज्ञानं विना तदसंभवात् तस्य च बाधकाभावे भ्रमत्वायोगात् इष्टसाधनत्वं तावद्यागस्य विधिबलादवगम्यते। इष्टविशेषसाधनत्वं च स्वर्गकामादिपदसमभिव्याहारादिति यागस्य स्वर्गाङ्गत्वसिद्धिः। एवं फलस्यापि भोक्तृपुरुषाङ्गत्वम्। भोक्ता च उत्सर्गतो विधिवशात् कामनावशात् आत्मनेपदवशाच्च कर्तैव। प्रमाणसत्त्वे त्वन्यः। अत्राङ्गत्वव्यवहारो भाक्त इति तु ध्येयम्। पुरुषः पुनः कर्तृत्वादिना यागाद्युद्देश्यककृतिकारकत्वात् वाक्यादेव तदङ्गमित्यविवादमेव।

मण्डन— 'कर्माद्यपि फलादिनः।' शेषः।

शंकर— 'निरस्तो बादरेः पक्षः।'

* बादर्यधिकरणं द्वेधा व्याख्यातम्। उपकारलक्षणशेषत्वाभिप्रायेण द्रव्यादिष्वेव शेषत्वमिति शेषत्वावधारणया बादरिमतं पूर्वपक्षं कृत्वा कर्मादिष्वपि शेषत्वमस्ति पारार्थ्यलक्षणत्वात् इति जैमिनिमतं सिद्धान्तितं प्रथमे व्याख्याने। द्वितीये तु बादरिमतमपि सिद्धान्तमङ्गीकृत्य द्रव्यादिषु शेषत्वमेवेति नियम्य कर्मादिषु शेषत्वं शेषित्वं चेति। तन्त्ररत्न. ४।१।२।२.

* वार्तिककृता तु बादर्यधिकरणादौ (अध्ययनस्य) संस्कारकर्मत्वमपि उक्तम्। कौ. ३।२।१।७.

* बाधः अग्निहोत्रार्थोद्धरणमन्त्रस्य दर्शार्थाग्न्युद्धरणे। भाट्ट. ९।४।७. * बाधः अजस्य धेनुवत्सऋषभशब्दोपदिष्टगोद्रव्येण। भा. १०।२।२९।६९. * बाधः अग्निगुप्रैषस्य सारस्वत्यां मेष्याम्। कृत्वाचिन्ता। ९।१।१७. 'मेष्यधिकरणम्' इत्यत्र द्रष्टव्यम्। * बाधः अन्वारम्भणीयायाः दीक्षणीयादिविकृतिषु ज्योतिष्टोमे। १०।१।२।४. मीको. पृ. ९७४ 'आरम्भणीयायाः ज्योतिष्टोमाद्यङ्ग०' इत्यत्र द्रष्टव्यम्। * बाधः अन्वारम्भणीयायाः राजसूयेऽनुमत्यादीष्टौ। १०।१।३।५. मीको. पृ. ९७७ 'आरम्भणीयायाः राजसूय०' इत्यत्र द्रष्टव्यम्। * बाधः अन्वाहार्यदक्षिणाया आग्रयणोपदिष्टवासोवत्सदक्षिणया। १०।३।६।३४. मीको. पृ. ८५४ 'आग्रयणे उपदिष्ट०' इत्यत्र द्रष्टव्यम्। * बाधः अभिघारणस्य अन्वाहार्यस्थानापन्नयोराग्रयणे वासोवत्सयोः। १०।३।१०।३८. मीको. पृ. ८५५ 'आग्रयणे वासोवत्सयोः०' इत्यत्र द्रष्टव्यम्। * बाधः अभिघारणस्य शतकृष्णलचरौ। १०।२।२।३–१३. * बाधः अभ्यूहस्य सौर्ये चरौ। १०।१।१८।५६. * बाधः अवघातस्य कृष्णलचरौ। १०।१।१।१–३ वर्णक २. मीको. पृ. ६७९ 'अवघातस्य कृष्णलचरौ०' इत्यत्र द्रष्टव्यम्। * बाधः अवज्वलनस्य सौर्ये चरौ। १०।१।१९।६०. 'सौर्ये चरौ अवज्वलनस्य बाधः' इत्यत्र द्रष्टव्यम्। * बाधः अविवृद्धस्तोमकक्रतूपदिष्टसामभिः प्राकृतसाम्नाम्। १०।४।१०।२०. * बाधः आतिदेशिककृत्स्नक्रतुदक्षिणायाः भूसंज्ञकैकाहे औपदेशिकधेनुदक्षिणया। १०।३।१४।५६–५८. मीको. पृ. २२७७ 'धेनुन्यायः' इत्यत्र द्रष्टव्यम्। * बाधः

**मण्डन**— 'गायत्रता नाक्षरलोपने स्यात् ।'

**शंकर**— 'गायत्री वर्णलोपान्न ।'

* **बृहस्पतिसवादिविकृतौ औपदेशिकैः ग्रहणैः** ( ग्रहैः ) आतिदेशिकानामैन्द्रवायवादिग्रहाणां समुच्चयः । १०।४।२।३–५. मीको. पृ. १६४४ 'ग्रहसमुच्चयन्यायः' इत्यत्र द्रष्टव्यम् ।

**बृहस्पतिसवन्यायः** । सौत्रामण्यादेः अग्निचयनाद्यङ्गता ॥

**समवाये चोदना संयोगस्यार्थवत्त्वात् । ४।३। १२।२९ ॥**

**भाष्यम्**— 'अग्निं चित्वा सौत्रामण्या यजेत' 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति । तत्र संदेहः किमङ्गप्रयोजनसंबन्ध एष उत कालार्थः संयोग इति । अङ्गप्रयोजनसंबन्ध इति ब्रूमः । एवं हि श्रुतिविनियुक्तोऽर्थः । इतरथा कालो लक्ष्येत । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा । तस्मादग्न्यङ्गं सौत्रामणी, वाजपेयाङ्गं बृहस्पतिसव इति ।

**टुप्**— यदि वाजपेयः पारार्थ्येनोच्चार्येत, त्रिप्रकारयाऽपि श्रुत्या हीयेत । तस्मादङ्गत्वायोच्चार्यमाणः स्वार्थः, तेनाङ्गाङ्गिसंबन्धः ।

**कालश्रुतौ काल इति चेत् । ३० ॥**

**भाष्यम्**— एवं चेत्पश्यसि, अङ्गप्रयोजनसंबन्ध इति । अथ कालविधानं कस्मान्न भवति । कालविधिरूपो हि शब्दः, चित्वा चयनेऽभिनिर्वृत्ते इति ।

**टुप्**— अङ्गाङ्गित्वे हि बृहस्पतिसवः कर्मान्तरम्, तस्यापूर्वान्तरम्, धर्मलक्षकत्वं च । तस्मादेवमादिदोषपरिहाराय निर्ज्ञातस्य बृहस्पतिसवस्य वाजपेयेन कालो लक्ष्यते । इष्ट्वेति च कालाभिधाने समर्थः शब्दः ।

**नासमवायात् प्रयोजनेन स्यात् । ३१ ॥**

**भाष्यम्**— नैतदेवम् । असमवायात् । शब्दप्रयोजनेन शब्दार्थेनेत्यर्थः । शब्दार्थश्रयनम् । तेनासमवायः स्यात् सौत्रामण्याः, वाजपेयेन च बृहस्पतिसवस्य । प्रकरणं च बाध्येत । अग्निप्रकरणे श्रूयमाणोऽग्नेर्धर्मो गम्यते यागः । वाजपेयप्रकरणे च वाजपेयस्य । इतरथा तयोः प्रकरणेऽन्यस्य धर्मः कालो गम्येत । तस्मादङ्गप्रयोजनसंबन्धः इति ।

**टुप्**— प्रकरणान्तरत्वादविपरिवृत्तिः । अविपरिवृत्तिश्चेत् कथं कालोऽस्य विधीयते ? यदि 'बृहस्पतिसवेन यजेत' इत्यनेन विपरिवृत्तिः, ततस्तत्रैव क्षीणत्वान्न कालविधिः । अथ कालविधिः, न विपरिवृत्तिः । तस्मात् प्रकरणान्तरे श्रुतं कर्मान्तरं विधीयते । तच्च वाजपेयाङ्गम् । तत्र प्रधानकालत्वादङ्गानां प्रधानकालत्वे प्राप्ते वचनात् वाजपेयेन साङ्गेन बृहस्पतिसववर्जितेनापूर्वं कृत्वा तत इदं कर्तव्यमिति ।

**शा**— '**उभयोर्वाजपेयस्य बृहस्पतिसवस्य च । प्रज्ञातफलयोर्नैव मिथोऽङ्गाङ्गित्वसंभवः ॥ न च कर्मान्तरं युक्तं लक्षणा हि तथा भवेत् । क्त्वाप्रत्ययेन कालस्तु श्रुत्यैवोक्तो न लक्षणा ॥**' इति प्राप्ते, ब्रूमः । '**वाजपेयश्रुतेरेव स्यादत्यन्तपरार्थता । तत्प्रक्रिया च बाध्येत, न च दूरगतं प्रति ॥ कालः शक्य उपादातुम्, काले कर्म हि चोद्यते । काले च चोद्यमानं सत् कर्माविपरिवर्तनात् ॥ प्रसिद्धात् कर्मणो भिन्नमनिर्ज्ञातप्रयोजनम् । वाजपेयाङ्गभावेन वाक्येनैव विधीयते ॥**'

**सोम**— यथा पूर्वत्र पश्वादिफलकत्वमात्रावेदकशब्दस्वारस्यात् अनियमः एवमिह क्त्वास्वारस्यात् कालविधिः इति प्रत्यवस्थानात् संगतिः । **सूत्रार्थस्तु**— 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यादिषु समवाये अङ्गाङ्गिभावलक्षणे चोदना स्यात् वाजपेयादिसंयोगस्यार्थवत्त्वात् ।

**वि**— 'इष्ट्वा तु वाजपेयेन बृहस्पतिसवं यजेत् । कालं वा बोधयेद् वाक्यमुताङ्गत्वस्य बोधकम् ॥, क्त्वाश्रुत्या भाति कालोऽत्र, मैवमङ्गत्वबोधनम् । श्रुतेर्मुख्यं प्रक्रिया च तथा सत्यनुगृह्यते ॥' 'अग्निं चित्वा' इत्यत्राप्येवं योजनीयम् । १३.

**भाट्ट**— 'अग्निं चित्वा सौत्रामण्या यजेत' 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यग्निवाजपेयप्रकरणे श्रुतम् । तत्र प्रकरणान्तरन्यायेन (२।३।११) प्रसिद्धसौत्रामणिबृहस्पतिसवापेक्षया कर्मान्तरमेव तत्तद्धर्मकं

अग्निवाजपेयपूर्वकालकत्वविशिष्टं विधीयते। तस्य च फलापेक्षायां प्रकरणादिना अग्निवाजपेयाङ्गत्वं अविवादमेव इति तत्तत्प्रयुक्तत्वं तत्तत्कर्मान्तरस्य। समाप्तेऽपि बृहस्पतिसवाद्यतिरिक्ताङ्गविशिष्टवाजपेयादिप्रयोगे तदुत्तराङ्गं इदं फलानुकूलयोग्यतायाः परमापूर्वनिष्ठायाः जननार्थं न विरुध्यते।

**मण्डन**— 'सौत्रामणी चितेरङ्गम्।'

**शंकर**— 'बृहस्पतिसवाङ्गता ( वाजपेये )।'

* न च अत्र ('दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यत्र) **बृहस्पतिसवन्यायेन** सोमधर्मककर्मफलकं कर्मान्तरं विधीयते इति शक्यं वक्तुम्, सोमशब्दस्य बृहस्पतिसवशब्दवत् नामत्वाभावेन धर्मातिदेशकत्वाभावात्। **वि.** ४।३।१६. * सत्राणां फलवत्त्वात् अफलोऽयं पृष्ठशमनीयः बृहस्पतिसवन्यायेन सत्राङ्गम्, (इति पूर्वपक्षे)। **भाट्ट.** १०।२।११.

* **बृहस्पतिसववत्।** बृहस्पतिसवस्य वाजपेयाङ्गत्वेऽपि स्वकाले वसन्ते कर्तव्यबृहस्पतिसवात् पूर्वमेव शरदि वाजपेयानुष्ठानमात्रेण तत्साध्यं परमापूर्वमुत्पद्यते, उत्पन्नं च परमापूर्वं बृहस्पतिसवेन पश्चात् फलमुखीक्रियते यथा तथा आधानमात्रादेव अग्नयो निष्पद्यन्ते पवमानहविर्भिस्तु तेषां फलवत्त्वसंपादनमात्रं इति पूर्वपक्षः। **सोम.** ५।३।९. * न च स्थापकत्वम्, **बृहस्पतिसववत्** पवमानेष्टीनां आधानप्रयोगबहिर्भावेऽपि तद्वत् आधानकरणकभावनाबहिर्भावस्य अश्रुतत्वेन स्थापकत्वकल्पनानुपपत्तेः ( बृहस्पतिसवः वाजपेयप्रयोगबहिर्भूतः, वाजपेयकरणकभावनाबहिर्भावस्य श्रुतत्वात् च बृहस्पतिसवस्य स्थापकत्वकल्पनोपपत्तिः 'तद्वत् न' इति व्यतिरेकोपमान्ते )। **भाट्ट.** ५।३।९.

* **बृहस्पतिसववर्जितेन** साङ्गेन अपूर्वं कृत्वा ततः इदं (बृहस्पतिसवरूपं कर्म) कर्तव्यम्। **टुप्.** ४।३।१२। ३१.

* **बैल्वः** यूपः अग्नीषोमीये पशौ ब्रह्मवर्चसकामेन कर्तव्यः। **भा.** ३।६।३।१०, * 'बैल्वं अन्नाद्यकामस्य यूपं कुर्यात्' इति फलविधिः। ४।३।१।१-४.

* **बौद्धाः** ज्ञानस्य प्रामाण्यं परतः अप्रामाण्यं तु स्वत इति वदन्ति। **वैद्यनाथः.** १।१।२।२ पृ. १४.
* **बौद्धैः** ज्ञानसंतानस्य आत्मत्वाभ्युपगमात् तस्य च अद्रव्यत्वेन अपरिमाणपक्षोऽपि संभवति। **सु.** पृ. ६१७.
* **बौद्धस्य** दर्शने समवायिकारणं नाम नास्ति, न तस्य क्षणिकेषु स्कन्धेषु विज्ञानरूपवेदनासंज्ञासंस्कारसंज्ञकेषु भुक्तपूर्वा बुद्धिरुत्पद्यते। पूर्वभोक्तुः अधुनातनभोक्तुश्च अन्यत्वात्। **ऋजु.** पृ. १६४. **बौद्धानां** सर्वं जगदनित्यमेव सर्वात्मना पृथग्भूतं च इति अनित्यत्वपृथक्त्वैकान्तप्रतिपादनम्। **सु.** पृ. १३१.

* **बौद्धाधिकरणम्** ( २।२।५।२८-३२ ब्रसू. )। उपवासवाची योषधशब्दः इति बौद्धाधिकरणे उक्तम्। **कल्पतरु.** २।४।१।१ ब्रसू.

* **बौद्धादिभिः** परमाण्वाद्यात्मककारणाभ्युपगमात् शरीरसंतानाद्यात्मककल्पनाच्च तद्व्यतिरिक्तकारणादिनिषेधः क्रियते। परमाणुशरीरादिष्वेव प्रधानात्मादिशब्दवृत्तिरिति। **वा.** १।४।१२।२३ पृ. ३६०.

* **बौद्धादिग्रन्थात्** अवगम्य अनुष्ठितस्यापि वेदार्थस्य श्रेयःसाधनत्वाभावः। वेदादेव अवगम्य अनुष्ठितं कर्म श्रेयः साधयति इति नियमः। **सु.** पृ. १८३.

* **बौद्धादितर्काणामपि** पूर्वपक्षप्रतिपादनार्थत्वेन उपयोगः। **सु.** पृ. १३१.

* **बौद्धादिवचसां** अप्रामाण्यम्। **वा.** १।३।३। ५-७ पृ. २०१.

* **बौद्धभाषितं** विहाराराममण्डलकरणवैराग्यध्यानाभ्यासाहिंसासत्यवचनदमदानदयादि तस्य धर्मं प्रति अप्रमाणता। **वा.** १।३।३।७ पृ. २०१.

* **बौद्धमते** ब्राह्मणं ( वेदः ) अप्रमाणमेव। **वैद्यनाथः.** १।१।५।५.

* **बौद्धसिद्धान्तः** ( कश्चित् ) स्वच्छं चिन्मात्रं नैसर्गिकं ज्ञानरूपम्। तत्तु वासनोपप्लवात् अविद्यमाननीलाद्याकारं प्रकाशते इति। ( योगाचाराणामयम् )। **भा.** १।१।५।५ वृत्तिग्रन्थः.

* **बौद्धस्मृतिः** अहिंसाविषये प्रमाणम्, अहिंसायाः श्रुतिविहितत्वात् इति पूर्वपक्षः। स्वरूपेण धर्मस्यापि

बौद्धोक्तत्वेन अधर्म एव । ततो न बौद्धस्मृतिः अहिंसायामपि प्रमाणम् । यथा श्वदृतौ गोपयः । वि. वार्तिकमतम् १।३।४ वर्णकं २.

* बौधायनकल्पसूत्रं पौरुषेयमेव वेदमूलत्वात्तु प्रमाणम् । वि. १।३।७.

* बौधायनीयं आपस्तम्बीयं च धर्मगृह्यसूत्रं तैत्तिरीयैरेव प्रतिपन्नम् । वा. १।३।७।१५.

* ब्रह्मा आहवनीयस्य दक्षिणतोऽवस्थितः कृताकृतप्रत्यवेक्षणेन अनुज्ञावचनेन च अनुगृह्णाति । भा. ११।२।१०।४५. * ब्रह्मा ऋत्विक् आधाने उद्गात्रा सह विकल्प्यते कल्पसूत्राद्यनुसारेण । तदापि गानस्यैव विकल्पः । भाट्ट. १०।८।६. * ब्रह्मा ऋत्विक् । तस्य पुरुषास्त्रयः ब्राह्मणाच्छंसी, अग्नीत्, पोता चेति । वि. ३।७।१७, * ब्रह्मा ऋत्विक । प्रथमगणस्थोऽयम्, पूर्णां दक्षिणां द्वादश गाः लभते । ३।७।१७. * ब्रह्मा प्रवृत्ते कर्मणि म्रियते प्रणीताप्रणयनकाले । अथवा अमावास्यायां वेदिकरणं पूर्वेद्युः वचनेनोपदिष्टम् । तस्मिन्नपकृष्यमाणे परिग्रहोऽप्यपकृष्टः प्रसवोऽपि ब्रह्मवरणमपि । पौर्णमास्यां प्रणयनकाले ब्रह्मवरणम्, अमावास्यायां पूर्वेद्युः । भा. १२।१।१८।३६, ३९. * ब्रह्मा वेदत्रयोक्तस्य प्रत्यवेक्षणं करोति । वि. ३।७।१७. * ब्रह्मा सारस्वतं ग्रहं आदत्ते सौत्रामण्याम् । 'उत्तरेऽग्नौ पयोग्रहान् जुहुति, दक्षिणेऽग्नौ सुराग्रहान्' । भा. ३।५।३।१४. * 'वासिष्ठो ब्रह्मा' इति वाक्यं न वासिष्ठस्य ब्रह्माधिकारत्वबोधकम् । 'रश्मिरसि क्षयाय त्वा' इत्यादयो मन्त्राः स्तोमभागाः । तानधीयानः स्वयमवासिष्ठोऽपि ब्रह्मतामर्हति इति स्तोमभागप्रशंसारूपे अर्थवादे 'वासिष्ठो ब्रह्मा' इति पठितत्वात् । वि. ६।६।४,* ब्रह्माणं अध्वर्युर्दीक्षयति द्वादशाहे दीक्षायाम् ।३।७।१७. * 'ब्रह्माणं वृणीते' । भा. ३।७।९। २४. * ब्रह्मणा युगपदुपहूतानां सर्वभक्षाणां स्वस्वकाले भक्षणं शतकृष्णलचरौ । १०।२।६।२१. मीको. पृ. १४८१ 'कृष्णलचरौ युगपदुपहूताः०' इत्यत्र द्रष्टव्यम् । * ब्रह्मणे एव श्यावाश्वो दक्षिणा उपहव्याख्ये एकाहे । इतरेभ्य ऋत्विग्भ्यस्तु न किमपि शास्त्रीयं देयम्, लौकिकेन तु दानेन आनतिः । वि. १०।३।१८. * ब्रह्मणे परिहारः सर्वभक्षाणां पुरुषान्तरेभ्योऽपनीय शतकृष्णलचरौ । १०।२।५।१९–२०. मीको. पृ. १४८२ 'कृष्णलचरौ सर्वे शेषभक्षाः०' इत्यत्र द्रष्टव्यम् । * ब्रह्मणे ये सकृद्दत्ताः कृष्णलानां इडादिभागाः, ते तेन सकृदेव न भक्षणीयाः, किन्तु स्वस्वकाले । १०।२।६। २१. * ब्रह्मणोऽपि जगत्सृष्टौ कालादृष्टादिसापेक्षत्वम्, वैषम्यनैर्घृण्येन सापेक्षत्वात् इति न्यायात् । पराक्रमः. ५३।२. * ब्रह्मणः ऋत्विजः अध्वर्यूद्गातृहोतॄणां प्रयोगेषु प्रसक्तं वैकल्यं समाधातुं वेदत्रयाध्ययनमपेक्षितम् । वि. ६।३।१४. * ब्रह्मणः ( ब्राह्मणस्य ) गृहे बार्हस्पत्यश्चरुः राजसूये । भा. ११।२।३।१३, * ब्रह्मणः तन्त्रं चातुर्मास्यगतवरुणप्रघासेषु विहारद्वये । ११।२।१०। ४४–४८.

* ब्रह्मादिष्वेव षोडशसु सप्तदशसु वा ऋत्विक्शब्दस्य नियमः । ३।७।१७.

* ब्रह्मभक्षाणां युगपत्परिहरणं शतकृष्णलचरौ । १०।२।४।१८. मीको. पृ. १४७९ 'कृष्णलचरौ ब्रह्मभक्षाः' इत्यत्र द्रष्टव्यम् । * ब्रह्मभक्षे चतुर्धाकरणादीनामभावः । १०।२।७।२२.

* ब्रह्मभागो न दक्षिणा, दक्षिणावयवो हि सः । भा. १०।३।१९।७१.

* ब्रह्मयजमानौ दक्षिणत आसाते कर्मणः क्रियमाणस्य । भा. १।४।१२।२३–१.

* ब्रह्मवरणं ज्योतिष्टोमे ऐष्टिकेषु कर्मसु दार्शिकं चोदकप्राप्तं सौमिकेन प्रसङ्गसिद्धमेव । भा. १२।१।१८। ३६–३९, * ब्रह्मवरणं दृष्टार्थम्, तत् सौमिकेनैव कृतत्वात् न कर्तव्यम् । १२।१।१८।४१. * ब्रह्मवरणम् । पौर्णमास्यां प्रणीताप्रणयनात् पूर्वं ब्रह्मणः कर्तव्याभावात् अप्रवृत्तावपि अमावास्यायां पूर्वेद्युर्वेदिकरणाङ्गभूतानुज्ञादानाय अस्त्येव प्रणीताप्रणयनात्पूर्वं ब्रह्मणः प्रवृत्तिः । इदं च पूर्वपरिग्रहेऽपि ब्रह्मानुज्ञा अस्ति इति पक्षे । उत्तरपरिग्रहमात्रे ब्रह्मानुज्ञापक्षे पूर्वेद्युः प्रसवदानाय ब्रह्मणः प्रवृत्त्यसंभवात् इति ध्येयम् । न च परेद्युः हविरासादनोत्तरकाले आम्नाताया वेदेः पूर्वेद्युरपकर्षे सति

तदन्तापकर्षन्यायात् तत्पूर्वस्य ब्रह्मवरणस्यापि अपकर्षा- वश्यम्भावात् अमावास्यायां अप्रवृत्तस्यैव ब्रह्मणो वरणं इति वाच्यम् । पञ्चमे 'तथाऽपूर्वम्' (५।१।१६। २९) इत्यत्र वेद्यपकर्षे तदन्तापकर्षो नास्ति, किन्तु श्रुतमात्रापकर्षः इति व्यवस्थापितत्वात् । सत्यम्, न तदन्तापकर्षः तथापि साङ्गस्य वेदिकरणस्य अपकर्षात् ब्रह्मवरणस्य अपकर्षप्रयोगाङ्गकर्तृसंस्कारतया ब्रह्मकर्तृक- सर्वप्रयोगाङ्गत्वात् ब्रह्मकर्तृकप्रसवस्यापि अङ्गत्वात् इति प्रसववत् प्रसवाङ्गभूतब्रह्मवरणस्यापि अपकर्षः । सोम. १२।१।१८. * ब्रह्मवरणं सोमाङ्गेष्टिपश्वादिषु कर्तव्यं न वेति विचारः 'होतृवरणं दार्शिकं ज्योतिष्टोमे' इत्यधिकरणे १२।१।१८।३६-३९ सूत्रेषु द्रष्टव्यः ।

* ब्रह्मवादिनः नाम ब्राह्मणा एव, ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारित्वनिमित्तत्वात् । यस्यैव च प्रवचनं स एव तच्छीलः तद्धर्मः तत्साधुकारी वा भवति, न क्षत्रियवैश्यौ । वा. १।३।३।७ पृ. २१०.

* ब्रह्मविदः पुरुषं जगत्कारणं मन्यन्ते । सु. पृ. १३१. * ब्रह्मविदां एष निश्चयः, यदुपलभ्यते तदसत्, यन्नोपलभ्यते तत् तत्त्वमिति । नमस्तेभ्यः । विदुषि नोत्तरं वाच्यमिति । बृहती. पृ. १७६.

* 'ब्रह्महा अश्वमेधेन यजेत' इति यो लोभात् पतितयाजनमङ्गीकृत्य याजयिष्यति तदपेक्षं विधानम्, न तु तद्विधानान्यथानुपपत्त्या याजनं इतरेषामपि विहितमिति कल्प्यते । वा. ३।४।१०।२८ . * ब्रह्महा द्वादशाब्दानि, 'पूर्वयोर्वर्णयोर्वेदाध्यायिनं हत्वा' अत्र पुरुषार्थः उपसंहारविधिः । बाल. पृ. १७.

* ब्रह्मचर्यम् । अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यचरणं 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यनेन विरुद्धम् । (भा. १।३।२।३ पृ. १६९) । अपुंस्त्वं प्रच्छादय- न्तश्च (के चित्) अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरितवन्तः । (भा. १।३।२।४ पृ. १८६) । अष्टा- चत्वारिंशद्वर्षं वेदब्रह्मचर्याचरणस्यापि स्मृतावेव पक्षान्तर- विकल्पोपनिबन्धनादाश्रमान्तरविषयत्वसंभवाद्वा विरोधा- भावः । तथाहि '**वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् । (मनु. ३।२) सामर्थ्याश्रमयोग्यत्व- मङ्गीकृत्यैतदुच्यते ॥**' (वा. पृ. १९२) । सुधा. (पृ. १६८)---योऽल्पेन कालेन बहून् वेदानध्येतुं समर्थः, तं प्रति बहुवेदपक्षः । असमर्थं प्रति अल्पवेदपक्षः इति सामर्थ्यमङ्गीकृत्य, गार्हस्थ्याश्रमायोग्यं प्रति बहुवेदपक्षः तद्योग्यं प्रति अल्पवेदपक्षः इति आश्रमयोग्यत्वमङ्गीकृत्य अपेक्ष्य एतत् मनुना उच्यते इत्यर्थः । 'षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम् । तदर्धिकं पादिकं वा ग्रहणा- न्तिकमेव वा ॥' (३।१) इति मनुनैवोक्तत्वात् । ग्रहणा- न्तिकपक्षे सामर्थ्यापेक्षा । वर्षसंख्यापक्षे तु आश्रमयोग्य- त्वापेक्षा इति विवेकोऽवसीयते ॥ वा. (पृ. १९२)- गौतमेनापि 'द्वादशवर्षाण्येकवेदब्रह्मचर्यं चरेत्' इति प्रथम- कल्पं आशुगार्हस्थ्यप्रतिपत्त्यर्थमुक्त्वा द्वितीयकल्पे 'द्वादश प्रतिवेदं वा सर्वेषु' इति अष्टाचत्वारिंशत्परिग्रहः कृतः । '**तत्रैवं शक्यते वक्तुं येऽन्धपङ्ग्वादयो नराः । गृहस्थत्वं न शक्ष्यन्ति कर्तुम्, तेषामयं विधिः ॥ नैष्ठिकब्रह्मचर्यं वा परिव्राजकताऽपि वा । तैरवश्यं ग्रहीतव्या तेनादावेतदुच्यते ॥ उपकुर्वाणकेनैव याप्यः कालो बहुस्ततः । संप्राप्य ज्ञानभूयस्त्वं पवित्रैः क्षीणकल्मषैः ॥ सर्वाश्रमातिरिक्तेन स्वाध्या- येनैव शोधितः । स्तोकैरप्याश्रमाचारैर्गतिमिष्टां गमिष्यति ॥**'

द्वैपायनादयश्चाहुः । '**परिनिष्ठितकार्यस्तु स्वाध्याये- नैव हि द्विजः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥**' (मैत्रः हिंसारहितः) । यानि च प्रति- दिनप्रयुज्यमानऋक्सामयजुर्ब्राह्मणकल्पव्याख्यानादिब्रह्मयज्ञ- निमित्तानि फलानि क्रत्वधिकृतपुरुषेभ्यः अन्यानर्थक्य- प्रसङ्गात् व्यावृत्तानि जपध्यानमात्राधिकृतब्रह्मचारिपरि- व्राजकविषयत्वेन अवतिष्ठन्ते तान्यपि स्वाध्यायविज्ञान- भूयस्त्वेन भूयिष्ठानि भविष्यन्ति इति प्रतिवेदब्रह्मचर्योप- देशः । यो वा कश्चित् मेधावितया शीघ्रमेव वेदचतु- ष्टयमप्यधीत्य यथोपपत्तिकालं तदर्थज्ञानाभियोगं अपरि- त्यजन् 'ग्रहणान्तं वा' इत्येतत्पक्षाश्रयणेन गृहस्थो भवेत् तं प्रति द्वादशाष्टाचत्वारिंशद्वर्षपक्षौ अनेनैव स्मरणेन पूर्व- मङ्गीकृतौ इति नातीव श्रुतिविरुद्धत्वेन उदाहर्तव्यौ ॥

* **ब्रह्मचर्यकाले** एवावश्यं समस्तो वेदोऽध्येतव्यः । यदि तु कश्चिदशक्तो नाधीते सकलं अग्निहोत्रदर्शपूर्णमासमात्रं कथञ्चिदधिगच्छति न तस्य तत्रानधिकारः । **वा.** ३।८।८।१८.

* **ब्रह्मचारिणा** मांसं न भक्षयितव्यमित्युक्ते दर्विगतमपि लेपं वर्जयन्ति । अदृष्टार्थं ब्रह्मचारिणो मांसाभक्षणम् । तत्र यावदपि मांसरसमात्रं विदितं भवति तस्यापि दोषः न श्लेष्मप्रकोपादि किञ्चिद् दृष्टमपेक्षते । **भा.** ९।४।१।४०. * **ब्रह्मचारिणः** अवकीर्णित्वे 'स गर्दभं पशुमालभेत' इति विहितो गर्दभः पशुः, स च लौकिकेऽग्नौ । **वि.** ६।८।४; * ब्रह्मचारिणो नाधानाधिकारः । ६।८।४ . * ब्रह्मचारिणः विधवानियोगः अनुचितः । **सु.** पृ. १८५ . * **ब्रह्मचारिणां** मधु मांसं च प्रतिषिध्यते 'मधु मांसं च वर्जयेत्' इति । **भा.** १०।६।१२।३२ . * ब्रह्मचारिणां मध्वशननिषेधः पुमर्थः । **वि.** १०।६।१२.

* **ब्रह्मयज्ञे** एव ऋग्यजुःसामाध्ययनविधिः फलविशेषार्थः । इयं फलतो वाचनिकी व्यवस्था । **बाल.** पृ. १९.

* **ब्रह्मवर्चसकामः** । 'त्रिवृदग्निष्टुदग्निष्टोमः तस्य वायव्यासु एकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामः यजेत' । **भा.** २।२।१२।२७, * 'अग्नीषोमीयमेकादशकपालं निर्वपेत् श्यामाकं ब्रह्मवर्चसकामः' । १०।७।१७। ५८, * 'सोमारौद्रं घृते चरुं निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः' । १०।७।१९।६४ , * **ब्रह्मवर्चसकामेन** अग्नीषोमीये पशौ बैल्वो यूपः कर्तव्यः । ३।६। ३।१०. * **ब्रह्मवर्चसकामैः** व्रीहिभिरेव यागः सोमारौद्रयागे । १०।७।१९।६४–७१ . * **ब्रह्मवर्चसकामस्य** आधाने पवमानहविषां त्रयाणां सह प्रयोगः 'यो ब्रह्मवर्चसकामः स्यात् तस्य सर्वाणि हवींषि निरुप्याणि' इति । **भा.** ११।४।४।११–१४., * ब्रह्मवर्चसकामस्य कांस्येन प्रणयेत् । ४।३।२।४. * ब्रह्मवर्चसकामस्य गायत्रचिते सांवत्सरिके चयने गायत्राण्येव आग्नेयसूक्तानि ग्राह्याणि नेतरच्छन्दस्कानि । **संकर्ष.** २।१।३७. * ब्रह्मवर्चसकामस्य चतुर्विंशतिमनुब्रूयात् सामिधेनीः दर्शपूर्णमासयोः । **भा.** १०।५।८।२७. * ब्रह्मवर्चसकामस्य त्रिवृदतिरात्रः कातीये । **बाल.** पृ. ३४. * ब्रह्मवर्चसकामस्य सर्वाणि हवींषि सह निरुप्याणि । तत्र निर्वापे सहचोदिते वचनात् तन्त्रं भवति । **टुप्.** ११।४।४।१४. * 'पालाशं **ब्रह्मवर्चसकामस्य**' ( यूपं कुर्यात्) इति फलविधिः । **भा.** ४।३। ११–४, * 'वृक्षाग्राज्ज्वलतः ब्रह्मवर्चसकामस्याऽऽहृत्यावदध्यात्' चयने उख्यमग्निम् । १२।४।७।१७.

* **ब्रह्मसाम** अभीवर्तं अविशेषेणाम्नातम् । **भा.** ६।१।७।३१. * ब्रह्मसाम उक्थ्यस्तोत्राणां त्रयाणां मध्यमम् । **सोम.** २।२।१३. * ब्रह्मसाम ज्योतिष्टोमे उक्थ्यानां सौभरं विहितम् । **वा.** २।२।१३।२८. * ब्रह्मसाम बार्हद्गिरं नाम ब्राह्मणस्य कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य इति ज्योतिष्टोमे नैमित्तिकमेव न नित्यम् । नित्यं तु 'अभीवर्तो ब्रह्मसाम' । ४।३।२।४. * ब्रह्मसाम वैराजम् । विश्वजिति सर्वपृष्ठे । **भा.** १०।६।५।१४. * '**ब्रह्मसाम्नि** आलभते' ( वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते इदम् ) इति कर्मान्तरं इति पूर्वपक्षः । **टुप्.** ११।२।१२।५१.

* **ब्रह्मसामकाले** प्राजापत्यानां पशूनां आलम्भोत्कर्षमात्रविधानम् । ११।२।१२।५१–५३. **मीको.** पृ. २८४५ 'प्राजापत्यानां पशूनाम्०' इत्यत्र द्रष्टव्यम् ।

* **ब्रह्मसामगानं** गवामयने द्वयोर्द्वयोर्ऋचोः प्रग्रथनेन । ९।२।६।२५–२८ वर्णकं ४. **मीको.** पृ. १५४७ 'गवामयने द्वयोर्द्वयोर्ऋचोः०' इत्यत्र द्रष्टव्यम् ।

* **ब्रह्मसूत्रस्य** 'नित्ययज्ञोपवीती' इति स्मृत्युक्तस्य पुरुषधर्मत्वम् । **सु.** पृ. १३५५.

* **ब्रह्महत्या** । 'ब्राह्मणस्त्रीवधे को वा ब्रह्महत्यां निषेधति । प्रायश्चित्तान्तरं त्वस्याः स्त्रीत्वमात्रनिबन्धनम् ॥' न वाचनिकप्रायश्चित्ताल्पत्वेन ब्राह्मणीवधप्रतिषेध एव नास्तीत्याशङ्कितव्यम् । **वा.** १।३।३।७ पृ. २१३.

* **ब्रह्महत्यातिरिक्तमहापातककारिणां** अपरिहरणं उदीच्यानां दाक्षिणात्यानां च अनाचारः । **वा.** १।३। ३।७ पृ. २०४.

* 'ब्रह्महत्याऽश्वमेधाभ्यां न परं पुण्यपापयोः । आभूतसंप्लवान्तं च फलमिष्टं तयोर्द्विज ॥' इति स्मरणम् । सु. पृ. ६६.

* ब्रह्महत्यादीनां अनवगतनरकफलानां प्रतिषेधोत्तरकालभाविना वैदिकत्वेनैव नरकप्राप्तिसमर्था अपूर्वकल्पनोपपत्तिः । वा. २।१।२।५ पृ. ३९७.

* ब्राह्मणं विधायकम् । भा. १०।८।१०।२०, * 'ब्राह्मणम्' इति शब्दः विधीनां अर्थवादानां च समानः । ७।१।३।१८, * तद्धि तेषां ब्राह्मणं येन विधीयन्ते । ७।१।३।१७, * मन्त्राश्च ब्राह्मणं च वेदः । २।१।८।३३. * "विधायकं सदप्यर्थं ब्राह्मणं स्मारयिष्यति । 'मन्त्रतस्तु विरोधे स्यात्' (५।१।९।१६) इत्यत्रैतद्वदिष्यते ॥" वा. २।१।६।३०. * 'ब्राह्मणः न हन्तव्यः' इति । तत्र अर्थात् हननं प्राप्तं कुर्यां वा न वेति । यदा करोति तदा प्रतिषिध्यते न हन्तव्य इति । तत्र अर्थप्राप्तस्य शास्त्रेण नित्यबाधः । टुप्. १०।८।१।१. * ब्राह्मणः परिव्राट् वानप्रस्थः इति धर्मभेदात् संज्ञाव्यवस्था । भा. ८।२।५।२४. * 'ब्राह्मणो बृहस्पतिसवेन यजेत' इत्यत्र यथा पुरुषविशेषविधिः तथा 'स्वर्गकामो यजेत' इत्यत्र पुरुषविशेषविधिर्न संभवति । सोम. ६।१।१. * ब्राह्मणः स्तूयते 'आग्नेयो वै ब्राह्मणः' इत्यत्र आग्नेयत्वेन । मुखजन्यत्वमुभयोर्धर्मः । तथा हि 'प्रजापतिरकामयत प्रजाः सृजेयेति, स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवताऽन्वसृज्यत, गायत्री छन्दः, रथंतरं साम, ब्राह्मणो मनुष्याणाम्, अजः पशूनाम्, तस्मात्ते मुख्याः, मुखतो ह्यसृज्यन्त' इति । वि. १।४।१४. * ब्राह्मणः । स्वभार्यायां ब्राह्मण्यां ब्राह्मणादुत्पन्नत्वलक्षणमेव ब्राह्मण्यम् । तच्च मात्रेकसमधिगम्यम्, इतरस्य तु दुर्विज्ञानम् । कु. १।२।१।१३. * 'अष्टसु प्रक्रमेषु ब्राह्मणोऽग्निमादधीत' । भा. ६।१।७।२८, * 'वसन्ते ब्राह्मणोऽग्नीनादधीत' । ६।१।७।२६, * 'ब्राह्मणौ आनय' इति प्रयोगः पुंसि सद्वितीये दृष्टः तथा वसानौ आदधीयातां इति पुमान् सद्वितीयः स्यात् (इदं पूर्वपक्षे) । ६।१।५।२२. * 'ब्राह्मणा आगताः परिव्राजका अप्यागताः' इति न्यायः ब्राह्मणपरिव्राजकन्यायः एवायम् । 'सर्वेषां शास्त्राणां सर्वेषां प्रउगाणां' इति ब्राह्मणम् । अत्र सायणः — 'ब्राह्मणा आगताः ० इति न्यायेन वैशिष्ट्यविवक्षायां प्रउगाणां पृथक् निर्देशः' । इति । ऐआ. १।५।१४. * ब्राह्मणा एव दर्शपूर्णमासयोः अन्वाहार्यदक्षिणायां दृश्यन्ते 'यद्ब्राह्मणा यदन्वाहार्यमाहरन्ति' इति । भा. १२।४।१५।४७, * ब्राह्मणा एव दर्शपूर्णमासयोः पुरोडाशस्य चतुर्धाकरणे निर्दिष्टाः 'ब्राह्मणानामिदं हविः सौम्यानाम्' इति । १२।४।१५।४६. * ब्राह्मणाः बहुश्रुताः । 'न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः' । सु. पृ. ११२१. * ब्राह्मणाः । 'याजनाध्यापनप्रतिग्रहाः ब्राह्मणस्यैव वृत्त्युपायाः' इति स्मृत्यालोचनया अन्यजातीयानां आर्त्विज्यनिषेधावगतिः । 'तस्माद्वाऽप्येतर्हि यज्ञः सयुग् भूत्वा देवेभ्यो हव्यं वहति ब्राह्मणेन च छन्दोभिश्च' इति च ब्राह्मणानामेव आर्त्विज्यश्रुतेः । 'एता वै प्रजा हुतादो यद् ब्राह्मणाः' इति लिङ्गात् ब्राह्मणकृतस्यैव आर्त्विज्यस्य अपूर्वसाधनत्वावगतिः । सु. ३।७ पृ. ३४. * 'ब्राह्मणं न हन्यात्' इति अयं विशेषप्रतिषेधः । बाल. पृ. ३३. * 'वसन्ते ब्राह्मणं उपनयीत' । भा. ६।१।७।३३. * ब्राह्मणेन (वाक्येन) एकवाक्यत्वे अमन्त्रत्वम् । वा. १।४।१।१. * 'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इयं कर्तरि तृतीया कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । बाल. पृ. ४४.

* ब्राह्मणाय सुराग्रहशेषः सौत्रामण्यां पातुं दीयते । ब्राह्मणलाभाभावे वल्मीकवपायां वा शतातृण्णायां वा अवनीयते । वि. ३।५।३. * 'यो ब्राह्मणाय अवगुरेत् तं शतेन यातयात्' इत्यादि क्रत्वर्थं पुरुषार्थं वेति संशये पुरुषार्थे पुरुषमात्रधर्मः इति सिद्धान्तः, दर्शपूर्णमासयोः । ३।४।६।१७. * 'ब्राह्मणेभ्यो दधि दीयताम्, तक्रं कौण्डिन्याय' इत्यत्र तक्रविधिः न दधिविधिं अपेक्षते प्रवर्तितुम् । तक्रकौण्डिन्यन्यायः अयमेव । भामती. ३।३।१५।२६. * 'ब्राह्मणेभ्यो दधि दीयताम्, तक्रं कौण्डिन्याय' इत्यादौ ब्राह्मणशब्दस्य जातिवाचित्वात् कौण्डिन्यशब्दस्य व्यक्तिवाचित्वात् विशेषेण सामान्यस्य बाधः इति प्रयोजनं संभवति । सोम.

१।३।१० वर्णकं १. * **ब्राह्मणस्य अग्नीषोमीयपुरोडाशस्यैव सोमादुत्कर्षः**। 'यदेवादः पौर्णमासं हविः' इत्यादिवाक्येन उपांशुयाजाज्यमपि ब्राह्मणेन सोमात् प्राक् अग्नीषोमीयं न कर्तव्यम्, प्राजापत्यं वैष्णवं वा कर्तव्यमेवेति न तस्योत्कर्षः दर्शपूर्णमासयोः। **भा.** ५।४।६।१९, * ब्राह्मणस्य अतिरात्रे षोडशी गृह्यते। १०।५।९।३४. * ब्राह्मणस्य अपि सोमपूर्वत्वेष्टिपूर्वत्वरूपकल्पद्वयम्। ५।४।४।१०–१४, १७–१८. **मीको.** पृ. १०९३ 'उत्कर्षाधिकरणम्' इत्यत्र द्रष्टव्यम्। * ब्राह्मणस्य न अभिषेकः। 'अभिषेकोऽपि धर्मज्ञैः क्षत्रियस्यैव पठ्यते। सहासौ राजशब्देन, तेन नाक्षत्रिये मतः (राज्याभिषेकः)॥' । **वा.** २।३।२।३ पृ. ५८२. * ब्राह्मणस्य ज्योतिष्टोमे पयोव्रतं क्रत्वर्थम्। **भा.** ४।३।४।८–९.

**ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात्। ६।२।११।३२॥**

'सोमेन यजेत' इति सोमयाग उक्तः। 'तस्मात् स्वाध्यायोऽध्येतव्यः' इति विद्या उक्ता। 'प्रजातन्तुं मा व्यवच्छेत्सीः' इति प्रजा उक्ता। सोमश्च विद्या च प्रजा च तेषां समाहारः सोमविद्याप्रजम्। ब्राह्मणस्य इत्युपलक्षणम्। तदिदं सोमविद्याप्रजं ब्राह्मणादेस्त्रैवर्णिकस्य नित्यं स्यात्। 'जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवा जायते, ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः इति। स वै तर्हि अनृणो यदा यज्वा ब्रह्मचारी प्रजावान्' इति ऋणवाक्येन सोमविद्याप्रजानां संयोगात्। यथा ऋणस्य प्रत्यर्पणं नित्यं तथा सोमाद्यपि नित्यम्। तुशब्दः अनित्यत्वशङ्काव्यावृत्त्यर्थः। 'तुशब्दः अप्यर्थः। ब्राह्मणस्य तु ब्राह्मणस्यापि इत्यर्थः। तेन क्षत्रियवैश्ययोः संग्रहः' इति कुतूहलम्। **के.**

* ब्राह्मणस्य तेजःसंस्तवः। **भा.** ६।६।२।१४. * ब्राह्मणस्य द्रव्यार्जने प्रतिग्रह–याजन–अध्यापनान्येव नियतानि। उपायान्तरात्तु प्रत्यवायः। **वि.** ४।१।२ वर्णकं ४. * ब्राह्मणस्य पौर्णमासीगताग्नीषोमीयस्य हविषः सोमादूर्ध्वमुत्कर्षः। पौर्णमासेष्टेरेव उत्कर्षः इत्येकदेशिमतम्। ५।४।४।१०–१४, १७–१८. * ब्राह्मणस्य प्रतिग्रहविधिः दायशिलोञ्छाद्यसंभवे दोषाभावमात्रबोधकतया अभ्यनुज्ञाविधिरेव। न नियमविधिः, नापि परिसंख्याविधिः। **भाट्ट.** ४।१।२. * ब्राह्मणस्य बार्हद्गिरं ब्रह्मसाम कुर्यात् इति ज्योतिष्टोमे नैमित्तिकमेव न नित्यम्। **भा.** ४।३।२।४, * ब्राह्मणस्य बार्हद्गिरं ब्रह्मसाम द्वादशाहे। ६।६।३।१७. * ब्राह्मणस्य मधुसीध्वोः नाम्न माध्वीगौडीसुरयोः पैष्ट्याश्च निषेधः। अन्नसुरायाः त्रैवर्णिकानां प्रतिषेधः। **वा.** १।३।३।७ पृ. २०९–२१०. * ब्राह्मणस्य राजसूयाधिकारो नास्ति। **वि.** ११।४।३. * ब्राह्मणस्य विधायकस्यापि ब्रह्मयज्ञे ब्राह्मणेन विनियोगः दृश्यते। **सु.** पृ. ६६६. * **ब्राह्मणानामेव** ऋत्विक्त्वं न राजन्यवैश्ययोः। १२ ४।१५।४२–४७. **मीको.** पृ. २८४ 'अधिकारः आर्त्विज्ये ब्राह्मणस्यैव' इत्यत्र द्रष्टव्यम्। * ब्राह्मणानामेव राजसूयदशपेये राजन्यचमसानुप्रसर्पणम्। ३।५। २०।५२–५३. * ब्राह्मणानामेव सत्रेऽधिकारः। ६।६।३। १६–२३. **मीको.** पृ. ३०२ 'अधिकारः सत्रे ब्राह्मणानामेव' इत्यत्र द्रष्टव्यम्। * ब्राह्मणानां त्र्यार्षेयभिन्नानां मनुवत् कल्पः। **संकर्ष.** ३।४।५. 'मनुवत्कल्पः त्र्यार्षेयभिन्नब्राह्मणानाम्' इत्यत्र द्रष्टव्यम्। * **ब्राह्मणे** न तावत् सर्वेषामेव (मन्त्राणां) विनियोगोऽस्ति। **वा.** २।१।१४।४६, * ब्राह्मणे भूयांसः प्रत्यया विधायकाः, अल्पे तु अविधायकाः। २।१।६।३१. * ब्राह्मणे मन्त्राः भाषिकेण स्वरेण उपदिष्टाः। कर्मप्रयोगे तु त्रैस्वर्येणैव प्रयोक्तव्याः। १२।३।८।२०–२२. * '**ब्राह्मणेषु चरेद्भैक्षम्**' इत्यनेन उपसंहारेण व्यावर्तितस्य क्षत्रियादेः 'चातुर्वर्ण्यं चरेद् भैक्षम्' इति उपसंहारव्यावर्तितविषयः अभ्यनुज्ञाविधिः। **बाल.** पृ. १७.

* **ब्राह्मणाभिधः** विधिरेव। **वा.** १।२।४।४५.

* **ब्राह्मणावगोरणे** शतसंवत्सरं यातनाप्राप्तिः। **वि.** ३।४।१०.

* **ब्राह्मणावगोरणनिषेधस्य** ऋत्विगानमनार्थं प्रसक्तावपि ब्राह्मणमात्रविषयत्वावसायात् प्रकरणादुत्कर्षः। **सु.** पृ. १२३–१२४.

* **ब्राह्मणादेः** जातपुत्रस्य अनाहिताग्नेः वयोऽर्धातिक्रमे अवश्यं विहिताग्निहोत्राद्यननुष्ठाननिमित्तप्रत्यवाय-

वत् आधानाननुष्ठाननिमित्तोऽपि अपरः प्रत्यवायो भवति । सु. पृ. ९१४–९१५. * **ब्राह्मणादिषु** स्थानापत्त्या अनुमानेन वा राजशब्दः । वा. ३।५।८।२६.

* **ब्राह्मणादिकर्तृकायाः** अवेष्टेः कर्मान्तरत्वम् । भा. २।३।२।३. * ब्राह्मणादिकर्तृकाया अवेष्टेः राजसूयात् भिन्नतन्त्रता । ११।४।३।९–१२. **मीको.** पृ. ७१३ ' अवेष्टेः ब्राह्मणादिकर्तृकायाः ० ' इत्यत्र द्रष्टव्यम् ।

* **ब्राह्मणादिशब्दवत्** । ब्राह्मणादिशब्दा यथा विशेषसमर्पकाः, न तथा स्वर्गकामशब्दः । **सोम.** ६।१।१.

* **ब्राह्मणोत्पन्नमन्त्राणां** भाषिकस्वरनियमः । १२।३।९।२३–२४. **मीको.** पृ. १४९७ ' क्रतौ ब्राह्मणोत्पन्नानाम्० ' इत्यत्र द्रष्टव्यम् ।

* **ब्राह्मणोपेताः** क्षत्रियाः ब्राह्मणेन पुत्रत्वेन स्वीकृताः ब्राह्मणवृत्त्या जीवन्तः । तेषामपि आर्षेयवरणं स्वजातीयमेव । **संकर्ष.** ३।४।७. **मीको.** पृ. १००५ ' आर्षेयवरणं राजोपेतब्राह्मणोपेतयोः० ' इत्यत्र द्रष्टव्यम् ।

* **ब्राह्मणकर्तृका** अवेष्टिः ' यदि ब्राह्मणः यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वा अभिघारयेत् ' इति । **भा.** ११।४।३।८.

* **ब्राह्मणक्रमो** मन्त्रक्रमेण बाध्यते, अप्राप्तबाधः । **वा.** ३।३।७।१४ पृ. ८६०, **बाल.** पृ. १४३. * **ब्राह्मणक्रमस्य** प्रथमभावित्वेऽपि अनुष्ठाने विप्रकृष्टत्वाद्दुर्बलत्वम्, मन्त्रक्रमस्य तु अनुष्ठानसंनिकर्षात् प्राबल्यम्, तेन दर्शपूर्णमासयोः आग्नेयधर्माः प्रथमम्, ततः अग्नीषोमीयधर्माः इति क्रमः । **सोम.** ५।१।९.

* **ब्राह्मणक्षत्रियविशां** ऋणत्रयापाकरणं नित्यम् । **वि.** ६।२।११.

* **ब्राह्मणगतं** आख्यातपदं प्रधानगुणयोरन्यतरस्य विधायकम् । **वि.** २।१।६. * **ब्राह्मणगतान्यपि** आख्यातानि क्वचिन्न विधायकानि, यथा ' यस्योभयं हविरार्तिमार्च्छेत् ' इत्यादीनि । **वा.** २।१।६।३०, * **ब्राह्मणगतानां** मन्त्रगतानां चाख्यातशब्दानां येषां शब्दान्तरेण विधिशक्तिरपगच्छति तेषामभिधायकत्वम् । २।१।६।३१.

**ब्राह्मणग्रामन्यायः । साहस्री. २७.**

* **ब्राह्मणत्वं** इत्यादि । मातापितृसंबन्धज्ञस्य अपत्ये ब्राह्मण्यादिप्रत्ययः तावत् संदेहबाधरहितः स्वसंवेद्यः । न च निर्विषयः प्रत्ययोऽस्ति इत्युक्तम् । न चास्य संतानविशेषजन्यत्वं विषयः । निरालम्बनशब्दप्रयोगायोगेन जातिव्यतिरिक्तस्य संतानान्तरव्यावृत्तस्य विशेषस्य असंभवात् । न च असद्ग्राह्यद्वित्रसंतानमात्रे संतानः समाप्यते । येन संबन्धिविशेषेणेव संबन्धः संतानिविशेषेण संतानो विशेष्टुं शक्यते । उत्पाद्योत्पादकक्रमेण अवस्थिताः पुरुषा एव हि संतानशब्दवाच्याः, न संतानाख्यं किञ्चित् वस्तु अस्ति । तस्मात् सर्वेषु ब्राह्मणेषु अनुस्यूतं प्रत्येकसमवेतं ब्राह्मणप्रत्ययविषयभूतं किञ्चिदवश्यमेष्टव्यम् । तस्मात् समानाकारेष्वपि पिण्डेषु विलक्षणब्राह्मणप्रत्ययवेद्यब्राह्मण्यादिजातिः नापह्नोतुं शक्यते । न चासौ शास्त्रस्य विषयः । प्रमाणान्तरागृहीतायां जातौ अगृहीतसंबन्धत्वेन ब्राह्मण्यादिपदार्थाज्ञानात् । ' ब्राह्मणात् ब्राह्मण्यां यो जायते स ब्राह्मणः ' इति वाक्यार्थानवधारणात् । संबन्धाग्रहणादेव नानुमेयत्वम् । सदृशानुपपद्यमानार्थाभावात् उपमानार्थापत्त्यसंभवात् पारिशेष्यात् प्रत्यक्षत्वम् । उत्पादकजातिज्ञानात् तु प्रागप्रतीतेः तस्य सहकारित्वं कल्प्यते । सु. पृ. १०–११. * **ब्राह्मणत्वस्य** न उपवीताध्ययनादि निमित्तम्, वर्णत्रयसाधारणत्वात् । अध्यापनाद्यपि भिन्नाचारक्षत्रियवैश्यप्रतियोगित्वात् संदिग्धम् । सर्वं च दुष्टशूद्रेषु संभाव्यमानत्वादनिश्चितम् । नापि तपआदीनां समुदायो ब्राह्मण्यम्, न तज्जनितः संस्कारः, न तदभिव्यङ्ग्या जातिः । किं तर्हि ? मातापितृजातिज्ञानाभिव्यङ्ग्या प्रत्यक्षसमधिगम्या । **वा.** १।२।१।२.

* **ब्राह्मणत्वादिः** न शास्त्रविषयः, लोकप्रसिद्धत्वात् वृक्षत्वादिवत् । **वा.** १।२।१।२, * **ब्राह्मणत्वादयः** ( जातयः ) येषामपि आचारनिमित्ताः तेषामपि दृष्टविरोधस्तावदस्त्येव । न तु आचारनिमित्तवर्णविभागे प्रमाणं किञ्चित् । सिद्धानां हि ब्राह्मणादीनां आचारा विधीयन्ते, तत्रेतरेतराश्रयता भवेत् ! स एव शुभाचारकाले ब्राह्मणः, पुनरशुभाचारकाले शूद्र इत्यनवस्थितत्वम् ।

'मासेन शूद्रीभवति' इत्येवमादीनि कर्मनिन्दावचनानि, अथवा वर्णत्रयकर्महानिप्रतिपादनार्थानीति वक्तव्यम् । १।२।१।२, * ब्राह्मणत्वादेः उत्पादकजातिस्मरणं कारणम् (ज्ञापकं) । अयं चोत्पाद्योत्पादकसंबन्धो मातुरेव प्रत्यक्षः, अन्येषां तु अनुमानाप्तोपदेशाद्यवगतः कारणं भवति । स्त्र्यपराधात्तु दुर्ज्ञानोऽयं संबन्धः । न च स्त्रीणां क्वचिद्व्यभिचारदर्शनात् सर्वत्रैव कल्पना युक्ता । तस्मात् दर्शनस्मरणपारम्पर्यानुगृहीतप्रत्यक्षगम्यानि ब्राह्मणत्वादीनि । १।२।१।२.

**ब्राह्मणपरिव्राजकन्यायः ।** अयं यत्र सामान्यवाचकं सहप्रयुक्तविशेषवाचकपदवत्त्वात्तदर्थाऽन्यपरतया नीयते तत्र प्रवर्तते । यथा 'ब्राह्मणा भोज्यन्ताम्' इत्यत्र परिव्राजकानामपि ब्राह्मणत्वाद्ब्राह्मणपदं परिव्राजकेतरब्राह्मणपरमिति । साहस्री. २०३. * ब्राह्मणपरिव्राजकन्यायः । ननु च राजराजन्यशब्दयोः तत्र तत्र कर्मभेदोपदेशेन स्मृतिविदां याज्ञिकानां च भेदेन प्रसिद्धिर्दृष्टा । सत्यं दृष्टा, सा तु ब्राह्मणपरिव्राजकन्यायेन राजन्यशब्दस्य अभिषिक्तविशेषगामित्वेन सामर्थ्यलभ्यत्वात् । वा. २।३।२।३ पृ. ५८३. * ब्राह्मणपरिव्राजकन्यायः । बहिर्ब्राह्मणा भोज्यन्ताम्, परिव्राजकास्त्वन्तः इत्यत्र सत्येव परिव्राजकानां ब्राह्मण्ये पूजानिमित्तो विशेषः । वि. २।१।१३. * ब्राह्मणपरिव्राजकन्यायेन नितरां गद्यन्ते उच्चैरुच्चार्यन्ते इतिव्युत्पत्तिसिद्धगुणविशेषनिबन्धन एव यजुषामेव केषाञ्चित् निगदव्यपदेशः । कु. २।१।१३।४०. * भेदव्यपदेशस्तु कर्माचरणयोः ब्राह्मणपरिव्राजकन्यायेनाप्युपपद्यते । शांभा. ३।१।२।११ ब्रसू. * 'यथाकारी यथाचारी' इति करणाचरणयोर्भेदनिर्देशः ब्राह्मणपरिव्राजकन्यायेन इति भाष्ये उक्तम् । कल्पतरु. ३।१।२।११ ब्रसू.

* ब्राह्मणपरिव्राजकवत् धर्मविशेषस्यापि मोक्षस्य भेदेनोपादानम् । सु. पृ. १२७. * यथा इतो ब्राह्मणा भोज्यन्तां इतः परिव्राजकाः इति । भा. । ब्राह्मणपरिव्राजकवत् गुणेन व्यपदेशः (केषां चित् यजुषामेव निगदाः इति) । वा. २।१।१३।४३.

* ब्राह्मणपाठात् अनुष्ठानबहिर्भूतात् मन्त्रपाठः अनुष्ठानसमवेतः प्रबलः । यथा आग्नेयाग्नीषोमीयपुरोडाशयोः । ५।१।९।१६. * ब्राह्मणपाठस्य मन्त्रपाठात् विप्रकर्षः । 'समिधो यजति' इत्यनेन पदार्थो विहितः, सोऽनुष्ठानवेलायां येन वाक्येन विहितः तद्वाक्यं स्मारयति । तेन वाक्येन स्मृतेन अनुष्ठानवेलायां पदार्थः स्मारितः सन् अनुष्ठीयते । द्वितीयं पदार्थं न स्मारयति, किन्तु अनुष्ठानोत्तरकालं योऽसौ कृतः पदार्थः तमालोचयति, स चालोच्यमानः येन ब्राह्मणखण्डकेन विहितः तत्स्मारयति, तच्च स्वादुत्तरं ब्राह्मणखण्डकं स्मारयति पाठात् । तत् ब्राह्मणं पुनः पदार्थं विदधाति । अनुष्ठानवेलायां तावत् स्मारकमपेक्षितव्यम् । अयमत्र विप्रकर्षः । मन्त्रः पुनः परिसमाप्यमानः उत्तरं मन्त्रं पर्युपस्थापयति । स च पर्युपस्थाप्यमानः उत्तरं पदार्थं पर्युपस्थापयन्नेव पर्युपतिष्ठते । तस्मात्तत्र अपेक्षाऽभावात् नास्ति विप्रकर्षः । टुप्. ५।१।१०।१६.

* ब्राह्मणराजन्यवैश्यानां सर्वे अध्ययनवन्तो विद्वांसश्च । नह्यविद्वान् विहितोऽस्ति । ऋणापाकरणं च सर्वेषां कर्म । 'जायमानो वै ब्राह्मणः' इति ब्राह्मणग्रहणं प्रदर्शनार्थं इत्युक्तम् ( ६।२।११।३१ ) । भा. १२।४।१५।४२.

**ब्राह्मणलक्षणम् ॥**

**शेषे ब्राह्मणशब्दः । २।१।८।३३ ॥**

**भाष्यम्**—अथ किंलक्षणं ब्राह्मणम् ? मन्त्राश्च ब्राह्मणं च वेदः । तत्र मन्त्रलक्षणे उक्ते परिशेषसिद्धत्वात् ब्राह्मणलक्षणमवचनीयम् । मन्त्रलक्षणवचनेनैव सिद्धम् । यस्यैतल्लक्षणं न भवति, तद्ब्राह्मणमिति परिशेषसिद्धं ब्राह्मणम् । वृत्तिकारस्तु शिष्यहितार्थं प्रपञ्चितवान् इतिकरणबहुलम् ('इषे त्वेति बर्हिरादत्ते' इति) । इत्याहोपनिबद्धम् ('अश्विनोर्बाहुभ्यामित्याह' इति) । आख्यायिकास्वरूपम् ('प्रजापतेस्त्रयस्त्रिंशद्दुहितर आसन्' इति) । हेतुः 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इति । निर्वचनम् 'तद्दध्नो दधित्वम्' । निन्दा 'उप-

वीता वा एतस्याग्नयः'। प्रशंसा 'वायुर्वै क्षेपिष्ठा देवता' इति। संशयः 'होतव्यं गार्हपत्ये न होतव्यम्' इति। विधिः 'यजमानसंमितौदुम्बरी भवति'। परकृतिः 'माषान्मे पचत' इति। पुराकल्पः 'उल्मुकैर्ह स्म पूर्वे समाजग्मुः' इति। व्यवधारणकल्पना 'यावतोऽश्वान् प्रतिगृह्णीयात्' इति। '**हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः। परक्रिया पुराकल्पो व्यवधारणकल्पना॥ उपमानं दशैते तु विधयो ब्राह्मणस्य तु। एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षणम्॥**'

**एतदपि प्रायिकम्।** इतिकरणबहुलो मन्त्रोऽपि कश्चित् 'इति वा इति मे मनः' इति। इत्याहोपनिबद्धश्च 'भगं भक्षीत्याह'। आख्यायिकास्वरूपं च 'उग्रो ह भुज्युम्' इति। हेतुः 'इन्दवो वामुशन्ति हि' इति। निर्वचनम् 'तस्मादापो अनु स्थन' इति। निन्दा 'मोघमन्नं विन्दते अप्रचेताः' इति। प्रशंसा 'अग्निर्मूर्धा' इति। संशयः 'अधः स्विदासीदुपरि स्विदासीत्' इति। विधिः 'पृणीयादिन्नाधमानाय' इति। परकृतिः 'सहस्रमयुता ददत्' इति। पुराकल्पः 'यज्ञेन यज्ञमयजन्त देवाः' इति।

**वा**— 'परिशेषसिद्धत्वात् ब्राह्मणलक्षणमवचनीयम्' इति। सूत्रमिदमनारम्यमिति प्रतिभाति। तत्र शेषशब्दप्रयोगात् लक्षणानभिधानाच्च सूत्रव्याख्यानमेवेदमिति द्रष्टव्यम्। किमर्थं पुनः सूत्रमारभ्यते? नाऽऽरभ्येत, यदि मन्त्रब्राह्मणात्मक एव वेद इति सर्वेषां प्रसिद्धं भवेत्। येषां तु अप्रसिद्धं तेषां तृतीयादिप्रकारनिराकरणार्थं द्वैराश्यमेव वेदस्य इति प्रतिपादयितुमाह—'शेषे ब्राह्मणशब्दः' इति। एकपुरुषकर्तृकमुपाख्यानं परकृतिः। बहुकर्तृकं पुराकल्पः। यत्रान्यथा अर्थः प्रतिभातः पौर्वापर्यालोचनेन व्यवधार्यान्यथा कल्प्यते सा व्यवधारणकल्पना, तद्यथा 'प्रतिगृह्णीयात्' इति श्रुतं 'प्रतिग्राहयेत्' इति कल्पयिष्यते। विधिलक्षणमित्यत्र ब्राह्मणवाची विधिशब्दः।

**शा**— मन्त्रात्मकस्य वेदस्य लक्षणमुक्तम्। तत्प्रसङ्गात् ब्राह्मणलक्षणाभिधानम्।

मी. को. ३७५

**वि**— 'नास्त्येतद्ब्राह्मणेत्यत्र लक्षणं विद्यतेऽथवा।, नास्तीयन्तो वेदभागा इति क्लृप्तेरभावतः॥, मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः। अन्यद्ब्राह्मणमित्येतद् भवेद् ब्राह्मणलक्षणम्॥'

**भाट्ट**— 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इति वेदप्रयुक्तब्राह्मणशब्दार्थपरिज्ञानार्थं तल्लक्षणमपि प्रसङ्गादेव। मन्त्रातिरिक्तवेदत्वमेव ब्राह्मणत्वम्।

**मण्डन**— 'मन्त्रेतरो ब्राह्मणशब्दवाच्यः।'

**शंकर**— 'लक्षणं ब्राह्मणस्य च।'

* **ब्राह्मणलक्षणं** चातुर्मास्येषु 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इति वेदप्रयुक्तब्राह्मणशब्दार्थपरिज्ञानार्थम्। **भाट्ट.** २।१।९.

* **ब्राह्मणवत्यः** इष्टकाः मध्यमायां चितौ उपधेयाः। ५।३।७।१७–१९.

**ब्राह्मणवसिष्ठन्यायः।** यथा 'ब्राह्मणा आयाताः, वसिष्ठोऽप्यायातः' इत्यत्र प्रथमवाक्येनैव ब्राह्मणत्वेन रूपेण वसिष्ठस्याप्यागमनस्य सिद्धौ यत् 'वसिष्ठोऽप्यायातः' इति वाक्यान्तरं प्रयुज्यते, तत्पूर्ववाक्यघटकब्राह्मणपदोपात्तवसिष्ठेतरयावद्व्यावृत्तधर्मविशेषबोधनपरतया पर्यवस्यतीति। अस्योदाहरणानि यथा महाभाष्ये 'हलन्त्यम्' (पा. १।३।३) इति सूत्रे 'व्यवसितान्त्यं हलिसंज्ञं भवतीति वक्तव्यम्' इति वार्तिकस्थव्यवसितपदं व्याख्यातम् 'के पुनर्व्यवसिताः? धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः' इति। अत्र प्रातिपदिकपदेनैव प्रातिपदिकत्वेन रूपेण निपातानामपि संग्रहे सिद्धे प्रकृतन्यायेन निपातपदोपादानमिति शेखरकारादयः। **साहस्री. २०४.**

* **ब्राह्मणवाक्यस्य** मन्त्रलिङ्गेन न बाधः, मन्त्रस्य ब्राह्मणविहितार्थप्रकाशकत्वेन तत्परतन्त्रत्वात्। अन्यथा मनोतामन्त्रस्यापि सामान्यसंबन्धग्राहिप्रमाणसत्त्वेन लिङ्गात् सवनीयाङ्गत्वापत्तौ 'यद्यप्यन्यदेवत्यः पशुः आग्नेय्येव मनोता कार्या' इति वाक्यावगताग्नीषोमीयाङ्गत्वबाधापत्तेः। **कौ.** ३।३।७।१४ पृ. ३५९. * **ब्राह्मणवाक्ये** तु अविधानं विधानं चोभयमपि निष्पन्नम्। **वा.** ३।३।७। १४ पृ. ८२५.

* **ब्राह्मणविहितानां** एकार्थानां मन्त्राणां विकल्पः, न तु समुच्चयः । १२।३।१५।३१-३५. 'मन्त्राणां ब्राह्मणविनियुक्तानाम् ०' इत्यत्र द्रष्टव्यम् ।

**ब्राह्मणविहितेषु च संख्यावत् सर्वेषामुपदिष्टत्वात् । १२।३।१५।३१॥**

चकारेण समुच्चयोऽनुवर्त्यते । ब्राह्मणविहितेषु ब्राह्मणे ये मन्त्रा विहिताः 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इत्यादयः तेषु समुच्चयः स्यात् । सर्वेषां उपदिष्टत्वात् यो न प्रयुज्येत तस्योपदेशो बाधितः स्यात् । तस्मात् समुच्चयः इति पूर्वः पक्षः ।

**याज्यावषट्कारयोश्च समुच्चयस्य दर्शनं तद्वत् । ३२ ॥**

'याज्याया अधि वषट् करोति' इति याज्यायाः वषट्कारस्य च समुच्चयस्य दर्शनं भवति । तत् यद्वत् प्रमाणं तद्वत् ब्राह्मणविहितानां मन्त्राणां उपदेशः समुच्चये प्रमाणम् । इति पूर्वपक्षे दृष्टान्तप्रदर्शनं कृतम् ।

**विकल्पो वा समुच्चयस्याश्रुतित्वात् । ३३ ॥**

विकल्पो वा ब्राह्मणविहितानां मन्त्राणां स्यात्, न समुच्चयः । समुच्चयस्य अश्रुतित्वात् श्रुतिशून्यत्वात् विधानाभावात् । संख्याश्रवणे तु विधिबलात् समुच्चयः । तस्मात् एकार्थत्वात् विकल्पः इति सिद्धान्तः ।

**गुणार्थत्वादुपदेशस्य । ३४ ॥**

'उरु प्रथस्वेति पुरोडाशं प्रथयति' इत्यादेरुपदेशस्य गुणार्थत्वात् । मन्त्रेण पुरोडाशप्रथनस्य स्तुत्यर्थः उपदेशः । नैवासौ मन्त्रप्राप्त्यर्थ उपदेशः । तस्मान्न समुच्चयः ।

**वषट्कारे नानार्थत्वात् समुच्चयः । ३५ ॥**

यदुक्तं याज्यावषट्कारयोश्चेति तत्र वषट्कारे याज्यायां च नानार्थत्वात् समुच्चयः । याज्या देवतास्तुत्यर्था स्मरणार्था च, वषट्कारस्तु प्रदानार्थः इति तयोः नाना भिन्नौ अर्थौ । तस्मात् ब्राह्मणविहितानां मन्त्राणां विकल्प इति सिद्धान्तः । **के.**

* **ब्राह्मणवैश्यौ** राजसूये नाधिकारिणौ । राजन्यस्यैव सः । **भा.** ११।४।४।१०. * **ब्राह्मणवैश्ययोरपि** प्रजापालनेन राजशब्द उपचरितो भवति । ( तथा च राज्यकर्तृत्वं ब्राह्मणवैश्ययोरपि संभवति ) । **वि.** २।३।२. * ब्राह्मणवैश्ययोः यद्यपि न शास्त्रदृष्ट्या राज्ययोगः, क्षत्रियस्यैव परिपालनविधानात्, तथापि शास्त्रोल्लङ्घनेन ब्राह्मणवैश्ययोरपि राज्ययोगो दृश्यते । **सोम.** २।३।२.

* **ब्राह्मणशब्दः** 'ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इत्यादौ जातिवाचिनोऽपि ब्राह्मणशब्दस्य परिव्राजकब्राह्मणविशेषगामित्वम् । 'प्रब्रूयात् ब्राह्मणश्चैषां' इत्याद्याश्रमान्तरस्थब्राह्मणविहितप्रवचनादिकर्मणः कर्मान्तरोपदेशः न विरुध्यते । **सु.** पृ. ९०५.

**ब्राह्मणश्रमणन्यायः** । श्रमणो बौद्धयतिः । यथा श्रमणस्य अशास्त्रीयविधिना त्यक्तशिखासूत्रकक्षादेस्त्यक्तनित्यादिकर्मणश्च इदानीं ब्राह्मणत्वाभावेऽपि भूतपूर्वेण ब्राह्मणत्वेन निर्देशः, तथा शिवसारूप्यप्राप्तानामपि प्राक्तनया मानवसंज्ञया निर्देश इत्युदाहरणसंगतिरिति । **साहस्री.** १६८.

* '**ब्राह्मणस्त्रीवधे** को वा ब्रह्महत्यां निषेधति । प्रायश्चित्तान्तरं तस्याः स्त्रीत्वमात्रनिबन्धनम् ॥' न वाचनिकप्रायश्चित्ताल्पत्वेन ब्राह्मणीवधप्रतिषेध एव नास्तीत्याशङ्कितव्यम् । **वा.** १।३।३।७ पृ. २१३.

* **ब्राह्मणाच्छंसी** इन्द्रं 'इन्द्र त्वा वृषभं वयम्' इति पुनरभ्युन्नीते होमे यजति । **भा.** ३।२।१२।३० . * ब्राह्मणाच्छंसी ब्रह्मणः पुरुषः । द्वितीयवर्गस्थोऽयम्, अर्धी दक्षिणार्धं षट् गाः लभते । **वि.** ३।७।१७, * '**ब्राह्मणाच्छंसिनं** प्रतिप्रस्थाता दीक्षयति' द्वादशाहे दीक्षायाम् । ३।७।१७. * **ब्राह्मणाच्छंसिनः** रैवतं साम पृष्ठं विश्वजिति । **भा.** ७।३।३।८.

* **ब्राह्मणीनां** सुरापानं निषिद्धम् 'तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्' इत्यनेनैव । **वा.** १।३।३।७ पृ. २११.

* **ब्राह्मण्यम्** । ‘ सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः । ’ ( यास्मृ. १।९० ) ‘ विन्नास्वेष विधिः स्मृतः ’ ( यास्मृ. १।९२ ) इति स्मृतिसिद्धं ब्राह्मणात् स्वभार्यायां ब्राह्मण्यामुत्पन्नत्वलक्षणं ब्राह्मण्यं मातुरेव एकस्याः सुविज्ञानम् । इतरस्य तु दुर्विज्ञानम् । कु. १।२।१।१३.

* ‘ **ब्राह्मौदनिके** अग्नौ अरणी संताप्य तदुपोह्य भस्म अग्निं मन्थति, सैव साग्नेः संततिः ’ इति मन्थनमाम्नातम् । **संकर्ष.** ३।२।१, * ब्राह्मौदनिके अग्नौ गार्हपत्यत्वमेव आधाने । तत्रारणी निष्टप्य मथित्वा सर्वेण मथितेन गार्हपत्यः आधेयः, न तु सर्वे । ३।२।१.